सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिविरचित-

# न्यायखण्डखाद्यापरनाम--

## महावीरस्तवप्रकरणस्य

न्यायवाचस्पतिसिद्धान्तविशारदाचार्यश्रीविजयदर्शनसूरि

विरचितं महावीरस्तवकल्पलतिकाविवृतिनामकमिदं द्वितीयं पुस्तकम्



स्याद्वादविन्दुनामकप्रथमंपुस्तकम्

सकलस्वपरसमयसमुद्रपारीणशासनसम्राट् सूरिचक्रचक्रवर्त्ति श्रीतपोगच्छनभोनभोमणिभट्टारकाचार्यश्रीविजयनेमिसूरिसद्गुरुभ्योनमः

सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिप्रवरप्रणीतं न्यायवाचस्पति-शास्त्रविशारद-

श्रीतपोगच्छभट्टारकाचार्यश्रीविजयदर्शनसूरिसन्दब्धमहावीरस्तवकल्पलतिकाख्यविवृतिसमलङ्कृतं

# ॥ न्यायखण्डखाद्यापरनाममहावीर-स्तवप्रकरणम् ॥

मरुदेश (मारवाड)स्थजोरेत्याख्यप्रसिद्धप्रदेशवर्त्तिजावालपाडीवकालंदरी-इत्याख्यग्रामनिवासिसद्धर्मप्रवीणश्रेष्ठिवर्यद्रव्य-साहाय्येन जावालस्थसुश्राद्धमोतीजीसुपुत्रताराचंदेन संमुद्र्य प्रकाशितम्।

वीरसंवत २४६३ विक्रम संवत् १९९२ प्रतय: ५००

ॐ अर्हं नमः

अस्य प्रथमद्वितीयभागौ घीकांटावाडीराजनगरे (अमदावाद) 'श्री जैन एडवोकेट' मुद्रणालये
शा. गोकुलदासपुत्रचमनलालेन ☚
तृतीयचतुर्थभागौ च सुरतनगरे धी 'जैन विजयानन्द' मुद्रणालये
☞ शा. मगनलालपुत्रफकीरचंदेन मुद्रितौ।

# मूलश्लोक विषयानुक्रमणिका

| मूलश्लोकाङ्कः | पत्राङ्कः | पृष्ठम् | पङ्क्तिः | मूलश्लोकाङ्कः | पत्राङ्कः | पृष्ठम् | पङ्क्तिः | मूलश्लोकाङ्कः | पत्राङ्कः | पृष्ठम् | पङ्क्तिः | मूलश्लोकाङ्कः | पत्राङ्कः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | २ | १ | १४ | ११९ | २ | १ | २७ | २६० | १ | ९ | ४० | ३१५ | २ | १४ |
| २ | ६ | १ | २ | १५ | १२६ | २ | ८ | २८ | २६२ | १ | ११ | ४१ | ३१७ | २ | ६ |
| ३ | ८ | १ | ६ | १६ | १२९ | १ | ५ | २९ | २६३ | १ | १० | ४२ | ३१८ | २ | ६ |
| ४ | १३ | १ | ७ | १७ | १४३ | २ | ४ | ३० | २६५ | १ | ९ | ४३ | ३२० | २ | ६ |
| ५ | ३० | २ | ८ | १८ | १४६ | १ | ९ | ३१ | २६६ | २ | १० | ४४ | ३२५ | २ | ७ |
| ६ | ३३ | २ | १ | १९ | १४९ | २ | ८ | ३२ | २६८ | २ | १२ | ४५ | ३२६ | २ | ६ |
| ७ | ४६ | २ | २ | २० | १७० | १ | ४ | ३३ | २६७ | १ | १ | ४६ | ३२९ | १ | १० |
| ८ | ५२ | २ | ९ | २१ | १७६ | १ | ७ | ३४ | २७३ | २ | ११ | ४७ | ३३६ | १ | ९ |
| ९ | ६२ | १ | ६ | २२ | १९७ | १ | १ | ३५ | २७५ | २ | ९ | ४८ | ३७१ | १ | १३ |
| १० | ७० | २ | २ | २३ | २५६ | १ | १ | ३६ | २८७ | १ | ५ | ४९ | ३७१ | २ | ८ |
| ११ | ७३ | २ | ७ | २४ | २५७ | २ | ३ | ३७ | ३१२ | १ | १ | ५० | ३७१ | २ | १० |
| १२ | १०१ | १ | ९ | २५ | २५८ | १ | ७ | ३८ | ३१२ | २ | १२ | ५१ | ३७२ | १ | १० |
| १३ | १०७ | १ | १ | २६ | २५९ | १ | १४ | ३९ | ३१५ | १ | ८ | ५२ | ४१२ | १ | ११ |

| | | | |
|---|---|---|---|
| ३ | ४१२ | २ | १ |
| ४ | ४१६ | २ | ३ |
| ५ | ४२० | २ | १० |
| ६ | ४२१ | १ | १२ |
| ७ | ४२३ | १ | ३ |
| ८ | ४२७ | १ | ७ |
| ९ | ४२८ | २ | ५ |
| ० | ४३२ | १ | १ |
| १ | ४३३ | १ | १ |
| २ | ४८१ | १ | ५ |
| ३ | ४८४ | २ | १ |
| ४ | ४८६ | २ | १३ |
| ५ | ४८९ | १ | १ |
| ६ | ४९० | २ | १० |

| | | | |
|---|---|---|---|
| ६७ | ४९३ | १ | ४ |
| ६८ | ४९३ | २ | ११ |
| ६९ | ४९५ | २ | १४ |
| ७० | ४९६ | २ | ९ |
| ७१ | ४९९ | २ | १३ |
| ७२ | ५०२ | २ | १ |
| ७३ | ५०४ | २ | १ |
| ७४ | ५०५ | २ | १३ |
| ७५ | ५०९ | १ | ७ |
| ७६ | ५१२ | १ | १३ |
| ७७ | ५१३ | २ | १२ |
| ७८ | ५१५ | २ | १० |
| ७९ | ५१७ | १ | ८ |
| ८० | ५१८ | २ | १३ |

| | | | |
|---|---|---|---|
| ८१ | ५२० | १ | १३ |
| ८२ | ५२१ | १ | १ |
| ८३ | ५२१ | १ | १२ |
| ८४ | ५२१ | २ | ६ |
| ८५ | ५२२ | २ | ६ |
| ८६ | ५२३ | १ | १ |
| ८७ | ५२३ | २ | २ |
| ८८ | ५२४ | २ | २ |
| ८९ | ५२७ | २ | १२ |
| ९० | ५२८ | २ | ८ |
| ९१ | ५२९ | २ | १ |
| ९२ | ५२९ | २ | ८ |
| ९३ | ५३० | १ | ७ |
| ९४ | ५३१ | १ | ९ |
| ९५ | ५३२ | २ | १ |

| | | | |
|---|---|---|---|
| ९६ | ५३२ | २ | १० |
| ९७ | ५३५ | १ | ४ |
| ९८ | ५३५ | २ | ४ |
| ९९ | ५३६ | २ | ७ |
| १०० | ५३७ | १ | १२ |
| १०१ | ५३९ | १ | ७ |
| १०२ | ५३९ | २ | ११ |
| १०३ | ५४० | १ | १३ |
| १०४ | ५४१ | १ | १ |
| १०५ | ५४१ | १ | १२ |
| १०६ | ५४१ | २ | १० |
| १०७ | ५४२ | १ | १० |
| १०८ | ५४२ | २ | ७ |
| १०९ | ५४३ | १ | ७ |
| ११० | ५४३ | २ | ६ |

# अथोपोद्घातः ॥

सुविदितमेवैतत् आर्हताक्षपादकाणभक्षकापिलपातञ्जलजैमिनीयवैयासिक्यमायासूनवीयमतरहस्यावबोधकृतादराणां यत्तत्पक्षविपक्षोहापोहसव्यपेक्षमाननिकुरम्बव्यापारावधारितेष्टतत्त्वानां स्वमनीषाविशेषोन्मेषसङ्घटितानल्पप्राचीनार्वाचीनसमीक्षोल्लासितातिदुरूहग्रन्थग्रन्थिसमष्टीनां शारदाकृपाकटाक्षोत्क्षेपपात्राणां विदुषां, यदुत स्वस्वसिद्धान्तानपेतदोषकणिकाघटनाऽपेतस्वपक्षसाधनसमर्थसाधकमानपरपक्षबाधनप्रवणमानसध्रीचीनसत्तर्कप्रकरकरम्बितग्रन्थग्रन्थनं कस्याप्यनिर्वचनीयषड्दर्शनपारावारपारीणस्यैव स्वपरोपकाराय सम्पद्यत इति, तत्राप्यतिगूढाभिसन्धिशेषानुषङ्गादिव्याख्यानापेक्षप्रचुरपरमतोपक्षेपानल्पविकल्पकल्पनाजालकिर्मीरितविचारप्रधानं सन्दर्भगुम्फनं न प्रीणयति तर्ककर्कशविचारपराङ्मुखानां सहृदयानामिति, समानयुक्त्युपेतानल्पाक्षरसाकाङ्क्षासन्नयोग्यसुबोधसुकरप्रयोगानतिकठिनपूर्वापरसन्दर्भविशुद्धप्रसङ्गादिसङ्गतार्थभ्राजिष्णुसिद्धान्तोक्तिसंवादानुमोदितदृष्टिपथावतारावबोध्यसारविचारप्रचारकान्तसिद्धान्तोत्तम्भकस्वल्पविकल्पकल्पनकमनीयमेव सन्दर्भसङ्घटनं चेतश्चमत्करोति परीक्षकपद्धतिमितानां प्रेक्षाक्षेत्रा-

णामित्यपि नापरोक्षं तेषाम्, एतादृशेष्वपि सन्दर्भविशेषेषु य एव परमपुरुषार्थमोक्षोपयोगिपदार्थसार्थप्ररूपणप्रवणस्स एव सर्वथोपादेयो भवतीत्यत्रापि न विगानमास्तिक्यपरिपाकमुपेयुषां विदुषाम्, ईदृशश्च ग्रन्थरत्नं तत्तद्दर्शनेषु स्वल्पसंख्यकमेव क्वापि कस्यापि कदापि सञ्चितानेकभवप्रभवपुण्यप्रचयप्रभावादेवाविर्भवतीति सरस्वत्यवतारपुरुषधौरेयप्रभावितमिदमिति बुद्धिमादधाति ग्रन्थरत्नसमीक्षातत्पराणां बुधमुकुटानाम्, ईदृशग्रन्थरत्नगणनप्रसङ्गोपात्तप्रथमोल्लेखपात्रतामुपयात्ययं सर्वतन्त्र-स्वतन्त्र-न्यायविशारद-न्यायाचार्यमहोपाध्याय-श्रीयशोविजयगणिप्रणीतो न्यायखण्डखाद्यापरनामा महावीरस्तवनप्रकरणाख्यो ग्रन्थः, यत्र ऋजुसूत्रनयप्रवर्त्तितमुक्तिसाधननैरात्म्यदृष्टिपक्षसपक्षाखिलपदार्थानुगतक्षणभङ्गसुभगसुगतशिष्यसौत्रान्तिकवैभाषिकाखिलबाह्यार्थलुण्टाकसाकारविज्ञानवादसूत्रणसूत्रधारयोगाचारसर्वप्रकारविचारासहविश्वशून्यतोत्प्रेक्षादक्षमाध्यमिकदर्शनानि नैगमनयसमुत्थतर्ककर्कशविचारोल्लासैकारीमप्रयासाक्षपादकणभक्षसंसूचितस्थिरात्मदर्शनप्रभवमुक्त्युपयोगिप्रमाणादिषोडशसंख्यकपदार्थवादद्वयान्यतरमार्गविप्रधावितनैयायिकवैशेषिकाग्रगण्याचार्यवर्योदयनसङ्घटितात्मतत्त्वविवेकापरपर्यायबौद्धाधिकाराभिधग्रन्थोपदर्शितानल्पतर्कसमुल्लसितमानदृढीकृतप्रमाणभावप्रत्यभिज्ञाप्रमाणस्थिरीकृतस्थिरात्मवादोपष्टम्भेनैकान्ततोपमर्दनेन शोधितानि स्याद्वादप्रमाणराजव्यापारप्रोत्साहितेष्टापत्त्यादिप्रभूतपत्तिप्रचारविद्रावितोत्तरमीमांसामांसलविचारोत्तम्भितब्रह्माद्वैतवादादिसाहाय्यविज्ञाताप्रमाणभावैकान्ताभेदावगाहिप्रत्यभिज्ञानप्रकारान्तरसङ्घटनप्रवीणकथञ्चिद्वादाश्रयणप्रोल्लसिताऽविरोधभेदाभेदावगाहनदृढीभूतप्रमाणभावसंकलनस्वभावाभिज्ञानसंलालितकथञ्चित्क्षणिकतावादसमर्थनेन संशोधितानि चैकान्ततारूपदुष्टांशापहारद्वाराऽक्षपादौलूक्यमतानि, यत्र च प्रसङ्गानुप्रसङ्गतो विलुलितानि कणभक्षाक्षपादसम्मतातिरिक्तजातिसमवायादिवादप्रबन्धानि योगाचारमाध्यमिकाभीष्टैकान्तप्रकारान्तराणि, यत्र च क्वचि-

त्कचिद्विषये स्याद्वादराद्धान्तमर्थत अभ्युपपन्नाश्चान्येऽपि वादिनः, तथाहि अक्षपादकणभक्षानुयायिनौ तत्तदंशावच्छेदेनानुभूयमान-
नीलत्वपीतत्वादिधर्माध्यासासादितभेदं चित्राकारप्रतीत्यवभासमानचित्रत्वात्मकवर्णत्वावान्तरवैजात्यावाप्तैकत्वं रूपमतिरिक्तचित्ररू-
पतयाऽभ्युपगच्छन्तौ तत्त्वतः स्याद्वादमेवाभ्युपगतवन्तौ, नव्यतार्किकाश्चाऽभेदस्याव्याप्यवृत्तित्वं व्यधिकरणधर्मावच्छिन्नप्रतियोगिता-
काऽभावश्चाभ्युपगच्छन्तः स्याद्वादकृतादरा एव, कपिलपतञ्जलिमतानुयायिनौ त्रिगुणात्मिकामेकां प्रकृतिमुरीकुर्वन्तावनेकान्तवाद-
मेवाश्रितौ, मायाश्चैकां त्रिगुणात्मिकां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावश्चाभ्युपगच्छन् वेदान्ती स्याद्वादमेवोररीकरोति,
सामान्यादीनां व्यक्तिभिस्सह भेदाभेदमुपगच्छन् मीमांसकोऽपि न स्याद्वादाज्ञामतिक्रामति, बौद्धोऽपि नीलपीताद्यनेकाकारैकविज्ञा-
नमभ्युपगच्छन् ज्ञानाकाराद्वैतवादी कथमिव स्याद्वादमतिपतेदित्यपि प्रदर्शितम्, निराकृतानि च यत्र वैशेषिकसम्मतान्यात्मविभु-
त्वाद्येकान्तवादमोहविलसितानि, यत्र च द्रव्यार्थिकपर्यायार्थिकनयपरिशोधनमेवैदम्पर्यार्थः, स्याद्वादप्रमाणराजस्य सर्वनयविषय-
ताव्यापकविषयताकत्वञ्च, यत्र चान्ते मुक्तिमार्गाणां सम्यग्दर्शनज्ञानचारित्राणां प्राधान्याप्राधान्यविचारो रत्नत्रयाराधनोपयोगि-
तया सन्निवेशितो मुमुक्षुजनमनःप्रीणनैकफलकः। तस्य ग्रन्थरत्नस्य सूक्ष्ममनीषायानपात्रसञ्चारव्यापारपरिदृष्टानेकदर्शनमहोदधिविस्ता-
रस्य स्वतोऽवगतिप्रदानप्रत्यलत्वेऽपि मन्दमतीनां न व्याख्यानमन्तरा यथावत्स्वाभिप्रेतार्थावगतिप्रदाननैपुण्यमित्याकलयन्तोऽस-
द्गुरवस्सर्वदर्शनस्वतन्त्रास्तत्रभवन्तश्श्रीमन्तस्सुगृहीतनामधेयाः विजयनेमिसूरिश्वरतातपादा अन्वर्थाभिधानां न्यायप्रभां विवृ-
तिमारचय्य परोपकारविभूतिं प्रकटितवन्तः, यस्यां न केवलं प्राचीनोक्तियुक्तिसंघटिताऽनल्पविचाराऽप्रतिमप्रयोगसाम्राज्यम्,
नवीनतर्कालीसम्मानितानल्पप्रमाणप्रयोगपरिपोषणमपि विद्वज्जनचेतश्चमत्करोत्येव, अवतरणिकात एव यस्या मूलाभिप्रेतार्थः कर-

तलामलकवत्सुस्पष्टमवभासते, नातः परमपेक्षणीयं व्याख्यानं मूलस्य, तथाप्यत्यन्तमन्दमतीनां शेमुष्युन्मेषविधुराणां मूलार्थाव-बोधसौकर्याय एषापि कल्पलतिका मयोपकल्पितोपादेयतासमलङ्कृता गुरुचरणाऽर्पिता भविष्यतीत्युपात्तबुद्धेर्ममापि परिश्रमो नात्राऽऽयासमात्रफलकः, यदत्र प्रकरणविभजनं दुर्बोधार्थग्रन्थग्रन्थ्युद्घाटनं वाग्युक्तियुक्तिपरिभावनं यच्चात्र किमपि प्राचीननवीनसंवादसन्निवेशनं तत्र सर्वत्र कारणमखण्डभूमण्डलाभिव्याप्तावदातकीर्त्तिचन्द्रानवरतोदिताप्रतिहतप्रचारोद्दामप्रतापाभिभूतोष्णदीधिति-स्याद्वादतत्त्वगर्भानव्ययुक्तिप्रकरानेकग्रन्थग्रन्थनाहृतानल्पजन्तुहृदयान्तर्वर्त्तिमिथ्यामोहप्रसर-श्रीगुरुमुखवचनाऽमृतरसाऽऽस्वादनप्रभाव एव, यदत्र किञ्चिन्मतिमान्द्यात् छाद्मस्थिकपुरुषसुलभतरभ्रमप्रमादादिदोषमाहात्म्यात्कचिच्छन्ददोषसङ्घटनमर्थदोषसङ्घटनं वा, यच्च मुद्रणदोषतोऽक्षरमात्रादिच्युतिस्थानविनिमयादिरिङ्गणं तत्सर्वं परमाणुमात्रपरगुणपर्वतसमकीर्त्तनविकसितहृदय-परगतानल्प-दोषाविष्करणानभिलाषुक-तदपहारास्खलितोक्तिप्रचार-मात्सर्यदोषदहनाविदग्धान्तःकरण-स्वपरसिद्धान्तानुपमतत्त्वावबोधपरायण-परकृत्युपादानैकनिरत-पुण्यपीयूषपूर्णा-विद्वत्कुलमणयस्संशोधयिष्यन्ति, न च "गच्छतस्स्खलनं क्वापि, भवत्येव प्रमादतः। हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ॥१॥ इति पद्यानुसन्धानभाजां तेषां हास्यास्पदमहं स्यामित्याशासे

श्रीतपोगच्छोदयाद्रिसूरभट्टारकश्रीमद्विजय-
नेमिसूरीश्वरचरणकमलमधुव्रत-
विजयदर्शनसूरिः ॥

॥ ॐ अर्हं नमः ॥

॥ भारतवर्षकमलाकरकमलायमानायानल्पललितलब्धिमाणिक्यमालिने श्रीगौतमस्वामिने नमो नमः ॥

न्यायव्याकरणसिद्धान्तादिपारावारावगाहनसमुपलब्धानल्पतत्त्वमणिसन्दृब्धादभ्रग्रन्थमालेभ्यः श्रीतपोगच्छनभोदिनमणिभ्यः शासनसम्राड् भट्टारकाचार्यश्रीविजयनेमिसूरिसद्गुरुभ्यो नमो नमः ।

तत्पट्टालङ्कारान्यायवाचस्पति--सिद्धान्तविशारदोपनाम-तपोगच्छीयभट्टारकाचार्यश्रीविजयदर्शनसूरिप्रणीत-श्रीमहावीरस्तवकल्पलतिकाख्यविवृत्यलङ्कृतं

न्यायखण्डखाद्यापरनामकं--

# ॥ महावीरस्तवप्रकरणम् ॥

समभ्यर्चा यस्य स्फुरितमहिमा कल्पलतिका, सदामोदोल्लासी सकलजनतापापहरणी ।
सदा यत्सिद्धान्तोक्त्यनुपमसुधापानकरणात्, सुरायन्ते भव्यास्स शमयतु वीरप्रभुरशम् ॥ १ ॥

विमलकमलसिंहाद्यासनन्यासकारी, सकलसुरनराणाञ्चास्ति साराधनीया ।
सकलकुशलचन्द्रप्रोज्ज्वलत्कीर्त्तिभूमी-रुचिप्रशमगुणाभ्यां हेमचन्द्रं प्रसूते ॥ २ ॥
विभुप्रथमजसृष्टा जीवराजैकमाता, जनयति शिवबीजं दर्शनं सुन्दराख्यम् ।
मधुपुरनगरीस्था वीरनाथस्य मूर्त्तिः, स्वशिशुसमयतो मे सेवितुः शं ददातु ॥ ३ ॥ युग्मम् ॥
बरे यद्वाक्सिन्धौ मितिगमनयावर्त्तगहने, भृशं भ्रामं भ्रामं प्रतिहतसुवेगा मतितरी ।
विपक्षाणां भग्ना स्वसुगुरुसमूहोपरचिता, स मे दद्याद् बोधं विधृतिकुशलं गौतमविभुः ॥ ४ ॥
श्री सिद्धसेनहरिभद्रमुखा जयन्तु, ते सूरयो मथितमोहतमःप्रचाराः ॥
येषां प्रबोधकुशला विविधा निबन्धाः, श्रीदृष्टिवादखसुपाठसुतारकाभाः ॥ ५ ॥
यदीया ग्रन्थोक्तिर्निरुपमसुतकौलिगहना, प्रवाग्युक्ते पक्षे कुलिशति गिरीन्द्रे सुपठिता ।
यशोव्याप्त्यान्वर्थां विजयचरमां वाचकवरो, यशः संज्ञां बिभ्रद् मिहिरतु स मेऽज्ञानतिमिरे ॥ ६ ॥
सुशिक्षां कृत्वा नोऽसमशमयुतां निस्पृहहितां, प्रशास्तुं विज्ञसो दिवमिव गतो यस्सुरवरैः ।
धियां जैत्री बुद्धिर्भवति यदुपास्त्या सुरगुरो-स्तमीडे मर्त्त्यार्च्यक्रमगुरुगुरुं वृद्धिविजयम् ॥ ७ ॥
सदार्हच्चक्रयाज्ञां स्रजमिव सुधत्ते गुणयरा-न्नरान् बोधं बोधं शिरसि विनयाद् धारयति ताम् ।

॥ १ ॥

समानैर्भङ्गौघैस्सुनयवचनैः शिक्षयति यः, सुमन्त्री श्रीनेमिस्स जयति सदा सूरिमुकुटः ॥ ८ ॥
क्व नव्येयं वाणी नवनवनयोन्मेषकलिता, सुदृब्धा तर्कालिप्रथितविषया वाचकवरैः ।
क्व चास्यां नो विद्याविदितपरभावा कृतिरियं, तथाऽप्येतद्योगे प्रभवति गुरूक्तिस्सुविमला ॥ ९ ॥
गुरूक्तिं बिभ्राणा शिशुजनसुबोधान्वयपरा, स्वशुद्ध्यै श्रीवीरस्तवनविषयाख्याननिरता ।
परार्थव्यासङ्गा कलितविषया मुक्तिसरणिः, कृतिर्दृष्टार्थेयं भवतु सुधियां दर्शनकृता ॥ १० ॥
भक्त्या दर्शनसूरिणा जिनमताभ्यासैकनिष्ठार्थिना, श्रीवीरस्तवकल्पवृक्षलतिका येयं समातन्यते ।
सा न्यायप्रभया गुरोर्विशदया श्रीनेमिसूरेः प्रभो-र्विज्ञानां मुदमातनिष्यति न किं क्रोडीकृतेवाऽऽत्मजा ॥ ११ ॥

भव्यजन्तुव्रातानामर्हत्तत्त्वपरमार्थानवबोधप्रयोज्यलुप्तप्रायदिव्यदृष्ट्युन्मेषार्थं सहृदयहृदयचमत्कृतिकृत्खण्डखाद्यनामकं ग्रन्थं प्रारिप्सुस्तन्निष्प्रत्यूहपरिसमाप्तिकामः सकलजगज्जीवपरमार्हच्छासनरसैकलीनताचिकीर्षालक्षणकरुणैकव्याप्तचेता महोपाध्यायन्यायविशारदन्यायाचार्योपपदो न्यायैकनिष्णातो महत्सु प्रसादः सर्वश्रेयोऽधिगतेः कारणं प्रधानमित्यालोच्य भगवत्यविच्छिन्नप्रसादोत्पादनार्थं शास्त्रे चास्मिन्नादरेण श्रोतुः प्रवृत्त्यर्थं स्वशास्तृपूजां विधित्सुर्भगवान् श्रीयशोविजयः शिष्टाचारविषयताबोधितकर्तव्यताकं कल्पद्रुमोपमविघ्नव्रातविघात्यभीष्टमन्त्रस्मरणपूर्वकासाधारणानवद्यस्तवलक्षणविकचसुमनोभिरैदंयुगीनधर्मतीर्थनायकत्वेनासन्नोपकारि श्रीवीरपरमात्मचरणारविन्दस्वशास्तृमाहात्म्यज्ञापकासाधारणगुणगणाख्यानात्मकपूजाविधानरूपं मनोवाक्कायैकाग्र्यपुरस्सरं कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थघटकीभूतं करोति-

ऐङ्कारजापवरमाप्य कवित्ववित्व--वाञ्छासुरद्रुमुपगङ्गमभङ्गरङ्गम् ।
सूक्तैर्विकासिकुसुमैस्तव वीरशम्भो--रम्भोजयोश्चरणयोर्वितनोमि पूजाम् ॥१॥

ऐङ्कारेति, एतेनैर्दंयुगीनशासनशास्तृगुणगणाख्यानपूजाविधानात्मकमङ्गलकरणानर्थक्यारेका निरस्ता, तस्य च गुणगणरत्नसन्दोहमालिनि भगवति सर्वश्रेयोऽधिगतिहेतोः प्रसादस्योत्पादनार्थत्वात् । " अभ्यर्चनादर्हतां मनःप्रसादस्ततस्समाधिश्च । तस्मादपि निःश्रेयस–मतो हि तत्पूजनं न्याय्यम् ॥ १ ॥" इति पारमर्षवचनानुरक्तस्य परित्यक्तान्यकर्त्तव्यस्य परमात्मयथार्थगुणस्तवकरणैकलालसस्य प्रदीर्घतरतद्भावगमनेन यथासम्भवं सम्पादितयथार्थगुणस्तवोपचारस्य भवचक्रेऽतिदुर्लभोऽयं कल्याणपरम्परैकहेतुश्चिन्तामण्याद्युपमातीतः परमात्मगुणस्तवः कथञ्चिदवाप्तः नातः परमन्यत्कृत्यमित्यनेन कृतार्थमात्मानमभिमन्यमानस्यावतंसीभवत्पाणिपङ्कजश्रिय उक्तमङ्गलविधानेन चित्तं प्रसन्नं भवतीत्यत्र किमु वक्तव्यम् ?, कथमन्यथा ग्रन्थसमाप्तिप्रतिबन्धकीभूतविघ्नव्रातव्याघाताभावेन ग्रन्थसमाप्तिस्स्यात् । श्रोतृजनस्याप्युक्तमङ्गलश्रवणैकतानभूतस्य यथाचित्तं प्रसन्नं भवति तथोच्यते, तथाहि–श्रोतृजनो हि द्विविधस्तावत्–श्रद्धानुसारी, प्रज्ञानुसारी चेति । तत्र आद्योऽनुग्रहबुद्ध्या यथाभूतगुणसम्पद्योगादभ्युदयनिःश्रेयसप्रापणतो जगतश्शास्ता भवति भगवान् स एवाभ्युदयनिःश्रेयसार्थिनां भवे भवे शरण्य इत्यादिक्रियमाणगुणगणाख्यानविधिनाऽमुना भगवतो माहात्म्योद्भावनश्रवणमात्रेणाऽसंशयं भगवति झगिति चित्तप्रसादोल्लासी सञ्जायते, तदनु तद्गुणभक्तिबहुमानोपादित्सादिक्रमेण सर्वश्रेयोऽधिगच्छति, द्वितीयस्तु " अभ्यासाद्ध्यभ्यासोऽभिवर्द्धते " इति न्यायात् प्रज्ञादीनां गुणा-

नामभ्यासात्तत्पुरुषेषु तत्तत्काले प्रकर्षप्रकर्षतरप्रकर्षतमदर्शनात् कस्मिँश्चित्पुरुषविशेषे कस्मिँश्चित्काले मिथ्याज्ञानादिविपक्षनिर्मूलकाषंकषणात् प्रकर्षकाष्ठामवगच्छन्, अतीन्द्रियार्थदृक्साधकयुक्तिप्रयुक्त्यन्तरतो नूनं जगति सम्भाव्यत एव तातपादस्सर्वज्ञो भगवान् इत्यवधार्य भगवति बहुमानतश्चित्तप्रसादभाग् भवति तत्प्रसादाच्च तद्गुणस्तवतत्प्रवचनेषु तदाश्रिते च शास्त्रादौ परीक्षापुरस्सरमुद्ग्रहणार्थमाद्रियते, ततः श्रुतमत्यादिप्रज्ञोदयक्रमेण यावत्परं श्रेयोऽधिगच्छतीति महत्सु प्रसादस्सर्वश्रेयोऽधिगतेः प्रधानं कारणम्, अत एव प्रायेण प्रसिद्धशास्तृकप्रवचनाश्रयेण प्रणीयमानेषु शास्त्रेषु शास्त्रकृतश्शास्त्रस्यादौ तावत् स्वशास्तृपूजामेव विदधति, तस्यास्तत्प्रवृत्तावप्यङ्गभावस्य लेशतो विद्यमानत्वात् , अत एवोक्तमन्यैरपि "शास्त्रं प्रणेतुकामः स्वशास्तुर्माहात्म्यज्ञापनार्थं तस्मै नमस्कारमारभत " इति अतो नाऽनर्थकं शास्तृपूजाविधानमिति स्थितम् ।

अत्र हे वीर ? शम्भोस्तवाम्भोजयोश्चरणयोः पूजां वितनोमीति क्रियाभिसम्बन्धः । विततनक्रिया यथा कर्तृकर्मापेक्षिणी तथा करणापेक्षिण्यपीति करणापेक्षायामाह— सूक्तैर्विकासिकुसुमैरिति, शोभनानि उक्तानि अल्पवर्णपदवाक्यादिभावेन महार्थगौरवेण च भाषाद्रव्यपरिणतिलक्षणानि वचनानि सूक्तानि, तैः सूक्तैस्तद्रूपैः विकासिकुसुमैः विशेषेण कासन्ते विकासीभवन्तीत्येवंशीलानि यानि कुसुमानि तानि तथा तैः, अत्र सुशब्दः शोभनार्थः, शोभनत्वं च पुनरुक्तत्वादिदोषानाविलत्वम्, एतेन सूक्तं पदं हि अर्थाव्यभिचार्येव ज्ञानमर्जयति, अर्थाव्यभिचारिज्ञानं च संवादिप्रवृत्तिजनकत्वेन फलवत्तया व्याप्तमिति साक्षाद्व्यवहितप्रयोजनस्य ग्रन्थतत्त्वज्ञानापवर्गाणां हेतुहेतुमद्भावस्य ग्रन्थतदभिहिततत्त्वानां ज्ञाप्यज्ञापकभावस्य सम्बन्धस्य च प्रदर्शनम् सूक्तपदं तर्कावतारगर्भसूक्तार्थं लाक्षणिकमिति तद्रूपस्याभिधेयस्य तदभिलाषुकाणां चैतद्ग्रन्थाधिकारित्वस्य च सूचनं कृतम्,

कुसुमानां विकासी तिविशेषणात् सङ्कुचितानां कुसुमानां पूजानर्हत्ववत् सङ्कोचमितानां वचनानामपि तथात्वमेवेति व्यञ्जितम् । किं कृत्वेत्याकाङ्क्षायामुत्तरक्रियासापेक्षपूर्वक्रियामाह– 'ऐङ्कारजापवरमाप्येति' जप्यन्ते असकृदुच्चार्यन्त इति जापाः तेषु वरः प्रधानः जापवरः ऐँकारश्चासौ जापवरः स तथा तम्, आप्य,प्राप्य, वितननक्रियापेक्षया पूर्वकालभावित्वादाप्तेः क्त्वानिर्देशः, सर्वस्मिन् स्वकृतग्रन्थे प्राय आदावपूर्वानुपूर्वीसमलङ्कृतैङ्कारेतिपदोपादानं दरीदृश्यते,अत्राप्यादौ तदुपन्यासकरणादस्य ग्रन्थरत्नस्य स्वनामधेयाऽन्यमुनिकर्तृकत्वभ्रमनिरासः कृतः ।

ल्यप्प्रत्ययप्रकृत्यर्थप्राप्तिनिरूपितकर्मताश्रयभूतमैँकारजापवरं विशिनष्टि–कवित्वविश्ववाञ्छासुरद्रुमिति -"प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता । तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ॥ १ ॥" इत्युक्तलक्षणस्य कवेर्भावः कर्म वा कवित्वं तद्वेत्तीति कवित्ववित् तस्य भावस्तत्त्वम्, अथवा कवेर्भावः कवित्वं,वेत्तीति विद् तस्य भावो वित्त्वं,कवित्वं च वित्त्वं च कवित्ववित्त्वे तस्य तयोर्वा वाञ्छा इच्छा कवित्ववित्त्ववाञ्छा, तस्यां तद्विषयसम्पत्त्या तन्निवृत्तौ, सुरद्रुः कल्पवृक्षः कवित्ववित्त्ववाञ्छासुरद्रुः तम्, उक्तमन्त्रस्य सुरद्रुमोपमया प्रतिज्ञातश्रीवीरप्रभुचरणार्चनकरणभूतसूक्तात्मकविकचकुसुमप्राप्तिस्सूचिता, कुत्राप्येत्यधिकरणाकाङ्क्षायामाह– उपगङ्गमिति, गङ्गायास्समीप इत्युपगङ्गम् गङ्गासमीपप्रदेश इत्यर्थः, एतेन काश्यामनवद्यकवित्ववित्त्वविद्याविशारदत्वं प्राप्तमिति ध्वनितम्, यदुक्तम्, यस्मै न्यायविशारदत्वविरुदं काश्यां प्रदत्तं बुधैरित्यादि, तथा न्यायाचार्यपदं ततः कृतशतग्रन्थस्य यस्यार्पितमित्यादि, अत एवास्मिन्नेव ग्रन्थे "प्रबन्धाः प्राचीनाः परिचयमिताः खेलतितरां—नवीना तर्काली हृदि विदितमेतत्कविकुले । असौ जैनः काशीविबुधविजयप्राप्तविरुदो मुदो यच्छत्यच्छः समयनयमीमांसितजुषाम् ॥१॥" इत्यादि वक्ष्यमाणं सङ्गति-



॥

मङ्गति, । अन्यमन्त्रेभ्य उक्तमन्त्रस्याभङ्गरागविषयत्वाभङ्गुरफलप्रदातृत्वादिविशेषप्रतिपत्तये उक्तमन्त्रं विशिनष्टि-अभङ्गरङ्गमिति अभङ्गो भङ्गरहितः परिपूर्ण इति यावत्, रङ्गो रागो यं प्रति स तथा तम्, यद्वा अभङ्गोऽभङ्गुरो रङ्गः फलप्रदानैकशौण्डीर्यं यस्य यस्मिन् वा स तथा, अथवा कथमाप्येत्यत आह-अभङ्गेति, प्राप्तिक्रियाविशेषणतया व्याख्येयम्, अभङ्गरङ्गं स्वचित्तापूर्वाखण्डोल्लासं यथा स्यात्तथेत्यर्थः, यद्वा अभङ्गरङ्गमिति वितननक्रियाविशेषणत्वेन व्याख्येयम्, अत्र पक्षे रङ्गो नृत्यं रागो वा बोध्यः। अन्तिमतीर्थप्रभोरत्यन्तासन्नोपकारित्वात्तमभिमुखयति-'वीरेति, विशेषेण इया श्रिया राजते इति वीरः, विशेषेण ईर्ते याति शिवमिति वीरः, अथवा विशेषेण ईरयति कम्पयति आस्फोटयति अपनयतीति यावत् कर्मेति वीरः, यदि वा ईरणमीरः विशिष्ट ईरो गमनं " सर्वे गत्यर्था ज्ञानार्थाः " इति वचनात् ज्ञानं यस्य स वीरः, 'शूरवीर-विक्रान्ताविति' वचनात् वीरयति अभिभवति भावारिमिति वा वीरः, इति व्युत्पत्तिपञ्चकेन चरमतीर्थपतेर्भगवतस्स्वार्थसम्पदमाह-अथवा विशिष्टा सकलभुवनाद्भुता याईर्लक्ष्मीः स्वर्गापवर्गादिरूपा तां राति प्रयच्छति भव्येभ्य इति वीरः, राति च भगवान् सुरासुरनरोरगतिर्यक्साधारण्या वाण्या निःश्रेयसाभ्युदयसाधनोपदेशामृतवृष्ट्या भव्यानां भुवनाद्भुतां श्रियम्, तथा चोक्तम्-"अरहंतो भगवंतो, अहियं हियं च नवि इहं किंचि। वारंति य कारवंति य, घेत्तूण जणं बला हत्थे ॥ १ ॥ उवएसं पुण देंति, जेण चरिएण कित्तिनिलयाणं। देवाणवि हुंति पहु, किमंग पुण मणुयमित्ताणं ॥२॥" इति अनया व्युत्पत्त्या भगवतः परार्थसम्पदमाह, अथवा विदारयति यत्कर्म तपसा च विराजते। तपोवीर्येण युक्तश्च तस्माद्वीरइति स्मृतः ॥ १ ॥ इति निरुक्ताद् वीरः, शम्भोः, शं शाश्वतं सुखं तत्र भवतीति शम्भुः अथवा शं सुखं भवति यस्मादिति शम्भुस्तस्येत्यर्थः, पूजां भावपूजां, तस्या एवैकान्तिकात्यन्तिकफलप्रदान-

समर्थत्वात्, आप्येत्यनेन पूर्वक्रियोक्ता, सा चोत्तरक्रियाऽविनाभाविनीत्यतस्तामाह वितनोमीति—विस्तारयामीत्यर्थः विशेषेण करोमीति यावत्, तनोमीत्यनेनैव गतार्थत्वेऽपि विपदोपादानं श्रीवीरप्रभुविषयकभक्तिश्रद्धातिशयलक्षणप्रकर्षद्योतनार्थं, तथाकृता हि पूजा मङ्गलमावहति, कृतमङ्गलेन गुरुणा प्रारीप्सितग्रन्थो निर्विघ्नतया समाप्तिं नीतस्सन् शिष्यपरम्परायै दीयमानोऽविच्छिन्नतयाऽवतिष्ठत इति ॥ प्रतिज्ञाप्रयोजनमुपदर्शयितुमाह—

**इष्टबीजप्रणिधानपूर्वा प्रतिज्ञेयं वर्त्तमानतीर्थाधिपतेर्भगवतः श्रीवर्धमानस्वामिनः स्तवस्य स्वश्रद्धागुणोपबृंहकतर्कावतारगर्भत्वेन विशिष्टभक्त्यभिव्यक्त्यर्था तद्वच्छिष्यावधानार्था च ॥ १ ॥** तदाह—

इष्टबीजप्रणिधानपूर्वेति, इष्टं च तत् बीजं च इष्टस्य वा बीजमिष्टबीजम्, इष्टबीजस्य प्रणिधानम् इष्टबीजप्रणिधानम्, तत्पूर्वं यस्यां प्रतिज्ञायां सा इष्टबीजप्रणिधानपूर्वा । अत्र बीजपदस्य मन्त्रार्थत्वेन प्रणिधानस्य च मनस एकाग्रीकरणार्थत्वेन इष्टमन्त्रविषयकचित्तैकाग्रीकरणाव्यवहितोत्तरकालीनेत्यर्थः । अव्यवहितोत्तरकालीनत्वस्य तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणतत्क्षणध्वंसाधिकरणक्षणवर्त्तित्वरूपत्वेनेष्टमन्त्रविषयकचित्तैकाग्रीकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणतत्क्षणध्वंसाधिकरणक्षणवर्त्तिनीति पर्यवसितार्थः । अथवा बीजपदस्य साधनार्थत्वेन भावप्रधानत्वेन च प्रणिधानस्य च स्मरणपरत्वेन प्रकृतस्तवो ममेष्टसाधनमितीष्टसाधनत्वप्रकारकस्तवविशेष्यकस्मरणाव्यवहितोत्तरकालीनेत्यर्थः, **प्रतिज्ञेति** उत्तरकालीनकर्त्तव्यत्वप्रकारकबोधानुकूलव्यापाररूपेत्यर्थः, इयं इदंशब्दस्य प्रत्यक्षासन्नवाचित्वादधुनैव श्लोकोच्चारणे श्रवणगोचरीभूता वितनोमीत्याकारिका, तत्र **विशिष्टभक्त्यभिव्यक्त्यर्थे**त्यस्य तद्वच्छिष्यावधानार्था चेत्यस्य चान्वयः । तत्र विशिष्टा लोकोत्तरा भक्तिस्तदेकाग्रचित्तवृत्तिः

तस्या याऽभिव्यक्तिः प्रादुष्करणं तस्यै इयं विशिष्टभक्त्यभिव्यक्त्यर्था, तद्वन्तो विशिष्टभक्तिमन्तो ये शिष्यास्तेषामवधानार्था श्रवणैकताननताकरणार्था, अथवा तद्वदित्यत्र वतिस्साहश्यार्थे, तथा च यथा विशिष्टभक्त्यभिव्यक्त्यर्था तथेत्यर्थः, चः समुच्चये, किं विषया प्रतिज्ञा ? इत्यत आह–स्तवस्येति, यथाभूतस्वार्थपरार्थगुणसम्पत्सङ्कीर्त्तनस्येत्यर्थः। अत्रषष्ठीविभक्त्यास्सम्बन्धार्थत्वात् सम्बन्धस्य विषयित्वलक्षणस्य प्रतिज्ञाघटके उत्तरकाले श्रीवर्द्धमानस्वामिनः स्तुतिः कर्त्तव्येत्याकारके बोधे वितनोमि पूजामित्याकारके व्यापारे चान्वयः। कस्य स्तव इत्याकाङ्क्षायामाह–**श्रीवर्द्धमानस्वामिन** इति, स प्राकृतजनातिशायी किं वा न ? इत्याकाङ्क्षायामाह–**वर्त्तमानतीर्थाधिपतेर्भगवत** इति, वर्त्तमानं साम्प्रतिकं तीर्थं तीर्यते संसारार्णवो येन तत्तथा, तच्च यथावस्थितसकलजीवाजीवपर्यायसार्थप्ररूपकमत्यन्तानवद्यान्याऽविज्ञातचरणकरणक्रियाधारं त्रैलोक्यगतशुद्धधर्मसम्पद्युक्तमहासत्त्वानां ज्ञानाद्यनन्तचतुष्टयसम्पादकमचिन्त्यशक्तिसमन्वितावसंवादिपरमबोहित्थकल्पं प्रवचनं, निराधारस्य तस्यासम्भवात् तदाधारो ज्ञानदर्शनचारित्रगुणासंघातश्चतुर्विधसङ्घो वा प्रथमगणधरो वा। उक्तं च–तित्थं भंते ? तित्थं तित्थकरे तित्थं गोयमा ! अरिहा ताव नियमा तित्थकरे, तित्थं पुण चाउव्वण्णो समणसंघो पढमगणहरो वेति। तस्याधिपतेस्सद्धर्मतीर्थकरणहेतुत्वात् कृतार्थस्यापि तस्य तीर्थकरनामकर्मोदयतस्समग्रप्राणिगणानुकम्पापरतया च सद्धर्मतीर्थदेशकत्वात् स्त्रीपुरुषबालवृद्धस्थविरकल्पिकजिनकल्पिकादीनामनुरूपोत्सर्गापवाददेशनयाऽनुलोमसद्धर्मतीर्थप्रवर्त्तकत्वात् स्वामिनः, भगवतः "ईसरिय–रूव–सिरि–जस-धम्म–पयत्ता मया भगाभिक्खा। ते तेसिमसामण्णा संति जओ तेण भगवंते॥ १ ॥" इति महाभाष्यवचनाद् भगः प्राकृतपुरुषातिशाय्यैश्वर्यादिर्यस्याऽस्तीति भगवान् तस्य। कथं प्रतिज्ञा ग्रन्थकर्त्तुर्विशिष्टभक्तिमभिव्यनक्ति, कथं च शिष्याणां श्रवणैकताननतां क-

रीतोन्यन आह–स्वश्रद्धागुणोपबृंहकतर्कावतारगर्भत्वेनेति, स्वस्य ग्रन्थकर्त्तुः श्रद्धा चरमतीर्थपतिविषया रुचिः स्वश्रद्धा, सैव गुणः स्वश्रद्धागुणः, यद्वा श्रद्धा उक्तलक्षणा गुणाः ज्ञानादयः तं तान् वा उपबृंहयन्ति पोषयन्तीति स्वश्रद्धागुणोपबृंहकाः, तादृशा ये तर्काः अर्थाव्यभिचारिज्ञानोत्पादकस्याद्वादपक्षस्थापिकाः एकान्तपक्षप्रतिक्षेपिका युक्तयः, तेषामवतारः अवतरणं तत्र प्रतिपादनमिति यावत् स गर्भो घटकः तद्विषयताव्यापकविषयताशालीति यावत् यस्मिन् स तथा तस्य भावः तत्त्वं, तेन स्वश्रद्धागुणोपबृंहकतर्कावतारगर्भत्वेन, प्रथमपक्षे श्रद्धायां मोक्षैकसाधनत्वसूचनाय गुणपदमुपात्तम्, अत्र तृतीयार्थः प्रयोज्यत्वं तादृशगर्भत्वे पुनरावृत्त्या स्तवस्येत्यस्यान्वयः, षष्ठी चात्राधेयत्वार्थे, तथा चाभीष्टमन्त्रस्मरणपूर्वकत्वे सतीष्टसाधनतास्मरणपूर्वक ऐदंयुगीनतीर्थाधिपतिभगवच्छ्रीवर्द्धमानस्वामिसम्बन्धिस्तवविशेष्यकोत्तरकालीनकर्त्तव्यत्वप्रकारकबोधानुकूलस्स्तवगतग्रन्थकारीयश्रद्धागुणोपबृंहकतर्कावतारगर्भत्वप्रयोज्यविशिष्टभक्त्यभिव्यक्तिविशिष्टभक्तिमच्छिष्यावधानफलद्वयवान् स्तवविषयकव्यापारोऽयमिति समुदायसङ्क्षेपार्थः। विस्तरार्थस्त्वयम्-ऐङ्कारमन्त्रावलम्बिचित्तैकाग्रीकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणतत्क्षणध्वंसाधिकरणक्षणवर्त्तित्वे सति भागवतयथार्थस्वार्थपरार्थगुणसम्पत्सङ्कीर्त्तनं ममेष्टसाधनमित्याकारकेष्टसाधनत्वनिष्ठप्रकारतानिरूपितभागवतयथार्थस्वार्थपरार्थगुणसम्पत्सङ्कीर्त्तनलक्षणस्तत्रनिष्ठविशेष्यताशालिस्मरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणतत्क्षणध्वंसाधिकरणक्षणवृत्तिः प्रयोक्त्रधिकरणकालवर्त्तितीर्थाधिपतिभगवच्छ्रीवर्द्धमानप्रभुसत्कपरमार्थभूतगुणसम्पत्सङ्कीर्त्तनं मया उत्तरकाले कर्त्तव्यमित्याकारकोक्तलक्षणस्तवविशेष्यकोत्तरकालीनकर्त्तव्यत्वप्रकारकबोधानुकूलः प्रकृतस्तवनिष्ठमोक्षैकसाधनभूतग्रन्थकारीयश्रद्धोपबृंहकस्वपक्षस्थापकपरपक्षप्रतिक्षेपकयुक्तिवर्गाभिधायकवचनप्रकरनिरूपितविषयताव्याप्यविषयतानिरूपकत्वप्रयोज्यविशिष्टभक्त्यभिव्यक्तिविशिष्टभक्तिमच्छि-

ण्यश्रवणैकतानताकरणलक्षणफलद्वयवान् वितनोमि पूजामित्याकारकस्स्तवविषयको व्यापारोऽयमिति ॥ १ ॥

स्तुत्या गुणाः शुभवतो भवतो न के वा, देवाधिदेव ! विविधातिशयर्द्धिरूपाः ।
तर्कावतारसुभगैस्तु वचोभिरेभि–स्त्वद्वाग्गुणस्तुतिरनुत्तरभाग्यलभ्या ॥ २ ॥

इत्थं च स्तुत्यन्तरौदासीन्येन महातर्कमयभगवद्वाक्यगुणस्तुतेरेवात्र चिकीर्षितत्वादाद्यपद्यस्थं सूक्तपदं तर्कावतारगर्भसूक्तार्थेऽर्थान्तरसंक्रमितवाच्यमित्यर्थः ॥ २ ॥

स्तुत्या गुणा इति, हे देवाधिदेव ! शुभवतो भवतः विविधातिशयर्द्धिरूपाः विविधा नानाविधा अपायापगमादि-भेदभिन्ना इति यावत् अतिशयाः प्रभावविशेषा विविधातिशयाः, त एव ऋद्धयः तास्तथा ता एव रूपं स्वरूपं येषां ते तथा गुणाः के वा न स्तुत्याः स्तोतुं योग्याः, अपि तु सर्वे एव स्तुत्याः स्तुतिविषया इत्यर्थः । तत्र चतुर्ष्वप्यपायापगमज्ञानपूजावागतिशयेषु स्तोतव्यत्वप्रयोजकस्य प्राकृतजनगुणातिशायित्वस्याविशिष्टत्वादिति हेतुरूह्यः । यद्यपीति शेषः, नन्वेवं तर्हि किमित्यपायापगमा-द्यतिशयव्यपोहेन वचनातिशय एव स्तुत इत्यत उत्तरार्द्धमाह– तर्कावतारसुभगैरिति स्वपक्षस्थापकपरपक्षप्रतिक्षेपकसुयुक्ति-वर्गप्रदर्शनमनोज्ञैरित्यर्थः, तुस्तथाऽप्यर्थे, एभिरिति वक्ष्यमाणैरित्यर्थः । एवञ्च तथापि तर्कावतारसुभगैर्वक्ष्यमाणैर्वचोभिरनुत्तरभा-ग्यलभ्या त्वद्वाग्गुणस्तुतिरित्यन्वयः । यद्यपि ज्ञानाद्यतिशयत्रयमपि भगवति विद्यत एव, तथापीदानीं तन्मुख्यवृत्त्या न स्तु-त्यर्हम्, यतः—येषां प्रागल्भ्यभाजां मिथ्यात्वविषमूर्च्छितानामाधुनिकानां भागवतापायापगमातिशयज्ञानातिशयपूजातिशयविषय-कविप्रतिपत्तिस्तान् प्रति महातर्कमयभगवद्वागतिशयप्रतिपादनमन्तरेण नान्यत् तेषामतिशयानां व्यवस्थापनप्रत्यलमिदानीं विद्य-

त इति । वागतिशयस्तुतिबलात्तु ज्ञानातिशयत्रयस्तुतिरप्याक्षिप्तैव, तथाहि–महर्द्धिकदेवार्चितसमवसरणस्थितभव्यजन्तुत्रातस्वस्वभाषापरिणामियुगपदनेकसंशयोच्छेद्यनन्तधर्मावलीढानन्तद्रव्याभिधायिमहातर्कमयभगवद्वागतिशय इदानीमपि कालत्रयाऽबाधिताविच्छिन्नप्रभावशालिभवाब्धिबोहित्थकल्पतत्सिद्धान्तावलोकनद्वारोपलभ्यमानः तत्कारणीभूतं प्रतिसमयमुत्पद्यमानानन्तपर्यायावलीढजगत्त्रयान्तर्गतप्रत्येकद्रव्यपरिच्छेदिज्ञानातिशयं विना नेति यावन्न कारणीभूतं विशिष्टज्ञानं स्तुत्यं भवति तावन्न तत्कार्यभूतं वाक्यं स्तूयमानं पर्यवस्यति, तथा स्वीयप्रतिप्रदेशमनन्तानन्तकर्मवर्गणाप्रदेशैरनुस्यूतस्य पुंसो लोकालोकावभासिज्ञानातिशयाभावात् तादृशातिशयः सिद्धिकोटिं नीतस्सन् स्वकारणीभूतमपायापगमातिशयमादायैव सिद्ध्यतीति तत्स्तुतौ तस्यापि स्तुतिरागतैव, लोकेऽपि मान्त्रिकतान्त्रिकाद्यतिशयं यः कोऽपि प्राप्नुयात् सोऽपि पूज्यो भवति, तर्हि योऽपायापगमाद्यतिशयशाली करामलकवत् त्रिलोकीपरिच्छेदिसाक्षात्कारज्ञानातिशयवान् जातः स त्रिलोकीजनैः पूज्यतम एव इत्यत्र किं वक्तव्यमित्यपायापगमातिशयस्तुतौ पूजातिशयस्तुतिरप्याक्षिप्तैवेति, उक्ताशयादेव प्रभुश्रीहेमचन्द्रसूरिणाऽन्ययोगव्यवच्छेदद्वात्रिंशिकायां—

"अयं जनो नाथ तव स्तवाय, गुणान्तरेभ्यः स्पृहयालुरेव । विगाहतां किन्तु यथार्थवाद–मेकं परीक्षाविधिदुर्विदग्धः ॥१॥"

इत्यत्रातिशयान्तरपरिहारेण वागतिशय एव स्तुतः, अतिशयान्तराणां सामर्थ्यलभ्यत्वात् ।

इत्थं चेति, अनुपमभाग्यशेखराणामेव तर्कप्रदर्शनमनोज्ञवाग्विलासैरनल्पार्थगर्भभगवद्वचनातिशयगुणस्तुतिर्लभ्येत्यत इत्यर्थः, स्तुत्यन्तरौदासीन्येनेति अपायापगमाद्यतिशयत्रयदेहसौगन्ध्याद्यतिशयस्तुत्याभिमुख्याभावेनेत्यर्थः, महातर्कमयेति, अस्य एकत्र विशेषणतयाऽन्वितस्य निराकाङ्क्षतया नान्यत्र विशेषणतयाऽन्वय इति नियमात् भगवद्वाक्य एवान्वयः, तत्स्तुतौ तु तर्क-

मयत्वं तत्स्तुतित्वादेव लभ्यते अन्यथा तया परं प्रति परार्थानुमानभावमापन्नया महातर्कमयत्वं स्तोतव्ये भगवद्वाक्यगुणे यदुन्यवस्थाप्यं तस्यैवानुपपत्तिस्स्यात्, आद्यपदस्थं आद्यश्लोकान्तर्गतसूक्तैर्विकासिकुसुमैरित्यादितृतीयचरणघटकीभूतम्, तर्कावतारगर्भसूक्तार्थे तर्कप्रदर्शनघटितसुष्ठुवचनरूपेऽर्थे। अर्थान्तरसङ्क्रमितवाच्यमिति अर्थान्तरेण शक्यतावच्छेदकानात्मकधर्मास्पदेन तर्कावतारगर्भरूपार्थेन सङ्क्रमितो विमिश्रितस्सूक्तरूपो वाच्योऽर्थो यस्य तत्तथेति व्युत्पत्त्या अजहत्स्वार्थाख्यलक्षणोपेतमित्यर्थः। ननु लक्षणा कतिविधा किमभिधाना किंलक्षणा चेति चेत्, उच्यते-सा द्विविधा, अर्थान्तरसङ्क्रमितवाच्या अत्यन्ततिरस्कृतवाच्या च, आद्याया अजहत्स्वार्थेति नामान्तरम्, द्वितीयायास्तु जहत्स्वार्थेति, तत्राद्या यत्र लक्ष्यार्थे शक्यार्थस्य लक्ष्यशक्योभयसाधारणधर्मरूपेण लक्ष्यघटकतया वा प्रवेशः, यथा काकेभ्यो दधि रक्ष्यतामित्यत्र सूक्तैरित्यत्र च यथासङ्ख्यम्। यत्र लक्ष्यार्थे न शक्यार्थस्योक्तोभयप्रकारेणापि प्रवेशस्तत्र द्वितीया लक्षणा, यथा गङ्गापदस्य केवलतीरे, यथा वा कुशलपदस्य निपुणार्थे। जहदजहल्लक्षणा तृतीया वेदान्तिभिर्नव्यैश्च नैयायिकैरभ्युपगम्यते, तल्लक्षणं तु शक्यैकदेशमात्रबोधिकेति, यथा तत्त्वमसीत्यस्य मायावच्छिन्नत्वान्तःकरणावच्छिन्नत्वे परित्यज्य केवलचैतन्ये यथा वा घटो नित्य इति वाक्यस्य घटत्वे नित्यत्वान्वयमवलम्ब्य प्रामाण्योपपादनाय घटपदस्य घटत्वे लक्षणा, प्राचीननैयायिकैस्तु शक्त्यैव निर्वाहे सा नाभ्युपगम्यते ॥ २ ॥

नन्वेतावता प्रबन्धेन भगवद्वाक्यगुणोत्कीर्तनरूपस्तुत्या भाग्यवच्छेखराणामेव लभ्यत्वेनात्र सैव कर्त्तव्येत्येवं स्तुतिप्रतिज्ञा ग्रन्थकृता दृढीकृता, न चोत्तरग्रन्थेन सा निर्वाहिता न्यायनयावलम्बनेनर्जुसूत्रनयखण्डनस्याप्रतिज्ञातस्यारब्धत्वात्, इति प्रतिज्ञाभङ्गदोषः प्राप्नोतीत्याशङ्कायां तदुद्दिधीर्षुः तदवतरणाय भूमिकामाह—

अथ कस्तर्कोऽत्र भगवद्वाग्गुणस्तुत्यवच्छेदकत्वेनाधिकृत इति चेत्, प्राधान्येनर्जुसूत्रनयपरिशोधक एव, भक्त्या तु प्रसङ्गायातोऽन्योऽपीत्यभिप्रायवानाह—

व्याख्या–अथेत्यादिना, अत्राथशब्दस्यानन्तर्यार्थत्वादधिकारार्थत्वाच्च प्रतिज्ञानन्तरं प्रतिज्ञाविषयीभूतार्थप्रतिपादको ग्रन्थ इदानीमधिक्रियत इत्यर्थः। किंशब्दस्य जिज्ञासायां विद्यमानत्वात् तर्कावतारगर्भसूक्तिरूपाया भगवद्वाग्गुणस्तुतेरवच्छेदकत्वेन तद्विषयताव्यापकविषयतानिरूपकत्वलक्षणेन घटकत्वेनाधिकृतः स्तुतिकाराभिलषितस्तर्को जिज्ञासाविषय इत्यर्थः। चेदिति प्रश्नार्थकमव्ययम्, प्राधान्येनर्जुसूत्रनयपरिशोधक इति। अथ कः ऋजुसूत्रार्थ इति चेत् उच्यते–ऋजु अकुटिलं देशकालान्तरसम्बद्धस्वभावरहितं वस्तुतत्त्वं साम्प्रतिकमेकस्वभावमित्येवं लक्षणं सूत्रयति व्यवहारयतीति ऋजुसूत्रः,उक्तव्युत्पत्त्या ऋजुसूत्रशब्देन क्षणिकबाह्यार्थव्यवहृतिकारिणः सौत्रान्तिक–वैभाषिकबौद्धभेदद्वयस्य ग्रहणम्, अथवा ऋजु बाह्यार्थापेक्षया ग्राहकसंवित्तिभेदविकलमविभागं बुद्धिस्वरूपमकुटिलं सूत्रयतीति ऋजुसूत्रः, उक्तव्युत्पत्त्या तेनोक्तस्वभावां बुद्धिमभ्युपगच्छतो योगाचारस्य तृतीयबौद्धभेदस्य ग्रहणम्, यदैकत्वानेकत्वसमस्तधर्मकलापविकलं तदपि विज्ञानं शून्यरूपमृजु सूत्रयतीति ऋजुसूत्रः,उक्तव्युत्पत्त्या तेन सर्वशून्यतामुररीकुर्वाणस्य माध्यमिकनाम्नश्चतुर्थबौद्धभेदस्य ग्रहणम्, तथा च सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकसंज्ञाभेदेन चतुर्भेदानामपि बौद्धदर्शनानां परिशुद्धिकारी तर्कोऽत्राधिकृत इति भावः।

नन्वग्रे न्यायमतेन स्थिरत्वपक्षेण बौद्धमतस्य क्षणिकत्वपक्षस्य खण्डनं कृतम्, न्यायमतश्च नैगमनयावलम्बीति तत्परिशोधक एव तर्कोऽत्राधिकृतः, किमित्युच्यते–प्राधान्येनर्जुसूत्रनयपरिशोधक इति चेत्, स्यादेतद् यदि तन्मात्र एव ग्रन्थसमाप्तिस्स्या-

त, न चैवम्, अन्तरान्तरा न्यायनयस्यापि स्याद्वादपक्षेण खण्डनात् । नन्वेवं तर्हि विनिगमनाविरहात्तदुभयनयपरिशोधकत्वं तर्कस्यास्तु एकान्तावलम्बितदुभयनयघटकीभूतस्यैकान्तभागस्य स्याद्वादपक्षेण खण्डनात् इति चेत्, न, न्यायनयेन सुगतनयखण्डनपुरस्सरं स्याद्वादपक्षेण न्यायनयस्यापि खण्डनेन कथञ्चित्क्षणिकत्वपक्षस्थापनेनर्जुसूत्रनयस्यैव परिशोधनात् । " आत्मा तु तादृगपि मुख्यतयाऽस्ति नित्यः, तद्भावतोऽव्ययतया गगनादिवत्ते " इत्यादिपद्येन मुख्यतया न्यायनयस्यापि परिशोधनमित्युपदर्शयितुमुक्तं भक्त्या तु प्रसङ्गायातोऽन्योऽपीति—

नैरात्म्यदृष्टिमिह साधनमाहुरेके; सिद्धेः परे पुनरनाविलमात्मबोधम् ।
तैस्तैर्नयैरुभयपक्षसमापि ते वा--गाद्यं निहन्ति विशदव्यवहारदृष्ट्या ॥ ३ ॥

एके केचिद् बौद्धा इह मोक्षोपायविचारे नैरात्म्यदृष्टिं सिद्धेः साधनमाहुः । तथा च तन्मतम् । सर्व एष हि भोगभाजः स्थिरतरमात्मानं मन्वानाः सुखादिकं कामयन्ते ।

नैरात्म्यदृष्टिमिहेति, इहैके सिद्धेः साधनं नैरात्म्यदृष्टिमाहुः, परे पुनरनाविलमात्मबोधम्, सिद्धेः साधनमाहुरित्यनुषज्यते, ते वाक् तैस्तैर्नयैरुभयपक्षसमाऽपि आद्यं पक्षमिति शेषः विशदव्यवहारदृष्ट्या निहन्तीत्यन्वयः । एके इत्यस्य केचिद्बौद्धा इति इहेत्यस्य च मोक्षोपायविचार इति विवृतिमाह-एक इत्यादिना । नन्विहेत्यस्यैतस्मिन् लोके इति विवृतिस्स्यात् किं वैतच्छास्त्र इति, नतु मोक्षोपायविचार इति, तस्याप्रस्तुतत्वादिति चेत्, मैवम्, यतः प्रस्तुतस्येव प्रसिद्धस्यापीहेत्यनेन ग्रहणं भवत्येव, कथमन्य-

थैतस्मिन् लोक इत्यस्यापि ग्रहणं स्यात्, तस्याप्यप्रक्रान्तत्वात्, तथा चैतल्लोकवत् मोक्षोपायविचारस्यापि प्रसिद्धत्वादिहेत्यनेन तस्य ग्रहणं युक्तमेव,किञ्च मोक्षोपायः 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति पारमर्षवचनात् सम्यग्दर्शनादित्रयमेव, तद्विचारस्त्वत्र "ज्ञानं प्रधानमिह न क्रियया फलाप्तिः, शुक्तावुदीक्ष्यत इयं रजतभ्रमाद्यत् । आकर्षणादि कुरुते किल मन्त्रबोधो, ह्रीणेव दर्शयति तत्र न च क्रियास्यम् ॥ १ ॥" इत्याद्यग्रिमग्रन्थेन कृत एवेति प्रकृतशास्त्रमपि मोक्षोपायविचाररूपमेवेति नोक्तदोषः ।

यद्यप्येतच्छास्त्रे सर्वमेतज्जगत् क्षणिकं संविदतिरिक्तं शून्यं बाह्याबाह्यपदार्थस्य स्वप्नोपमत्वात् सर्वमलीकमित्येव बुद्धिः मोक्षौपयिकीत्येवं सुगतसुता नोक्तवन्तः, नापि च गौतमीया आत्मादिर्नित्य इति स्थिरात्मबोधो मोक्षोपाय इत्येवमूचिरे, किन्तु स्वस्वशास्त्र एव, तथापि मोक्षोपायविचारत्वेन सामान्यधर्मेण मोक्षोपायाभिधायकानां सर्वेषां शास्त्राणामभेदात् शास्त्रान्तरोक्तेरप्येतच्छास्त्रोक्तिरूपतया शास्त्रान्तरवदेतच्छास्त्रमप्युक्तमोक्षोपायरूपं कथञ्चित् सम्भवत्येव, **नैरात्म्यदृष्टिमिति**, नित्य आत्मा नास्तीति बुद्धिं, ज्ञानसन्ततौ स्थिरतराश्रयकत्वाभाव इति बुद्धिं वेत्यर्थः, न च प्रतियोग्यप्रसिद्धिः, तन्मतेऽसत्ख्यात्या तत्प्रसिद्धेरुपगमात्, यद्वोभयदर्शनसङ्गतं क्षणिकत्वं वक्ष्यत इति तद्दर्शनमेव नैरात्म्यदर्शनं ज्ञेयम् ।

**सिद्धेरिति**, " चित्तमेव हि संसारो, रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ १ ॥ " इति सुगतसुतवचनात् रागादिक्लेशमलासम्भेदचित्तसन्ततिरूपमुक्तेरित्यर्थः । **साधनमिति**, उपादानमित्यर्थः, यद् यत्सन्ततिगतं सद्यत्कुर्वद्रूपात्मकं तत् तदुपादानमिति नियमाद् रागादिक्लेशवासितचित्तसन्तत्यन्त्यक्षणस्यानुपप्लवचित्तसन्ततिरूपमुक्त्याद्यक्षणानुकूलकुर्वद्रूपत्वात्मकशक्तियोगित्वेन तस्य तदुपादानत्वात्, **तन्मतमिति**, सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकभेदभिन्ना-

नां बौद्धचतुष्टयानां मतमित्यर्थः । अत एव विश्वमेव क्षणभङ्गुरमिति विश्वमेवालीकमिति च वक्ष्यमाणोक्तिरपि सङ्गच्छते, आद्योक्तेस्सौत्रान्तिकवैभाषिकमतद्वयमाश्रित्योक्तत्वात् द्वितीयोक्तेश्च योगाचारमाध्यमिकमतद्वयमाश्रित्योक्तत्वात् । ननु विश्वमेवालीकमिति वचो न योगाचारमतपोषकं, तन्मते घटपटाद्याकारतया प्रतीयमानं ज्ञानमेव सत् नतु बाह्योऽर्थ इत्यभ्युपगमात् इति चेत्, मैवं, तन्मते विश्वशब्दस्संविदतिरिक्तबाह्यरूपार्थे लाक्षणिक इत्येवं व्याख्यानात् ॥ नैरात्म्यदृष्टयामेव मानमाह—सर्व एव हीति, अस्थिरभूतमात्मतत्त्वं निर्णीतं यदि स्यात्तदा न कोऽपि सुखादिकामनाभाक् स्यात् प्रवृत्तिकाल एवात्मधर्मिणो विनाशित्वादित्यत आत्मानमित्यस्य विशेषणमाह—स्थिरतरमिति, अत्र साधकमानमाह—

यदाहुः—"सुखी भवेयं दुःखी च मा भूवमिति तृष्यतः । यैवाहमिति धीः सैव सहजं सत्त्वदर्शनम् ॥१॥" सत्त्वमात्मा, कामयमानाश्च सुखादिकं विहितनिषिद्धसाधनमस्यानुतिष्ठन्तः कर्माशयानाचिन्वाना जन्मादिकमनुभवन्ति । यदि पुनरमी नाहं कश्चित् किमपि मम नास्ति न किञ्चिदपि वस्तु स्थिरं विश्वमेव क्षणभङ्गुरमलीकं चेत्यवधारयेरन् न किञ्चिदपि कामयेरन्, न चाकामयमानाः केचिदपि प्रवर्तन्ते, न चाप्रवर्तमाना अपि कर्माशयेन सिच्यन्ते, न चान्तरेणापि कर्माशयं संभवो भोगस्येति भवति नैरात्म्यदर्शनं साधनमपवर्गस्येति।

यदाहुरिति, तृष्यतः तृष्णावतः पुरुषस्येति शेषः । विहितेति, प्रमाणतयाऽभ्युपगतैस्स्वागमैरिष्टसाधनतया बोधितेत्यर्थः, निषिद्धेति न कलञ्जं भक्षयेदित्यादिनिषेधविधिनाऽनिष्टसाधनतया बोधितेत्यर्थः । अस्य सुखादेः, षष्ठ्यर्थः कार्यत्वं तत्र प्रकृत्यर्थस्याधेयत्वसम्बन्धेनान्वयः तस्य च साधनपदस्य साधनत्वावच्छिन्नार्थत्वात् तदेकदेशे साधनत्वे निरूपितत्वसम्बन्धेनान्वयः ।

तथा च तत्तच्छास्त्रप्रतिपादितहिताहितविधिविषयमाधेयत्वसम्बन्धेन सुखविशिष्टकार्यतानिरूपितसाधनत्वाश्रयीभूतमनुतिष्ठन्त इत्यर्थः। कर्माशयानिति, कुशलाकुशलकर्माणीत्यर्थः, आचिन्वाना उपचयं कुर्वन्तः, अस्थिरत्वभावनोपयोगमाह—यदीति, अमी भोगाभिलाषुका जनाः, अस्य अवधारयेरन्नित्यनेन न किञ्चिदपि कामयेरन्नित्यनेन चान्वयः। सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति बुद्धदेवोपदिष्टभावनाचतुष्टयवतां स्वात्मनि स्थैर्याभिमानस्य धनपुत्रकलत्रादौ मदीयत्वाभिमानस्य चाभावात् प्रमातृप्रमेयादौ क्षणिकत्वज्ञानादलीकत्वज्ञानाच्च स्वपरार्थकिञ्चिद्वस्तुविषयककामनाऽभावाद् यत्स्यात्तदाह-न चाकामयमाना इति, अनाविलमित्यस्याभिधेयमाह—

परे पुनर्नैयायिकादयोऽनाविलं श्रवणमननादिक्रमोत्पन्नसाक्षात्काररूपत्वेन बलवत्त्वान्मिथ्याज्ञानातिरस्करणीयं, न पुनरनादिदेहाभेदवासनासंभूतमहं गौर इत्याद्याकारमतत्त्वज्ञानरूपं निर्बलं कादाचित्कं देहसंभेदानवगाहिनमहं सुखीत्यादिप्रत्ययरूपं चात्मबोधं सिद्धेः साधनमाहुः, बन्धमोक्षसामानाधिकरण्यानुरोधेन स्थिरात्मदर्शनस्यैव मुक्त्यर्थिनाश्रीयमाणत्वात्, मुमुक्षोर्दुःखनिवृत्त्यर्थितयैव च मोक्षोपाये प्रवृत्तेर्वैराग्याव्याघातात्।

मिथ्याज्ञानातिरस्करणीयमिति, अस्य चात्मबोधमित्यनेनान्वयः। तत्र हेतुमाह—बलवत्त्वादिति, आत्मबोधो मिथ्याज्ञानातिरस्करणीयः, बलवत्त्वादित्यनुमानमत्र पर्यवस्यति, तत्र हेतौ स्वरूपासिद्धिशङ्कामुद्दिधीर्षुराह—श्रवणमननादीत्यादि, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्य इति श्रुतेः श्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारस्योक्तत्वात्प्रथममात्मनः

आत्मप्रतिपादकश्रुतिवाक्येभ्यः शाब्दबोधात्मकं श्रवणं तत्रागमस्य तात्पर्यावधारणं वा, ततः प्राणादिक्रिया कर्तृप्रयोज्या क्रियात्वात्
छेदनादिक्रियावत् ज्ञानं सोपादानं कार्यत्वाद् घटवदित्याद्यनुमित्यात्मकं मननं, तस्यैव पुनः पुनर्भावनया दृढीकरणलक्षणनिदिध्या-
सनं, तदनन्तरमात्मतत्त्वसाक्षात्कारः, तद्रूपत्वेनेत्यर्थः । अनाविलमित्यस्य मुक्त्यननुगुणतया यद्व्यवच्छेद्यं तत् न पुनरित्यादि
प्रत्ययरूपमित्यन्तग्रन्थेनाह—

अनादौ संसारचक्रे देहस्यात्यन्तात्मोपकारित्वात्तन्मूलकानादिदेहात्माऽभेदवासनारूपदोषबलेन जायमानोऽहं गौरोऽहं स्थूल
इत्यादिप्रत्ययरूपाऽऽत्मबोधो गौरत्वस्थूलत्वरूपशरीरधर्मसामानाधिकरण्येनाहन्त्वभानाच्छरीराभेदविषयकभ्रमरूपत्वान्निर्बलः,
अत एव न सिद्धिसाधनम्, अहं सुखीत्यादिप्रत्ययरूपात्मबोधश्च देहाभेदानवगाहित्वेन तत्त्वज्ञानात्मकोऽपि न मुक्तिसाधनम्, का-
दाचित्कत्वात् । न च हेत्वसिद्धिः, यतः "देवा वि देवलोए, दिव्वाभरणाणुरंजियसरीरा । जं परिवडंति तत्तो, तं दुक्खं दारुणं
तेसिं ॥ १ ॥ इत्युक्तेः क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्युक्तेश्च स्वर्गादिसुखसाक्षात्कारस्योत्तरकाले स्वस्मिन् सञ्जायमानेन विरो-
धिप्रत्ययेनाहं सुखीत्यादिप्रत्ययस्य चैहिकस्य विनाशात् । ननु श्रवणादिक्रमोत्पन्नात्मसाक्षात्कारस्यापि योग्यविभुविशेषगुणानां स्वो-
त्तरवर्तिविशेषगुणनाश्यत्वमिति नियमात् स्वोत्तरद्वितीयक्षणवर्तिना विशेषगुणेन तृतीयक्षणे विनाशात्किञ्चित्कालाऽसत्त्वे सति
किञ्चित्कालसत्त्वरूपस्य कादाचित्कत्वस्य हेतोर्मुक्तिसाधनत्वाभावस्य साध्यस्याभाववति तस्मिन् सत्त्वाद् व्यभिचारः स्यादिति
चेत्, मैवं, सातत्येनोपजायमानत्वे सति स्वसमानाधिकरणविरोधिगुणान्तरानाश्यत्वलक्षणस्याकादाचित्कत्वस्याभावरूपस्यैव तस्यात्रा-
भ्युपगमात्, तस्य च तत्राभावात्, सिद्धेरिति, स्वसमानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसात्मकमुक्तेरित्यर्थः, बन्धमोक्ष-

सामानाधिकरण्यानुरोधेन यदेव बध्यते तदेव मुच्यत इति व्यवहारानुरोधेन, अत्र स्वरूपसम्बन्धेनोक्तलक्षणमुक्तिं प्रति समवायसम्बन्धेन तत्त्वज्ञानस्य कारणत्वमिति पूर्वकालावच्छिन्नतत्त्वज्ञानवत्यात्मनि मुक्तिसम्पत्तिस्तदैव स्याद्यदि स्थिरतर आत्मा अभ्युपगतस्स्यादित्यपि द्रष्टव्यम्,

ननु स्वसमानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसात्मकमुक्तिर्मे जायतामितीच्छा रागरूपैव, इच्छा कामो राग इत्येतेषामनर्थान्तरत्वात्, तथा च तया मोक्षोपाये प्रवृत्तौ वैराग्यव्याघातः स्यात् इति चेत्, न एवं सति तथागतक्रमार्चकानां भवतामपि निरुपप्लवचित्तसन्ततिरूपमुक्तीच्छयैव प्रवृत्तेर्व्याघातस्तदवस्थ एवेत्यत्रापि दीयतां दृष्टिः, तस्माद्दुःखानुषङ्गिसुखेच्छैव रागः, नत्विच्छामात्रमिति चरमदुःखध्वंसेच्छया प्रवृत्तावपि न क्षतिः, किञ्चान्येच्छानधीनेच्छाविषय एव पुरुषार्थः, स च गत्यन्तराभावात्सुखदुःखाभावान्यतरात्मेति पुरुषार्थत्वेन भवदभ्युपगताया निरुक्तचित्तसन्ततेरपि पुरुषार्थत्वान्यथानुपपत्त्या तथात्वमभ्युपगन्तव्यम् , ओमिति चेत्तर्हि भवन्मतेऽभावस्य तुच्छरूपत्वात् दुःखाभावात्मा न पुरुषार्थः सम्भवतीति सुखात्मैव सोऽभ्युपगन्तव्यः, तथा च वैराग्यव्याघातस्तदवस्थ एव, अनित्यसुखसन्ततीच्छाया रागरूपत्वात् , नित्यं सुखं तद्रूपा तत्सन्ततिर्वा नास्त्येव येन तदिच्छाया अरागरूपत्वादुक्तदोषो न स्यादिति मोक्षेच्छैव भवतां नोपपद्यते, अस्माकं तु दुःखनिवृत्तिर्यद्यप्यभावरूपा तथापि नालीका, अभावस्य सप्तमपदार्थत्वेनाभ्युपगमात्, नापि ध्वंसप्रतियोगिनी, ध्वंसस्य यदि ध्वंसस्स्यात्तदा प्रतियोग्युन्मज्जनप्रसङ्गः स्यादित्यनिष्टापादनस्योद्भटत्वात् इति नित्यरूपायास्तस्या इच्छा न राग इति न वैराग्यव्याघात इत्याशयेनाह—मुमुक्षोरिति ॥

श्लोकोत्तरार्द्धं विवृणोति—

**अस्मिंश्च पक्षद्वये तत्तन्नयैः पर्यायार्थिकद्रव्यार्थिकतत्तद्विचारैः, समाप्यनेकान्तात्मकमहावाक्यार्थप्रतीत्यनुकूलांशावधारणप्रवृत्तिरूपौदासीन्यशालिन्यपि, ते तव, वागाद्यं नैरात्म्यपक्षं विशदव्यवहारदृष्ट्या मोक्षौपयिकप्रवृत्त्यनुकूलव्यवहारपक्षावलम्बनेन, निहन्त्यप्रमाणतया ज्ञापयति ॥**

**अस्मिंश्चे**त्यादिना, पक्षद्वय इति बौद्धपक्षे न्यायपक्षे चेत्यर्थः, **समापी**त्यस्य विवृतिरौदासीन्यशालिन्यपीति, तत्रौदासीन्यं पक्षद्वयखण्डनमण्डनोभयाभावरूपं, तच्च वाक्यस्य निरर्थकत्वे प्रकारान्तरार्थत्वे वा विश्राम्यति, तत्र " सव्वनईणं जा हुज्ज वालुआ सव्वोदहीणं जं उदयं तत्तो । अणंतगुणिओ अत्थो इक्कस्स सुत्तस्स " इति पारमर्षवितेर्भगवदुक्तैकैकसूत्रस्यानन्तार्थकत्वात्तदुक्तवाक्ये निरर्थकत्वाभावान्नाद्यपक्षस्सम्भवतीत्यर्थान्तरप्रतिपादकत्वलक्षणद्वितीयपक्षमाश्रित्याह—**अनेकान्तात्मकमहावाक्ये**त्यादि—अनेकान्तात्मको यस्सप्तभङ्गात्मकमहावाक्यस्यार्थस्तस्य प्रधानीभूतकथञ्चित्क्षणिकत्वकथञ्चिदक्षणिकत्वकथञ्चित्तदुभयादिसप्तधर्मप्रकारेण या प्रमाणात्मिका प्रतीतिस्तदनुकूलो योऽंशो भागः ऋजुसूत्राभिप्रायेण क्षणिकत्वलक्षणो नैगमविचारेणाऽक्षणिकत्वलक्षणश्च तदवधारणं तत्तन्नयेन तत्तन्निश्चयः तस्य या प्रवृत्तिः जनकत्वसम्बन्धेन तद्वत्ता तद्रूपौदासीन्यशालिन्यपीत्यर्थः । नन्वार्हतमतेऽनेकान्तत्वस्य वस्तुत्वव्यापकत्वादेव व्याप्यीभूतवस्तुत्वावलीढे महावाक्यादित्रये स्वरूपत एव सद्भावादनेकान्तात्मकेतिविशेषणमावृत्त्या महावाक्यादित्रयस्यापि सम्भवतीति किमित्यर्थगततयैव तद्विशेषणं व्याख्यायत इति चेत्, सत्यमेतत्, तथाऽप्यर्थ एव तद्विशेषणं मुख्यविधया प्रकृतोपयुक्तम्, न तु महावाक्ये प्रतीतौ च, यतोऽनेकान्तात्मकार्थविषयकप्रमाणात्मकप्रतीत्यनुकूलक्षणिकत्वादिप्रत्येकांशावधारणं यथा तत्तन्नयेन भवति तथा भगवद्वाचाऽपि भवतीत्येवमर्थो ज्ञापनीयो नतु

तद्घटकप्रतीतेर्निरुक्तावधारणस्य चानेकान्तात्मकत्वं ज्ञाप्यम्, स च मुख्यवृत्त्यार्थमात्रेऽनेकान्तात्मकेतिविशेषणोपादानेऽपि सम्भ-
वतीति महावाक्ये प्रतीतौ च तदुपादानं निष्प्रयोजनमेव, केवलं महावाक्ये प्रतीतौ तदुभयमात्रे वोक्तविशेषणोपादानेऽर्थे याऽने-
कान्तात्मकत्वोपस्थितिस्सा महावाक्यार्थः अनेकान्तात्मकः अनेकान्तात्मकवाक्यप्रतिपाद्यत्वान्यथानुपपत्तेः. अनेकान्तात्मकप्रमाप्र-
तीतिगोचरत्वान्यथानुपपत्तेर्वेत्येवमर्थापत्तिरूपा स्यात् तस्याश्चानुमानरूपत्वात्तदुत्पत्तिर्लिङ्गादिज्ञानद्वारैव स्यादिति विलम्बेनोपस्थि-
तिलक्षणप्रतीतिगौरवं स्यात्, एतेन तादृशावधारणरूपौदासीन्यशालिन्यपीत्येवमुच्यतां किमन्तर्गडुना प्रवृत्तिपदोपादानेनेत्यारेका-
ऽपि निरस्ता, प्रवृत्तिपदोपादानस्य जनकत्वसम्बन्धलाभार्थत्वात्, अन्यथा तादृशनिश्चयरूपौदासीन्यशालित्वस्य भगवन्महावाक्येऽ-
सम्भव एव स्यात्, यतोऽवधारणं नाम निश्चयः स चात्मधर्मत्वात्तस्मिन्नेव वर्त्तत इति तद्रूपौदासीन्यशालित्वमपि तस्मिन्नेव,
नत्वनेकान्तात्मकार्थप्रतिपादकभगवद्वाक्य इति ।

ननु तथापि भगवदीयसप्तभङ्गात्मकमहावाक्याद् मुख्यतया सप्तधर्मप्रकारकप्रमाणात्मकमहावाक्यार्थबोधस्यैवोदयः, ननु
क्षणिकत्वाद्येकैकांशनिश्चयस्य नयात्मकस्य खण्डबोधस्येति न तज्जनकत्वं भगवदीयप्रमाणात्मकमहावाक्ये, किन्तु द्रव्यार्थिकप-
र्यायार्थिकनयवाक्य एवेति जनकत्वसम्बन्धेन नयात्मकतादृशनिश्चयरूपौदासीन्यशालित्वाभावाद् भगवद्वाचः पूर्वोक्तदोषस्तदवस्थ
एवेति चेन्मैवम्, कस्यापि हि यावन्न खण्डवाक्यार्थबोधस्तावन्न महावाक्यार्थबोध इति तं प्रति तस्य कारणत्वम्, तथा च भगवदी-
यमहावाक्यस्य स्वघटकतत्तद्धर्मप्रतिपादकावान्तरवाक्यद्वारा तत्तदंशावधारणजनकत्वात् तत्रोक्तौदासीन्यशालित्वस्य सत्त्वात् ।
नयान्तरेण न्यायनयेन, अभिनिविष्टनयखण्डनस्येति अत्यन्तकदाग्रहशालिबौद्धमते यथार्थत्वलक्षणप्रामाण्याभावज्ञापनस्ये-

त्यर्थः । दुष्टेन दुष्टखण्डनं किं न्यायसिद्धमित्याकाङ्क्षायामनुभवसिद्धं तत्र न्यायमाह–

**नयान्तरेणाभिनिविष्टनयखण्डनस्यापि शास्त्रार्थत्वात् "दुष्टांशच्छेदतो नांह्री दूषयेद्विषकण्टकः इति" न्यायात् नयत्वाविशेषेऽपि बहुव्यवहारोच्छेदकत्वेन नैरात्म्यग्राहकपर्यायार्थिकस्यैवादिव्युत्पत्त्याधानाय खण्डनीयत्वात् । अत एव पर्यायार्थिकस्य परसमयत्वं द्रव्यार्थिकस्य च स्वसमयत्वं समानतान्त्रिकैरपि प्रतिपादितमस्मदभियुक्तैश्च व्यवहारभाष्यादौ मिथ्यादृष्टित्वं सम्यग्दृष्टित्वं चेति दिग् ॥ ३ ॥**

दुष्टांशच्छेदत इत्यादि, यथा कस्यचित्पुंसः कण्टकविद्धयोः पादयोर्निष्कलङ्कस्वरूपावाप्तये साधनान्तराभावे विषकण्टकेन कण्टकाकर्षणेऽपि पादच्छेदकारित्वाभावात् स न पादार्त्तिकारकः तथा स्याद्वादप्रमाणसम्राट्पदस्थानीयर्जुसूत्रनयस्यैकान्तत्वावगाहित्वलक्षणदुष्टांशे विषकण्टककल्पेन न्यायनयेनाप्रामाण्यज्ञापनेऽपि न तस्य दूषकत्वम्, अत्यन्तविशुद्धिकारित्वादिति भावः ।

ननु स्याद्वादप्रमाणसम्राट्पदस्थानीयस्यर्जुसूत्रस्येव नैगमनयस्याप्येकान्तत्वावगाहित्वलक्षणदुष्टांशशालित्वाविशेषात् तद्दुष्टांशं विषकण्टककल्पेनर्जुसूत्रनयेन निराकृत्य तच्छुद्धिः किमिति न कृतेत्याशङ्कायामाह–नयत्वाविशेषेऽपीत्यादि, द्रव्यार्थिकपर्यायार्थिकनययोर्मिथो निरपेक्षयोरेकान्तनयत्वाविशेषेऽप्यणुरपि विशेषोऽध्यवसायकर इति न्यायाद्वस्तुनः क्षणिकाक्षणिकोभयरूपत्वाक्रान्तत्वेऽप्यक्षणिकत्वांशमभिमुखीकृत्य जायमानस्य प्रवृत्तिनिवृत्तिव्यवहारस्यादिसङ्केतग्रहाधायकस्य निर्वाहकत्वेन द्रव्यार्थिकनयस्यारोपितस्वसमयत्वं पर्यायार्थिकनयस्य चोक्तविशेषाभावात्परसमयत्वमित्याशयेनाह–**अत एवेति, समानतान्त्रिकैरिति** सर्वज्ञभुक्तिस्त्रीमुक्तिभगवत्प्रतिमालङ्कृत्यादौ विपक्षभावेऽपि षड्द्रव्यनवतत्त्वादिविषये समानं तन्त्रं येषां ते तथा तैर्दिगम्बरैरित्यर्थः,

अस्मदभियुक्तैरिति स्त्रीमुक्तिकेवलिकवलाहारसचक्षुभगवत्प्रतिमातदलङ्काराद्यभ्युपगन्तॄणामस्माकं पूज्यतमैरित्यर्थः । व्यवहारभाष्यादाविति, तथा च व्यावहारभाष्यवचः–"पुव्वा व पच्छिमाणं सुद्धा न उ पच्छिमा तेसिं । वेणइए मिच्छत्तं ववहारणया तु जं विसोहंति ॥१॥ तम्हा तेच्चिय सुद्धा भजियव्वं होइ इयरेहिं । सम्मत्तं ववहारणयस्साया कम्मं काउ फलं समणुहोति इति षेणतीए कहणं विसेसणेमाहुमिच्छत्तं ॥ तद्वृत्तिपाठश्चायम्–पूर्वा आदिभवाः, वाशब्दः प्रागुक्तपक्षापेक्षया पक्षान्तरताद्योतनार्थः, पश्चिमानां चतुर्णां ऋजुसूत्रादीनां नयानां ये नैगमसङ्ग्रहव्यवहाररूपास्त्रयस्ते शुद्धाः शोधयन्ति कर्ममलिनं जीवमिति शुद्धाः शुद्ध्यतेरन्तर्भूतण्यर्थात् क्तप्रत्ययः, 'नउ पच्छिमा तेसिं' न तु ये तेषामादिमानां पश्चिमा ऋजुसूत्रादयस्ते शुद्धाः अनुगामिद्रव्यानभ्युपगमात्तेषां विशोधकत्वायोगात्, कथं पुनराद्यास्त्रयो नयाः शुद्धा इत्यत आह–वेणइए इत्यादि वैनयिको नाम मिथ्यादृष्टिः तस्मिन् यत् मिथ्यात्वं तत् व्यवहारनया एव तुरेवकारार्थः, नैगमसङ्ग्रहव्यवहाराः शोधयन्ति अपनयन्ति, ते ह्यनुयायिद्रव्याभ्युपगमपरास्तत्कृतकर्मफलोपभोगोपपत्तेः तद्धर्मदेशनादौ प्रवृत्तियोगतो भवति तात्त्विकी शुद्धिः, तस्मात्त एव शुद्धाः, भइयव्वं होइ इयरेहिंति' इतरैः ऋजुसूत्रादिभिर्नयैर्मिथ्यात्वं शोधिमधिकृत्य भजनीयम्, न शुद्ध्यतीति भावः, ते हि पर्यायमात्रमभ्युपगच्छन्ति, पर्यायाणां च परस्परमात्यन्तिकं भेदम्, ततः कृतप्रविणाशादिदोषप्रसङ्गः, तथाहि– मनुष्येण कृतं कर्म किल देवो भुङ्क्ते, मनुष्यावस्थातश्च देवावस्था भिन्ना, ततो मनुष्यकृतविप्रणाशो मनुष्येण सता तस्योपभोगाभावात्, देवस्य च फलोपभोगादकृताभ्यागमः देवेन सता तस्य कर्मणोऽकरणात्, कृतविप्रणाशादिदोषपरिज्ञाने च न कोऽपि धर्मश्रवणेऽनुष्ठाने वा वर्त्तेत इति । मिथ्यात्वं शुद्ध्यभावस्तदभावाच्च न ते शुद्धा इति, एतदेव स्पष्टतरं विभावयिषुराह--ववहारेत्यादि, व्यवहारप्रधानो

नयो व्यवहारनयस्तस्य मतेन आत्मा शुभमशुभं वा कर्म कृत्वा तस्य फलं भवान्तरे समनुभवति, अनुयायिद्रव्याभ्युपगमादिति, एतस्मात् कारणाद्वैनयिके मिथ्यादृष्टौ मिथ्यात्वापगमाय कथनं सद्धर्मोपदेशस्तत्परिणतौ च मिथ्यात्वापगम इति मिथ्यात्वशोधकत्वात्ते त्रयोऽपि व्यवहारनयाः शुद्धाः, विसेसणे माहुमिच्छत्तमिति, विशिष्यते परस्परं पर्यायजातं भिन्नतया व्यवस्थाप्यतेऽनेनेति विशेषणमृजुसूत्रादिनयस्तस्मिन् प्ररूप्यमाणे कृतविप्रणाशादिदोषाशङ्कातोऽधिकतरं मा जन्तवो मिथ्यात्वं यासिषुरिति न तन्मतानुसारेण वैनयिके सद्धर्मदेशनाप्रवृत्तिस्तदभावाच्च न मिथ्यात्वशुद्धिरिति न ते शुद्धाः ॥ ३ ॥ उत्तरश्लोकावतरणिकामाह—

एवं नैरात्म्यस्य खण्डनीयत्वे व्यवस्थिते तत्खण्डनायोपक्रमते स्तुतिकारः ।

आत्मा न सिध्यति यदि क्षणभङ्गबाधा--न्नैरात्म्यमाश्रयतु तद्भवदुक्तिबाह्यः ।
व्याप्त्यग्रहात् प्रथमतः क्षणभङ्गभङ्गे, शोकं स भूमिपतितोभयपाणिरेतु ॥ ४ ॥

यदि स्थिरो ज्ञानादिगुणवानात्माऽऽस्तिकैः साध्यमानः सति बलवत्तरबाधके साधकसहस्रस्याप्यकिञ्चित्करत्वात् क्षणभङ्गसाधकप्रमाणबाधान्न सिध्यति, तत्तदा, पर्यायनयैकान्तावलम्बनेन भवदुक्तिबाह्यः सौगतो नैरात्म्यमाश्रयतु, यथोक्तात्मनि प्रमाणाभावेऽभावप्रमाणेन तदभावसिद्धेर्लब्धावकाशत्वात् । यदा तु प्रथमत एव व्याप्त्यग्रहात् सत्त्वक्षणिकत्वयोर्व्याप्त्यसिद्धेर्हेतोर्व्याप्त्यसिद्धिज्ञानेन, क्षणभङ्गसाधकप्रमाणस्यैव भङ्ग उपतिष्ठते, तदा स स्थिरात्मबाधननैरात्म्यसाधनयोरेकत्राप्यपर्याप्तत्वाद्भूमिपतितोभयपाणिस्तूष्णींभावेन निग्रहस्थानप्राप्तत्वात् पराजयहेतोर्विपुलं शोकमेतु । अत्र विप्रतिपत्तिः । शब्दादिः क्षणिको न वेति नैयायिकादयः ।

क्षणिकत्वविप्रतिपत्तिः ।

एवमिति, आत्मा न सिद्ध्यतीति, यदि क्षणभङ्गबाधात् क्षणिकत्वसाधकप्रमाणेन स्थिरात्मसाधकप्रमाणस्य बाधात्, आत्मा ज्ञानाद्याश्रयोऽनादिनिधनात्मा, न सिद्ध्यति, तत् तदा, भवदुक्तिबाह्यः एकान्तपर्यायनयावलम्बनेनेति शेषः,नैरात्म्यं क्षणिकत्वम्, आश्रयतु स्वीकरोतु, यदा त्विति शेषः,प्रथमतः व्याप्त्यग्रहात् व्याप्तिज्ञानाभावात्, सत्त्वक्षणिकत्वयोरिति शेषः,क्षणभङ्गभङ्गे क्षणिकत्वसाधकप्रमाणस्य भङ्गे,सत्त्वहेतोर्व्याप्यत्वासिद्धाविति यावत्,भूमिपतितोभयपाणिः स बौद्धः, पराजयहेतोरप्रतिभारूपनिग्रहस्थानस्य क्षणिकत्वसाधनस्थिरात्मबाधनाक्षमे तस्मिन् सावकाशत्वात् शोकमेतु प्राप्नोत्विति श्लोकार्थः। आलयविज्ञानसन्ततिरूपात्मनः क्षणभङ्गसाधकप्रमाणबाधान्नासिद्धिरत उक्तं स्थिरो ज्ञानादिगुणवानिति। ननु यथा सुगतसुतानुसारिमते क्षणिकत्वसाधकयुक्त्या स्थिरात्मनो बाधस्तथा न्यायदर्शनेऽपि स्थिरात्मसाधकयुक्तिवर्गैस्तत्सिद्धिरपि किन्न स्यादित्यत आह– सति बलवत्तरबाधक इत्यादि, यथोक्तात्मनि प्रमाणाभावेऽभावप्रमाणेनेति, स्थिरभूते ज्ञानादिगुणभाजन आत्मनि किमपि प्रमाणं नास्तीति सिद्धे सत्यभावसाधकानुमानादिप्रमाणेनेत्यर्थः, अत्र न्यायप्रयोगादिरूपविचारात्मककथायां,प्रयोजकत्वं सप्तम्यर्थः विप्रतिपत्तावन्वेति,तथा च बौद्धनैयायिककर्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यविस्ताररूपकथाङ्गभूतेति पर्यवसितोऽर्थः। विप्रतिपत्तिरिति विरुद्धोभयधर्मप्रकारकसंशयप्रयोजकवाक्यद्वयरूपेत्यर्थः, प्रयोजकत्वं च साक्षात्परम्पराजनकसाधारणम्, तेन सौन्दडतदन्यमतयोरुपग्रहः । सा च विप्रतिपत्तिसत्त्वेऽप्रामाण्यशङ्काकवलिततद्वाक्यार्थबोधद्वारा मध्यस्थस्य संशयसत्त्वं तत्सत्त्वे च तद्व्युच्छित्त्यैकतरकोटिनिश्चयाय कथारम्भ इति व्युदसनीयतया संशयस्य कथाङ्गत्वेन तज्जननयोग्यतया विप्रतिपत्तेरपि कथाङ्गत्वसम्भवात् समयबन्धादिवत् मध्यस्थेन कथातः प्रागेव प्रदर्शनीया, यत्र च वादिप्रतिवादिनोस्त्र-

स्वपक्षे कथाविषयीभूतार्थे निश्चयस्तत्र फलाव्यवहितप्राक्कालसम्बन्धलक्षणफलोपधानरूपस्य संशयजनकत्वस्याभावेऽपि विप्रतिपत्तौ संशयजननयोग्यत्वलक्षणस्य तस्य सत्त्वान्न कथाङ्गत्वक्षतिः, 'निश्चितौ हि वादं कुरुत इति'भाष्यवचनात्सर्वत्र संशयशून्याभ्यामेव वादिभ्यां कथारम्भान्नैवमिति चेत्, मैवम्, उक्तभाष्यस्य वादिप्रतिवादिनोस्स्वपक्षविषयकाहार्यनिश्चयाभिप्रायकत्वात्, कथमन्यथानुपस्थितसिद्धान्ततया दुर्बलेन वादिना साकं वादार्थं तज्जिगीषुः प्रौढाभिमानी प्रतिवादी स्वपक्षनिश्चयाभावेऽपि स्वप्रौढिप्रकटनार्थं प्रवर्त्तेत, अथवा वादिप्रतिवादिनोस्स्वस्वमान्यतत्त्वातिरिक्तेष्वनेकेषु तत्त्वेष्वपि वादस्सम्भवतीति तवायं पक्षः अयं च तवेति पक्षप्रतिपक्षपरिग्रहं वादिप्रतिवादिनोर्विप्रतिपत्त्या यावन्मध्यस्थो न कारयेत् तावन्न कथारम्भ इति विप्रतिपत्तेः कथाङ्गभूतस्य पक्षप्रतिपक्षपरिग्रहस्य जनकत्वात् तद्द्वाराऽपि कथाङ्गत्वात्सा मध्यस्थेन कथातः पूर्वमवश्यं करणीयेति ।

ननूक्तनीत्या कथाङ्गत्वाद् विप्रतिपत्तिः कथातः प्राक् कर्त्तव्यैवेति सत्यमेतत् तथापि शास्त्रे ग्रन्थकर्त्रा किमर्थं सा कर्त्तव्येति चेत्, उच्यते, शिष्यजिज्ञासोत्पादनार्थं निरूपणानुकूलतया स्वस्याहार्यसंशयोत्पादनार्थं चेति जानीहि॥ सुगतसुतैः शब्दादेरेव पक्षीकरणात् शब्दादिरित्युक्तम्, अत्रादिपदेनाशुतरविनाशिनां विद्युत्प्रदीपप्रभृतीनां परिग्रहः, विधिकोटिर्बौद्धानाम्, घटपटादीनां पक्षतया नोपन्यासः कुतः आशुतरविनाशिनां शब्दविद्युत्प्रदीपानां च कुत इत्यत्र बीजं ग्रन्थकारः स्वयमेवाग्रे व्यक्तीकरिष्यति । ननूभयमतसिद्धस्यैव विप्रतिपत्तौ विधिनिषेधकोटित्वं युक्तं, तथा चात्र स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणस्वाधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगित्वलक्षणं क्षणिकत्वं न नैयायिकानां कस्मिँश्चिदपि विषये प्रसिद्धम्, तदप्रसिद्धौ च तत्प्रतियोगिकाभावस्याप्यप्रसिद्धिरेव " व्यावर्त्याभाववत्त्वैव भाविकी हि विशेष्यता । अभावविरहा-

त्मत्वं वस्तुनः प्रतियोगिता " इत्युदयनाचार्योक्तिनिर्भरमानसानां तेषां मते शशशृङ्गस्यालीकत्वात् स्वाभावाभावात्मत्वरूपधर्माभावादेव नाभावप्रतियोगित्वं तत एव च न तत्प्रतियोगित्वं कोऽभावोऽपि तथा प्रकृतेऽप्येवंरूपत्वादित्यत आह—

क्षणिकत्वमत्र स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम्, स्वं लक्ष्यत्वेनाभिमतं तदधिकरणीभूतस्य समयस्य यः प्रागभावस्तदधिकरणक्षणोत्पत्तिकान्यत्वे सतीति योजना। न चैतद् द्विक्षणस्थायिनि याति, तस्य स्वाधिकरणीभूतद्वितीयक्षणप्रागभावाधिकरणक्षणोत्पत्तिकत्वात्। विषयतया यत् स्वाधिकरणमनागतज्ञानादि तत्प्रागभावाधिकरणक्षणोत्पत्तिकत्वादुत्पत्तिमद्भावस्याव्याप्तेर्वारणाय समयेति, कालिकविशेषणतयाधिकरणतालाभाय। भावमात्रस्यैव तादृशसमयात्यन्ताभावाधिकरणक्षणोत्पत्तिकत्वादसंभवादाह—प्रागिति।

क्षणिकत्व-विप्रतिपत्तिः।

व्याख्या—क्षणिकत्वमत्रेति, तथा च नैयायिकानां मते प्रागभावे महाप्रलयक्षणोत्पन्ने ध्वंसे च त्रिधिकोटिप्रसिद्धिः, यतो यः प्रागभावप्रतियोगी तस्यैवोत्पादः, न च प्रागभावे तत्त्वम्, अनादिसान्ताभावत्वेन तस्य तन्मतेऽभ्युपगमात्, तथा चोक्तक्षणिकत्वलक्षणघटकीभूतस्य विशेषणांशस्य तत्राक्षतिः, विशेष्यन्तु किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्वलक्षणं कादाचित्कत्वं तत्र सर्वसम्मतमेव, कैश्चिदपि विद्वद्भिः प्रागभावस्यानादिनिधनतयाऽनभ्युपगमात् इति तत्रोक्तलक्षणक्षणिकत्वसिद्धिः। निरुक्तध्वंसेऽपि महाप्रलये लवमुहूर्त्ताद्यवान्तरभेदाभावेन निरुक्तध्वंसाधिकरणसमयो महाप्रलयरूपोऽखण्डसमयः तत्प्रागभावाधिकरणक्षणः तत्पूर्वक्षणः तस्मिन् तस्यानुत्पत्तिकत्वेनोक्तविशेषणांशस्य स्वोत्पत्तेः प्राक्क्षणेऽभावेन तत्क्षणे च सत्त्वेनोक्तविशेष्यां-

शस्य च सत्त्वान्निरुक्तक्षणिकत्वप्रसिद्धिः। अत्र स्वाधिकरणसमयप्रागभावाधिकरणक्षणेऽनुत्पत्तिः प्रागभावो यस्य स तादृशानुत्पत्तिक इति न विग्रहः, तथा सति द्वित्रादिसमयस्थायिन्यतिव्याप्तिस्स्यात्, स्वाधिकरणक्षणप्रागभावाधिकरणक्षणः स्वोत्पत्तिप्राक्क्षणोऽपि, तस्मिन् तस्य प्रागभावात्, एवं प्रागभावे प्रसिद्धिरपि न स्यात्, प्रागभावस्य प्रागभावाभावात्, किन्तु तादृशक्षणे उत्पत्तिर्यस्य न स तादृशानुत्पत्तिक इति विग्रहः, तथा च निरुक्तोत्पत्तिकत्वाभावलाभात् नोक्तातिव्याप्तिः। अत्र विशेषणदलस्य स्वाधिकरणसमयप्रागभावाधिकरणक्षणोत्पत्तिकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नवत्त्वार्थकत्वे तद्घटितमुक्तक्षणिकत्वलक्षणं दुर्ग्रहं स्यात्, बुद्धिविशेषविषयत्वरूपस्य कूटत्वस्य तादृशानन्तभेदेष्वस्मदादिभिर्दुर्ग्रहत्वात् इति तादृशोत्पत्तिकत्वसामान्याभावपरमेवोक्तविशेषणं व्याख्येयम्, ननु तथाप्युक्तातिव्याप्तिस्तदवस्थैव तादृशोत्पत्तिकत्वघटोभयाभावस्य द्विक्षणस्थायिनि सत्त्वादिति चेत्, मैवम्, तादृशोत्पत्तिकत्वत्वेतरधर्मानवच्छिन्नत्वे सति तादृशोत्पत्तिकत्वत्वावच्छिन्नप्रतियोगिताकाभावार्थकत्वात्तस्य, तथा च प्रतियोगिना साकं तत्सामान्याभावस्य विरोधात् द्वित्रादिक्षणवर्त्तिनस्स्वाधिकरणद्वितीयक्षणप्रागभावाधिकरणीभूते प्रथमक्षणे उत्पत्तिमत्त्वेन तत्सामान्याभावाभावान्नातिव्याप्तिरित्याशयेनाह—न चैतदित्यादि, उक्तक्षणिकत्वलक्षणघटकसमयपदफलमाह—विषयतयेति, विभिन्नकालीनयोर्विषयतान्यसम्बन्धेनाधाराधेयभावाभावेऽपि विषयतासम्बन्धेन तत्त्वस्य नैयायिकादिभिरभ्युपगमात्तदभिप्रायेणेदम्, बौद्धमते तु ज्ञानज्ञेययोराकाराकारिभावसम्बन्धो न तु विषयतादिरिति चिन्त्यम्, अस्य विषयितयेत्यर्थः, यद्यपि विषयतासंसर्गस्येव विषयितासंसर्गस्यापीहेदमित्यादिबुद्धिनियामकत्वाभावाद् वृत्त्यनियामकत्वमविशिष्टमेव, तथापि ज्ञाने

ज्ञेयस्य संसर्गो विषयताख्योऽङ्गीक्रियेत यदि तदा तत्सम्बन्धतया वृत्त्यनियामकीभूतो निरूपकत्वसम्बन्धोऽभ्युपगतस्स्यात्, यदा च विषयितासंसर्गोऽङ्गीक्रियते तदा तत्संसर्गतया इहेदमित्यादिलौकिकाधाराधेयभावव्यवहृतिनियामकत्वेन वृत्तिनियामकीभूतः स्वरूपसंसर्गोऽभ्युपगमनीयस्स्यात् तथा च पूर्वापेक्षया लाघवं सुस्पष्टमेवेति भावः, यदि चाधिकरणपदं सम्बन्धिपरं तदा यथाश्रुतमपि सङ्गच्छते । अव्याप्तेरिति, विशेषणांशस्यैवेत्यर्थः, अत एवोत्पत्तिमद्भावस्येत्युक्तम्, अन्यथा नित्ये विशेषणांशसत्त्वेऽपि कादाचित्कत्वरूपविशेष्याभावादसम्भवादित्येव वक्तुं युज्येतेति, अत्र स्वमनागतघटादिविषयकं ज्ञानं विषयतया तदधिकरणमनागतघटादिः तत्प्रागभावाधिकरणे वर्त्तमानक्षणे उत्पत्तिमत्तया क्षणिकत्वेऽप्युक्तज्ञानस्य तस्मिन्नुक्तलक्षणसङ्गतिर्न स्यादित्यव्याप्तिस्स्यादिति तन्निवृत्तिफलमपि समयपदोपादानस्य बोध्यम् । ननु जन्यभावमात्रस्य तत्तत्कालावच्छेदकत्वात्कालोपाधित्वेन समयादिकालरूपत्वमभ्युपगतमिति ज्ञानस्यापि समयरूपकालत्वादुक्तक्षणिकत्वलक्षणे समयपदोपादानेऽप्युक्ताव्याप्तिस्तदवस्थैवेत्याशङ्कायामाह- **कालिकविशेषणतयेति**, तथा च विभिन्नकालीनयोः कालिकसम्बन्धेनाधाराधेयभावानभ्युपगमान्नोक्ताव्याप्तिरिति भावः । प्रतियोगितदत्यन्ताभावयोर्येन सम्बन्धेन यत्र प्रतियोगी न तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदत्यन्ताभाव इत्येवंरूपो विरोधः, प्रतियोगी च क्षणादिर्भावो वृत्तिनियामकसम्बन्धेन न स्वात्मनीति तत्र तदत्यन्ताभावो लब्धावकाश एव तथा च स्वाधिकरणीभूतो य उत्पत्तिसमयस्तदत्यन्ताभावाधिकरणः क्षणः सोऽपीति तस्मिन् जन्यभावमात्रस्योत्पत्तिमत्त्वाल्लक्ष्यमात्रे उक्तलक्षणस्यासम्भवस्स्यादतस्तद्वारणाय लक्षणघटकीभूतेऽभावे प्रागिति विशेषणमुपात्तमित्याह- **भावमात्रस्यैवेति**, जन्यनिखिलभावस्यैवेत्यर्थः । अत्र तादृशप्रागभावाधिकरणत्वमपि कालिकसम्बन्धेन विवक्षणीयम्,

क्षणिकत्वलक्षणव्यावृत्तिः ।

अन्यथा जन्यभावमात्रस्य विषयित्वाव्याप्यत्वादिसम्बन्धेन स्वाधिकरणसमयप्रागभावाधिकरणे तादृशप्रागभावविषयके स्वोत्पत्तिसमयोत्पन्ने ज्ञानात्मकक्षणे उत्पत्तिमत्त्वादसम्भवस्स्यादिति ध्येयम् । स्वाधिकरणसमयो वर्त्तमानः तत्प्रागभावाधिकरणकालः पूर्वसमयांशमादाय घटाद्युत्पत्तिसमयपूर्वकालवर्त्तिघटाद्युत्पत्तिसमयपर्यन्तस्थायिघटिकादिकालोऽपीति तत्र तद्घटकीभूतवर्त्तमानक्षणांशापेक्षयोत्पत्तिमत्त्वाज्जन्यभावमात्रस्यासम्भवस्स्यादतस्तद्वारणाय क्षणपदमुपात्तमित्याह—

तादृशस्थूलकालोत्पत्तिकत्वादसम्भवादाह–क्षणेति । न्यायनये प्रागभावे प्रसिद्धिसौलभ्यायोत्पत्तीति । प्रागभावस्यापि कालोपाधित्वे तु तादृशप्रागभावाधेयानुत्पत्तित्वं तदवृत्तित्वं वा लघुतरम् । यत्त्वेवं सति तन्नये भावभूतस्थूलकालाप्रसिद्धावपि प्रागभावस्य कालतयाऽसंभववारणाय क्षणेत्यपि प्रयोजनवदिति गुणानन्देनोक्तं, तदसत्, तन्मते उपादानक्षणस्यैवोपादेयप्रागभावरूपतयोक्तासम्भवायोगात् । सांवृतं प्रागभावमादायासम्भवदोषं कल्पयित्वा क्षणपदेन तद्वारणे तु प्रक्षालनाद्धीत्यादिन्यायापत्तेः, सांवृतस्य स्थूलकालस्यापि तेनाभ्युपगमात् ॥

व्याख्या—तादृशस्थूलकालेति, तादृशलक्षणप्रविष्टोत्पत्तिस्थाने वृत्तित्वोक्तौ प्रागभावस्यानादितया स्वाधिकरणसमयप्रागभावाधिकरणक्षणे वृत्तित्वात् तत्र निरुक्तलक्षणक्षणिकत्वप्रसिद्धिर्न स्यादित्यत आह– न्यायनय इति, प्रागभाव इति विशेष्योपादानाच्चरमध्वंसे वृत्तित्वघटितलक्षणप्रसिद्धावपि नासङ्गतिः ॥ काले प्रतियोगिपूर्वत्वस्य नियामकोपाधिर्व्यावर्त्तकतया प्रागभाव एव वाच्यः, तथा च घटादिरिव प्रागभावोऽप्यनाद्यनन्तरूपतयैकरूपस्यापि महाकालस्यावान्तरभेदरूपतामापादयतीति का-

लोपाधित्वेन कालिकेन सम्बन्धेन घटादाविव प्रागभावेऽपि वस्तुनस्सत्त्वादुत्पत्तेरपि तत्र तेन सम्बन्धेन सत्त्वमिति ताद्दशप्रागभावाधेयानुत्पत्तिकत्वमेव लक्षणं कर्तव्यम् क्षणाप्रवेशेन लाघवादित्याह— प्रागभावस्यापीत्यादि, महाप्रलयोत्पन्नचरमध्वंसे प्रसिद्धिमभिप्रेत्य कल्पान्तरमाह—तदवृत्तित्वं वेति, स्वाधिकरणसमयप्रागभावावृत्तित्वं वेत्यर्थः। अत्र तदवृत्तिकत्वं वेति पाठान्तरम्, स्वाधिकरणसमयप्रागभावावृत्तिकत्वं वेत्यर्थः। अत्र तदवृत्तित्वघटकवृत्तित्वं कालिकसम्बन्धेन ग्राह्यम्, अन्यथा स्वाधिकरणसमयप्रागभावे ताद्दशप्रागभावविषयकं यद्वर्त्तमानज्ञानं तदपि विषयतया वर्त्तत इति तत्राव्याप्तिस्स्यात्, एवं सतीति प्रागभावस्य कालोपाधित्वे सतीत्यर्थः। तन्नये बौद्धमते, स्वाधिकरणसमयप्रागभावाधिकरणे स्वोत्पत्त्युत्तरकालभाविपदार्थप्रागभावात्मके काले लक्ष्यमात्रस्योत्पत्तिमत्त्वात् कालिकेन सम्बन्धेन वृत्तिमत्त्वाद्वाऽसम्भवस्स्यादतस्तद्वारणाय क्षणपदमुपादेयमिति गुणानन्दस्याशयः। तन्मते बौद्धमते, उपादानक्षणस्यैवेति पूर्वपूर्वक्षणानामेवोत्तरोत्तरक्षणान् प्रति कुर्वद्रूपत्वेनोपादानीभूतानां प्रागभावत्वं बौद्धैरभ्युपगतम्, नतु नैयायिकादिवत् अनादिसान्तो योऽतिरिक्तोऽभावस्तस्य तत्त्वं, तथा सति क्षणिकत्वप्रवादो विलीयेतेति नोक्तदोष इत्यर्थः। नन्वेवं घटादेस्स्वोत्पत्त्यव्यवहितपूर्वक्षणस्यैव प्रागभावत्वे तस्याभिमतघटोत्पत्तिकाल इव स्वपूर्वकालेऽप्यसत्त्वाद् घटतद्ध्वंसान्यतरस्य तदानीं सत्त्वप्रसङ्ग इति चेत्, न, तत्पूर्वपूर्वक्षणानामपि तत्प्रागभावत्वेनाभ्युपगमेन तत्सन्ततेरनादितया विच्छेदाभावात्। नन्वेवं सति ध्वंसोऽपि तन्मते उत्तरक्षणरूप एव स्यात्, ओमिति चेत्, तर्हि तद्विनाशे प्रतियोग्युन्मज्जनप्रसङ्ग इति चेत्, नैवम्, उत्तरोत्तरक्षणस्य क्षणिकत्वेन विनाशेऽपि तत्सन्ततेरविच्छेदात्। सांवृतं प्रागभावमादायेति प्रागभावस्य बौद्धमतेनोपादानक्षणरूपत्वेऽपि तद्रूपाच्छादनेन यत् स्थूलकालवृत्त्यभावलक्षणस्वरूपान्तरेण प्रतिभासनं तदात्मिकया कल्पनाबुद्धि-

क्षणिकत्वलक्षणव्यावृत्तिः।

रूपया संवृत्या कल्प्यमानं प्रागभावमादायेत्यर्थः । प्रक्षालनाद्धीति अत्र "धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति संपूर्णः श्लोकः । दूषणान्तरमाह– सांवृतस्य स्थूलकालस्यापि तेनाभ्युपगमादिति सांवृतप्रागभाववत् बौद्धेन सांवृतस्थूलकालस्याप्यभ्युपगमेन तमादायाप्यसम्भवदोषसम्भवे सति तदर्थं सांवृतप्रागभावपर्यन्तानुधावनं निष्प्रयोजनमेवेति भावः । न्यायनये यः प्रागभावोऽनादिसान्ताभावलक्षणोऽभ्युपगतस्स न बौद्धमते, यश्च बौद्धनये उपादानक्षणरूपः स न न्यायमते इत्येकमतसिद्धस्य तस्य विप्रतिपत्तौ प्रवेशे तदन्यमतेनाप्रसिद्धिः स्यात्, तदुभयसाधारणं तु प्रागभावलक्षणं दुर्वचमिति तद्घटितविप्रतिपत्तिरपि दुर्वचैव, अतो वादिद्वयाभिमतयोर्भेदद्वयावच्छिन्नप्रतियोगिताकभेदलक्षणेनान्यतरत्वेन प्रागभावयोर्विप्रतिपत्तिघटकत्वमङ्गीकरणीयम्, तथा चान्यतरान्तर्गते उपादानक्षणरूपप्रागभावे निर्विवादेन कालोपाधितया सिद्धे कालिकसम्बन्धेनोत्पत्तेर्वृत्तित्वस्य वा सम्भवेन लघुभूतं स्वाधिकरणसमयप्रागभावाधेयानुत्पत्तिकत्वे सति तादृशप्रागभावावृत्तित्वे सति वा कादाचित्कत्वरूपं लक्षणं क्षणिकत्वस्य सुवचमेवेत्यभिप्रायेणाह–

मुख्यतयान्यतरवाद्यभिमतो यः पदार्थस्तद्भिन्नभिन्नत्वेन विप्रतिपत्तिघटकपदार्थाश्रयणे तु लघुतरस्यैवोक्तस्याश्रयणीयत्वादिति । सत्कार्यवादेनार्थान्तरवारणाय विशेष्यम् । प्रागभाववदनादेरपि कादाचित्कत्वासिद्ध्यापत्तिभये तु कादाचित्कत्वमपहाय तत्स्थाने उत्पत्तिमत्त्वं निवेशनीयम् । न चैतद्वारणाय प्रागभावप्रतियोगित्वमेव निवेश्यतामिति वाच्यम्, उत्पत्तिघटकयत्किञ्चित्पदार्थाभावायत्तविशिष्टाभावमादायार्थान्तरवारणाय विशिष्टस्यैवोपादेयत्वात् ॥

व्याख्या—मुख्यतयेत्यादि, विप्रतिपत्तिघटकपदार्थाश्रयणे त्विति, अत्र तुशब्देन पदार्थानां येन सामान्यधर्मेण
विप्रतिपत्तौ प्रवेशस्तेनैव रूपेण वादिप्रतिवाद्युभयसिद्धिरपेक्षिता, नतु प्रातिस्वीकतत्तन्मतप्रसिद्धस्वरूपव्यक्तित्वादिना, तथा च प्रा-
गभावत्वेनैव विप्रतिपत्तिघटकत्वं नोक्तान्यतरत्वादिनेति गुरुभूतमपि तादृशक्षणानुत्पत्तिकत्वमेवादर्त्तव्यमित्यस्वारस्यं सूचितम्। का-
दाचित्कत्वरूपविशेष्यदलफलमाह—सत्कार्यवादेनेति, किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्वलक्षणकादाचित्कत्ववतोऽपि प्राग-
भावस्य पूर्वं प्रतियोग्युन्मज्जनप्रसङ्गभीत्या नैयायिकमतेऽनादित्वमभ्युपगतं तथा केषांचिन्मतेन केनापि हेतुना कस्यापि पदार्थस्या-
यत्यां विनङ्क्ष्यमाणत्वेन कादाचित्कस्यानादित्वमभ्युपगतं स्यात्तदा तन्मतेन तत्र सिद्धसाधनं स्यात्, बौद्धमतेन चार्थान्तरत्वं स्या-
दित्याशङ्क्य परिहरति—प्रागभाववदित्यादि, कादाचित्कत्वादिति अत्रायत्यां विनङ्क्ष्यमाणत्वादिति हेतुरूह्यः। उत्पत्तिघ-
टकयत्किञ्चित्पदार्थो यदि स्थिरवादिना नाभ्युपगम्येत तदापि तद्रूपविशेषणाभावप्रयुक्तस्य तादृशोत्पत्तिकत्वाभावरूपविशिष्टाभाव-
स्य प्रागभावप्रतियोगिनि स्थिरभूतपदार्थे सत्त्वं स्यादेवेत्यनभिलपितस्थिरत्वसिद्ध्यार्थान्तरं स्यादिति तद्वारणायोत्पत्तिमत्त्वमेव
तादृशलक्षणे विशेष्यतया प्रवेश्यम्, तथा च स्थिरपदार्थे तादृशानुत्पत्तिकत्वविशेषणसत्त्वे उत्पत्तिमत्त्वरूपविशेष्यासत्त्वं विशेष्यसत्त्वे
च विशेषणासत्त्वमिति तत्रोक्तविशिष्टासत्त्वेन नार्थान्तरत्वदोष इत्याशयेनाह—उत्पत्तिघटकेति, विशिष्टाभावमिति निरुक्तानु-
त्पत्तिकत्वरूपाभावमित्यर्थः, विशिष्टस्यैव उत्पत्तिमत्त्वस्यैव, पक्षे चास्मिन् निरुक्तक्षणिकत्वप्रसिद्धिर्न प्रागभावे, अनादित्वेन तत्रो-
त्पत्तिमत्त्वरूपविशेष्यांशाभावात्, किन्तु महाप्रलयोत्पन्नचरमध्वंसे इति ध्येयम्। उक्तक्षणिकत्वलक्षणे विशेष्यविधयोत्पत्तिमत्त्वस्य प्रवेशे
क्षणभङ्गवादिमतेन तदप्रसिद्धिमाशङ्कते

ननु तत्क्षणातिरिक्तस्वाधिकरणयावत्प्रागभाववत्क्षणसंबन्धस्तत्क्षणातिरिक्तस्वाधिकरणीभूतयावत्क्षणवृत्तिध्वंसप्रतियोगिक्षणसम्बन्धो वोत्पत्तिः, न चेयं क्षणिकस्य सम्भवति, तत्क्षणातिरिक्तस्वाधिकरणक्षणस्यैवाप्रसिद्धेरन्यतरासिद्धिप्रसङ्गादिति चेत्, मैवम्, स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसम्बन्ध उत्पत्तिरित्युक्तौ दोषाभावात्। स्वाधिकरणीभूतस्थूलकालवृत्तित्वात् प्रागभावस्यासंभववारणाय प्रथमं क्षणपदम्। स्वसमसमयोत्पत्तिकस्थूलकालसम्बन्धस्य द्वितीयक्षणादावपि संभवादतिव्याप्तेर्द्वितीयम्। परेषां सन्मात्रस्यैव क्षणत्वान्निरुक्तसमयाप्रसिद्धावुपरञ्जकमेव तत्, ॥

व्याख्या—नन्वित्यादिना, न चेयमाशङ्का तादृशोत्पत्तिकत्वाभावरूपविशेषणघटकोत्पत्तिविषया, बौद्धैरलीकप्रतियोगिताकाभावस्याभ्युपगमेनात्र विशेषणाप्रसिद्धेरभावात्, अन्यतरासिद्धिप्रसङ्गादिति वादिप्रतिवादिमध्ये योऽन्यतरो बौद्धस्तन्मतेन लक्षणस्यासिद्धिप्रसङ्गादित्यर्थः। उत्पत्तेर्लक्षणान्तरं प्रदर्श्य विशेष्यदलसिद्धिमुपपादयति-स्वाधिकरणक्षणेत्यादिना, स्वाधिकरणक्षणेऽवृत्तिर्वृत्तित्वाभाववान् यः प्रागभावस्तत्प्रतियोगिभूतेन क्षणेन सह सम्बन्ध उत्पत्तिरित्यर्थः, तथा च क्षणिको यदि स्वपदग्राह्यस्तदा स्वाधिकरणक्षण उत्पत्तिक्षण एव, तत्रावर्त्तमानो यद्यप्युत्पत्तिपूर्वक्षणप्रागभावोऽप्यस्ति, तथापि स न प्रकृतोपयोगी, तत्प्रतियोगिभूतेन पूर्वक्षणेन सह सम्बन्धाभावात्; किन्तूत्पत्तिक्षणप्रागभाव एव तत्प्रतियोगिनोत्पत्तिक्षणेन सह सम्बन्धः क्षणिकस्याऽस्त्येवेति नाप्रसिद्धिः, यदि च स्वपदेन द्व्यादिक्षणस्थायिपदार्थो गृह्यते तदा तदधिकरणक्षणा उत्पत्तिसमयादारभ्य विनाशाव्यवहितपूर्वसमयपर्यन्ताः तदवृत्तिः प्रागभावः न द्वितीयस्य तृतीयचतुर्थादेर्वा क्षणस्य, तेषां सर्वेषां स्वाधिकरणे प्रथमक्षणे वृत्तित्वेन तदवृत्ति-

त्वासम्भवात्, किन्तु प्रथमक्षणस्यैव, तत्प्रतियोगी प्रथमक्षणस्तत्सम्बन्धो घटादावस्तीति तत्राप्युत्पत्तिलक्षणसङ्गतिः । उत्पत्तिक्षणावच्छेदेनोत्पत्तिमद्भावाधिकरणे यत्किञ्चित्स्वप्रागभावाधिकरणक्षणमभिव्याप्योत्पत्तिसमयपर्यन्तस्थायिस्थूलकाले उत्पत्तिक्षणप्रागभावस्याप्युत्पत्तिपूर्वक्षणावच्छेदेन वृत्तित्वान्न कुत्राप्युत्पत्तिलक्षणसङ्घटनं स्यात्, तत एव च तद्घटितक्षणिकत्वलक्षणमप्यसम्भवि स्यात् इति तद्वारणाय प्रथमक्षणपदमुपात्तमित्याह—**स्वाधिकरणीभूतेत्यादि**, स्वाधिकरणक्षणावृत्तिर्यस्स्वोत्पत्तिक्षणोत्पत्तिकस्थूलकालस्य प्रागभावस्तत्प्रतियोगिभूतेन स्थूलकालेन सह सम्बन्धो द्वितीयतृतीयादिक्षणेषु वर्त्तत इति तदाप्युत्पत्तिव्यवहारापत्तिस्स्यादतस्तद्वारणाय द्वितीयं क्षणपदमित्याह—**स्वसमसमयोत्पत्तिकेत्यादि** । ननु तथाप्युक्तस्थूलकालस्याप्याद्यक्षणवृत्तित्वविशिष्टत्वेन क्षणरूपत्वात् तत्प्रागभावस्स्वाधिकरणक्षणेऽवृत्तिरिति तत्प्रतियोगिनि स्थूलकाले द्वितीयक्षणावच्छेदेनोत्पत्तिव्यवहारापत्तिस्स्यादेवेति चेत् ,न, यद्विशिष्टस्य स्वाधिकरणावृत्तिप्रागभावप्रतियोगिक्षणत्वं तद्रूपेण तत्सम्बन्धस्य लाभार्थमेव क्षणपदस्योपादानान्निरुक्तातिव्याप्त्यसम्भवात् ॥ **द्वितीयमिति** द्वितीयक्षणपदमित्यर्थः । यत्सत्तत्क्षणिकमिति नियमाभ्युपगन्तॄणां बौद्धानां मते स्थिरस्थूलकालाभावेन नोक्तफलं क्षणद्वयोपादानस्य सम्भवतीत्यत आह—परेषां **सन्मात्रस्यैवेत्यादि**, परेषां बौद्धानाम्, **निरुक्तसमयाप्रसिद्धाविति** उत्पत्तिसमयपर्यन्तस्थायिस्वाधिकरणस्थूलकालाप्रसिद्धौ स्वसमसमयोत्पत्तिकस्थूलकालाऽप्रसिद्धौ चेत्यर्थः, **उपरञ्जकमेवेति** नात्राल्पपरिमाणोऽग्निरित्यत्रेवेतरव्यावर्त्तकं विशेषणं किन्तूष्णोऽग्निरित्यत्रेव विशेष्यस्वरूपज्ञापकमेवेति भावः । ननु क्षणत्वं स्ववृत्तिप्रागभावप्रतियोग्यनधिकरणसमयत्वं, स्वपदस्य निषेध्यपरत्वे न्यायनये सम्भवेऽपि बौद्धमते तादृशं निषेध्यं न किञ्चिद्, द्विक्षणस्थायिनः कस्यचिदभावात्, निषेधानुयोगिपरत्वे च न्यायनये महाप्रलयात्मककालोपाधावप्रसिद्धम्, अतस्तद्व-

कल्पलतिकोपेतम्

क्षणिकत्वलक्षणव्यावृत्तिः ।

टितोत्पत्तिर्न चरमध्वंसे सङ्गच्छेत अत आह—

क्षणत्वं चोभयसाधारणं स्वाधेयपदार्थप्रागभावानाधारसमयत्वम् । कालिकविशेषणतयाधाराधेयत्वयोर्ला-भाय समयेति, तेन न विषयतया स्वाधेयपदार्थप्रतियोगिकप्रागभावस्य कालिकसम्बन्धेनाधिकरणे कालिक-सम्बन्धेन च स्वाधेयपदार्थप्रतियोगिकप्रागभावस्य विषयितयाधिकरणे ज्ञानादावव्याप्तिः । ज्ञानादिकं च ते-षां स्वत एव क्षणोऽन्येषामुपहितमिति पुनरन्यत् । प्रसिद्धिस्तु विधेर्नैयायिकानां प्रागभावे चरमध्वंसे च । निषेधस्य च बौद्धानामलीके । स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं वा क्षणिकत्वम् । स्थूलकालमादा-यासम्भववारणाय क्षणेति । इदं च प्रतिक्षणं कस्यचिन्नाश इति नये, अन्यथा यदुत्पत्तिकालीनपदार्थमात्रस्य द्वितीयक्षणे न नाशस्तत्र द्विक्षणस्थायिन्यतिप्रसङ्गात्, क्षणत्वं च स्वावृत्तियावत्स्ववृत्तिध्वंसप्रतियोगिकत्वं, स्ववृत्तिध्वंसप्रतियोगिव्यापकस्वावृत्तिकत्वमिति यावत् । स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं वा क्षणत्वं, तेन न व्यापकत्वान्तर्भावगौरवम् ॥

क्षणत्वञ्चेत्यादि, उभयसाधारणं बौद्धनैयायिकोभयमतानुगतम्, स्वाधेयपदार्थप्रागभावानाधारसमयत्वमिति स्वनिष्ठा-धारतानिरूपिताधेयतावान् यः पदार्थस्तत्प्रतियोगिकप्रागभावनिष्ठनिरूपकतानिरूपिताधारत्वाभाववान् यस्समयस्तत्त्वमित्यर्थः, अत्र स्वपदेन लक्ष्यत्वेनाभिमतं ग्राह्यम्, स्वमनागतविषयकमिदानीन्तनज्ञानं तदाधेयो विषयितासंसर्गेणाऽनागतपदार्थः तत्प्रागभावाधि-करणमेव कालिकसम्बन्धेनोक्तज्ञानरूपसमय इति तत्राव्याप्तिः, एवं ज्ञानोत्पत्तिक्षणोत्पन्नपदार्थप्रागभावविषयकमिदानीन्तनज्ञानं

क्षणत्वक्षणिकत्वयोर्लक्षणान्तरम्।

तदाधेयः कालिकेन ज्ञानोत्पत्तिक्षणोत्पन्नपदार्थस्तत्प्रतियोगिकप्रागभावाधार एव विषयितासंसर्गेणोक्तज्ञानमिति तत्राव्याप्तिरतस्तद्वारणाय स्वाधेयत्वं प्रागभावाधारत्वं च कालिकसम्बधेन ग्राह्यमित्याह—**कालिकविशेषणतयेति**, **तेनेति** उक्तलाभार्थं समयपदोपादानेनेत्यर्थः। नेत्यस्याव्याप्तिरित्यनेनान्वयः, कालिकसम्बन्धेनाधिकरणे इत्यस्य ज्ञानादावित्यनेनान्वयः। योग्यविभुविशेषगुणानां स्वोत्तरक्षणवर्त्तिविशेषगुणनाश्यत्वमिति नियमाभ्युपगन्तृभिर्नैयायिकैर्ज्ञानादीनां क्षणद्वयादिस्थित्यभ्युपगमेन ज्ञाने क्षणरूपत्वानङ्गीकारान्नोक्ताव्याप्तिदानं सङ्गतमित्यत आह—**ज्ञानादिकं चेति**, तेषां बौद्धानाम्। **स्वत एव निर्विशेषितस्वरूपेणैव**। **अन्येषां** नैयायिकानाम्, **उपहितमिति** ज्ञाने उपहितत्वं स्वजन्येच्छाप्रागभावविशिष्टत्वं स्वनाशकविशेषगुणपूर्वत्वादिविशिष्टत्वं वा। वस्तुमात्रे तु तत्स्वजन्यविभागप्रागभावविशिष्टकर्मविशिष्टकालादिवृत्तित्वविशिष्टत्वमित्यर्थः। पुनरन्यत् वादान्तररूपत्वेन न चचार्हम्। ननु विप्रतिपत्तिर्हि यत्र कुत्राप्युभयवादिसिद्धविधिनिषेधकोटिकैव भवतीति शब्दादिः क्षणिको नवेत्यत्र नैयायिकमतेन जन्येषु विशेषणाभावान्नित्येषु विशेष्याभावात् निषेधस्य प्रसिद्धत्वेऽपि विधेः कुत्र प्रसिद्धिः, बौद्धपक्षेण च विधेः क्षणिकत्वस्य घटादौ प्रसिद्धत्वेऽपि निषेधकोटेः कुत्र प्रसिद्धिरित्याशङ्कायामाह—**प्रसिद्धिस्त्विति**, क्षणिकत्वलक्षणे विशेष्यविधया कादाचित्कत्वं यदि प्रविष्टं स्यात्तदा प्रागभावे चरमध्वंसे च, यदि चोत्पत्तिमत्त्वं तदा महाप्रलयोत्पन्नध्वंस एव तस्य प्रसिद्धिरित्यभिप्रायेण न्यायमतेन दृष्टान्तद्वयोपादानम्। अत्र पूर्वपूर्वशब्दानामुत्तरोत्तरशब्दैर्नाशो यथा, न तथान्त्यशब्दस्य, स्वोत्तरवर्त्तिशब्दान्तराभावात्, किन्तूपान्त्यशब्देनैवेत्युपगन्तृप्राचीननैयायिकमतेनैकक्षणस्थायिनि तत्रापि विधिकोटिप्रसिद्धिर्ज्ञेया। अलीके शशशृङ्गादौ, तस्य भावभूतसर्वधर्मानाश्रयत्वेनोक्तविध्यात्मकक्षणिकत्वानाधारत्वादिति भावः। उक्तक्षणिकत्वलक्षणं प्रागभा-

वघटितमिति प्रागभावानभ्युपगन्तृनव्यनैयायिकमते दुर्घटमुत्पत्त्यादिघटितत्वेन गुरुभूतं चेति नव्यनैयायिकमतसाधारण्येन ध्वंसघटितमुत्पत्त्याद्यघटितत्वेन पूर्वापेक्षया लघुभूतं च लक्षणान्तरमाह–**स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं वा क्षणिकत्वमिति**, अस्य प्रसिद्धिर्न प्रागभावे, तस्यानादित्वेनाद्यक्षणाभावात् स्वाधिकरणीभूतो यः कोऽपि क्षणो गृह्यते तद्वृत्तिर्यो ध्वंसस्स तत्पूर्वक्षणस्यैव तत्प्रतियोगिनि पूर्वक्षणे वृत्तित्वात्, किन्तु चरमध्वंस एव, तस्य स्वाधिकरणीभूतः क्षणो महाप्रलयक्षण एव तद्वृत्तिध्वंसस्तत्पूर्वक्षणस्य तत्प्रतियोगिनि पूर्वक्षणे वृत्तित्वाभावात्, न चास्य लक्षणस्य द्विक्षणादिस्थायिनि गतत्वादतिव्याप्तिः, तस्य स्वाधिकरणे द्वितीयादिक्षणे वृत्तेर्ध्वंसस्य प्रतियोगिनि प्रथमक्षणे वृत्तित्वात्, अत्र स्वाधिकरणे दण्डाद्यात्मकस्थूलकाले स्वोत्पत्तिक्षणध्वंसोऽपि वर्त्तेत इति तत्प्रतियोगिनि स्वोत्पत्तिक्षणे जन्यभावमात्रस्य विद्यमानत्वादुक्तलक्षणेऽसम्भवस्स्यात् तत्साध्यकानुमाने बाधः तद्धेतुकक्षणिकेतरभेदादिसाध्यकानुमाने च स्वरूपासिद्धिस्स्यादिति तद्वारणाय क्षणपदमुपात्तमित्याह–**स्थूलकालमादायेत्यादि, इदं चेति**, अधुनैव निरुक्तं लक्षणमित्यर्थः । एतेन प्राक्प्रदर्शितक्षणिकत्वलक्षणस्य प्रतिक्षणं विनाशाभावेऽपि न क्षतिरिति सूचयाञ्चक्रिरे, **अतिप्रसङ्गादिति** द्विक्षणस्थायिपदार्थविशेषस्य स्वाधिकरणं प्रथमक्षणो द्वितीयक्षणो वा उभयथापि तद्वृत्तिध्वंसः प्रथमक्षणपूर्वकालीनस्यैव तत्प्रतियोगिनि पूर्वक्षणे वृत्तित्वाभावेनोक्तलक्षणस्यालक्ष्ये तस्मिन् गतत्वादतिव्याप्तिरिति भावः ॥ पूर्वं क्षणिकत्वलक्षणमिव तद्घटकीभूतक्षणत्वलक्षणमपि प्रागभावघटितं प्रदर्शितम्, अधुना क्षणिकत्वलक्षणं ध्वंसघटितमुक्तमिति तद्घटकक्षणत्वलक्षणमपि ध्वंसघटितमेव कर्त्तव्यम्, अथवा प्रागभावानभ्युपगन्तृनव्यनैयायिकमतसाधारण्येन ध्वंसघटितं क्षणिकत्वलक्षणमिव तद्घटकक्षणत्वलक्षणमपि तथैवाह–**क्षणत्वं चेत्यादि**, अ-

त्र स्वावृत्तीति यावदिति च प्रतियोगिनो विशेषणम्, स्वं लक्ष्यत्वेनाभिमतम्, तच्च न्यायमते स्वनाशकविशेषगुणपूर्वत्वविशिष्टं ज्ञानादिकं, बौद्धनये तु निर्विशेषितमेव तत्, तथा च स्ववृत्तयो येषां ध्वंसास्ते स्ववृत्तिध्वंसप्रतियोगिनस्स्वपूर्वक्षणवर्तिन एव ते सर्वे न स्ववृत्तय इति स्वस्मिन्नवृत्तयो यावन्तस्स्ववृत्तिध्वंसानां प्रतियोगिनो यस्य तत्त्वं तत्रास्तीति लक्षणसमन्वयः ॥ न चेदं लक्षणं क्षणद्वयादिस्थायिनि याति, यतस्तस्य स्वपदेनोपादाने तद्वृत्तिध्वंस उत्तरक्षणावच्छेदेन पूर्वक्षणावच्छिन्नतद्वृत्तिपदार्थस्य तत्प्रतियोगी तादृशपदार्थोऽपि स्ववृत्तिध्वंसप्रतियोगियावदन्तर्गतस्स च न स्वावृत्तिरिति । उक्तलक्षणे प्रविष्टस्य यावत्पदस्य व्यापकत्वार्थकतया तद्घटितं पर्यवसितार्थमाह–स्ववृत्तिध्वंसेत्यादि, घटकं प्रतियोगिपदं स्वावृत्तिपदं च भावप्रधाननिर्देशाद्यथाक्रमं प्रतियोगित्वपरं स्वनिरूपितवृत्तित्वाभावपरं च, व्यापकत्वं च स्वरूपसम्बन्धेन, तथा च स्ववृत्तिध्वंसप्रतियोगित्वव्यापकस्वनिरूपितवृत्तित्वाभावकत्वमित्यर्थः । व्यापकत्वस्य तादात्म्यसम्बन्धेन ग्रहणे तूक्तपदयोर्धर्मपरत्वेन व्याख्यानं न कर्तव्यम्, तथा च यथाश्रुतमेव सम्यक् ॥

व्यापकत्वमनन्तर्भाव्य लघुभूतं लक्षणान्तरमाह–स्ववृत्तीति, स्ववृत्तिध्वंसप्रतियोगिनिष्ठनिरूपकतानिरूपिताधारतासामान्याभाव इत्यर्थः । तेन स्थूलकाले स्ववृत्तिध्वंसप्रतियोगिचिरातीतपदार्थनिरूपिताधारत्वाभावस्य सत्त्वेऽपि नातिप्रसङ्गः, द्वितीयतृतीयादिक्षणावच्छेदेन स्ववृत्तयो ये प्रथमद्वितीयादिक्षणावच्छिन्नपदार्थध्वंसास्तत्प्रतियोग्याधारत्वस्यापि तादृशाधारतासामान्यान्तर्गतस्य तत्र सत्त्वात्, लक्ष्यीभूते क्षणे च स्ववृत्तयो ध्वंसास्तत्तत्पूर्वपदार्थानां तत्प्रतियोगिभूतास्त एव तन्निरूपिताधारत्वसामान्याभावस्य तत्र सत्त्वाल्लक्षणसमन्वयः ।

कल्पलतिकोपेतम्

क्षणत्वक्षणिकत्वयोर्लक्षणान्तरम् ।

ननु बौद्धमते नातिरिक्तेन क्षणेन क्षणिकः, किन्तु तदात्मक एव सः, क्षणत्वमपि तस्यैव धर्मः, नतु कालधर्मः, तथा च क्षणक्षणिकत्वयोरभेदाद् यदेव क्षणत्वलक्षणं तदेव क्षणिकत्वलक्षणं युक्तियुक्, अन्यथा लक्षणस्येतरभेदानुमापकत्वेन क्षणिकेतरभेदानुमितौ हेतुभूते निरुक्तक्षणिकत्वलक्षणे स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वरूपक्षणत्वस्य प्रकृतसाध्यव्याप्यस्य प्रवेशेन व्यर्थविशेषणघटितत्वाद् व्याप्यत्वासिद्धत्वं स्यात् । व्यर्थविशेषणघटितत्वस्य स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतानवच्छेदकवत्त्वलक्षणस्य प्रकृते सङ्गमनं चैवं, स्वं स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वत्वम् तदवच्छिन्नाऽविषयिका या प्रतीतिस्सा स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वमित्याकारिका तन्निरूपितविषयतावच्छेदको यस्स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वत्वधर्मः स समनियताभावानामैक्याभ्युपगमेन स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिवृत्तित्वाभावस्ववृत्तिध्वंसप्रतियोग्याधारत्वाभावयोस्सामनैयत्येनैक्यात् स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वत्वसमानाधिकरणोऽपि क्षणिकेतरभेदरूपप्रकृतसाध्यव्याप्यतावच्छेदकश्च, तदवच्छिन्नाविषयिका या प्रतीतिस्सा स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वमित्याकारिकेव न स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वमित्याकारिकाऽपि, स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वलक्षणक्षणिकत्वप्रतीतावपि स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वत्वावच्छिन्नविषयतायाः सत्त्वात्, किन्तु घट इत्याद्याकारिका, तद्विषयतावच्छेदको घटत्वमिति तादृशानवच्छेदकं भवति स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वत्वं तद्वत्त्वात्स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वलक्षणहेतोर्व्यर्थविशेषणघटितत्वमित्याशयेनाशङ्क्य प्रतिक्षिपति

न चैतदेवास्तु क्षणिकत्वमिति वाच्यं, निखिलभावस्य न्यायनये कालोपाधित्वाभावेन तेन सम्बन्धेन

स्ववृत्तेरप्रसिद्धेः। परनये व्यावर्त्तनीयस्य स्थूलकालस्याप्रसिद्धेः क्षणोऽपि वा क्षणिकलक्षणे नोपादेयः, भिन्नकालयोराधाराधेयभावाभावात् वृत्तिर्वा कालिकी ग्राह्या, तेनातीतगोचरक्षणिकज्ञाने नांशतो बाधादि, तस्य कालिकसम्बन्धेन स्वाधिकरणे तेन सम्बन्धेन वर्त्तते यो ध्वंसस्तत्प्रतियोगिन्यतीते विषयतयैव वृत्तेरिति भावः ॥

व्यर्थविशेषणघटितत्व विचारः

व्याख्या—न चैतदेवास्त्वित्यादि, न चेत्यस्य वाच्यमित्युत्तरेण सम्बन्धः, कालोपाधावेव कालकृतविशेषणतालक्षणकालिकसम्बन्धेन वस्तुनस्सत्त्वं, कालोपाधिश्च न नित्यः, तस्य स्वानधिकरणकालाभावेन स्वावच्छिन्नकालस्य स्वानवच्छिन्नकालाद् व्यावर्त्तकत्वाभावात्, किन्तु जन्यमेव, तस्य कालावच्छेदकत्वेन तत्तत्कालव्यावर्त्तकत्वात्, तत्रापि सूर्यपरिस्पन्दमात्रं, तस्यैव क्षणादितत्तत्कालपरिचायकत्वेन क्षणादिव्यवहारहेतुत्वात्, तथा च तदतिरिक्तानां घटादिजन्यानां कालोपाधित्वस्य प्रयोजनाभावेनाभावात्, आकाशादिनित्यानां च तस्यासम्भवात्तत्र कालिकसम्बन्धेन वृत्तेरप्रसिद्धेः क्षणत्वलक्षणे स्वपदेन तेषामुपादानासम्भवाल्लक्ष्यीभूतेषु तेषु तस्य सङ्घटनाभावेन क्षणिकेतरभेदरूपप्रकृतसाध्यव्याप्यत्वासम्भवात्तद्घटितस्य स्वाधिकरणेत्यादिक्षणिकत्वलक्षणस्य न व्यर्थविशेषणघटितत्वमित्याशयेन निषेधे हेतुमाह—निखिलभावस्येत्यादि, ननु तथापि बौद्धनये क्षणक्षणिकत्वयोरभेदात् यदेव क्षणत्वलक्षणं तदेव क्षणिकत्वलक्षणं, तथा च तस्य व्यर्थविशेषणघटितत्वं स्यादेवेत्याशङ्कायामाह—परेति, परनये बौद्धतन्त्रे, व्यावर्त्तनीयस्य क्षणपदव्यवच्छेद्यस्य, अप्रसिद्धेः यथार्थत्वेनानभ्युपगमात्, नोपादेय इति इदश्च शब्दैक्यस्याकिञ्चित्करत्वमित्यभिप्रायेण, अन्यथा विप्रतिपत्तिकोटेरुभयमतसिद्धत्वनियमेन क्षणाऽप्रवेशे नैयायिकानां महाकालं स्थूलकालं वाऽऽदायाप्रसि-

द्धिः, भावानां स्वाधिकरणे महाकाले स्थूलकाले वा वृत्तिर्यस्स्वाधिकरणक्षणध्वंसस्तत्प्रतियोगिनि वृत्तित्वात्, प्रवेशे च बौद्धमते प्रयोजनाभावः, तन्मते महाकालस्यापि क्षणिकतास्वीकारेण स्वाधिकरणक्षणिकमहाकाले स्वाधिकरणक्षणध्वंसासत्त्वात् क्षणध्वंसाधिकरणमहाकाले च स्वाधिकरणत्वाभावेन बाधादिदोषाभावात् इति दोषो दुरुद्धर इति ।

नन्वतीतपदार्थविषयकज्ञानस्य कालिकेन स्वाधिकरणे वर्त्तमानपदार्थरूपक्षणे कालिकेन वृत्तिर्योऽतीतपदार्थध्वंसस्तत्प्रतियोगिन्यतीतपदार्थे विषयतासम्बन्धेन विद्यमानत्वेनाव्याप्तिस्स्यात्, तथा च प्रामाणिकत्वाद्यात्मकपक्षतावच्छेदकावच्छेदेन क्षणिकत्वानुमाने पक्षान्तर्गते उक्तज्ञाने पक्षतावच्छेदकसामानाधिकरण्येन बाधस्स्यात्, पक्षतावच्छेदकावच्छेदेन तदनुमितौ पक्षतावच्छेदकावच्छेदेन तदभावस्येव पक्षतावच्छेदकसामानाधिकरण्येन तदभावस्यापि प्रतिबन्धकज्ञानविषयत्वेन बाधत्वात् अत आह—**भिन्नकालयोरित्यादि**, अत्रेदं तात्पर्यम्, विषयविषयिभावस्य चिरातीतयोर्ज्ञानज्ञेययोस्सम्बन्धिस्वभावत्वनियामकत्वेऽपि तस्य संयोगादिसम्बन्धस्येव भिन्नकालीनयोराधाराधेयभावनियामकत्वं नेति स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिन्यतीतपदार्थे तद्विषयकज्ञानस्य विषयतया सम्बद्धत्वेऽपि वृत्तित्वाभावेन नाव्याप्तिः, तथा च सम्बन्धसामान्येनैव वृत्तित्वाधिकरणत्वादिकं प्रवेश्यं, न तु सम्बन्धविशेषेणेति । न केनापि सम्बन्धेन भिन्नकालीनयोराधाराधेयभाव इति प्रवादस्य विषयविषयिभावसम्बन्धातिरिक्तसम्बन्धाभिप्रायकत्ववर्णनेऽप्याह—**वृत्तिर्वेति** तादृशप्रतियोग्यवृत्तित्वघटकवृत्तित्वं वेत्यर्थः, **कालिकी** कालिकसम्बन्धावच्छिन्ना, **तेनेति**, तादृशप्रतियोग्यवृत्तित्वघटकवृत्तित्वे कालिकसम्बन्धावच्छिन्नत्वनिवेशनेनेत्यर्थः ।

पक्षतावच्छेदकव्यापकसाध्याभावप्रतियोगिकसम्बन्धविशेषावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताकपक्षतावच्छेदकावच्छिन्न-

विशेष्यताकनिश्चयविषयीभूतस्साध्याभाववान् पक्ष इत्येको बाधः, अन्यश्च पक्षतावच्छेदकव्यापकत्वाविशेषितसम्बन्धविशेषावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताकपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयविषयस्साध्याभाववान् पक्ष इति, आद्यो ह्रदो वह्निमानित्यादौ, द्वितीयश्च प्रकृतस्थल एवेत्याद्यनिषेधार्थं बाधं विशेषयति—अंशत इति, बाधादीति, अत्रादिपदेन पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिपरिग्रहः। सा च सामानाधिकरण्येन निषेधानुमितौ द्वितीयकोटौ बोध्या। अयं भावः—अवच्छेदकावच्छेदेन क्षणिकत्वस्य विध्यंशत्वे सामानाधिकरण्येन तदभावोऽपि तत्प्रतिबन्धकत्वाद् भवति निषेधकोटिः, तत्साधनेनापि नैयायिकस्य परमतखण्डनं सिद्ध्यतीति तत्र स्थले सामानाधिकरण्येन सिद्धेर्दोषत्वमिति।

कल्पलतिकोपेतम्

व्यर्थविशेषणघटितत्व विचारः

तस्येति, अतीतगोचरवर्त्तमानक्षणवर्त्तिज्ञानस्येत्यर्थः। अस्य वृत्तेरित्यनेनान्वयः। स्वाधिकरणत्वस्य स्वनिष्ठनिरूपकतानिरूपिताधिकरणत्वार्थकत्वेन तद्घटकनिरूपकत्वस्य सम्बन्धसामान्यावच्छिन्नस्य प्रवेशेऽनागतपदार्थविषयकवर्त्तमानज्ञानात्मकस्वनिष्ठविषयत्वसम्बन्धावच्छिन्ननिरूपकताया अपि तादृशनिरूपकतान्तर्गतत्वेन तन्निरूपिताधिकरणतावत्यनागतपदार्थात्मके क्षणे कालिकसम्बन्धेन वर्त्तते यो ध्वंसस्स वर्त्तमानपदार्थस्य तत्प्रतियोगिनि वर्त्तमानपदार्थे उक्तज्ञानस्य कालिकसम्बन्धेन विद्यमानत्वाल्लक्ष्यैकदेशे तत्र लक्षणासङ्गतेरव्याप्तिस्स्यादुक्तक्षणिकत्वलक्षणे, क्षणिकत्वानुमाने चोक्तज्ञानस्य पक्षैकदेशरूपत्वात् तत्रोक्तलक्षणक्षणिकत्वस्य साध्यस्याभावादंशतो बाधस्स्यादतस्तन्निवृत्तये लक्षणघटकं क्षणे स्वाधिकरणत्वं कालिकसम्बन्धावच्छिन्नं ग्राह्यमित्याह—

**वृत्तिश्चाधिकरणत्वस्याप्युपलक्षणं, तेन स्वाधिकरणं विषयतयाऽनागतं तत्र कालिकसम्बन्धेन वर्त्तते**

यो ध्वंसस्तत्प्रतियोगिनि स्वाधिकरणे ज्ञानस्य तेन सम्बन्धेन वृत्तेस्तत्र न बाधः । एवं कालिकसम्बन्धेन स्वाधिकरणीभूतविशेषणज्ञाने विषयतया वर्त्तमानो यो ध्वंसस्तत्प्रतियोगिनि क्षणे वर्त्तमानतया तत्र बाधवारणाय प्राथमिकी वृत्तिरपि कालिकविशेषणतया ग्राह्या ॥ शब्दादिः स्वोत्पत्त्यव्यवहितोत्तरकालीनध्वंसप्रतियोगी न वा, स्वोत्पत्तिव्याप्यो न वा, व्याप्तिश्च कालिकी, विधिप्रसिद्धिरेकदेशिनामन्त्यशब्द इत्यपि केचित् ॥

व्याख्या—वृत्तिश्चाधिकरणत्वस्याप्युपलक्षणमिति, उपलक्षणमिति परिग्राहकमित्यर्थः । तेनेति कालिकसम्बन्धेन स्वाधिकरणत्वनिवेशनेनेत्यर्थः । ध्वंसे विशेषणीभूतस्य स्वाधिकरणक्षणवृत्तित्वस्य कालिकाख्यसम्बन्धविशेषेण प्रवेशफलमाह—एवमित्यादिना, अयमभिप्रायः, तस्य सम्बन्धसामान्येन प्रवेशे वर्त्तमानक्षणध्वंसविषयकज्ञानकालीनघटादावव्याप्तिस्स्यात्, कालिकेन तद्घटस्याधिकरणक्षणो वर्त्तमानक्षणवद्वर्त्तमानक्षणध्वंसावगाहकं यद्वर्त्तमानकालीनं ज्ञानं तदात्मकोऽपि तद्वृत्तिर्यो ध्वंसस्स विषयितासंसर्गेण तज्ज्ञानविषयीभूतो वर्त्तमानक्षणध्वंसस्तत्प्रतियोगिनि वर्त्तमानक्षणे तद्घटादेर्वृत्तित्वेनावृत्तित्वाभावात्,तथा च क्षणिकत्वानुमानेऽशतो बाधस्स्यात् । विशेषणज्ञान इति कालीनत्वसम्बन्धेन विशेषणं यज्ज्ञानं तत्रेत्यर्थः । अत्र विशेषणज्ञान इति स्थाने वर्त्तमानक्षणध्वंसविषयकवर्त्तमानविषयकज्ञान इति पाठो युक्तस्सम्भवति । अन्यदीयमतेन विप्रतिपत्तिमुपन्यस्यति शब्दादिरिति, अत्रापि विधिपक्षो बुद्धदेवानुगानां, निषेधपक्षश्च गौतमीयादीनाम्, ननु स्वोत्पत्त्यव्यवहितोत्तरकालीनत्वं स्वोत्पत्त्यधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणसमयवृत्तित्वं तत्र निखिलाधिकरणत्वानां वृत्तित्वस्य

च कालिकसम्बन्धेन ग्राह्यत्वेन पूर्वापेक्षया न लाघवमित्याशङ्कायां विप्रतिपत्त्यन्तरमाह-स्वोत्पत्तिव्याप्यो नवेति, अन्त्यशब्द इति, अयमाशयः योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वनियमेन पूर्वपूर्वशब्दानां स्वोत्तरोत्तरशब्देन नाशाद् द्विक्षणस्थायित्वं, चरमशब्दस्य तु तथाविधनाशकाभावेनोपान्त्यशब्द एव नाशकः कल्प्यते, सोऽपि न स्वोत्पत्तिक्षणावच्छिन्नस्तस्य नाशकः, तस्य तदुत्पत्तिं प्रत्येव कारणत्वात्, किन्तु स्थितिक्षणावच्छिन्न एवेत्यन्त्यशब्दस्य स्वोत्पत्तिद्वितीयक्षणे तेन विनाशात्क्षणिकत्वमिति तत्र विधिकोटिप्रसिद्धिः, न तु पूर्ववत् प्रागभावे चरमध्वंसे च, यतः प्रागभावस्यानादित्वेन स्वोत्पत्तेरेवाभावात्, चरमध्वंसस्य च स्वाधिकरणे महाप्रलये सूर्यपरिस्पन्दकृतस्य क्षणभेदस्य तदभावेनाभावादखण्डैकरूपत्वेन स्वोत्पत्त्यव्यवहितोत्तरकालाभावाद् ध्वंसध्वंसाभावेन तादृशध्वंसप्रतियोगित्वाभावाच्चाद्यविप्रतिपत्तिघटकविधिकोटेरप्रसिद्धिः, अत एव द्वितीयविप्रतिपत्तौ विध्यंशस्य स्वोत्पत्तिव्याप्यत्वस्य स्वाधिकरणक्षणध्वंसाधिकरणक्षणावृत्तित्वरूपस्याप्युभयत्राप्रसिद्धिः, प्रागभावस्य स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वात् चरमध्वंसस्य च स्वाधिकरणक्षणध्वंसाधिकरणक्षणस्याप्रसिद्धत्वात्। इत्यपि केचिदिति, अपिना केचिदित्यनेन चान्त्यशब्दनाशं प्रत्युपान्त्यशब्दनाशस्यैव हेतुत्वेनान्त्यशब्दस्यापि क्षणद्वयावस्थायित्वमिति क्षणिकत्वाभावान्न तत्रापि विधिकोटिप्रसिद्धिः, किञ्च यथा कथञ्चित्तन्मतेन तस्य क्षणिकत्वाभ्युपगमेऽपि न सर्वनैयायिकमतसाधारण्येन विध्यंशस्य प्रसिद्धिरित्यस्वरसस्सूचितः। परमतेन विप्रतिपत्तित्रयमुपन्यस्य निराकरोति—

सत्त्वमुत्पत्तिव्याप्यं न वा, यदा यस्य सत्त्वन्तदा तस्योत्पत्तिरिति व्याप्तिशरीरं, सत्त्वं क्षणमात्रवृत्त्यनेकवृत्तिधर्मव्यापकताव्याप्यं न वा, क्रमिकक्षणमात्रवृत्त्यनेकवृत्तिधर्मस्तदुभयत्वं तदन्यतरत्वं वा, तद्व्या-

कल्पलतिकोपेतम्

क्षणिकत्वे-विप्रतिपत्त्यन्तरोपन्यासः।

पकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं, तच्च कालिकसम्बन्धेनावृत्तौ गगनादौ नैयायिकानां परेषां चालीके प्रसिद्धम्, तद्व्याप्यत्वं साध्यं, तत्सामानाधिकरण्यमात्रस्य साध्यत्वे तु गगनादौ तत्सम्बन्धेन सिद्धसाधनमत उक्तं व्याप्यत्वम्। अत्र विधिकोटिर्नैयायिकानाम्। स्वाधिकरणक्षणोत्तरत्वं स्वध्वंसव्याप्यं न वेत्यादिकं न तु वाच्यम्। तथा सति सत्त्वादावेवोत्पत्तिव्याप्यत्वादिसाधनौचित्येन यत् सदित्यादिप्रसिद्धप्रयोगविरोधादिति ॥

व्याख्या—सत्त्वमुत्पत्तिव्याप्यं न वेत्यादिना इत्यादिकं न वाच्यमित्यन्तेन, सत्त्वे उत्पत्तिव्याप्यत्वसत्त्वेऽपि न क्षणिकत्वसिद्धिः, स्थिरमात्रस्य सत्त्ववत उत्पत्त्यभ्युपगमेनापि व्याप्तेश्चरितार्थत्वादिति क्षणिकत्वपर्यवसायिनीं कालगर्भां व्याप्तिं दर्शयति– यदा यस्य सत्त्वमित्यादिना। तथा च वस्तुनस्स्थिरत्वे सत्त्वस्य कालान्तरे वर्त्तमानत्वादुत्पत्तिव्याप्यत्वं न स्यादिति भावः। अत्र यत्कालावच्छेदेन यन्निष्ठं सत्त्वं तत्कालावच्छेदेन तदीयोत्पत्तिरिति विवक्षणे व्याप्यवति व्यापकवत्त्वज्ञानासम्भवस्स्यात् अतः षष्ठीसप्तम्योस्समानार्थकतया यस्य तस्येति पदयोर्यत्र तत्रेति पदसमानार्थकत्वं यदा तदेत्यनेन कालस्यैव वाऽधिकरणत्वं विवक्षितमिति बोध्यम्, अस्यां विप्रतिपत्तौ विधिकोटिर्बौद्धस्य, निषेधकोटिर्नैयायिकस्य। द्वितीयविप्रतिपत्तिमाह–सत्त्वं क्षणमात्रेत्यादि, तत्सङ्घटनामाह–क्रमिकेत्यादि, तद्व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपस्य प्रवेशे कालिकसम्बन्धेनावृत्तिमति गगनादौ तस्य प्रसिद्धिर्न स्यात्; गगनाभावस्य केवलान्वयित्वेन तद्वन्निष्ठतया तत्प्रतियोगितावच्छेदकगगनत्वधर्मवत्त्वस्यैव सत्त्वादित्यत आह–तद्व्यापकत्वमित्यादि, तथा च क्रमिकक्षणमात्रवृत्तेस्तत्तत्क्षणोभयत्वस्य तत्तत्क्षणान्यतरत्वस्य

वाऽधिकरणे निष्ठो योऽन्योन्याभावः स न गगनादिमानित्याकारको भेदः, कालिकसम्बन्धेन गगनादेरवृत्तिमत्त्वेन तद्वदप्रसिद्ध्या तदन्योन्याभावस्याप्यप्रसिद्धेः, किन्त्वन्यधर्मावच्छिन्नभेद एव, तत्प्रतियोगितानवच्छेदकत्वं गगनादावस्त्येवेति भवति प्रसिद्धिस्तत्रोक्तव्यापकत्वस्येत्यभिप्रायेणाह तच्चेति व्यापकत्वञ्चेत्यर्थः। यद्यपि बौद्धमते सन्मात्रस्य क्षणिकत्वेन तादृशोभयत्वान्यतरत्वादिमन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन तदभावाभावान्न कुत्रापि व्यापकत्वप्रसिद्धिस्तथाप्यसद्भूते शशशृङ्गादौ तत्प्रसिद्धिरित्याह-**परेषां चालीके प्रसिद्धमिति**, ननु तत्रापि कथं तत्प्रसिद्धिः अलीकस्य सर्वधर्मानाधारत्वेन तादृशप्रतियोगितावच्छेदकत्वाभावलक्षणव्यापकत्वरूपाऽभावभूतधर्मस्याप्यनाधारत्वात्, इति चेत्, मैवम्, भावभूतस्यैव सर्वधर्मस्यानाधारत्वात्तस्य कथमन्यथा क्षणिकत्वानुमाने क्षणिकत्वाभावसत्त्वाभावयोर्व्यतिरेकयोर्व्याप्तौ दृष्टान्तविधया यत्तदुपन्यसनं कृतं तत्सङ्गतं स्यात्, व्यापकत्वस्य गगनादावलीके च प्रसिद्धौ सत्यां तदभाववदवृत्तित्वरूपतद्व्याप्यत्वस्यापि विध्वंसस्यावृत्तिमत्त्वात्तत्रैव प्रसिद्धिर्ज्ञेया। ननूक्तविप्रतिपत्तौ व्याप्यत्वस्थाने सामानाधिकरण्यप्रवेशेन सत्त्वं क्रमिकक्षणवृत्त्यनेकवृत्तिधर्मव्यापकतासमानाधिकरणं नवेत्येवं रूपतैव किमिति नाश्रितेत्याशङ्कयामाह-**तत्सामानाधिकरण्यमात्रस्येति**, अयमाशयः विप्रतिपत्तौ यो विध्वंसस्स एवानुमानमुद्रायां साध्य इति तादृशव्यापकतासामानाधिकरण्यस्य विध्वंसत्वे तस्यैव साध्यत्वं स्यात् तथा च सामानाधिकरण्यं यत्किञ्चिद्व्यक्तिमादाय चरितार्थमिति कालिकसम्बन्धेनावृत्तिमति गगनादौ व्यापकत्वसत्त्वेन तत्र सत्त्वस्यापि सत्त्वात् तत्र सिद्धस्यैव तयोस्सामानाधिकरण्यस्य गगनादिकमादाय सत्त्वात्मकपक्षे साधने सिद्धसाधनं स्यादिति। अत्रेति प्रकृतविप्रतिपत्तावित्यर्थः। **विधिकोटिर्नैयायिकानामिति**, अनेन तन्निषेधकोटिर्बौद्धानामिति व्यञ्जितम्, तृतीयविप्रतिपत्तिमाह- **स्वाधिकरणक्षणोत्तरत्वं स्वध्वंसव्याप्यं नवेति** स्वाधिकरणक्षणध्वंसाधि-

क्षणिकत्वे-विप्रतिपत्त्यन्तरोपन्यासः।

करणत्वं स्वध्वंसानधिकरणक्षणावृत्ति नवेत्यर्थः। अत्र विधिकोटिर्बौद्धानाम्, तन्मते वस्तुमात्रस्य क्षणिकत्वेन स्वाधिकरणक्षणध्वंसाधिकरणत्वे द्वितीयादिक्षणनिष्ठे स्वध्वंसानधिकरणीभूतस्वोत्पत्तिक्षणतत्पूर्वक्षणावृत्तित्वस्य सत्त्वात्। निषेधकोटिश्च न्यायनिष्णातानाम्। तन्मते वस्तुनस्स्थिरत्वेन तादृशाधिकरणत्वे द्वितीयादिक्षणनिष्ठे स्वध्वंसानधिकरणीभूतस्थित्यवच्छिन्नद्वितीयादिक्षणवृत्तित्वस्यैव सत्त्वादिति। यादृश उद्देश्यविधेयभावो विप्रतिपत्तौ तादृश एवानुमितौ युक्त इत्यभिप्रायेण सत्त्वमुत्पत्तिव्याप्यं नवेत्याद्युक्तविप्रतिपत्तित्रयखण्डनायोपक्रमते-**तथा सतीत्यादिना**,**तथा सति** उक्तप्रकारेण विप्रतिपत्तिनिष्पत्तौ, औचित्येनेति, तथा च यत्सदित्यादिसाधनमर्थान्तरदुष्टमिति भावः। तत्र यौ पक्षप्रतिपक्षावुपदर्शितौ यथाक्रमं तन्मण्डनखण्डनात्मककथारम्भार्थं पीठिकामाह-

**एवं विप्रतिपत्तौ सत्यामनुमितिकारणव्याप्तिपक्षधर्मताज्ञानजनकोदाहरणोपनयात्मकव्यवयववादी बौद्धः क्षणिकत्वसाधकं प्रमाणमाह-यत् सत् तत्क्षणिकं, यथा घटः, संश्च विवादास्पदीभूतः शब्दादिरिति।**

एवमित्यादि, ननु शब्दादिः क्षणिको नवेति विवादे सति स्वपरिगृहीतपक्षस्य परपक्षेऽप्रामाण्यज्ञापनपुरस्सरं यद् व्यवस्थापनं कर्त्तव्यं तत्परस्यानुमितिहेतुत्वात्परार्थानुमानरूपमेव तच्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनलक्षणपञ्चावयववाक्यात्मकं, तस्यैव परेषामनुमित्युत्पादप्रत्यलत्वात्, तथा चास्य शास्त्रस्य प्रतिज्ञातर्जुसूत्रनयपरिशोधकत्वान्यथानुपपत्त्या वादितयाऽवधृतो बौद्धः किं नैयायिकानामिव पञ्चावयवान् स्वसिद्धान्तीकृत्य किंवा जैमिनीयसांख्यकाणादपातञ्जलौपनिषदानामिव प्रतिज्ञाहेतूदाहरणरूपं उ-

अवयवद्वय-
व्यवस्थाप-
नम् ।

दाहरणोपनयनिगमनात्मकं वाऽवयवत्रयम् किंवा स्याद्वादिनामिव श्रोतॄणां मन्दतीव्रप्रज्ञावतां यावत्संख्यकावयवैर्हेतावन्यथानुपपत्तिज्ञानं भवेत् तावत्संख्यकावयववान् किंवा पक्षान्तरमेवाभ्युपगम्य स्वीयक्षणभङ्गपक्षं व्यवस्थापयतीत्याशङ्कायामुक्तमुदाहरणोपनयात्मकद्व्यवयववादीति, कथमवयवद्वयमेवाङ्गीकरोति नोनमधिकं वेत्याकाङ्क्षायां तद्विशेषणतयाऽनुमितिकारणव्याप्तिपक्षधर्मताज्ञानजनकेत्युपात्तम् । अयमाशयः, यावन्न व्याप्तिज्ञानं यावच्च हेतौ न पक्षधर्मताज्ञानं तावन्नानुमितिरित्युक्तज्ञानद्वयमेवानुमितिकारणम्, तच्च निरुक्तावयवद्वयादेव सम्भवति, तथाहि— त्रिरूपाणि च त्रीण्येव लिङ्गानीति वचनाद्धेतौ गमकतौपयिकंपक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वात्मकरूपत्रयं कार्यस्वभावानुपलब्धिभेदेन लिङ्गत्रयं चाभ्युपगच्छति बौद्धः । तत्र व्याप्तिप्रतिपादकदृष्टान्तवचनस्योदाहरणस्यान्वयव्यतिरेकभेदेन द्विविधत्वेनाद्येन सपक्षसत्त्वस्य द्वितीयेन विपक्षासत्त्वस्य ज्ञानम्, पक्षसत्त्वज्ञानं चोदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकलक्षणादुपनयवाक्यात्, हेतुज्ञानं चोभाभ्याम, सपक्षसत्त्वविपक्षासत्त्वयोर्ज्ञाने च सति हेतौ तेन तादात्म्यतदुत्पत्त्यादिलक्षणव्याप्तिज्ञानं,हेतौ पक्षसत्त्वज्ञानमेव च पक्षधर्मताज्ञानमिति। एतेन साध्यविशिष्टपक्षवचनलक्षणया प्रतिज्ञया पक्षे यत् साध्यवैशिष्ट्यं प्रतिज्ञातं तस्यैव पुनः पक्षे सध्यस्यावाधितत्वप्रतिपादकवचनलक्षणेन निगमनेन हेतुवलतो निर्णये प्रतिज्ञानिगमनाभ्यां हेतावबाधितत्वासत्प्रतिपक्षितत्वरूपद्वयज्ञानं भवतीति तदर्थं ते अभ्युपगन्तव्ये भवतः , हेत्ववयवश्च न पृथग्रूपप्रतिपादकस्तथापि प्रतिज्ञया साध्यविशिष्टे पक्षे प्रतिपादिते कस्मादित्याकाङ्क्षाया अनुत्थाने उदाहरणादिप्रयोगादीनामप्यप्रयोक्तव्यत्वं स्यादिति हेतुप्रयोगोऽप्यभ्युपगन्तव्य एवेत्यारेकाऽपि निरस्ता , वाधसत्प्रतिपक्षयोरेवाभावात्, तदभावप्रतिपादनमन्यत्र कृतं तत एवावसेयम्, ग्रन्थगौरवभीत्यात्र नोच्यते । एतेन प्रतिज्ञाद्यप्रयोगान्न्यूनत्वमित्याशङ्काऽपि निरस्ता, यन्मतेन यावन्तो-

ऽवयवा अभ्युपगतास्तावतामनुपन्यासे न्यूनत्वं स्यात्, न च बौद्धैः प्रतिज्ञाहेतुनिगमनान्यभ्युपगतानीति तन्मतेन तेषामनुपन्यासेऽपि न न्यूनत्वमिति । **संश्च विवादास्पदीभूतः शब्दादिरितीति**, अनेन हेतुविशिष्टपक्षबोधकोपनयवाक्येन सत्त्वस्य हेतुत्वं शब्दादित्वस्य च पक्षतावच्छेदकत्वं सूचितम् । नन्वात्मनः क्षणिकत्वसाधनस्यैव प्रकृततया आत्मत्वेनैव पक्षत्वमुचितं किमिति शब्दादित्वेनेति चेत्, सत्यम्, तथापि प्रसङ्गात् सन्मात्रस्यैव क्षणिकत्वसाधनाच्छब्दादित्वेन पक्षनिर्देशः, बौद्धनयेऽवयविनोऽनभ्युपगमेन कथमुदाहरणवाक्येऽन्वयदृष्टान्तविधया घटस्योपन्यासो युक्त इत्याशङ्कायामाह–

**अत्र स्थूलद्रव्याभ्युपगमेन घटो दृष्टान्तः प्रसाध्याङ्कः, तथोत्पादविशिष्टो वा परमाणुसमूहो घटः । असन्नेवासौ व्यतिरेके दृष्टान्त इति तु न युक्तम् अन्वयसहचारमात्रप्रदर्शकोदाहरणे व्यतिरेकदृष्टान्तोपन्यासस्यासम्प्रदायिकत्वात् ॥**

व्याख्या–अत्र स्थूलद्रव्याभ्युपगमेनेत्यादि, नैयायिकादिप्रतिवादिमतावष्टम्भेनाभ्युपगतस्य घटस्यावयविभूतस्य दृष्टान्तत्वमिति-भावः प्रसाध्याङ्क इति, प्रसाध्यमनुमेयमङ्कं क्षणिकत्वं यस्मिन् स तथेत्यर्थः । अथवाऽवयविनो घटस्य स्वमतेऽनभ्युपगमेऽपि विलक्षण-संस्थानापन्नपरमाणुपुञ्जात्मकस्य तस्याभ्युपगमेन दृष्टान्तत्वं सम्भवतीत्यभिमेत्य स्वमतावष्टम्भेनाह-**तथोत्पादविशिष्टो वा परमाणुसमूहो घट इति**, तथेति, घटाद्याकारसंस्थानविशेषावच्छिन्नतयेत्यर्थः, अस्योत्पादेत्यनेनान्वयः । नन्वत्र परमाणोर्दृष्टान्ततासम्भवे किमिति पुञ्जात्मकस्य घटस्य दृष्टान्तत्वमुक्तमिति चेत्, उच्यते, परमाणोः क्षणिकत्वस्याद्याप्यसिद्ध्या प्रकृतानुमानेन निर्वाह्यतया परमाणुदृष्टान्तेन प्रकृतानुमाननिर्वाहेऽन्योन्याश्रयस्स्यात् इत्यतः परमाणोर्दृष्टान्तविधया नोपन्यासः कृतः, पुञ्जात्पुञ्जोत्पत्तिवादिनये

पूर्वोत्तरक्षणवर्त्तिपदार्थयोः कार्यविशेषकारित्वतदकारित्वलक्षणसामर्थ्यासामर्थ्याभ्यां प्रकृतानुमानं विनापि भेदसिद्ध्या क्षणिकत्वसिद्धिसम्भवेन पुञ्जात्मकस्य घटस्य दृष्टान्तत्वे तद्दोषो नावकाशं भजत इति । न च प्रकृतानुमानं विनापि घटस्य पूर्वोक्तयुक्त्या क्षणिकत्वसिद्धेर्व्यर्थमनुसरणमिति वाच्यम्, घटमात्रे क्षणिकत्वस्य सिद्धावपि सर्वत्र सत्त्वावच्छेदेन सिद्ध्यभावात्, तदर्थमेव च प्रकृतानुमानस्यानुसरणीयत्वात् । न च शब्दादित्वस्य पक्षतावच्छेदकत्वे घटस्यापि पक्षान्तर्गतत्वात्कथं दृष्टान्तत्वमिति वाच्यम्, पक्षतावच्छेदकवतो दृष्टान्तत्वे विरोधाभावादिति मथुरानाथः । अलीकस्य भावभूतधर्मानाश्रयत्वेनान्वयदृष्टान्तत्वासम्भवेऽप्यभावभूतधर्माश्रयत्वेन सम्भवत्येव व्यतिरेकदृष्टान्तत्वमित्यन्यमतमुपदर्श्य निराकरोति-असन्नेवासाविति, असन्नेवेति, अलीकएवेत्यर्थः, असाविति अवयविरूपो घट इत्यर्थः, व्यतिरेके व्यतिरेकव्याप्तौ, असाम्प्रदायिकत्वादिति कथकसम्प्रदायविरुद्धत्वादित्यर्थः, व्यतिरेकपक्षस्य पश्चाद्वक्ष्यमाणत्वेनेदानीं तदुपन्यासस्यानौचित्यादिति भावः । पक्षतावच्छेदकसामानाधिकरण्येन क्षणिकत्वानुमितिं प्रति प्रतिबन्धिकायाः पक्षतावच्छेदकसामानाधिकरण्येन तत्सिद्धेरुपान्त्यशब्देनान्त्यशब्दस्य नाशेन क्षणिकत्वमित्यभ्युपगच्छतामेकदेशिनां मतेऽन्त्यशब्दे पक्षान्तर्गते सत्त्वात् सा न स्यादतः पक्षे इतरव्यावर्त्तकतया विवादास्पदीभूत इति विशेषणमुपात्तमित्याह—

घटस्यदृष्टान्तत्वव्यवस्थापनम् ।

विवादाध्यासित इत्येकदेशिमतेनांशतः सिद्धसाधनवारणाय, स्वरूपकथनमात्रं वा, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्याया असत्त्वेन तस्यादोषत्वात् । शब्दादिरिति विभिन्नरूपेण पक्षत्वेऽपि न क्षतिः, समूहालम्बनरूपाया अनुमितेः सम्भवात् ॥ केषांचिद्विशिष्यानुपादानेऽपि न तत्र संदिग्धानैकान्तिकत्वं,

गृहीतव्याप्तिकस्य हेतोस्तत्र परामर्शेऽनुमितेरेवोदयात्, पक्षत्वेनोपन्यासस्य संदिग्धानैकान्तिकत्वाभावाप्रयोजकत्वात् ॥

व्याख्या—विवादाध्यासित इत्यादि, अंशत इति, अन्त्यशब्दे पक्षतावच्छेदकसामानाधिकरण्येनेत्यर्थः। ननु विवादास्पदीभूत इति विशेषणस्य पक्षस्वरूपोपरञ्जनमात्रपरत्वे तस्य पक्षाऽप्रविष्टत्वात् पक्षतावच्छेदकसामानाधिकरण्येन क्षणिकत्वानुमितेरुद्देश्यत्वे कथमुक्तदोषोद्धार इत्याशङ्कायामाह— पक्षतावच्छेदकावच्छेदेनेत्यादि, शब्दादिः क्षणिक इत्याकारकानुमितिर्मे जायतामितीच्छाबलेन पक्षनिष्ठविशेष्यतानिरूपितपक्षतावच्छेदकीभूतशब्दादित्वव्यापकक्षणिकत्वप्रतियोगिकसंसर्गावच्छिन्नक्षणिकत्वनिष्ठप्रकारतानिरूपकानुमितिरेवात्रेष्टव्या, तां प्रति शब्दादिनिष्ठविशेष्यतानिरूपितपक्षतावच्छेदकीभूतशब्दादित्वव्यापकक्षणिकत्वप्रतियोगिकसाध्यतावच्छेदकसम्बन्धावच्छिन्नक्षणिकत्वनिष्ठप्रकारतानिरूपकसिद्धिः प्रतिबन्धिका, नतु शुद्धसाध्यतावच्छेदकसम्बन्धावच्छिन्नक्षणिकत्वनिष्ठप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकसिद्धिः, तथा च पक्षैकदेशेऽन्त्यशब्दमात्रे क्षणिकत्वस्य सिद्धत्वेऽपि सर्वोपसंहारेण तत्सिद्ध्यभावान्न क्षतिरिति भावः। एतेन महाप्रलयकाले स्वाधिकरणस्य स्वात्मकक्षणातिरिक्तक्षणस्याभावेनोक्तलक्षणक्षणिकत्वस्य सिद्धेः सिद्धसाधनशङ्काऽपि निरस्ता। तस्येति, पक्षतावच्छेदकसामानाधिकरण्येन सिद्धसाधनस्येत्यर्थः। अदोषत्वादिति पक्षतावच्छेदकावच्छेदेनानुमितिं प्रत्यप्रतिबन्धकत्वादित्यर्थः। विभिन्नरूपेणेति, शब्दत्वेन घटत्वेन पटत्वेनेत्यादिना प्रत्येकधर्मेणेत्यर्थः,। तत्तद्धर्मरूपासाधारणधर्मेण पक्षत्वेऽपि तत्तद्धर्मावच्छिन्नोद्देश्यकक्षणिकत्वानुमितयो न भिन्ना अभ्युपगन्तव्याः, तथा सति ताः किं युगपदेव स्युः, किं वा क्रमेण, नाद्यः तासां सविकल्पकज्ञानरूपाणां युगपदुत्पादासम्भवात्,

नापि द्वितीयः, तथा सत्युक्तानुमितिसन्तानोत्पादन एवायुःपरिक्षयस्स्यात् विषयान्तरज्ञानोच्छेदश्च स्यात्, किन्तु सा साक्षात्परम्परया निरूप्यनिरूपकभावानापन्ननानाविशेष्यताकज्ञानरूपाऽभ्युपगन्तव्येत्याह—**समूहालम्बनरूपाया इत्यादि**, ननु क्षणिकत्वतदभावोभयप्रकारेण सन्दिह्यमानानां सर्वेषां पदार्थानामसाधारणधर्मेण वादी परार्थानुमानरूपायां कथायां नोपन्यासं कर्तुं शक्त इति प्रत्येकधर्मेणोद्देश्यतया यो नोपन्यस्तस्तत्रैव क्षणिकत्वस्य साध्यस्याभाववत्तया सन्दिह्यमाने सत्त्वात्मकहेतोस्सत्त्वात्सन्दिग्धव्यभिचारापत्त्याऽनुमित्युत्पाद एव न स्यात् इति,चेत्,मैवं,सन्दिह्यमानसाध्याभाववति पक्षतयाऽनुपन्यस्ते तत्र हेतोर्निश्चयेऽपि सन्दिग्धव्यभिचाराभावात्,,यतो व्यभिचारस्य लक्षणं हेतोर्विपक्षवृत्तित्वं, विपक्षश्च निश्चितसाध्याभाववान् , तथा च साध्याभाववत्तया निश्चिते हेतोर्निर्णये निश्चितसाधारणसव्यभिचारता, सन्देहे च सन्दिग्धसाधारणसव्यभिचारता, प्रकृते चोक्तरूपायास्तस्या अभाव एव, अन्यथाऽनुमित्साभावकालीनानुमानमात्रोच्छेद एव स्यात्, तत्रानुमितिपूर्वकाले पक्षे साध्यतदभावौ सन्दिह्यमानावेवेति सन्दिग्धसाध्याभाववति तत्र हेतोर्वृत्तित्वनिर्णयात्सर्वत्र सन्दिग्धानैकान्तिकत्वापत्तेः, न च प्राचां मते सन्दिग्धसाध्यवत्त्वमेव पक्षतेति तदन्यथानुपपत्त्या सर्वत्र हेतुमत्तया निश्चितस्य पक्षस्य साध्यतदभाववत्तया सन्दिह्यमानत्वेन हेतौ सन्दिग्धानैकान्तिकत्वज्ञानेऽपि पक्षे साध्यव्याप्यहेतुरिति परामर्शात्पक्षे साध्यमित्याकारिकायाः साध्यव्याप्यहेतुमान् पक्ष इति परामर्शाच्च पक्षस्साध्यवानित्याकारिकाया अनुमितेरेवोदयात् नव्यनैयायिकमतेऽपि तत्र स्थले सिसाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतासम्पत्तेर्हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठविषयतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठ--

क्षणिकत्वानुमाने पक्षनिर्णयः ।

विषयताकनिश्चयत्वेन कारणीभूतस्य साध्यव्याप्यहेतुमान् पक्षः इत्याकारकस्य पक्षे साध्यव्याप्यहेतुरित्याकारकस्य वा परामर्शस्य सत्त्वेन पक्षः साध्यवानित्याकारिकाया अनुमितेर्दर्शनात्प्रतिबन्धकत्वाभावान्न तस्य दोषत्वमिति नानुमानमात्रोच्छेदप्रसङ्ग इति वाच्यम्, यतः पक्षत्वेनोपन्यस्तानुपन्यस्तपदार्थविशेषयोः को विशेषः, येनोभयत्र सन्दिग्धानैकान्तिकतासद्भावेऽप्येकत्र गृहीतव्याप्तिकाद्धेतोरनुमितिर्नापरत्र सन्दिग्धसाध्यवत्त्वेन पक्षसमत्वे सत्यपि, तस्माद्वादिना विशिष्य पक्षत्वेनानुपन्यस्तेऽपि पदार्थविशेषे सन्दिग्धसाध्यवत्त्वेन पक्षसमे यदैव प्रतिवादी हेतोस्सन्दिग्धानैकान्तिकतां प्रदर्शयेत् तदैव तस्मिन् धर्मितया ज्ञायमाने साध्यव्याप्यहेतोः परामर्शादनुमित्युदयस्स्यादेवेति न तस्य दोषत्वमित्याशयेनाह—केषांचिद्विशिष्यानुपादानेऽपीत्यादि, पक्षत्वेनोपन्यासस्य सन्दिग्धानैकान्तिकत्वाभावाप्रयोजकत्वादिति, विपक्षबाधकतर्कसत्त्वे पक्षे पक्षातिरिक्ते वा व्यभिचारशङ्का नावतरत्येव, तदभावे च पक्षेऽपि व्यभिचारशङ्कया सन्दिग्धानैकान्तिकत्वं भवत्येव, यत्र व्यभिचारशङ्का तस्य पक्षतयोपन्यसनं नोक्तशङ्काविघातकमिति भावः । ननु तत्तद्धर्मावच्छिन्ननानाविधपक्षकसमूहालम्बनानुमित्यभ्युपगमेऽपि पदार्थानामनेकविधत्वात्प्रत्येकरूपेण सर्वान् वादी नैकदोपादातुं शक्नोतीति क्षणिकत्वमुद्भावयितुं शक्यं नेति सर्वत्र विशेषधर्मेण पक्षत्वे येषां येषां पदार्थानामुपन्यासो न स्यात्तेषां सर्वेषां क्षणिकत्वसिद्धिर्न स्यादित्यतो यदि सत्त्वं निखिलानुगतं पक्षतावच्छेदकतयोपादीयते तदा तस्यैव हेतुत्वेन हेतुपक्षतावच्छेदकयोरैक्यं स्यात्, तथा च सति हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्ष इति परामर्शे हेतौ साध्यसामानाधिकरण्यमिव तुल्यवित्तिवेद्यतया साध्येऽपि हेतुसामानाधिकरण्यं प्रकाशते अनुमितावपि तदेव साध्ये हेतुसामानाधिकरण्यं,तत्र भासमानस्य पक्षतावच्छेदकसामानाधिकरण्यस्य हेतुपक्ष-

तावच्छेदकहेत्वोरैक्येन तद्रूपत्वादित्यनुमित्या प्रकाशनीयस्य साध्ये पक्षवृत्तित्वस्य पक्षतावच्छेदकात्मकहेत्वधिकरणवृत्तिसाध्यावगाहिना परामर्शेन प्रकाशनात्तेन समानविषयकसिद्ध्यात्मकेनानुमितेः प्रतिबन्धादनुदय एव स्यात्, अथवाऽनुमितौ पक्षतावच्छेददकसामानाधिकरण्यं साध्ये न भासते, तत्तु तदा स्याद्यदि साध्यं पक्षवृत्तीत्यनुमितिः स्यात्, किन्तु तद्धर्मविशिष्टे भासमानं सत्तत्रापि सामानाधिकरण्येन भासते इति नियमात्पक्षतावच्छेदकविशिष्टे भासमानं साध्यं पक्षतावच्छेदकेऽपि सामानाधिकरण्येन भासते तथा च पक्षतावच्छेदकात्मकहेतौ साध्यसामानाधिकरण्यं च परामर्शे भासत एवेति नोक्तनीत्या समानवित्तिवेद्यताश्रयणस्यापि कृत्यमित्याशङ्कायामाह—

प्रामाणिकत्वार्थक्रियाकारित्वयोर्वा सत्त्वयोरेकतरस्य पक्षतावच्छेदकत्वं हेतुत्वं चेति न व्याप्तिग्रहकाल एव पक्षतावच्छेदकसाध्यसामानाधिकरण्यसिद्धावनुमानाप्रवृत्तिदोषोपनिपातः। पक्षतावच्छेदकस्य हेतुत्वेऽपि वा न दोषः, व्याप्तिग्रहेण हेतौ साध्यसामानाधिकरण्यावगाहनेऽपि हेतुमान् साध्यवानिति हेतुमत्त्वावच्छेदेन हेतुमद्विशेष्यकसाध्यवत्त्वबुद्धेरुद्देश्याया असिद्धेरिति ध्येयम् ॥

कल्पलतिकोपेतम्

क्षणिकत्वानुमाने पक्षनिर्णयः।

व्याख्या—प्रामाणिकत्वेत्यादि, पक्षतावच्छेदकसाध्यसामानाधिकरण्यसिद्धाविति पक्षतावच्छेदकात्मकहेतौ साध्यसामानाधिकरण्यस्य हेतुव्यापकसाध्यसमानाधिकरणहेतुमान् पक्ष इत्याकारकपरामर्शात्मकसिद्धावित्यर्थः। नन्वेवं सति प्रामाणिकं क्षणिकं अर्थक्रियाकारित्वाद् घटवत् अर्थक्रियाकारि क्षणिकं प्रामाणिकत्वाद् घटवदित्येवं वानुमानं पर्यवस्यति, तत्र क्षणिकत्वस्य सर्वोपसंहारेण साधनीयत्वेन यत्र यत्र प्रामाणिकत्वं तत्र तत्रार्थक्रियाकारित्वं यत्र चार्थक्रियाकारित्वं तत्र प्रामा-

णिकत्वमित्येवं हेतुपक्षतावच्छेदकयोस्सामनैयत्यमभ्युपगन्तव्यम्, अन्यथा प्रामाणिकत्वस्यार्थक्रियाकारित्वानाधिकरणदेशवृत्तित्वे आद्यानुमाने भागासिद्धिस्स्यात्, द्वितीयानुमाने क्षणिकत्वस्यार्थक्रियाकारिण्येवाभ्युपगमे तदभाववत्यर्थक्रियाकारित्वाधिकदेशे हेतोस्सत्त्वाद्व्यभिचारस्स्यात्। अर्थक्रियाकारित्वस्य च प्रामाणिकत्वानधिकरणदेशवृत्तित्वे प्रामाणिकत्वाभाववत्यप्यर्थक्रियाकारित्वं स्यात् तथा च द्वितीयानुमाने भागासिद्धिस्स्यात्, क्षणिकत्वस्य प्रामाणिकमात्र एवाभ्युपगमे तदभाववत्यप्रामाणिकेऽप्यर्थक्रियाकारित्वस्य हेतोस्सत्त्वादाद्यानुमाने व्यभिचारस्स्यात्। सामनैयत्यसिद्धिश्च न प्रत्यक्षेण, अस्मदादिप्रत्यक्षस्य वर्त्तमानमात्रावलम्बिनस्सामनैयत्यस्यातीतानागतपदार्थघटितत्वेन तद्विषयकत्वायोगात्, सर्वज्ञप्रत्यक्षस्यापि च प्रकारविशेष्यभावविनाकृतनिखिलक्षणिकस्वलक्षणाकारस्वसंवेदननिर्विकल्पज्ञानरूपत्वेन सविकल्पज्ञानविषयस्य तस्य तत्र भासमानत्वायोगात्, नाप्यनुमानेन, तस्य लिङ्गादिसापेक्षत्वेन तदभावेऽभावात्, भावे वा तत एव क्षणिकत्वमपि सिद्धं स्यादित्याद्याशङ्कायामाह–**पक्षतावच्छेदकस्येति, हेताविति** हेत्वात्मकपक्षतावच्छेदके इत्यर्थः, **हेतुमान् साध्यवानितीति** हेत्वात्मकपक्षतावच्छेदकविशिष्टः पक्षः साध्यवानित्याकारकेत्यर्थः। **हेतुमत्त्वावच्छेदेन हेतुमद्विशेष्यकसाध्यवत्त्वबुद्धेरिति,** हेत्वात्मकपक्षतावच्छेदकव्यापकसाध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धावच्छिन्ना या हेत्वात्मकपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपिता साध्यनिष्ठप्रकारता तन्निरूपकानुमितेरित्यर्थः। **उद्देश्याया इति** क्षणिकत्वानुमितिर्मे जायतामित्याकारकेच्छागोचरीभूताया इत्यर्थः। **असिद्धेरिति,** पक्षतावच्छेदकस्यैव हेतुत्वाद्यद्यपि सत्त्वसमानाधिकरणात्यन्ताभावाप्रतियोगिक्षणिकत्वसमानाधिकरणसत्त्वमिति व्याप्तिग्रहदशायामेव पक्षतावच्छेदकीभूतसत्त्वहेतौ क्षणिकत्वसामानाधिकरण्यस्य सिद्धत्वेन तुल्यवित्तिवेद्यतया पक्षतावच्छेदकीभूतसत्त्वहेतुमत्यपि क्षणिकत्व-

साध्यवत्त्वं सिद्धमेव, तथापि व्याप्तिग्रहे तत् शुद्धस्वरूपसम्बन्धेन सिद्धं, न तु हेत्वात्मकपक्षतावच्छेदकीभूतसत्त्वव्यापकक्षणिकत्वप्रतियोगिकस्वरूपसम्बन्धेनेति व्याप्तिग्रहस्य समानप्रकारकसिद्ध्यनात्मकत्वेन न तमादाय क्षणिकत्वानुमित्साया अरितार्थत्वमिति स्वविषयसिद्ध्यभावविशिष्टसिसाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षताया अक्षतेर्नानुमित्यनुदय इति भावः। नच तथापि हेतुपक्षतावच्छेदकयोरैक्ये उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्भेदाभावाद् घटो घट इति वाक्यादिवोपनयवाक्यादपि शाब्दबोधानुपपत्तिस्स्यादिति वाच्यम्, पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्त्वस्यैवाकांक्षितत्वेनोपनयवाक्यादुद्देश्यतावच्छेदकावच्छेदेन हेतुमत्त्वभाने उद्देश्यतावच्छेदकावच्छेद्यत्वस्य विधेये विधेयसम्बन्धे वाऽवगाहननियमेन तदपेक्षया साध्यव्याप्यांशापेक्षया च विधेयकोटावधिकावगाहिनश्शाब्दबोधस्य साध्यव्याप्यहेतुमांश्च हेतुमानित्युपनयवाक्याद्विधेयांशेऽधिकावगाहिनो घटो नीलघट इति वाक्याद् घटो नीलघट इत्याकारकशाब्दबोधस्य नव्यनैयायिकाभ्युपगतस्यैवाभ्युपगमे बाधकाभावात्,

हेतुपक्षतावच्छेदकयोरैक्येऽपि न दोषः।

अथात्रास्थिरा एव शब्दादयः पक्षीक्रियन्ते स्थिराश्च घटादयो दृष्टान्तीक्रियन्त इत्यत्र कोऽभिप्राय इति चेत्। उच्यते। कुर्वदुदासीनावस्थाद्वययोगित्वेन प्रतीयमानानां घटादीनां विरुद्धधर्माध्यासेन क्षणिकत्वसाधनं सुघटम्, तद्दृष्टान्तेन चाशुतरविनाशिनां कुर्वदकुर्वदवस्थावत्तया दुर्लक्ष्याणां शब्दादीनां विरुद्धधर्मसंसर्गप्रतिपत्तेरशक्यत्वात् सत्त्वेनैव क्षणभङ्गो वक्तव्य इत्ययमभिप्राय इति नारायणाचार्यः। अयं च प्रयोगोऽयुक्तो घटादौ दृष्टान्तीकृते क्षणिकत्वासिद्धेस्तेन सत्त्वस्य प्रतिबन्धासिद्धेरिति चतुर्थवृत्ताशयः ॥ ४ ॥

अत्रेति—आत्मनः क्षणिकत्वविचारप्रक्रमे इत्यर्थः । अस्थिरा इति अत्राशुतरविनाशित्वेनेत्यादिः । पक्षीक्रियन्त इति,उपनयावयवे उद्देश्यतया प्रदर्श्यन्ते इत्यर्थः । स्थिराश्चेति ज्ञाने तद्रूपतया भासमाना इत्यर्थः । दृष्टान्तीक्रियन्ते उदाहरणावयवे व्याप्तिप्रतिपत्तिसौलभ्यायाभिधीयन्त इत्यर्थः । यथा स्थिरत्वेनानुभूयमाना घटादयः कदाचिज्जलाहरणादिकं कुर्वन्ति,कदाचिन्नेति ते तत्कारित्वाकारित्वरूपविरुद्धधर्माध्यस्तत्वेनाबालगोपालैरुपलभ्यन्ते, न च तथाशुतरविनाशिनश्शब्दादयः, घटादीनां तथोपलम्भेन किमिति चेत् ,अत एव भेदः, यतो विरुद्धधर्मयोरप्येकत्रावस्थाने घटपटादीनामप्यैक्यप्रसङ्गेन जगति भेदकथोच्छिन्नैव स्यात् , तदुक्तं "अयमेव भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः,कारणभेदश्च, स चेन्न भेदको विश्वमेकं स्यादिति" तथा च यथा घटपटौ भिन्नौ घटत्वपटत्वरूपविरुद्धधर्माध्यासाद्,यन्नैवं तन्नैवं यथा स्वस्वरूपमित्यनुमानेन घटपटयोर्भेदसिद्धिस्तथा पूर्वकालावच्छिन्नजलाहरणाकारी घट उत्तरकालावच्छिन्नजलाहरणकारिणो घटाद्भिन्नः विरुद्धधर्माध्यासात्पटवदित्याद्यनुमानेन पूर्वकालीनाद्घटादुत्तरकालावच्छिन्नघटस्य भेदसिद्धौ क्षणिकत्वमप्यर्थादापन्नमेव, पूर्वकालावच्छिन्नजलाहरणानुकूलसामर्थ्यविरहवतो घटस्य यावन्न विध्वंसस्तावन्नोत्तरकालावच्छिन्नतत्सामर्थ्यस्वरूपतया तत्सन्ताने तस्योत्पत्तिरिति सत्त्वहेतुमन्तरेणापि घटादौ क्षणिकत्वसाधनं सुशक्यम्, न चैवं शब्दादौ, तेषामाशुतरविनाशित्वेन यत्कार्यं प्रत्यसामर्थ्यं तत्प्रत्येव सामर्थ्यमित्येवं विरुद्धधर्मवत्तया भेदेनाप्रतीयमानानां क्षणिकत्वं नार्थापत्त्या साधयितुं शक्यमिति सत्त्वलिङ्गेनैव तत्र तत्साधनीयम्, अतो घटादीनां दृष्टान्ततया शब्दादीनां च पक्षतयोपन्यासः कृत इति नारायणाचार्याभिप्रायेण समाधत्ते—उच्यत इत्यादिना, उदासीनेति अकुर्वद्रूपेत्यर्थः । दुर्लक्ष्याणां भेदेनाप्रतीयमानानाम् । अयमिति उक्तोदाहरणोपनयात्मक इत्यर्थः । तेनेति क्षणिकत्वेनेत्यर्थः । प्रतिबन्धासिद्धेरिति, प्रतिबन्धो व्याप्तिः

तदसिद्धेरित्यर्थः। न च प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनो न्यायमतेऽपि कारणत्वस्यावश्याभ्युपगन्तव्यत्वेन ध्वंसप्रतियोगिनोस्तत्त्वेनैव कार्यकारणभावोऽभ्युपगन्तुं युक्तः, समवेतकार्यनाशं प्रति समवायिकारणनाशादेर्हेत्वन्तरत्वकल्पनायां गौरवात्, तथा च प्रतियोगिनः कारणस्य पूर्वक्षणे सत्त्वेन तदव्यवहितोत्तरक्षणे तद्विनाशस्यावश्यकतया प्रतिबन्धसिद्धिरिति वाच्यम्, अप्रामाणिकानन्तक्षणिकघटादितन्नाशतद्विशेषहेतुहेतुमद्भावानां क्षणिकपूर्वपूर्वघटादिव्यक्तेः क्षणिकोत्तरोत्तरघटादिव्यक्तिं प्रति हेतुहेतुमद्भावानाञ्च कल्पनामपेक्ष्य समवायिकारणनाशादेर्हेतुत्वकल्पनाया एव लघुत्वादिति भावः ॥ ४ ॥

शब्दघटयोः पक्षदृष्टान्तत्वेयुक्तिः।

पञ्चमश्लोकावतरणिकामाह—

प्रतिबन्धसाधनमाशङ्क्य दूषयति।

सामर्थ्यतद्विरहरूपविरुद्धधर्म–संसर्गतो न च घटादिषु भेदसिद्धेः।
व्यप्तिग्रहस्तव परस्य यतः प्रसङ्ग–व्यत्यासयोर्बहुविकल्पहतेरसिद्धिः ॥ ५ ॥

न च तव परस्य त्वदाज्ञाबाह्यस्य बौद्धस्य. सामर्थ्यतद्विरहरूपयोः सामर्थ्यासामर्थ्यलक्षणयोर्विरुद्धधर्मयोः संसर्गतो घटादिषु भेदसिद्धेर्व्याप्तिग्रहः, सत्त्वक्षणिकत्वयोरिति शेषः। यतः तत्साधकयोः प्रसङ्गव्यत्यासयोः प्रसङ्गतद्विपर्यययोः, बहुविकल्पहतेर्नानाविकल्पग्रासादसिद्धिः। अत्र हि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेणाङ्कुरमकुर्वाणादङ्कुरकारिण इव तदकुर्वाणात्तत्कारिणो (तदकुर्वाणात्तत्कारिणो) भेद-

सिद्धौ क्षणिकत्वसिद्धेर्घटादिषु (तेषु) सत्त्वक्षणिकत्वयोर्व्याप्तिसिद्धिः सिद्धव्याप्तिकाच्च सत्त्वात् सन्मात्रेऽपि क्षणिकत्वानुमानमिति बौद्धानामाशयः । स चायुक्तः । उक्तविरुद्धधर्मसंसर्गस्यैवासिद्धेः । अथ प्रसङ्गतद्विपर्ययाभ्यां तत्सिद्धिः, तथाहि-यद् यदा यत्कार्यमङ्कुरादिकं वा प्रति समर्थं तत्तदा तत्करोति यथा सहकारिमध्यमध्यासीनं बीजम्, अङ्कुरसमर्थं च तदानीं कुशूलस्थं बीजमुपेयते परैरिति प्रसङ्गः । यद् यदा यत्कार्यमङ्कुरं वा न करोति तत्तदा न तत्समर्थम् यथा यावत्सत्त्वमङ्कुराकारि शिलाशकलमङ्कुरासमर्थं, न करोति च कुशूलस्थं बीजं तदानीमङ्कुरमिति विपर्ययः । तेन कुशूलस्थतादशायां संयोगादेरुत्तरबीजस्य कालान्तरे चाङ्कुरस्य जननाभ्युपगमेऽपि न क्षतिः । अनेन प्रसङ्गविपर्ययेण समर्थत्वाभिमतेऽसामर्थ्यसिद्धेः सिद्धो विरुद्धधर्मसंसर्गः ॥

व्याख्या-प्रतिबन्धेत्यादिना । सामर्थ्येत्यादिश्लोके न चेत्यस्य व्याप्तिग्रह इत्यनेन संटङ्कः । व्याप्तिग्रहे हेतुमाह-भेदसिद्धेरिति, भेदसिद्धावपि हेतुमाह-सामर्थ्येति, कस्य न व्याप्तिग्रह इत्याकाङ्क्षायामाह-तव परस्येति, कथं नेत्यत आह-यतः प्रसङ्गेति, इति श्लोकान्वयः,अङ्कुरमकुर्वाणादङ्कुरकारिण इवेति, अङ्कुरमकुर्वाणादङ्कुरपूर्वतृतीयक्षणस्थबीजात्, अङ्कुरकारिण इव अङ्कुराव्यवहितपूर्वद्वितीयक्षणस्थबीजस्येव, तत्तदकुर्वाणात्तत्तत्कारिणो भेदसिद्धौ क्षणिकत्वसिद्धेर्घटादिष्विति, तत्तत्पूर्वक्षणावच्छेदेन जलाहरणादितत्तत्कार्यमकुर्वाणात् घटादितस्तत्तदुत्तरक्षणावच्छेदेन जलाहरणादितत्तत्कार्यकारिणो घटादेर्भेदसिद्धौ क्षणिकत्वसिद्धेर्दृष्टान्तीभूतेषु घटादिष्वित्यर्थः । अन्यत्र घटादिष्विति स्थाने तेष्विति पाठः, तत्प-

क्षे तदकुर्वाणात्तत्कारिण इति अङ्कुरकारिबीजमकुर्वाणादङ्कुरपूर्वचतुर्थक्षणवर्त्तिबीजादङ्कुरकारिबीजकारिणोऽङ्कुरपूर्वतृतीयक्षणवर्त्तिबीजस्येत्यर्थः । तत्तदकुर्वाणादिति अङ्कुरकारिबीजकारिबीजं तत्कारिबीजादिकञ्चाकुर्वाणादङ्कुरपूर्वपञ्चमषष्ठादिक्षणस्थबीजादित्यर्थः, तत्तत्कारिण इति, अङ्कुरकारिबीजकारिबीजतत्कारिबीजादिकारिणोऽङ्कुरपूर्वचतुर्थपञ्चमादिक्षणस्थबीजस्येत्यर्थः । भेदसिद्धाविति, अयं भावः । अङ्कुरमकुर्वाणादङ्कुरपूर्वतृतीयक्षणस्थबीजादङ्कुरकारिणोऽङ्कुरपूर्वद्वितीयक्षणस्थबीजस्यैवमङ्कुरकारिबीजमकुर्वाणादङ्कुरपूर्वचतुर्थक्षणवर्त्तिबीजादङ्कुरकारिबीजकारिणोऽङ्कुरपूर्वतृतीयक्षणस्थबीजस्याङ्कुरकारिबीजकारिबीजमकुर्वाणाच्चाङ्कुरपूर्वपञ्चमक्षणस्थबीजादङ्कुरकारिबीजकारिबीजकारिबीजस्याङ्कुरपूर्वचतुर्थक्षणस्थस्याङ्कुरकारिबीजकारिबीजकारिबीजाद्यकुर्वाणाच्चाङ्कुरपूर्वषष्ठादिक्षणस्थबीजादङ्कुरकारिबीजकारिबीजकारिबीजादिकारिणोऽङ्कुरपूर्वपञ्चमादिक्षणस्थबीजस्य विरुद्धधर्मशालित्वाद् भेदसिद्धौ क्षणिकत्वसिद्धेरङ्कुरप्रयोजकबीजसन्तानेष्विति । भूयस्सु स्थानेषु सहचारदर्शनार्थमेतावानायासः । घटादिषु तत्तद्बीजादिषु वा क्षणिकत्वसिद्धावपि सकलसत्पदार्थे सर्वोपसंहारेण तत्साधनार्थमाह—सिद्धव्याप्तिकाच्चेत्यादि, उक्तविरुद्धधर्मसंसर्गस्यैवासिद्धेरिति, बीजे ययोरङ्कुरं प्रति फलोपधानरूपसामर्थ्यतदभावयोस्संसर्गस्तयोरपेक्षाभेदेनाविरोध एव, ययोस्तं प्रति स्वरूपयोग्यत्वतदभावयोर्विरोधस्तदुभययोस्तत्रासत्त्वमेवेत्युभयथैव विरुद्धधर्मसंसर्गासिद्धिः, आद्ये विरुद्धधर्मरूपविशेषणाभावात्, द्वितीये च संसर्गरूपविशेष्याभावाद् विशिष्टाभावादिति भावः । प्रसङ्गतद्विपर्ययाभ्यामिति, प्रसञ्जनं प्रसङ्गः, पराभ्युपगतहेतुनाऽनिष्टापादनं, व्यापकाभाववत्तया निश्चिते धर्मिणि व्याप्यारोपेण व्यापकारोप इति यावत्, अयं च तर्केत्यपरसंज्ञां बिभर्त्ति न्यायमते, आपाद्याभावेनापादकाभावसाधनलक्षणः प्रसङ्गकार्यात्मा विपर्ययः



सत्त्वक्षणिकत्वयोर्व्याप्तेः खण्डनम्

ताभ्यामित्यर्थः । व्याप्यव्यापकभावमूलको हि प्रसङ्ग इति तद्बीजभूतां व्याप्तिमुदाहरणवाक्येन बौद्धमतावष्टम्भेन प्रदर्शयति, यद् यदा यत्कार्यमित्यादि, सामान्यतो व्याप्तिमुपदर्श्य विशेषतो व्याप्तिमाह-यद्वा यत्तदर्थयोरननुगमादाह– अङ्कुरादिकं वेत्यादि, तदा तत्करोतीति, समर्थस्य क्षेपयोगादिति भावः । व्याप्तहेतोः पक्षधर्मतासम्पत्तये उपनयवाक्यमाह– अङ्कुरसमर्थं चेत्यादिना, तदानीमिति कुशूलस्थबीजकालावच्छेदेनेत्यर्थः, परैरिति नैयायिकैरित्यर्थः । इति प्रसङ्ग इति, इत्युदाहरणोपनयाभ्यां प्रसङ्गः प्रदर्शित इत्यर्थः । अत्र यत्कार्यं प्रति यद्यदा समर्थं स्यात् तत्तदा तत्कार्यं कुर्यादेवेति सामान्यतः प्रसङ्गप्रवृत्तिः, यदि कुशूलगतं बीजं तत्कालावच्छेदेनाङ्कुरं प्रति सामर्थ्योपेतं स्यात्तदा तदानीमङ्कुरं कुर्यादेवेति विशेषतः प्रसङ्गप्रवृत्तिः, विपर्यये साध्यहेत्वोस्सामान्यतो विशेषतो वा व्याप्त्युपदर्शकमुदाहरणमाह— यद्यदा यत्कार्यमङ्कुरं वा न करोतीत्यादि, सहकारिसमवधानाभावप्रयुक्तकार्यकारित्वाभावस्वरूपस्वरूपयोग्यताविरोधिनः सहकारिसमवधानेऽप्यकारित्वस्योपबृंहणार्थमाह— यावत्सत्त्वमिति । न करोति चेत्या-द्युपनयवाक्यम्. इति विपर्ययः, इत्याकारकः विपर्ययानुमाने न्यायप्रयोगः, कुशूलस्थं बीजं तत्कालावच्छेदेनाङ्कुरं प्रति न समर्थं तत्कालावच्छेदेनाङ्कुरकार्याकारित्वात्, यथा शिलाशकलमिति विपर्ययानुमानमिति, तथा च बीजादिस्थैर्यवादिनये कुशूलस्थबीजस्यैवोत्तरकालावच्छेदेन तदितरयावत्कारणसमवधाने सत्यङ्कुरकार्यकारित्वात् सामर्थ्यं त्वभ्युपगतमेव, यश्च सामर्थ्याभावो नाभ्युपगतस्स आभ्यां प्रसङ्गविपर्ययाभ्यां साधित इति सिद्धस्सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्म्माध्यास इति । तेनेति कालविशेषकार्यविशेषयोर्निवेशनेनेत्यर्थः । अत्र कार्येऽभीष्टार्थकयत्तत्पदप्रवेशनस्य संयोगादेरित्यनेन न्यायादिमतेन, अङ्कुरपदप्रवेशनस्य चोत्तरबीजस्येत्यनेन बौद्धमतेन, यदा तदापदोपादानस्य

कालान्तर इत्यादिना च प्रयोजनमुपदर्शितम् । यत्तत्पदोपादानाद् कुशूलस्थबीजस्य बीजान्तरेण पदार्थान्तरेण वा सह तदानीं संयोगविभागादिजननेऽपि अङ्कुरपदोपादानात् पूर्वपूर्वबीजस्योत्तरोत्तरबीजजनकत्वाद्बीजजननेऽपि यदा तदापदोपादानात् सहकारिमध्यमध्यासीनतादशायामङ्कुरजनकत्वस्य कुशूलस्थबीजे नैयायिकैरभ्युपगमादङ्कुरजननेऽप्युक्तप्रसङ्गस्य न तदाभासत्वं, नवा विपर्ययानुमाने हेतोस्स्वरूपासिद्धिः, उभयोरपि कालविशेषकार्यविशेषनियन्त्रितत्वात् । अत एव विपर्ययानुमाने सहकारिसमवधानकालावच्छेदेन कुशूलस्थबीजे पक्षे सामर्थ्याभावस्य साध्यस्याभावसत्त्वेऽपि न बाध इति भावः । वर्द्धमानोपाध्यायोक्तं असामर्थ्याकारित्वयोर्व्याप्यव्यापकभावमूलकं प्रसङ्गं कारित्वसामर्थ्ययोर्व्याप्यव्यापकभावमूलकं विपर्ययं चोपदर्श्य दूषयति —



यन्नाङ्कुरसमर्थं तन्नाङ्कुरं करोति यथा शिलाशकलम्, अङ्कुरासमर्थं च सहकार्यसमवहितं बीजमिष्यते परैरिति प्रसङ्गः । यदङ्कुरं करोति तदङ्कुरसमर्थं यथा धरण्यादिभेदः, करोति च सहकारिसमवहितं बीजमङ्कुरमिति विपर्ययश्च वर्द्धमानोपाध्यायोक्तः सामर्थ्यसाधनाय नोपादेयः, अनभ्युपगमेन प्रसङ्गहेतोरसिद्धेः, पराभ्युपगतहेतुप्रसक्तिर्जननीयेत्यादिवचनात् । सामर्थ्यस्य सहकारियोग्यतायाः (स्वरूप)योग्यताया वाभ्युपगतत्वेन विपर्यये सिद्धसाधनादिति चेत् , न । बहुविधविकल्पग्रासेनोक्तप्रसङ्गासङ्गतेः । तथाहि, सामर्थ्यं कारणत्वं, तद्द्विविधं, फलोपधानं स्वरूपयोग्यता च । फलोपधानं फलाव्यवहितप्राक्कालसम्बन्धः, तदेव करणं कारित्वं च , योग्यतापि द्विविधा सहकारियोग्यता स्वरूपयोग्यता च । आद्या सहकारिसमवधानम् । चरमापि त्रिविधा जनकतावच्छेदकं रूपं बीजत्वादि १ कुर्वद्रूपत्वं २ सहकारिविरहप्रयुक्तकार्याभाववत्वं

च ३ । एतेषु प्रसञ्जकसामर्थ्यविकल्पेषूपतिष्ठमानेषु सर्वेष्वपि दूषणान्यवतरन्ति ॥ ५ ॥

व्याख्या–यन्नेत्यादि, हेतोः परमतेनासिद्धिनिवृत्तये उपनयवाक्यमाह–अङ्कुरासमर्थं चेत्यादि, परैरिति नैयायिकैरित्यर्थः । इति प्रसङ्ग इति इत्यतः प्रसङ्गः प्रादुर्भवतीत्यर्थः, स चैवं सहकार्यसमवहितं बीजं यद्यङ्कुरं प्रत्यसमर्थं स्यात् तदाङ्कुरं न कुर्यादेवेति, इति विपर्यय इति इत्यतो विपर्ययानुमितिरुत्पद्यत इत्यर्थः, सा च सहकारिसमवहितं बीजमङ्कुरं प्रति समर्थमित्याकारिकेति ॥ सामर्थ्यसाधनायेति असमर्थत्वाभिमते बीजे सामर्थ्यसिद्ध्या विरुद्धधर्मसंसर्गसाधनायेत्यर्थः, प्रसङ्गे यत्परैरित्युक्तं तदेव दूषयति–अनभ्युपगमेनेति अस्य परैरित्यादिः,प्रसङ्गहेतोः सहकार्यसमवधानकालावच्छेदेनाङ्करं प्रति समर्थत्वाभावात्मकस्य, असिद्धेरिति बीजात्मकपक्षेऽभावादित्यर्थः । तथा च स्वरूपासिद्धिदोषबलेनोक्तप्रसङ्गाप्रवृत्तिरिति भावः । हेतुप्रसक्तिरिति,अत्र हेतुना प्रसक्तिः प्रसङ्ग इति विग्रहः, विपर्ययेऽपि दोषमाह–सामर्थ्यस्येत्यादिना। बौद्धमतखण्डनं प्रतिजानीते–नेत्यादिना, फलोपधानं स्वरूपययोग्यता चेत्यत्र स्वरूपेति सम्पातायातम्,योग्यता चेत्येव वा पाठः, अन्यत्र तथैवोपलम्भात्, तदेव करणं कारित्वं चेति फलोपधानकरणकारित्वशब्दत्रयाणामेकार्थवाचकत्वमिति भावः । आद्या सहकारियोग्यता, सहकारिसमवधानमिति अस्य सकलेत्यादिः, चरमापि स्वरूपयोग्यतापि, प्रसञ्जकसामर्थ्येति उक्तप्रसङ्गापादकीभूतसामर्थ्येत्यर्थः ॥ ५ ॥ षष्ठश्लोकावतरणिकामाह—

तान्येव क्रमेण संक्षेपतोऽभिधित्सुराह–

सामर्थ्यमत्र यदि नाम फलोपधान-मापाद्यसाध्यविभिदाविरहस्तदानीम् ।
इष्टप्रसिद्ध्यनुभवोपगमस्वभाव-व्याघात इच्छति परो यदि योग्यतां च ॥ ६ ॥

यदा यत्र यत् समर्थं तत् तदा तत्करोत्येवेत्यादौ सामर्थ्यं नाम यदि फलोपधानं वाञ्छति परस्तदानीमापाद्यसाध्यविभिदाविरह आपाद्यानुमेयाभ्यामापादकानुमापकयोरविशेषप्रसङ्ग इत्यर्थः ॥

फलोपधानसामर्थ्यस्य प्रसङ्गहेतुत्वखण्डनम्

व्याख्या—तान्येवेति, सामर्थ्यमत्रेति पद्यपूर्वार्द्धसमन्वयमाह—यदा यत्रेत्यादिना, उत्तरार्द्धसमन्वयं त्वग्रे यदि च सहकारिसमवधानरूपयोग्यताख्यं सामर्थ्यमिच्छति परस्तदेष्टप्रसिद्ध्या व्याघातः, यदि च कारणतावच्छेदकीभूतं यद्बीजत्वादि तल्लक्षणयोग्यताख्यं तदाऽनुभवेन व्याघातः, यदि च कुर्वद्रूपात्मकयोग्यताख्यं तदोपगमेन व्याघातः, यदि च सहकारिविरहप्रयुक्तकार्यकारित्वाभावरूपयोग्यताख्यं तदा स्वभावेन व्याघात इत्यादि सविवरणं प्रदर्शयिष्यतीति । आपादकीभूतं सामर्थ्यं फलोपधानरूपम् आपाद्यं कारित्वमपि तद्रूपमेवेत्यापाद्यापादकयोरभेदप्रसक्तिः, तथा च 'सति विपर्ययानुमाने आपादकाभावरूपसाध्यस्यापाद्याभावरूपसाधनस्यापि तथात्वमेव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनोर्भेदाभावादिति तयोः प्रसङ्गविपर्यययोरप्रवृत्तिप्रसङ्गस्स्यादिति भावः ।

असमर्थाकारिव्यावृत्त्योर्भिन्नयोरेव समर्थकारिपदाभ्यामभिधानान्न साध्याविशेष इति चेत् । न । व्यावृत्तिभेदस्यैवासिद्धेः, तस्य व्यावर्त्यभेदप्रयुक्तैक्यानुपपत्तिरूपविरोधमूलकत्वात्, तस्य चात्राभावात् ॥

व्यावर्त्यभेदो ह्येकेन व्यावर्त्यस्य विशेष्यस्य भेदोऽपरव्यावर्त्यात्, एकोपगृहीतस्यापरेण परित्याग इति या-

वत्, स च द्विविध एकोपगृहीतस्यान्येन नियमतः परित्यागः, कस्यचिदुपग्रहे सति कस्यचित् परित्यागश्च, असावप्येकतरमात्रेण परस्परेण च, आद्यो विरुद्धयोरेव, मध्यमो व्याप्यव्यापकयोरेव, चरमो व्यभिचारिणोरेव, तत्र गोत्वाश्वत्ववन्नियमप्रतिक्षेपेण नाद्यस्यात्र संभवः,तथा सति विरोधादन्यतरापाये बाधासिद्धिप्रसङ्गात्, बाधासिद्धी धर्मिणि साध्यसाधनयोरभावौ। तथा चासमर्थाकारिव्यावृत्त्योरेकतरसत्त्वेऽन्यतराभावनियमेन सामानाधिकरण्यविरहेण प्रसङ्गे विरोधो विपर्यये च व्यभिचार इति भावः ॥

व्याख्या–असमर्थाकारिव्यावृत्त्योरिति, असमर्थव्यावृत्तिः सामर्थ्याभाववद्भेदः, न तु सामर्थ्याभावाभावः, अकारिव्यावृत्तिः कारिभिन्नभेदः, न तु कारित्वाभावाभावः, तयोरेवेत्यर्थः, अन्यथा प्रथमाभावयोस्सामर्थ्याभावकारित्वाभावयोस्तत्प्रतियोगितावच्छेदकयोस्सामर्थ्यत्वकारित्वत्वयोरभेदेनाभेदात्तद्द्वितीयाभावयोरप्यभेदप्रसक्तिस्स्यात्, रूपान्तरेण सामर्थ्यकारित्वयोरभावग्रहणेन तदभावयोर्वैलक्षण्याभ्युपगमेऽलमभावाभावपर्यन्तानुधावनेन, सामर्थ्यकारित्वयोरभेदेऽपि रूपान्तरेणैवापाद्यापादकभावस्य तदवच्छिन्नप्रतियोगिताकत्वेन तदभावयोर्वैलक्षण्यादनुमेयानुमापकभावस्य च सम्भवात्, भिन्नयोरेवेति, अत्रैवशब्देन सामर्थ्यकारित्वयोस्समर्थकारिपदवाच्यत्वनिषेधः कृतः। साध्याविशेष इति, साध्येन सह अविशेषः अभेदप्रसङ्ग इत्यर्थः, हेतोरिति शेषः। उपलक्षणन्यायेनापाद्येन सहापादकस्य नाभेदप्रसङ्ग इत्यपि बोध्यम्। व्यावृत्तिभेदस्येति पूर्वप्रक्रान्तत्वात् असमर्थाकारिव्यावृत्त्योर्भेदस्येत्यर्थः। सर्वासां व्यावृत्तीनां यन्मूलको भेदस्तमाह–तस्य व्यावर्त्त्यभेदेत्यादि, व्यावर्त्त्यभेदस्य व्यावर्त्त्ययोर्विशेष्ययोराश्रययोरिति यावत् यो भेदस्तत्प्रयुक्ता तज्ज्ञानजन्यज्ञानविषयो या ऐक्यानुपपत्तिर्व्यावृत्त्योरभेदाप्रसक्तिस्तद्रूपो यो विरोधो

व्यावृत्त्योर्भेदस्य तन्मूलकत्वात्, तदधीनसिद्धिकत्वादित्यर्थः । तस्य चेति व्यावर्त्त्यभेदप्रयुक्तैक्यानुपपत्तिरूपविरोधस्य चेत्यर्थः । अत्र असमर्थाकारिव्यावृत्तिद्वये, अयमभिप्रायः, अघटव्यावृत्तिः अपटव्यावृत्तितो नाभिन्ना तद्विशेष्यभिन्नविशेष्यकत्वात्, यन्नैवं तन्नैवं यथानम्बरव्यावृत्तिरित्यनुमानेन यथाऽघटापटव्यावृत्त्योर्भेदस्सिद्ध्यति, न तथा प्रकृते, असमर्थव्यावृत्तिरूपपक्षेऽकारिव्यावृत्तिभेदानुमापकस्य तद्विशेष्यभिन्नविशेष्यकत्वादिति हेतोरेवासिद्धेः, असमर्थाकारिव्यावृत्तिविशेष्ययोस्समर्थकारिणोरभेदात्, प्रत्युत तद्व्यावृत्त्युभययोरन्यूनानतिरिक्तदेशवृत्तित्वहेतोरभेद एव सिद्ध्यतीति । यावद्विधेन विशेष्यभेदार्थकव्यावर्त्त्यभेदेनातद्व्यावृत्तिभेदस्तावद्विधं तमाह—व्यावर्त्त्यभेद इत्यादि, एकेनेति, ययोर्व्यावृत्त्योर्भेदस्तदन्यतरेणेत्यर्थः, भेदस्य प्रतियोगिसाकाङ्क्षत्वादाह—अपरव्यावर्त्त्यादिति अपरो यो व्यावर्त्त्यः व्यावृत्त्याश्रयस्तस्मादित्यर्थः । व्यावर्त्त्यत्वं व्यावृत्त्याश्रयत्वपर्यवसितं न त्वितरभिन्नतया ज्ञाप्यत्वं, गौरवादिति स्पष्टयितुमाश्रयार्थकोपग्रहपदमन्तर्भाव्य पर्यवसितार्थमाह—एकोपगृहीतस्येति, एकोपगृहीतस्य एकधर्माश्रयस्य, अपरेण परित्यागः, अपरनिष्ठनिरूपकतानिरूपिताधिकरणत्वाभावः, एकधर्माश्रयनिष्ठो योऽत्यन्ताभावस्तत्प्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वमपरधर्मस्य एकधर्माश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वमपरधर्मस्य वेत्यर्थः, अस्योभयरूपतामाह—स चेति एकोपगृहीतस्यापरेण परित्यागरूपव्यावर्त्त्यभेदश्चेत्यर्थः, एकोपगृहीतस्यान्येन नियमनः परित्याग इति एकधर्माश्रयत्वव्यापकोऽपरधर्मनिष्ठनिरूपकतानिरूपिताधिकरणत्वाभाव इत्यर्थः, एकधर्माश्रयत्वव्यापकीभूतो योऽत्यन्ताभावस्तत्प्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वमपरधर्मस्येति भावः, एकधर्माश्रयत्वव्यापकीभूतो यो भेदस्तत्प्रतियोगितावच्छेदकत्वमपरधर्मस्येत्यर्थोऽप्युक्तार्थपर्यवसायीति बोध्यम्, स च घटत्वपटत्वादिविरुद्धयोरेव । कस्य चिदुपग्रहे सति

सामर्थ्यादिव्यावृत्तिरूपत्वेऽपि भेदाभावः।

॥ ३४॥

कस्यचित्परित्यागश्चेति, एकधर्मयत्किञ्चिदाश्रयवृत्तित्वे सति यत्किञ्चित्तदाश्रयनिष्ठात्यन्ताभावप्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वमपरधर्मस्य, अथवैकधर्मयत्किञ्चिदाश्रयवृत्तित्वे सति यत्किञ्चित्तदाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वमपरधर्मस्येत्यर्थः । वस्तुतो धर्मविशिष्टत्वमेवापरधर्मस्य सः, वैशिष्ट्यं च स्वसमानाधिकरणत्वस्वसमानाधिकरणाभावप्रतियोगित्वोभयसम्बन्धेनातो नाननुगमः । द्वितीयपक्षस्यापि द्वैरूप्यमाह–असावपीति, कस्यचिदुपग्रहे सति कस्यचित्परित्यागोऽपीत्यर्थः । एकतरमात्रेणेति, एकतरस्य स्वाश्रयापरित्याग्यपरस्य यत्किञ्चिदाश्रयपरित्याग इत्यर्थः, स्वाश्रयत्वव्यापकीभूतापरधर्माश्रययत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वं स्वस्य, स्वाश्रयत्वव्यापकीभूतापरधर्माश्रययत्किञ्चिन्निष्ठभेदप्रतियोगितावच्छेदकत्वं स्वस्य वा, अथवा धर्मविशिष्टत्वमेव धर्मान्तरस्य सः, वैशिष्ट्यञ्च स्वव्यापकत्वस्वाभावसामानाधिकरण्योभयसम्बन्धेनेति भावः । स च पृथिवीत्वद्रव्यत्वादिव्याप्यव्यापकीभूतयोरेव, परस्परेण चेति, एकतरस्य यत्किञ्चित्स्वाश्रयपरित्यागिस्वाश्रयोपग्राहकापरस्य यत्किञ्चिदाश्रयपरित्याग इत्यर्थः । स्वसमानाधिकरणो योऽत्यन्ताभावस्तत्प्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वे सति स्वाश्रयवृत्तिर्योऽपरस्तत्समानाधिकरणो योऽत्यन्ताभावस्तत्प्रतियोग्यधिकरणतानिरूपितनिरूपकतावत्त्वं स्वस्य, अथवा स्वसमानाधिकरणो यो भेदस्तत्प्रतियोगितावच्छेदकत्वे सति स्वाश्रयवृत्तिर्योऽपरस्तत्समानाधिकरणो यो भेदस्तत्प्रतियोगितावच्छेदकत्वं स्वस्य, अथवा धर्मविशिष्टत्वं धर्मान्तरस्य सः, वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेनेति । स च भूतत्वमूर्त्तत्वयोर्विभुत्वभूतत्वयोर्मिथो व्यभिचारिणोरेव, आद्यः एकोपगृहीतस्यान्येन नियमतः परित्यागरूपो व्यावर्त्त्यभेदः, मध्यम एकतरमात्रेण कस्यचिदुपग्रहे सति कस्यचित्परित्यागरूपो व्यावर्त्त्यभेदः, चरमः परस्परेण

कस्यचिदुपग्रहे सति कस्यचित्परित्यागलक्षणः; एवं वितर्क्यं निराकरोति–**तत्रेत्यादिना, नियमप्रतिक्षेपेणेति** नियमतः प्रतिक्षेपः
परित्यागस्स तथा तेनेत्यर्थः , तन्निबन्धनस्येति पर्यवस्थितोऽर्थः, आद्यस्य व्यावर्त्यभेदप्रकारस्य गोत्वाश्वत्वयोर्विरोधिनोस्सम्भवो य-
था तथा कथं नासमर्थाकारिव्यावृत्त्योरित्याकाङ्क्षायामाह–**तथासतीत्यादि,** आद्यव्यावर्त्यभेदाङ्गीकारे तदुभयव्यावृत्त्योः प
रस्परव्यापकीभूताभावप्रतियोगित्वलक्षणविरोधात्तदन्यतरसत्त्ववति स्वान्यतदन्यतराभावसत्त्वनियमेन पक्षात्मके कुशूलस्थे बीजे अ-
ङ्कुरासमर्थव्यावृत्त्यात्मकस्य सामर्थ्यस्य हेतोस्सत्त्वे अङ्कुराकारिव्यावृत्त्यात्मकस्याङ्कुरकारित्वस्य साध्यस्याभावसत्त्वाद् बाधः,
उक्तपक्षे चोक्तसाध्यसत्त्वे उक्तहेतोरभावनियमेन स्वरूपासिद्धिरिति भावः । **बाधासिद्धिप्रसङ्गादिति,** बाधासिद्ध्योरन्यतरप्रस-
ङ्गादित्यर्थः, ननु बाधासिद्धिप्रसङ्गादित्यसङ्गतम्, प्रसङ्गो हि परेणानभ्युपगतस्यैवापादनरूप इत्यापत्तौ बाधस्यानुगुणतया-
ऽदोषत्वात् तत्प्रसक्त्याऽऽपत्तिसम्भवेन तदसिद्धेरप्यकिञ्चित्करत्वात्, घटत्वपटत्वयोरिव प्रतियोगिभूतयोर्विरोधेऽपि मठे समा-
नाधिकरणयोर्घटत्वाभावपटत्वाभावयोरिव तदभावयोरतथात्वदर्शनात् विपर्ययानुमाने बाधासिद्ध्योरन्यतराप्रसङ्गाच्चेत्यतो व्या-
चष्टे–**बाधासिद्धीति,तथा चेति** धर्मिणि साध्यसाधनयोरेकतराभावे चेत्यर्थः । **अन्यतराभावनियमेनेति** धर्मिणीत्या-
दिः, धर्मिणि असमर्थाकारिव्यावृत्त्योर्व्याप्यव्यापकाभिमतयोर्यावभावौ तदन्यतरनियमेनेत्यर्थः । तावता यो दोष आशयस्थस्तं स्पष्ट-
यति–**सामानाधिकरण्यविरहेणेति,विरोध** इति तथा चापाद्यापादकयोर्व्याप्यव्यापकभावाभावान्न प्रसङ्गप्रवृत्तिरिति भा-
वः । यद्यपि पूर्वोक्तयुक्तेः प्रतियोगिनोर्विरोधेऽपि तदभावयोर्न नियमेन विरोधस्तथापि व्यभिचारस्यावश्यं सत्त्वादाह–**विपर्यये**
**च व्यभिचार** इति, अकारिव्यावृत्त्यभावलिङ्गकासमर्थव्यावृत्त्यभावसाधकानुमानेऽसमर्थव्यावृत्तिरूपस्य साध्याभावस्याधिकर-



सामर्थ्यादिव्यावृत्तिरूपत्वेऽपि भेदाभावः।

णेऽकारिव्यावृत्तिव्यतिरेकस्य हेतोस्सत्त्वात्साधारणानैकान्तिकत्वमित्यर्थः । पूर्वोक्तमेकतरमात्रेण कस्यचिदुपग्रहे सति कस्यचित् परित्यागलक्षणं द्वितीयपक्षं निराकरोति—

**नापि द्वितीयस्य, तदाक्षेपप्रतिक्षेपाभ्यां वृक्षत्वशिंशपात्ववत् परापरभावानभ्युपगमात् । अभ्युपगमे वा सामर्थ्यस्य परत्वे समर्थस्याप्यकरणं, कारित्वस्य च परत्वेऽसमर्थस्यापि करणं स्यात् । नापि तृतीयस्य, उभयदोषप्रसङ्गात्, समर्थस्याकरणे व्यभिचारादसमर्थस्यापि करणे विरोधादिति ।**

नापि द्वितीयस्येति, सम्भव इत्यनुवर्त्तते । द्वितीयपक्षो हि तदा स्यात् यदि वृक्षत्वशिंशपात्वयोर्द्रव्यत्वपृथिवीत्वयोर्गुणत्वरूपत्वयोरिव वा असमर्थाकारिव्यावृत्त्योस्तत्सामानाधिकरण्यतदभावसामानाधिकरण्याभ्यां व्याप्यव्यापकभावोऽभ्युपगतस्स्यात्, न चैवम्, अत्र तयोर्व्यावृत्त्योस्सामनैयत्याभ्युपगमेन विषमव्याप्यव्यापकभावाभावात्, भावे वा सामर्थ्यस्य व्यापकत्वे तस्याधिकदेशवृत्तितया कारित्वाभाववत्यपि सत्त्वात् प्रसङ्गे व्यभिचारस्स्यात्, कारित्वस्य च व्यापकत्वे सामर्थ्याभाववत्यपि सत्तया शिलाशकलादावपि कारित्वं स्यादित्यनिष्टापत्तिस्स्यादित्याह—**तदाक्षेपप्रतिक्षेपाभ्यामित्यादि**, तदाक्षेपप्रतिक्षेपाभ्यां तत्परिग्रहपरित्यागाभ्यां तत्सामानाधिकरण्यतदभावसामानाधिकरण्याभ्यामिति यावत् । **परापरभावेति**, परत्वं चात्राधिकदेशवृत्तित्वं, तच्च स्वसमानाधिकरणत्वे सति स्वात्यन्ताभावसामानाधिकरण्यलक्षणव्यापकत्वरूपम्, अपरत्वं चात्र न्यूनदेशवृत्तित्वं, तच्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वलक्षणव्याप्यत्वरूपम्, **अकरणमिति**, तथा च प्रसङ्गे व्यभिचार इति भावः । **करणं स्यादिति** तच्चायुक्तम्, असामर्थ्यकारित्वयोर्विरोधात्; तथापि तथाभ्युपगमे विरोधाय जलाञ्जलि-

दंत्तः स्यादिति भावः। तृतीयपक्षो हि मिथो व्यभिचारिणोरेवेति, सामर्थ्यस्य कारित्वव्यभिचारित्वे प्रसङ्गहेतौ व्यभिचारस्स्यात्,सोऽपि यदि पक्षान्तर्भावेण तदा पक्षे साध्याभावाद्बाधदोषोऽपि स्यात्, कारित्वस्य सामर्थ्यव्यभिचारित्वोपगमे तद्यदि पक्षान्तर्भावेण तदा पक्षे हेत्वभावात् स्वरूपासिद्धिः, यदि पक्षानन्तर्भावेण तदाप्यसमर्थस्य कारित्वं स्यात, तच्चायुक्तम्, असामर्थ्यकारित्वयोरुभयसिद्धस्य विरोधस्य बाधकस्य सद्भावादित्याह—**नापि तृतीयस्येति**, इहाप्यत्र सम्भव इत्यनुषज्यते। तृतीयस्येति स्वसामानाधिकरण्यस्वात्यन्ताभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन व्यावृत्तिविशिष्टत्वपर्यवसितस्य परस्परेण कस्यचिदुपग्रहे सति कस्यचित्परित्यागलक्षणस्येत्यर्थः। **उभयदोषप्रसङ्गादिति**, आद्यद्वितीयपक्षोक्तदोषप्रसङ्गादित्यर्थः। **समर्थस्याकरणे इति**, कारित्वाभावस्य साध्याभावस्याधिकरणे सामर्थ्यहेतोर्वृत्तित्वे सतीत्यर्थः, **व्यभिचारादिति**, प्रसङ्गहेताविति शेषः। **असमर्थस्यापि करणे इति**, हेतुत्वेनाभ्युपगतसामर्थ्याभाववत्यपि साध्यत्वेनाभ्युपगतकारित्वस्य वृत्तित्वे सतीत्यर्थः। **विरोधादितीति** सामर्थ्यकारित्वयोः पूर्वोक्तयुक्त्या तादात्म्यतदुत्पत्त्याद्यभावेन व्याप्तिविरोधाद्व्याप्यत्वाऽसिद्धेरितियावत्। ननु कार्यत्वानित्यत्वयोस्समव्याप्तत्वेनाश्रयभेदाभावात्तद्भेदेन भेदाभावेऽपि यथा प्रागभावावच्छिन्नसत्त्वस्य कार्यत्वस्य स्वावच्छेदकोपाधिभूतस्य प्रागभावत्वस्य विशेष्यः प्रागभावः ध्वंसावच्छिन्नसत्त्वलक्षणस्यानित्यत्वस्य च स्वावच्छेदकोपाधिभूतस्य ध्वंसत्वस्य विशेष्यो ध्वंस इति विशेष्यभेदेन तयोर्भेदस्तथा सामर्थ्यकारित्वयोरपि स्वविशेष्यभेदप्रयुक्तभेदाभावेऽपि स्वावच्छेदके यद्विशेषणं तद्विशेष्यभेदाद्भेदो भविष्यतीत्याशङ्कते—

**ननु मा भूदिह स्वव्यावर्त्यभेदेन विरोधः, स्वावच्छेदकव्यावर्त्यभेदेन तु स्यात्, प्रागभावत्वध्वंसत्व-**

कल्पलतिकोपेतम्

सामर्थ्यादेर्व्यावृत्तिरूपत्वेऽपि भेदाभावः।

लक्षणावच्छेदकोपाधिव्यावर्त्त्यभेदादिव कार्यत्वानित्यत्वयोरिति चेत् । न । प्रकृते उपाधिभेदस्यैवाभावात् । न च सामर्थ्यकरणशब्दयोस्तद्वाच्यव्यावृत्तावुपाधित्वात्तदुपाधिक एव भेदोऽस्त्विति वाच्यम् । वाचकशब्दमात्रौपाधिकवाच्यभेदस्वीकारे करिहस्त्यादिशब्दानां पर्यायतोच्छेदेन समभिरूढनयप्रवेशापत्तेः ॥

व्याख्या—नन्वित्यादिना, विरोध इति भेद इत्यर्थः, न तु विरोधस्यात्राऽसामानाधिकरण्यमर्थः, तथा सति विरोधाघ्रातत्वात्प्रसङ्गानुमानस्यैवाप्रवृत्तिस्स्यादिति । कार्यत्वानित्यत्वयोस्स्वावच्छेदकतावच्छेदकयोस्स्वविशेषणविशेषणयोः प्रागभावत्वध्वंसत्वलक्षणयोस्सत्त्वेन तद्व्यावर्त्त्ययोस्तद्विशेष्ययोः प्रागभावध्वंसयोर्भेदाद्भेदस्सम्भवति सामर्थ्यकारित्वयोस्तु स्वस्वरूपप्रविष्टयोर्भिन्नयोस्स्वावच्छेदकोपाधिभूतयोरभावेन तद्व्यावर्त्त्यभेदाभावान्न च ततो भेदस्सम्भवतीत्याशयेन निराकरोति-नेति । ननु सामर्थ्यशब्दवाच्यासमर्थव्यावृत्तिः करणशब्दवाच्याऽकरणव्यावृत्तिरित्यत्र विशेषणीभूतयोस्सामर्थ्यकरणशब्दयोर्भेदेन तद्विशिष्टव्यावृत्त्योरपि भेदः, विशेषणभेदेन विशिष्टभेदस्यावश्यंभावादित्याशङ्कते-न चेति, तदुपाधिक इति सामर्थ्यकरणशब्दरूपविशेषणभेदप्रयोज्य इत्यर्थः। अथवा यद्व्यावर्त्त्यभेदेन व्यावृत्तिरूपार्थभेदस्तादृशोपाधिता शब्दस्य न सम्भवति, अर्थस्यैव तद्व्यावर्त्त्यत्वात्, किन्तु शब्दगतानुपूर्व्यादेरेव, तथा च सामर्थ्यकरणशब्दयोरित्यस्य सामर्थ्यकरणशब्दगतानुपूर्वीविशेषाद्योरित्यर्थः, तद्वाच्यव्यावृत्ताविति सामर्थ्यशब्दवाच्यासमर्थव्यावृत्तौ करणशब्दवाच्याकरणव्यावृत्तावित्यर्थः । तदुपाधिक एव भेदोऽस्त्वितीति सामर्थ्यकरणशब्दगतानुपूर्वीविशेष—तदवच्छिन्नशक्तिविशेषरूपोपाधिव्यावर्त्त्यसामर्थ्यकरणशब्दभेदप्रयुक्तोऽसमर्थाकारिव्यावृत्तिभेदोऽस्त्वितीत्यर्थः । समभिरूढेन संज्ञाभेदेनार्थभेदस्स्वीक्रियते तद्वदत्रापि स्वरूपतोऽर्थैक्येऽपि तत्तत्संज्ञारूपविशेषणभेदेन तत्तद्विशिष्टार्थभेद इति कृत्वा बोधकशब्दभेदेन बोध्य-

डखाद्यं-

॥ ३७ ॥

व्यावृत्तिभेदस्वीकारे करिहस्त्यादिशब्दानां भिन्नार्थत्वापत्त्या पर्यायत्वस्याभाव एव स्यादिति भवतस्समभिरूढनयमतावलम्बित्वं
स्यात्, द्वितीयपक्षेऽपि बोधकशब्दगतानुपूर्वीविशेषादिरूपोपाधिव्यावर्त्यभेदप्रयुक्तबोध्यार्थभेदस्वीकारे आनुपूर्वीविशेषादिभेदेनार्थभेद
इत्यायातम्, आनुपूर्व्यादिभेदेन तद्व्यावर्त्यशब्दभेदस्यावश्यकत्वात् तथा च करिहस्त्यादिशब्दानामानुपूर्व्यादिभेदात् तद्बोध्यव्या-
वृत्तिभेदप्रसक्तेरेकार्थप्रतिपादकत्वलक्षणस्य पर्यायत्वस्याभाव एव स्यात्, तथा च व्यावृत्तिवादिनां भवतां समभिरूढनयमार्गानु-
सारित्वं स्यात् आनुपूर्व्यादिभेदेन भेदवतां बोधकशब्दानां तद्बोध्यार्थभेदकत्वस्वीकारादित्याशयेनोत्तरयति—वाचकशब्दमात्रे-
त्यादिना। ननु बोधकसामर्थ्यकरणशब्दभेदेनासमर्थाकारिव्यावृत्तिभेदो मास्तु तद्विकल्पभेदेन तद्भेदस्तु स्यादेवेत्याशङ्कते—

**नन्वव्यावृत्तिरकारिव्यावृत्तिरित्येवंविधविकल्पभेदोपाधिको व्यावृत्तिभेदोऽस्त्विति चेत्। विक-**
**ल्पस्य स्वरूपकृतो वा भेदः, व्यावृत्तिकृतो वा। नाद्यः। असमर्थव्यावृत्तेरपि बहुविकल्पविषयीकृताया**
**यावद्विकल्पव्यक्तिभेदप्रसङ्गात्। नापि द्वितीयः। व्यावृत्तिरूपविषयभेदस्यैव विकल्पभेदोपाधित्वाद्विकल्प-**
**भेदाद्विषयभेदः विषयभेदाच्च विकल्पभेद इति परस्पराश्रयस्य दुर्निवारत्वात्। न च स्वाभाविकौपाधिकव्या-**
**वृत्तिभेदाभावान्निर्निमित्त एवायं व्यावृत्तिभेदव्यवहारः, अतिप्रसङ्गादिति ॥**

व्याख्या—नन्वसमर्थेत्यादिना, विकल्पस्य स्वरूपकृतो वा भेद इति, असमर्थव्यावृत्तिरित्याकारकस्य विकल्प-
स्याकारिव्यावृत्तिरित्याकारकस्य च विकल्पस्य स्वरूपमेवान्योन्यविविक्तमिति स्वरूपात्मक एव तदुभयविकल्पयोर्भेद इत्यर्थः।
व्यावृत्तिकृतो वेति, विषयनिरूप्यं हि ज्ञानमिति निरुक्तविकल्पयोस्स्वस्वविषयीभूतव्यावृत्तिभेदाद्भेद इत्यर्थः। असमर्थव्या-

कल्पलतिकोपेतम्

सहकारित्वमवधानयोग्यतायाः प्रसङ्गहेतुत्वापाकरणम्।

॥ ३७॥

वृत्तेरपीति, एकस्या अप्यसमर्थव्यावृत्तेः कालभेदेन पुरुषभेदेन च धर्म्यादिविषयान्तरगर्भेण च भिन्नेषु सविकल्पकेषु भासमानत्वादानन्त्यमसक्तिस्स्यात्, एवमकारिव्यावृत्त्यादीनामपि तथात्वं ज्ञेयम्। व्यावृत्तिरूपविषयभेदस्यैवेति,तद्विषयभिन्नविषयको यः स तस्माद्भिन्नः यथा पटविकल्पाद् घटविकल्प इति सामान्यव्याप्तिमूलकेन असमर्थव्यावृत्तिरितिविकल्पः अकारिव्यावृत्तिरिति विकल्पाद्भिन्नः अकारिव्यावृत्त्यात्मकतद्विषयभिन्नासमर्थव्यावृत्त्यात्मकविषयकत्वादित्यनुमानेन तदुभयविकल्पयोर्भेदः सिद्ध्यति, अनुमानं च हेतुघटकासमर्थाकारिव्यावृत्त्यात्मकविषययोर्भेदो यावन्न सिद्ध्यति तावन्न प्रवर्त्तते इति तत्रापेक्षणीय उक्तविषयभेदः असमर्थव्यावृत्तिः अकारिव्यावृत्तितो भिन्ना तद्विषयकविकल्पभिन्नविकल्पगोचरत्वात् अघटव्यावृत्तिवदित्यनुमानेन सिध्येत्, अत्र हेतुघटकविकल्पद्वयभेदश्च विषयभेदसिद्धौ तद्घटितानुमानादित्येवमनुमानं द्वारीकृत्य विषयभेदविकल्पभेदयोः परस्परापेक्षणादन्योन्याश्रयः स्यादिति भावः। अतिप्रसङ्गादितीति असमर्थाकारिव्यावृत्त्योरभावरूपत्वेन तुच्छरूपत्वात्तद्भेदकाभावेन सनिमित्तकभेदाभावेऽप्यनिमित्तकभेदसत्त्वात्तद्व्यवहाराभ्युपगमे तुच्छत्वेनानिमित्तकभेदसत्त्वाविशेषादसमर्थव्यावृत्त्यादावपि स्वभेदव्यवहारप्रसङ्गः स्यादित्यर्थः। उत्तरार्द्धं विवृणोति—

यदि च योग्यतां योग्यताख्यं सामर्थ्यमिच्छति परस्तदोक्तयोग्यतार्थचतुष्टये इष्टप्रसिद्ध्यादिना व्याघातः, तथाहि—सहकारिसमवधानरूपयोग्यताश्रयणे इष्टप्रसिद्ध्या सिद्धसाधनेन व्याघातः, यदा सहकारिसाकल्यरूपस्य हेतोः सिद्धिस्तदा करणाभ्युपगमेन सिद्धसाधनाद्विपर्ययव्याघातात्। यदि च सिद्धसाध्यतापरिहारायाकरणकाल एव प्रसङ्गः क्रियेत, तर्हि तदा सहकारिसमवधानस्यास्माभिरनभ्युपगमाद्धेत्वसिद्ध्या

प्रसङ्गो न प्रवर्त्ततेति बोध्यम् ॥

यदि चेति, उक्तयोग्यतार्थचतुष्टये सहकारिसमवधानजनकतावच्छेदकबीजत्वादिरूपवत्त्वकुर्वद्रूपत्वसहकारिविरहप्रयुक्तकार्यकारित्वाभाववत्त्वचतुष्टये, उक्तप्रसङ्गे कारित्वापादकं सामर्थ्यं योग्यतालक्षणं सहकारिसमवधानरूपमेवेति पक्षं निराकरोति—तथाहीत्यादिना, सिद्धसाधनेन व्याघात इति सामान्यतोऽभिहिते कस्मिन् कथं च सिद्धसाधनं तेन च कस्य व्याघात इति विशेषजिज्ञासायामाह—यदेत्यादि, यदि यद्यदा सकलसहकारिसमवधानलक्षणसामर्थ्यवत् तत्तदा करोत्येवेति प्रसङ्गः क्रियते तदा स यदा-तदा-गर्भितत्वेन करणकाल एव कारित्वापादानरूपस्स्यात्, तत्कालावच्छेदेनैव सकलसहकारिसमवधानस्य सत्त्वात्, तथा च तदानीं नैयायिकैः कारित्वाभ्युपगमात्तस्येष्टापत्तिरूपत्वेनाभासत्वापत्त्या विपर्ययाप्रवृत्तिस्स्यात्, प्रसङ्गेन यदनिष्टं प्रसञ्जितं तत्परिहारार्थकत्वात्तस्य, यदि चोक्तदोषपरिहारायाकरणकाल एव कुशूलस्थबीजे कारित्वापादनरूपो यदा-तदा-विनिर्मुक्त उक्तप्रसङ्गः क्रियते, तदा तदानीं सकलसहकारिसमवधानं नैवेष्यते नैयायिकैरिति तद्रूपापादकाप्रसिद्ध्या कारित्वरूपापाद्यप्रसञ्जनात्मा स कथं स्यादिति भावः। सिद्धसाधनादिति, प्रसङ्गे इति शेषः, विपर्ययव्याघातादिति, विपर्ययस्य सत्प्रसङ्गपूर्वकत्वेन प्रसङ्गस्य तदाभासत्वापत्तेरप्रवृत्तिस्स्यादिति भावः। शिरोमणेर्मतमुपदर्श्य निराकरोति—

यत्त्वकुर्वाणे सहकारिसमवधानाभावसाधने सिद्धसाधनं योजनीयम्, यदि कश्चिदकुर्वाणमपि कारणजातीयमभ्युपेयात् तदा तं प्रति तस्याकारित्वेन सहकारिसमवधानाभावः साधयितुमुचितः, न त्वेतदस्ति, सहकारिसमवहितैः करणनियमाभ्युपगमेऽर्थतोऽकारिणः सहकारिसमवधानाभावनियमाभ्युपगमेन सिद्ध-



सहकारिसमवधानयोग्यतायाः प्रसङ्गहेतुत्वापाकरणम्।

साधनात्, न तु सहकारिसमवधानेन करणप्रसञ्जने सिद्धसाधनमिष्टापत्तिरूपं व्याख्येयम्, तादृशप्रसङ्गस्याप्रस्तुतत्वेन तत्र दूषणोपन्यासायोगादिति दीधितिकृतोक्तं. तच्चिन्त्यम्, यद् यदा समर्थमिति मूलप्रसङ्ग एव समर्थपदविवेचनस्य प्रस्तुतत्वेन सहकारिसमवधानतदभावकालयोर्दूषणद्वयदानेनैकवाक्यतोपपत्तेरार्थिकाभ्युपगमेनार्थिकप्रसङ्गे दूषणदाने कल्पनागौरवादिति ।

व्याख्या—यत्त्वित्यादिना, यत्त्वित्यस्य तच्चिन्त्यमित्यग्रेणान्वयः । अभ्युपेयादिति, सहकारिसमवहितमिति शेषः । तं प्रतीति, कारणजातीयं सहकारिसमवहितमपि कार्यं न करोतीत्युरीकुर्वन्तं प्रतीत्यर्थः । तस्येति, तदितरसकलसामग्रीविशिष्टत्वेऽपि कार्यमकुर्वतः कारणजातीयस्येत्यर्थः । न त्वेतदस्तीति, न तथा कश्चिदभ्युपगच्छतीत्यर्थः । अर्थत इति, व्यापकाभावस्य व्याप्याभावनियतत्वनियमादित्यर्थः । कारित्वापादाने इष्टापत्तिपरतया कैश्चित्सिद्धसाधनोपवर्णनं कृतं तन्मतनिराकरणायाह—नत्विति, तादृशप्रसङ्गस्य, यद्यदा समर्थं तत्तदा करोत्येवेत्यस्य। ग्रन्थकारश्चिन्ताबीजोपदर्शनमुखेन शिरोमणिमतखण्डनमेवाह—यद्यदा समर्थमितीत्यादिना, दूषणद्वयेति सिद्धसाधनहेत्वसिद्धिरूपदूषणद्वयेत्यर्थः । आर्थिकाभ्युपगमेनेति, व्यापकाभावस्य व्याप्याभावनियतत्वनियमाक्षिप्तेनाकारिणः सहकारिसमवधानाभावनियमाभ्युपगमेनेत्यर्थः । अङ्कुरत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया सिद्धं यद्बीजत्वादिकं तद्रूपयोग्यताश्रयणपक्षं निराकरोति—

प्रत्यक्षानुपलम्भात्मकान्वयव्यतिरेकविषयीभूतबीजत्वादिरूपप्रातिस्विकयोग्यताश्रयणे त्वनुभवेन व्याघातः, अकुर्वतोऽपि बीजजातीयस्य प्रत्यक्षसिद्धत्वात्, परस्यापि तत्राविप्रतिपत्तेः, तथा च बीजत्वे करणव्य-

भिचारस्याकरणे चाबीजत्वव्यभिचारस्योभयसिद्धत्वेन प्रसङ्गविपर्ययप्रवृत्त्यभावात् । बीजत्वेन बीजजातीयत्वमत्र बीजस्यैवाङ्कुरजनकत्वमिति मतेनाधिकृतम् , बीजे विनष्टे तदवयवेभ्य एवाङ्कुरोत्पाद इति मते तु कपालादिव्यावृत्तकलमयवाद्यवयवानुगतजातिविशेषपरं बीजत्वपदमिति वदन्ति ॥

व्याख्या-प्रत्यक्षानुपलम्भात्मकेत्यादिना, तदितरसकलकारणसमवधाने बीजत्वाद्यवच्छिन्नकारणसत्त्वेऽङ्कुरत्वाद्यवच्छिन्नकार्यसत्त्वं बीजत्वाद्यवच्छिन्नकारणाभावे अङ्कुरत्वाद्यवच्छिन्नकार्याभाव इत्याकारकप्रत्यक्षानुपलम्भात्मकयोरन्वयव्यतिरेकग्रहयोर्विषयीभूता या बीजत्वादिजातिस्तद्रूपायाः प्रतिकारणजातीयनियतताया योग्यताया आश्रयणे त्वित्यर्थः। परस्यापि बौद्धस्यापि, तत्रेति बीजसन्ताने पूर्वपूर्वबीजोत्पन्ने उत्तरोत्तरबीजे अङ्कुराकुर्वत्यपि बीजत्वजातिमत्त्वस्य प्रत्यक्षसिद्धत्वे इत्यर्थः। बीजत्वे करणव्यभिचारस्येति, साध्यस्याङ्कुरकारित्वस्याभाववति भृष्टबीजादौ कुशूलस्थबीजादौ च सत्तया प्रत्यक्षसिद्धे बीजत्वहेतौ प्रसङ्गानुमाने करणव्यभिचारस्येत्यर्थः । अकरणे चाबीजत्वव्यभिचारस्येति, साध्यस्य बीजत्वाभावस्याभावो भृष्टबीजादौ कुशूलस्थबीजादौ च वर्त्तते तत्र विद्यमाने अङ्कुरकारित्वाभावे हेतौ विपर्ययानुमाने बीजत्वाभावरूपसाध्यव्यभिचारस्येत्यर्थः। ननु बीजस्य नाङ्कुरजनकत्वं तस्यान्त्यावयवित्वेन द्रव्यसमवायिकारणत्वाभावेनोपादानत्वासम्भवात् तदवयवेनापि स्वस्मिन् बीजसत्त्वे मूर्त्तानां समानदेशत्वविरोधेन द्रव्यान्तरजननासम्भवात्, बीजविनाश एव तज्जनने बीजस्य निमित्ततया अप्ययोगादित्याशङ्कायामाह-बीजत्वेन बीजजातीयत्वमत्रेत्यादि, बीजत्वेनेति बीजत्वपदेनेत्यर्थः, बीजजातीयत्वमिति अस्य अधिकृतमित्यनेनान्वयः। अत्रेति उक्तप्रसङ्गानुमाने उक्तविपर्ययानुमाने चेत्यर्थः । जनकत्वमिति उपादानतयेति शेषः,

कल्पलतिकोपेतम्

जनकतावच्छेदकात्मयोग्यतायाः प्रसङ्गहेतुत्वापाकरणम् ।

मतेनेति परमताभ्युपगमेनेत्यर्थः । अधिकृतम् विवक्षितम् । बीजे विनष्टेऽवस्थिततदवयवेभ्य एवाङ्कुर उत्पद्यत इति कलमयवादिबीजावृत्तिकलमयवादिबीजावयववृत्तिजातिविशेषपरं बीजत्वपदमिति पीठरपाकवादिमतमाश्रित्याह-बीजे **विनष्टे** इत्यादि, अत्र कलमयवादिव्यावृत्तकलमयवाद्यवयवानुवृत्तजातिविशेषपरमिति पाठोऽन्यत्र दृश्यते तदनुसृत्यायमर्थः कृतः, कपालादिव्यावृत्तेत्यादिपाठस्य त्वयमर्थः कपालादिपदेन बीजेतरस्यावयवोपलक्षणम्--तथा च कपालादौ न वर्त्तते कलमयवादिरूपबीजानामवयवेषु वर्त्तते या जातिस्सैवात्र बीजत्वपदेनोच्यत इति । चतुर्भेदभिन्नयोग्यताया यस्तृतीयभेदस्तदाश्रयणपक्षं निराकरोति—

**कुर्वद्रूपत्वरूपयोग्यताश्रयणे त्वभ्युपगमेन व्याघातः, मदभ्युपगमस्य तत्राभावात्, दृष्टान्तेऽङ्कुरकारिणि बीजे तद्धर्त्वग्रहाभावात् प्रसङ्गहेतोरप्रसिद्धेर्विपर्यये च साध्याप्रसिद्धेर्व्याप्यत्वासिद्धयैकस्याप्यप्रवृत्तेः, त्वदभ्युपगमस्य चाप्रामाणिकत्वेनाप्रयोजकत्वात्, को हि नाम स्वस्थात्मा प्रमाणशून्यमभ्युपगच्छेत्, न हि बीजत्वावान्तरजातिभेदः कुर्वद्रूपत्वं प्रत्यक्षेणानुभूयते, कुर्वतोऽपि क्षणस्यावान्तरजातिविशिष्टतया प्रत्यक्षेणाध्यवसायाभावात्, निर्विकल्पकस्य च गृहीताध्यवसित एवार्थे प्रामाण्यात्, यत्रैव जनयेदेनामित्याद्युक्तेः, अन्यथाऽतिप्रसङ्गात् ॥**

व्याख्या-**कुर्वद्रूपत्वरूपेत्यादि**, मदभ्युपगमस्येति, नैयायिकाभ्युपगमस्येत्यर्थः, तेन क्षणिकाक्षणिकाद्यनेकान्तात्मकवस्त्वभ्युपगन्तुर्ग्रन्थकारस्य कथञ्चित्कुर्वद्रूपत्वाद्यभ्युपगमेऽपि न क्षतिः । परानभ्युपगमस्य प्रमाणाभासत्वप्रयोजकत्वं हि दोषविधयैवेति तदुपदर्शनायाह-**दृष्टान्तेत्यादिना**, दृष्टान्ते धरणिस्थबीजे नैयायिकमतेन कुर्वद्रूपत्वाप्रसिद्धया तद्धर्त्वग्रहासम्भवः,

कुर्वद्रूपत्वात्मयोग्यता. प्रसङ्गहेतुत्वखण्डनम्।

तथा च प्रसङ्गे हेतोरसिद्धिः, तद्रूपप्रतियोग्यप्रसिद्ध्या च तदभावरूपस्य विपर्यये साध्यस्याप्रसिद्धिः, अतो व्याप्यत्वासिद्ध्या न प्रसङ्गस्य विपर्ययस्य वा प्रवृत्तिरिति भावः । पराभ्युपगतहेतुप्रसक्तिजननीयेति वचनात्प्रतिवाद्यभ्युपगमस्य प्रसङ्गहेतौ तन्त्रत्वं, न तु वाद्यभ्युपगमस्येत्याशयेनाह—त्वदभ्युपगमस्येति, बौद्धाभ्युपगमस्येत्यर्थः, नानभ्युपगममात्रेण प्रामाणिकोऽर्थो निवर्त्तेत इत्यत आह—को हीति, यदि च प्रमाणाधीनैव वस्तुनो व्यवस्थितिरिति कुर्वद्रूपत्वे तद्व्यवस्थापकतया प्रमाणप्रवृत्तिस्स्यात् तदा तत्प्रत्यक्षमनुमानं वा स्यात, बौद्धैः प्रमाणान्तरानभ्युपगमात्, तत्र न तावत्प्रत्यक्षमित्याह—नहीति, प्रत्यक्षेणानुभूयत इति, प्रत्यक्षेणेति तृतीया कर्त्तरि यदि तदा प्रत्यक्षं निर्विकल्पकं तेनेत्यर्थः, अनुभूयत इति विषयीक्रियत इत्यर्थः, यदि च करणे तदेन्द्रियेणेत्यर्थः, अनुभूयते इति निर्विकल्पकात्मकानुभवविषयो भवतीत्यर्थः । तत्र हेतुमाह—कुर्वतोऽपीति, क्षणस्येति सहकारिमध्यमध्यासीनबीजादिरूपक्षणस्येत्यर्थः । **अवान्तरजातिविशिष्टतयेति**, बीजत्वव्याप्यकुर्वद्रूपत्वजातिमत्त्वेनेत्यर्थः । प्रत्यक्षेणाध्यवसायाभावादिति, निर्विकल्पप्रत्यक्षद्वारीभूतसविकल्पप्रत्यक्षाभावादित्यर्थः, तथा च सविकल्पाभावे निर्विकल्पस्य सतोऽपि स्वविषये प्रामाण्याभावेनासत्कल्पत्वस्यैव त्वदिष्टेरिति न ततः कुर्वद्रूपत्वसिद्धिरिति भावः । **गृहीताध्यवसित** एवार्थ इति, पूर्वं निर्विकल्पेन गृहीतस्सन् पश्चात्सविकल्पेन विषयीकृतो योऽर्थस्तत्रैवेत्यर्थः । **एनामित्यादी**त्यत्र आदिना तत्रैवास्य प्रमाणतेत्युत्तरचरणं ग्राह्यम् । तदर्थस्त्वेवम्—यत्रैव यद्विषय एव, एनां सविकल्पबुद्धिं, **जनयेत्** उत्पादयेत्, अत्र निर्विकल्पबोध इति कर्तृपदमध्याहार्यम्, तत्रैवेति तद्विषय एवेत्यर्थः, अस्य निर्विकल्पस्य, **अन्यथाऽतिप्रसङ्गादिति**, सविकल्पाभावेऽपि निर्विकल्पस्य प्रामाण्ये क्षणक्षयस्वर्गप्रापणशक्त्यादावपि तत्प्रत्यक्षं प्रमाणतामास्कन्देदिति तेनैव तत्सिद्धेस्तत्साधका-

नुमानमनर्थकतां प्राप्नुयादिति भावः । ननु सहकारिमध्यमध्यासीने बीजे बीजमङ्कुरं करोतीति कुर्वद्रूपत्वरूपावान्तरजातिविषयिकायास्सविकल्पबुद्धेस्सत्त्वात् केनोक्तं कुर्वद्रूपत्वजातौ नाध्यवसाय इतीत्यत आह—

**बीजमङ्कुरं करोतीति बुद्धेश्च फलोपहितं स्वरूपं फलाव्यवहितप्राक्कालवृत्तित्वं वा विषयो, न तु कुर्वद्रूपत्वमिति व्यवस्थितेः । नाप्यनुमानेन तदनुभूयते, लिङ्गाभावात्, साध्याप्रसिद्ध्या व्याप्त्यग्रहेण तत्त्वाभिमतस्य लिङ्गत्वायोगादिति यावत् । तज्जातीयत्वाविशेषेऽपि करणाकरणे न विना प्रयोजकविशेषमुपपद्येते, अतः करणोपपादकतया विशेषः सिद्ध्यन् परिशेषाज्जातिरूप एव सिद्ध्यति, तदभावादेव चाकरणमिति चेत्, न, करणाकरणयोः सहकारिलाभालाभप्रयुक्तत्वेन तत्प्रयोजकतया जातिभेदासिद्धेः ॥**

व्याख्या—बीजमङ्कुरं करोतीति,फलोपहितं स्वरूपमिति,फलोपधानविशिष्टं स्वरूपम् अङ्कुरोत्पत्तिप्रयोजकताविशिष्टं बीजमिति यावत्, उत्पत्तिप्रयोजकतायाः करोत्यर्थत्वात् वैशिष्ट्यस्याख्यातार्थत्वादित्यर्थः । नन्वङ्कुरोत्पत्तिप्रयोजकत्वं साक्षात्परम्पराकारणसाधारणजनकतावच्छेदकधर्मवत्त्वं,तच्च प्रकृते बीजत्वमेवेति तस्यान्यदा सत्त्वात्तदानीमपि व्यवहारापत्तिस्स्यादित्यत आह–फलाव्यवहितप्राक्कालवृत्तित्वं वेति अङ्कुरनिरूपितस्वोत्पत्त्यव्यवहितपूर्वक्षणावच्छिन्नकारित्वविशिष्टं बीजमित्यर्थः । तत् कुर्वद्रूपत्वम्,कुर्वद्रूपत्वस्य साध्यस्याप्रसिद्धौ तद्व्याप्तिपक्षधर्मताविशिष्टलिङ्गस्याप्यप्रसिद्ध्या तदभावोद्भावनाऽसङ्गतिरित्यतो लिङ्गाभावादिति व्याचष्टे–साध्याप्रसिद्ध्येत्यादि,तत्त्वाभिमतस्य लिङ्गत्वेनाभिमतस्य, लिङ्गत्वायोगादिति,नहि लोकव्यवहारपथानवतीर्णस्य यत्र कुत्रापि देशे केनापि लिङ्गेन साधनं युक्तिसहमिति भावः । यद्यङ्कुरं प्रति बीजस्य बीजत्वेनैव कर-

णं स्यात्तर्हि बीजमात्रे बीजत्वाविशेषात् कस्यचिद्बीजस्य करणं कस्यचिच्चाकरणमिति न स्यात् अतस्तदन्यथानुपपत्तिः प्रयोजकविशेषमाक्षिपति, तथा च बीजविशेषस्याङ्कुरं प्रति करणम्, अकारिबीजव्यावृत्तधर्मप्रयोज्यं तदभावप्रयोज्याभावप्रतियोगित्वादित्यनुमानं पर्यवस्यति, न च साध्याऽप्रसिद्धिः, सामान्यतस्तत्प्रसिद्धेः, तच्चानुमानमितरबाधकसहकृतं कुर्वद्रूपत्वजातौ प्रमाणमित्याशङ्कते—तज्जातीयत्वाविशेषेऽपीति, सिध्यतु विशेषस्तथापि स कथं जातिरूप इत्यत आह--परिशेषादिति तत्प्रयोजकोपाधिबाधसहकृतेन केवलव्यतिरेकिणेत्यर्थः । नहि किञ्चिदेकं जनकं सामग्री वै जनिकेति न्यायात् बीजत्वावच्छिन्नं बीजं तदितरकारणकूटस्य सत्त्वेऽङ्कुरं करोति, असत्त्वे च नेति बीजस्य बीजत्वेन कारणत्वेऽपि तत्र करणाकरणयोर्लाघवेन क्लृप्ताभ्यां सहकारिसमवधानासमवधानाभ्यामुपपद्यमानत्वान्न परिशेषानुमानेन तत्प्रयोजकतयाऽक्लृप्तायाः कुर्वद्रूपत्वजातेरभ्युपगमो युक्तः गौरवादित्याशयेन निरस्यति--न, करणाकरणयोरिति, तदिति करणाकरणेत्यर्थः । जातिभेदेति, कुर्वद्रूपत्वरूपजातिविशेषेत्यर्थः । अक्षेपकारित्वस्वभावनियामकतया कुर्वद्रूपत्वं सेत्स्यतीत्याशङ्कते—



तथापि योऽयं सहकारिमध्यमध्यासीनोऽक्षेपकरणस्वभावो भावः स यदि प्रागप्यासीत् तदा प्रसह्य कुर्वाणो गीर्वाणशापसहस्रेणापि नापह्नस्तयितुं शक्य इति तादृशस्वभावनियामकतया वैजात्यसिद्धिरिति चेत् । युक्तमेतत् यद्यक्षेपकरणस्वभावत्वं भावस्य प्रमाणगोचरः स्यात्, तदेव तु स्वोत्पत्त्यव्यवहितोत्तरसमयवृत्तिकार्यमात्रकारित्वलक्षणं, स्वकार्यव्यवहितप्राक्कालावृत्तित्वलक्षणं, स्वकार्यप्रागभावसमानकालीनध्वंसप्रतियोगिसमयावृत्तित्वलक्षणं, स्वोत्पत्तिक्षण एव कारित्वलक्षणं वा, कुतः सिद्धमिति नावगच्छामः, तेन न

तन्नियामकतया वैजात्यसिद्धिः । यन्न यत्कार्याक्षेपकारि तन्न तत्कारि, यथाऽलीकं, शिलाशकलं वा, नाङ्कुराक्षेपकारि च सामग्रीसमवहितं बीजमुपेयते परैरिति प्रसङ्गः, यदङ्कुरं करोति तत्तदक्षेपकारि, यथा धरण्यादिभेद इति .विपर्ययः, आभ्यामक्षेपकारिस्वभावत्वसिद्धिरिति चेत् । न, एवं स्वभावत्वसिद्धौ हि तयोः प्रवृत्तिस्तयोः प्रवृत्तौ चैवंस्वभावत्वसिद्धिरिति परस्पराश्रयात् । प्रसङ्गतद्विपर्ययक्रमानुरोधेन चक्रकेऽपि परस्पराश्रयत्वमक्षतमिति बोध्यम् ।

तथापीति,अक्षेपकरणस्वभावो भाव इति अक्षेपकरणं स्वभावो यस्य बीजाद्यात्मकभावस्य स तथेत्यर्थः । तादृशस्वभावनियामकतया वैजात्यसिद्धिरिति, अक्षेपकरणस्वभावस्य बीजत्वादि यदि नियामकं स्यात्तदा कुशूलस्थबीजादेरपि बीजत्वादित्वात् स स्वभावस्स्यात् नियामकसत्त्वे नियम्यस्यावश्यंभावित्वात् नास्ति च सः तस्मात्तन्न नियामकम्, किन्तु कुर्वद्रूपत्वमेवेति तन्नियामकतया तत्सिद्धिरिति भावः । अक्षेपकरणस्वभावत्वं सिद्धं यदि स्यात्तदा तन्नियामकतया कुर्वद्रूपत्वसिद्धिस्स्यात् न च तत्सिद्धमित्यनुशयेनोत्तरयति—युक्तमेतदिति, तदेवेति अक्षेपकरणस्वभावत्वमेवेत्यर्थः, स्वोत्पत्तीति, अत्र स्वपदं कारणपरम्, एवमग्रेऽपि निरुक्तित्रये ज्ञेयम्, अत्र स्वोत्पत्त्यधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणस्वोत्पत्त्यधिकरणक्षणध्वंसाधिकरणसमयवृत्तिकार्यकारित्वार्थकस्वोत्पत्त्यव्यवहितोत्तरसमयवृत्तिकार्यकारित्वलक्षणमक्षेपकरणस्वभावत्वं विलम्बेनाङ्कुरजननेऽपि स्वोत्पत्तिद्वितीयक्षणोत्पन्नकार्यान्तरमादाय सम्भवतीति न तत्कुर्वद्रूपत्वसाधनमत्यलमित्यतो मात्रपदम्, न चात्र कार्यपदमङ्कुरपरमिति नायं दोष इति वाच्यम्, सामान्यतो भावमात्रेऽक्षेपकारित्वस्वभावनियामकतया कुर्वद्रूपत्वस्य साध्यमानत्वात्, मात्रपदोपादाने च

तस्येतरव्यवच्छेदफलकत्वात् स्वोत्तरत्वव्यवहितोत्तरसमयावृत्तिकार्याकारित्वे सति तादृशसमयवृत्तिकार्यकारित्वे तत्पर्यवसानमिति नोक्तदोषः । मात्रपदाद्यघटितत्वेन लघुलक्षणान्तरमाह--स्वकार्येति, स्वकार्यप्रागभावाधिकरणक्षणप्रागभावाधिकरणक्षणावृत्तित्वमित्यर्थः । अत्र विनाश्यभावत्वरूपध्वंसत्वघटितप्रागभावत्वस्य द्विधा निवेशेन गौरवात्, प्रागभावत्वं ध्वंसत्वञ्चैकैकधा निवेश्य लक्षणान्तरमाह--स्वकार्यप्रागभावेति, अस्य कारित्वाघटितत्वेनोदक्षरत्वात्तद्घटितं चरमलक्षणमाह--स्वोत्पत्तिक्षण एवेति, स्वोत्पत्तिक्षणान्यक्षणे यत्कारि तदन्यत्वे सति कारित्वं स्वाधिकरणकालध्वंसकाले यत्कारि तदन्यत्वे सति कारित्वं वेत्यर्थः । एतच्चालीकस्याप्यभावप्रतियोगित्वमभ्युपगच्छतो बौद्धस्य नामसिद्धमिति बोध्यम्, तेनेति नहि स्वयमसिद्धं सत् स्वनियामकस्य साधकमिति नासिद्धेनाक्षेपकरणस्वभावेन नियम्येन नियामकस्य कुर्वद्रूपत्वस्य सिद्धिरिति भावः । कुशूलस्थबीजावृत्त्यङ्कुरकुर्वद्रूपत्वसिद्ध्यनुगुणकुशूलस्थबीजव्यावृत्ताङ्कुराक्षेपकरणस्वभावसिद्ध्यर्थमाह--यन्नेत्यादि, अत्र सामग्रीसमवहितबीजपक्षकाङ्कुराक्षेपकारित्वाभावहेतुकाङ्कुरकारित्वाभावसाध्यकप्रसङ्गमूलभूता सामान्यव्याप्तिर्यन्नेत्यादिना प्रदर्शिता, अत्र सकलकार्याकारिणोऽपि शशशृङ्गादेर्दृष्टान्तत्वं सम्भवतीत्यभिप्रायेणाह--यथालीकमिति, एतच्च प्रसङ्गकर्तुः सौगतस्य स्वमतावष्टम्भेन, प्रकृतापत्तौ कार्यान्तरकारिणोऽपि दृष्टान्तत्वं सम्भवतीत्यभिप्रायेणाह--यथा शिलाशकलं वेति यत्तद्घटितसामान्यव्याप्तिर्विशेषदृष्टान्तमादायाप्युपपन्नेति सामान्यव्याप्तावेव वाऽयं दृष्टान्त उभयसाधारण इति, विशेषव्याप्तिस्तु यन्नाङ्कुराक्षेपकारि तन्नाङ्कुरकारि यथा शिलाशकलमिति, अत्रापि यथाऽलीकमिति स्वमतावष्टम्भेन दृष्टान्तोद्भावनं सम्भवत्येव, अत एव विपर्ययानुमाने यदङ्कुरमित्यादिना विशेषव्याप्तिरुक्तेति, धरण्यादिभेद इति सहकारिसमवहितधरण्यादिविशेष इत्यर्थः । करोति चाङ्कुरं सहकारिसमवहितं



कुर्वद्रूपत्वात्मयोग्यताया. प्रसङ्गहेतुत्वखण्डनम् ।

बीजमित्युपनयवाक्यमत्र द्रष्टव्यम्, आभ्यामिति, अनन्तरोदिताभ्यां प्रसङ्गविपर्ययाभ्यामित्यर्थः। ननु साध्यस्य हेतोर्वा सिद्धिं विनानुमानं साध्याप्रसिद्ध्या हेत्वप्रसिद्ध्या वा प्रवर्त्तितुं नोत्सहते इति वस्तुगतिः, तथा च प्रकृतेऽनुमानात्प्रागक्षेपकारित्वस्यैवासिद्धावसत्ख्यात्यनभ्युपगन्तॄणां नैयायिकानां मतेऽलीकप्रतियोगिकाभावस्यानभ्युपगमात् तदभावस्याप्यसिद्धेस्तद्धेतुकप्रसङ्गानुमानस्य न प्रवृत्तिः, प्रसङ्गाभावे च विपर्ययानुमानस्याप्यप्रवृत्तिः, तत्पूर्वकत्वात्तस्य, तदप्रवृत्तौ च नाक्षेपकारित्वसिद्धिः, तत्साधकानुमानान्तराभावात्, भावे वाऽस्य वैफल्यप्रसक्तेः, तदसिद्धौ च तदभावासिद्ध्या न तद्धेतुकप्रसङ्गप्रवृत्तिरित्येवं क्रमेण जायमानस्य चक्रकस्यैवोपदर्शनं युक्तं न परस्पराश्रयस्येति चेत्, सत्यम्, तथापि परस्परापेक्षात्रयादिलक्षणे चक्रके परस्परापेक्षाद्वयलक्षणपरस्पराश्रयत्वमव्याहतमेवेत्याह—प्रसङ्गतद्विपर्ययक्रमानुरोधेनेति, स्वापेक्ष्यापेक्षत्वमेवान्योन्याश्रयः स्वापेक्ष्यत्वं, च स्वापेक्ष्यापेक्ष्येऽपि वर्त्तते इति स्वापेक्ष्यापेक्ष्यापेक्षालक्षणचक्रकेऽपि परस्पराश्रयत्वमक्षतमेव। अत्र स्वापेक्षत्वलक्षणमात्माश्रयत्वमप्युपलक्षणन्यायेनाक्षिप्तं ज्ञेयम्। आत्माश्रयो हि यत्रान्योन्याश्रयो यत्र च चक्रको यत्र च तदुभयाभावस्तत्रापि सम्भवतीति तस्य व्यापकत्वं तद्व्याप्यत्वमन्योन्याश्रयस्य, तद्व्याप्यत्वं च चक्रकस्य, तत्सत्त्वे तदभावसत्त्वे च तस्यान्योन्याश्रयस्य सत्त्वादिति स्वव्याप्यव्याप्यसत्त्वे स्वस्यावश्यंभावात्। अथ माभूदुक्तप्रसङ्गविपर्ययाभ्यामक्षेपकारित्वसिद्धिः अनुमानान्तरेण तु स्यादेवेत्यभिप्रायेणाशङ्कते—

अथ कार्यजन्मैवाक्षेपकारित्वे प्रमाणम्, अक्षेपविलम्बयोरत्रान्यस्य प्रकारस्याभावाद्विलम्बबाधे परिशेषादक्षेपसिद्धेः, तन्नियामकतया च वैजात्यसिद्धिरिति चेत्। न। विलम्बो ह्यत्राकरणं, तच्च सर्वदैव कदाचिद्वा, आद्ये विलम्बकारित्वाप्रसिद्धिः, द्वितीये तु कार्योत्पत्तेरविरोधात् न परिशेषावतार इत्यक्षेपकर-

णस्वभावासिद्धौ तन्नियामकवैजात्यासिद्धेः । एतेनाविवक्षितविशेषं सामान्यतो जनकतावच्छेदकरूपमेव सामर्थ्यमभिहितमिति परास्तं, स्वरूपयोग्यस्यापि करणप्रयोजकसहकारिसाहित्यविरहेऽकरणोपपत्तेः, प्रसङ्गविपर्ययप्रयोजकव्याप्तिग्रहानुकूलतर्काभावेन मूलशैथिल्यात् । अथ यदि सहकारिविरहप्रयुक्तकार्याभाववत्तारूपा योग्यताश्रीयते, कार्याभाववत्ता च कार्यकारित्वाभावः, तेन न यत्कारणं कार्याभावाभाववत्तत्राव्याप्तिः । न च चरमकारणे उक्तकार्यकारित्वाभावाभावाद्व्याप्तिः, तत्रापि कार्योत्पत्तिद्वितीयक्षणे कार्यकारित्वाभावस्य सहकारिविरहप्रयुक्तस्य जागरूकत्वात् । यद्यपि कार्योत्पत्तिद्वितीयक्षणे विनश्यतश्चरमकारणस्य स्वाभावप्रयुक्तं कार्यानुत्पादकत्वं, तथापि तेन यत्कार्यमर्जितं तत्प्रागभावव्यतिरेकस्यापि तत्र प्रयोजकत्वमस्त्येवेति न क्षतिः ॥

व्याख्या—अथेति, ननु कार्यकारित्वं क्षेपकारित्वेनाप्युपपद्यत एवेति तत् कथमक्षेपकारित्वरूपैककोटावेव प्रमाणीभवेत्, किञ्चास्यानुमानमुद्रयाऽक्षेपकारित्वसाधकत्वे सामान्यतोऽपेक्षणीया साध्यसिद्धिश्चेत्प्रकृतानुमानेन तदात्माश्रयपिशाचमुखप्रविष्टत्वमनिवार्यमेव स्यात् । अनुमानान्तरेण चेत् तदा किं प्रकृतानुमानेनेत्याशङ्कायामाह—अक्षेपविलम्बयोरित्यादि, घटतदभावयोर्विरोधाद् भूतले एकदैकतरस्यैव सत्त्ववत् अक्षेपविलम्बकारित्वयोर्विरोधात् कारणेऽक्षेपेण किं वा विलम्बेन कार्यकारित्वात्मकस्यैकतरस्वभावस्यैव सत्त्वं स्यात्, तत्र यदि विलम्बकारिस्वभावस्तदा स्वभावभूते न स्वभाविनस्स्वरूपमिति स्वभावस्य तद्वता सह नियमेन सहभावित्वात् यावत्तद्वत्कालस्थितिमनुवृत्तेः कदाचिदपि कार्यजन्म न स्यात्, भवति च तदिति तदन्यथानुपपत्त्या तस्य स्वभा-

कल्पलतिकोपेतम्

कुर्वद्रूपत्वात्मयोग्यतायाः प्रसङ्गहेतुत्वखण्डनम् ।

वस्य बाधेन परिशेषानुमानेनाक्षेपकारित्वसिद्धौ तस्य जन्यस्वभावत्वादेव किञ्चित्प्रयोज्यत्वे सिद्धे तत्प्रयोजकं न बीजत्वम्, तथा सति कुशूलस्थबीजे बीजत्वसत्त्वेनाङ्कुराक्षेपकारित्वं स्यात्, प्रयोजकसत्त्वे प्रयोज्यसत्त्वनियमात्, न च तदिति तद्बाधेऽन्यस्य प्रत्यक्षसिद्धस्य नियामकत्वायोगात्परिशेषादतीन्द्रियकुर्वद्रूपत्वसिद्धिरिति भावः। अनुमानप्रयोगस्त्वेवम्—बीजम्, अक्षेपकारित्वक्षेपकारित्वान्यतरवत् कारणस्य तदन्यप्रकाराभावे सति कारित्वादित्यतस्सामान्यतोऽन्यतरस्वभावसिद्धौ बीजं न विलम्बेनार्थक्रियाकारि समर्थत्वात् विभागं प्रति क्रियावदित्यतो विलम्बकारित्वबाधे बीजमक्षेपकारिस्वभावं विलम्बकारित्वाभावे सति तादृशान्यतरवत्त्वादिति परिशेषानुमानेनाक्षेपकारित्वस्वभावसिद्धौ स स्वभावः किञ्चित्प्रयोज्यः जन्यस्वभावत्वादित्यनुमानात्किञ्चित्प्रयोज्यत्वे सिद्धे स च स्वभावो न बीजत्वप्रयोज्यः तत्सत्त्वेऽपि कुशूलस्थबीजादावनुपपद्यमानत्वादित्यादीतरबाधानुमानतो बीजत्वादिबाधे स स्वभावोऽतीन्द्रियजातिप्रयोज्यः बीजत्वादिप्रत्यक्षसिद्धजात्यप्रयोज्यत्वे सति जातिप्रयोज्यत्वात् मनसि ज्ञानसामान्यकारणत्ववदित्यनुमानेन दृष्टान्ते मनस्त्वातीन्द्रियजातिप्रयोज्यत्ववत्प्रकृते साध्यं सिद्ध्यत्कुर्वद्रूपत्वात्मकवैजात्यमादायैव सिद्ध्यतीति। निराकरोति—नेत्यादिना, आद्ये विलम्बकारित्वाप्रसिद्धिरिति, विलम्बकारित्वस्य सर्वदैवाकारिणः कारित्वरूपस्य न प्रसिद्धिः सर्वदैवाकारित्वकारित्वयोर्विरोधात् सर्वदैवाकारिणः कारित्वायोगात्, तथा च बीजपक्षकाऽक्षेपकारित्वक्षेपकारित्वान्यतरसाध्यकसामान्यानुमानस्य न प्रवृत्तिः तदप्रवृत्तौ च तन्मूलकस्येतरबाधकानुमानस्य परिशेषानुमानस्य च न प्रवृत्तिरिति न कुर्वद्रूपत्वसिद्धिरिति भावः। कदाचिदकरणरूपविलम्बपक्षे विलम्बकारित्वस्य बीजं यावन्न सहकारिसमवहितं तावन्न करोतीत्यत्र पर्यवसायित्वेन सहकारिसमवधानकाले कार्यजननाविरोधेन कार्यकारित्वरूपस्य कार्यजन्मनो विलम्बकारित्वाप्रतिक्षेपकत्वेन न परिशेषावतारेणाक्षेपकारित्वसि-

द्या कुर्वद्रूपत्वसिद्धिरित्याह–द्वितीये त्विति, द्वितीये कदाचिदकरणरूपविलम्बे, कार्योत्पत्तेरिति कार्यकारित्वस्येत्यर्थः । अ-विरोधादिति, कदाचिदकरणरूपविलम्बेन सह विरोधाभावादित्यर्थः , कदाचित्कार्यकारित्वपर्यवसायिकदाचिदकरणरूपविलम्बेन सह सर्वदा कार्यकारित्वाभावस्यैव विरोधेन कार्यकारित्वसामान्यस्य विरोधाभाव एवेति भावः । यत्समर्थं तत्करोत्येवेति प्रसङ्गे सामार्थ्यं जनकतावच्छेदकरूपमेव, तच्च बीजत्वादि कुर्वद्रूपत्वं वा न विशिष्योपादीयते, किन्त्वङ्कुरजनकतावच्छेदकत्वेनैव सामान्यत उपादीयत इति पक्षं निरस्यति–एतेनेत्यादिना, एतेन वक्ष्यमाणदोषेण, अस्य परास्तमित्यनेनान्वयः । स्वरूपयोग्यस्यापीति, जनकतावच्छेदकसामान्यधर्मवतोऽपीत्यर्थः, प्रसङ्गविपर्ययप्रयोजकव्याप्तिग्रहानुकूलतर्काभावेनेति अन्वयव्यतिरेकाभ्यां प्रसङ्गे विपर्यये च प्रयोजके व्याप्तिग्रहेऽनुकूलस्य सामर्थ्यमस्तु कारित्वं मास्त्वित्याद्याकारकव्यभिचारशङ्कानिवर्त्तकस्य तर्कस्याभावेनेत्यर्थः । मूलशैथिल्यादिति प्रसङ्गस्य विपर्ययस्य च मूलं व्याप्तिग्रहः तदभावे तदभावात्, तच्छैथिल्यं तदभावः तस्मादित्यर्थः, योग्यतारूपसामर्थ्यस्यापश्चिमविकल्पमुपदर्श्य निराकरोति–अथेति, यदीति अस्य व्यवहितेन तदापि स्वभावेनेत्युत्तरग्रन्थेन सम्बन्धः । तेन, कार्याभाववत्तेत्यस्य कार्यकारित्वाभावार्थकतया निर्वचनेन । यत्कारणमिति, निमित्तकारणमसमवायिकारणं चेत्यर्थः । कार्याभावाभाववदिति सहकारिविरहप्रयुक्तस्य कार्याभावस्याभाववदित्यर्थः । कथमिति चेत् सहकारिसमवधानेऽपि समवायिकारण एव कार्योत्पत्त्या निमित्तासमवायिकारणयोस्स्वत एव समवायसम्बन्धावच्छिन्नकार्याभाववत्त्वादिति भावः । यत्क्षणाव्यवहितोत्तरक्षणे कार्योत्पत्तिस्तत्क्षणावच्छेदेन कारणे सहकारिविरहस्य विशेषणस्य कार्यकारित्वाभावस्य विशेष्यस्य चाभावाद्विशेषणविशेष्योभयाभावप्रयुक्तविशिष्टाभावस्य सत्त्वाद्योग्यतालक्षणक्षतेरव्याप्तिस्स्यादित्याशङ्कते न च चरमकारण इति, न चेत्य-

कल्पलतिकोपेतम्

कुर्वद्रूपत्वात्मयोग्यताया. प्रसङ्गहेतुत्वखण्डनम् ।

स्याव्याप्तिरित्यनेनान्वयः,तत्र हेतुमाह-तत्रापीति,चरमकारणेऽपीत्यर्थः । कार्योत्पत्तिद्वितीयक्षणे इति सामग्र्यपेक्षया यः कार्योत्पत्त्यात्मकद्वितीयक्षणस्तदवच्छेदेनेत्यर्थः। विनश्यत तत्कालीनध्वंसप्रतियोगिनः । स्वाभावप्रयुक्तमिति, न तु सहकारिविरहप्रयुक्तमिति शेषः । तत्तत्कार्ये स्वस्वप्रागभावस्यापि सहकारिकारणत्वेन तदभावस्य कार्यकारित्वाभावे प्रयोजकीभूतस्य कार्योत्पत्तिक्षणे सत्त्वेन तत्प्रयुक्तत्वविशिष्टकार्यकारित्वाभावसत्त्वात् तद्रूपयोग्यतालक्षणाव्याहतेर्नाव्याप्तिरित्याशयेनाह-तथापीति, तेन चरमकारणेन,तत्प्रागभावव्यतिरेकस्यापि तत्कार्यप्रागभावविरहस्यापि,अपिना चरमकारणविरहस्य च प्रयोजकत्वमाविष्कृतम् । किं चरमकारणस्य कारित्वाभावे स्वान्यसहकारिव्यतिरेकप्रयुक्तत्वगवेषणया यतः कारणमात्रस्य परस्परापेक्षया सहकारित्वेन चरमकारणस्यापि स्वान्यकारणापेक्षया सहकारिकारणत्वमिति स्वव्यतिरेकस्यापि स्वस्मिन् करित्वाभावे प्रयोजकत्वात् तत्प्रयुक्तस्यापि कारित्वाभावस्य सहकारिविरहप्रयुक्तत्वमेवेत्याशयवतां मतान्तरमाह—

**स्वव्यतिरेकप्रयुक्तमेव स्वस्याजनकत्वमित्यपि कश्चित् । यथाश्रुते तु नैयायिकानां निमित्तासमवायिनोः परेषां चोपादानेऽप्रसिद्धिः, समवायेन कार्याभावस्य तत्र स्वतः सिद्धत्वादिति निष्कृष्यते, तदापि स्वभावेन व्याघातः, सहकारिविरहप्रयुक्तकार्याभाववाँश्च स्यात् सहकारिविरहे कार्यवाँश्च स्यादित्यस्य स्वभावेन व्याहतत्वात् ॥**

स्वव्यतिरेकप्रयुक्तमेवेत्यादि, कार्याभावपदस्य शक्यार्थपरत्वे समवायेन कार्यं समवायिकारणे सहकारिसमवधाने उत्पद्यते तदभावे तु नेति तत्र कार्याभावस्य सहकारिविरहप्रयुक्तत्वेऽपि निमित्तासमवायिकारणयोः सहकारिसमवधानेऽपि कार्यो-

तत्त्यभावात्तत्र कार्याभावस्य स्वतस्सिद्धत्वेन सहकारिविरहप्रयुक्तत्वाभावात्तत्र न्यायमते बौद्धमते च पूर्वापरवर्त्तिनोरुपादानोपादेयक्षणयोराधाराधेयभावाभावादुपादाने उपादेयकार्याभाववत्त्वस्य स्वतस्सिद्धत्वेन सहकारिविरहप्रयुक्तत्वाभावात्तत्राव्याप्तिस्स्यात् ,कार्याभावपदस्य कार्यकारित्वाभावपरत्वे तु तस्य सहकारिविरहप्रयुक्तत्वेन न दोष इत्याशयेनाह—यथा श्रुते त्विति, योग्यतायाः कार्याभावादिगर्भत्वे त्वित्यर्थः। तत्रेति नैयायिकानां निमित्तासमवायिकारणयोः बौद्धानामुपादाने चेत्यर्थः। निष्कृष्यते इति,उक्तदोषोद्धृतये कार्याभावपदं कार्यकारित्वाभावार्थकतया व्याख्यायत इत्यर्थः। यदा यत्सहकारिविरहप्रयुक्तकार्यकारित्वाभाववत्तदा तत्करोत्येवेत्येवं यदा-तदा-गर्भितः प्रसङ्गः क्रियते, किं वा यदा-तदा-विनिर्मुक्तः, अस्मिन् पक्षेऽपि किमाप्याद्यापादकयोस्सामानाधिकरण्यग्रहः यौगपद्येन किं वा कालभेदेन, तत्राद्यपक्षं निरस्यति—सहकारिविरहेति, कार्याभाववानिति कार्यकारित्वाभाववानित्यर्थः, सहकारिविरहे कार्यवांश्चेति सहकारिविरहकालावच्छेदेन कार्यकारित्ववांश्चेत्यर्थः। सहकारिविरहप्रयुक्तकार्यकारित्वाभाववत्त्वं हि कारणे सहकारिविरहकालावच्छेदेनैव स्यात् न च तत्कालावच्छेदेन तत्र कार्यकारित्वमित्येककालान्तर्भावेण सहकारिविरहप्रयुक्तकार्यकारित्वाभावात्मकापादककार्यकारित्वरूपापाद्ययोः परस्परविरहरूपत्वेन विरोधादुव्याप्त्यभावेन मूलशैथिल्यात्प्रसङ्गस्स्वस्वरूपमेव जह्यादिति भावः। द्वितीयपक्षे आद्यपक्षं निराकरोति—



यत् यदा समर्थमित्यादौ यदा तदेति परित्यज्य यत् सहकारिविरहप्रयुक्तयत्कार्याभाववत्तत्तत्कार्यं करोत्येवेत्यत्राप्याद्यापादकयोर्यौगपद्येन तथाग्रहस्य विरोधेनाशक्यत्वात् ,कालभेदेन तद्ग्रहे त्वेकस्यैव धर्मिणः पूर्वापरकालावस्थायित्वलक्षणं स्थैर्यमवगाहमानायाः सामानाधिकरण्यबुद्धेः क्षणिकत्वसङ्गरभङ्गलब्धरङ्गस्य

स्थिरपक्षस्य कीर्त्तिस्तम्भायमानत्वादिति बोध्यम् ॥ ६ ॥ एवं सामर्थ्यलक्षणो हेतुर्विकल्पदूषितः। अनेनैव न्यायेन समर्थव्यवहारगोचरत्वस्यापि परोक्तस्य हेतुत्वं निरसनीयमित्यभिप्रायवानाह—

व्याख्या—यद् यदेत्यादि, यौगपद्येन तथा ग्रहस्येति एककालावच्छेदेन सामानाधिकरण्यग्रहस्येत्यर्थः। यद्यप्येकस्मिन्नेव बीजे धरणिस्थतादशायामङ्कुरकार्यकारित्वस्य कुशूलस्थतादशायां च सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्य सत्त्वेन तयोरापाद्यापादकयोर्न विरोधस्तथापि तयोरेककालान्तर्भावेण सामानाधिकरण्यग्रहोऽभ्युपगतस्स्यात्तदा विरोधात् स न स्यात् एकस्मिन्नेव घटे पूर्वापरकालभेदेन वर्त्तमानयोरक्तत्वतदभावयोर्विरोधाभावेऽपि तयोरेककालावच्छेदेन तत्र सामानाधिकरण्यग्रहो विरोधान्न भवतीतिवत्, तथा च सामानाधिकरण्यघटिताया व्याप्तेर्ज्ञानाभावात्प्रसङ्गप्रवृत्तिर्न स्यादिति भावः। ननु माभूदुक्तापाद्यापादकयोरेककालान्तर्भावेण सामानाधिकरण्यग्रहः कालभेदेन तु स्यादेवेति चेत्, नन्वेवं तर्हि स नैकं स्थिरभूतं धर्मिणमनन्तर्भाव्य पर्यवस्यतीति स एव क्षणिकत्वं विरुणद्धीति तदेत्प्रसङ्गसाधनं भवतः स्ववधाय कृत्योत्थापनं प्रसक्तमित्यभिप्रायेण द्वितीयपक्षे द्वितीयपक्षनिरसनामाह—कालभेदेनेति, तद्ग्रहे सहकारिविरहप्रयुक्तकार्यकारित्वाभावकार्यकारित्वयोर्ग्रहे, पूर्वापरकालावस्थायित्वलक्षणं स्थैर्यमिति, तादृशावस्थायित्वरूपस्थैर्यंनियतं विभिन्नकालावच्छिन्नमेकधर्मिणि कार्यकारित्वाकारित्वसत्त्वमित्यर्थः। सामानाधिकरण्यबुद्धेरिति अस्य कीर्त्तिस्तम्भायमानत्वादित्यनेन संटङ्कः, क्षणिकत्वसङ्गरभङ्गलब्धरङ्गस्येति क्षणिकत्वस्य क्षणिकत्वपक्षस्य सङ्गरे कथारूपयुद्धे भङ्गः पराजयः, अथवा क्षणिकत्वस्य क्षणिकत्वपक्षस्य यस्सङ्गरः प्रतिज्ञा तस्य भङ्गः त्यागः तेन लब्धो रङ्गो जयलक्षणो नृत्यस्थानं वा येन स तथा तस्येत्यर्थः, ॥ ६ ॥ सप्तमश्लोकमवतारयति—एवमिति, अनेनैवेति सामर्थ्यात्मके प्रस-

ङ्गहेतौ दुष्टत्वप्रतिपादकप्रकारेणैवेत्यर्थः, हेतुत्वं प्रसङ्गहेतुत्वम् ।

न त्वद्द्रुहो भवति चेप्सितसाध्यसिद्धि-र्मुख्यात् समर्थविषयव्यवहारतोऽपि ।
भूम्ना स जन्मविषयोऽपि हि योग्यतोत्थो, व्याप्तिस्तु हेतुसहकारिविशेषलभ्या॥७॥

व्याख्या-न चेप्सितसाध्यसिद्धिर्भवति कस्येत्याकाङ्क्षायामाह-त्वद्द्रुह इति, ईप्सितसाध्यसिद्धौ हेतुमाह-मुख्यात्समर्थविषयव्यवहारतोऽपीति, कुतो नेप्सितसाध्यसिद्धिरित्याशङ्कायामुत्तरार्द्धमाह-भूम्नेति, स मुख्यसमर्थव्यवहारः, भूम्ना प्रायेण, जन्मविषयोऽपि फलोपहितत्वरूपकारणतावच्छिन्नविषयताकोऽपि। योग्यतोत्थः कारणतावच्छेदकधर्मरूपयोग्यतात्मककारणत्वावच्छिन्नविषयताकः । कारणतावच्छेदकधर्मनिमित्तकसमर्थव्यवहारगोचरस्यापि बीजादेस्सहकारिविरहकालावच्छेदेन कारित्वाभावादुक्तहेतौ व्यभिचारेण न व्याप्तिसिद्धिरिति प्रसङ्गे मूलशैथिल्यमित्यभिप्रायेणाह-व्याप्तिस्त्विति, हेतौ सहकारिविशेषस्सहकारिविरहप्रयुक्तकार्यकारित्वाभाववत्त्वं तेन लभ्या यदा-तदा-विनिर्मोकेणोक्तसाध्यहेत्वोर्व्याप्तिरिति श्लोकसङ्क्षेपार्थः ॥

त्वद्द्रुहः स्याद्वादाङ्गत्वेन त्वदभिमतनयान्तराय द्रुह्यतः सूक्ष्मर्जुसूत्रनयोत्थमतिविकल्पशिल्पसूत्रधारस्य सौगतस्य, मुख्यात् समर्थविषयव्यवहारतोऽपि " विशेषणविशेष्यभावे कामचार " इति व्यत्यासतात्पर्यात् मुख्यसमर्थव्यवहारगोचरत्वादपीत्यर्थः । ईप्सितसाध्यसिद्धिरेककालगर्भकार्यकारणभावरूपस्य वाञ्छितस्य साध्यस्य सिद्धिर्न च भवति, समर्थव्यवहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात् ॥



समर्थव्यवहारगोचरत्वस्य प्रसङ्गहेतुत्वखण्डनम् ।

व्याख्या–'त्वद्द्रुह इति' मूलपदं तद्विवृतिः सौगतस्येत्यन्तेन कृता, भगवत्प्रणीतस्याद्वाददूषकत्वेनैकान्तवादिनौ बौद्धनैयायिकावुभावपि द्रोहिणाववििशिष्टावेवेति कथं बौद्धस्यैवात्र भगवद्द्रोहकत्वमुक्तमित्याकाङ्क्षायामाह–स्याद्वादाङ्गत्वेनेति, नयसमूहमयत्वेन स्याद्वादस्य प्रत्येकनयस्य तदङ्गत्वं तेनेत्यर्थः। त्वदभिमतनयान्तरायेति, त्वदभिमतनैगमनयविकृतिभूतन्यायनयायेत्यर्थः। यथा राजदन्त इत्यादौ राजपदानन्तरं दन्तशब्दश्रवणाद् राजपदेन राजपदार्थस्योपस्थित्यनन्तरं दन्तपदेन दन्तपदार्थस्योपस्थितेस्तेनैव क्रमेण राजपदार्थस्य विशेषणविधया दन्तपदार्थेऽन्वयो युक्तस्तथापि व्यत्यासेन राजपदार्थस्य विशेष्यत्वं दन्तपदार्थस्य विशेषणत्वं तथात्रापि व्यत्यासेन विषयशब्दार्थस्य विशेष्यत्वं व्यवहारशब्दार्थस्य च विशेषणत्वमित्याह–विशेषणविशेष्यभावे कामचार इतीति, मुख्यसमर्थव्यवहारगोचरत्वादपीति अत्र व्यवहारपर्यन्तानुधावनेन सामर्थ्यस्य करणरूपतापक्षे प्रागुक्तं यत्साध्याविशेषरूपं दूषणं तन्नेति भावः। ईप्सितसाध्यसिद्धिरिति मूलम्, अस्य व्याख्यानमेककालेत्यादिसिद्धिरित्यन्तम्। एककालगर्भकार्यकारणभावरूपस्येति यत्कालावच्छेदेन मुख्यसमर्थव्यवहारगोचरत्वं तत्कालावच्छिन्नकार्यकारित्वस्येत्यर्थः। उक्तहेतोः कथं नोक्तसाध्यसिद्धिरित्याकाङ्क्षायामाह–समर्थव्यवहारगोचरस्यापीति, मुख्यसमर्थव्यवहारगोचरत्वमस्ति कुशूलस्थे बीजे न च तत्राङ्कुरकार्यकारित्वमिति मुख्यसमर्थव्यवहारगोचरत्वरूपापादके एककालगर्भकार्यकारित्वरूपापाद्यस्य व्यभिचारः, एवं कुशूलस्थबीजे विपर्ययानुमाने हेतुभूतस्य कारित्वाभावस्य सत्त्वेऽपि मुख्यसमर्थव्यवहारगोचरत्वाभावस्य साध्यस्याभावाद् व्यभिचार इति न प्रसङ्गस्य न वा विपर्ययानुमानस्य प्रवृत्तिरिति भावः। यद्यपि कुशूलस्थतादशायां बीजे समर्थव्यवहारो भवति तथापि नासौ मुख्य इति न व्यभिचार इति बौद्धाशङ्कामुखेन-श्लोकोत्तरार्द्धावतरणिकामाह—

नासौ मुख्यव्यवहारः, तस्य जननिमित्तत्वात्, अन्यथा जनकजातीयत्वस्य सहकारिविरहप्रयुक्त-
कार्याभाववत्त्वस्य वा निमित्तत्वे द्रव्यत्वादिना बीजजातीये शिलादौ समर्थव्यवहारस्य सहकारिसमवहिते
कुर्वत्यपि तदभावस्य वा प्रसङ्गादिति चेत् । स मुख्यसमर्थव्यवहारो, भूम्ना प्रायेण, जन्मविषयोऽपि, योग्यतो-
त्थो यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वविषयः, अस्ति चेदं कुर्वद्दशायामपि बीजे, ना-
स्ति च शिलादौ, सत्यपि सहकारिसाकल्ये तत्र कार्यानुत्पादेन स्वभावस्यैव तत्प्रयोजकत्वात् ॥

नासाविति, कथं नासौ मुख्यतया समर्थव्यवहार इत्यत आह—तस्येति मुख्यसमर्थव्यवहारस्येत्यर्थः । जननिमित्त-
त्वादिति, कार्याव्यवहितपूर्वक्षणावच्छिन्नकारित्वनिमित्तकत्वादित्यर्थः । तथा च निमित्तमन्तरेण नैमित्तिकस्य नावश्यं सत्त्वमि-
ति कुशूलस्थबीजे उक्तनिमित्ताभावेन तन्नैमित्तिकमुख्यसमर्थव्यवहारो नेति तत्रोक्तहेतोरप्यभावेन न व्यभिचार इति भावः ।
जनकवृत्तिजातिमत्त्वस्य निमित्तत्वाङ्गीकारपक्षे दोषमाह—द्रव्यत्वादिनेति, समर्थव्यवहारस्येति, अस्य प्रसङ्गादित्यनेनान्वयः ।
सहकारिविरहप्रयुक्तकार्यकारित्वाभाववत्त्वस्य निमित्तत्वमिति नैयायिकाभ्युपगतं द्वितीयपक्षं निरस्यति-सहकारिसमवहित इति
सहकारिविरहप्रयुक्तत्वरूपविशेषणाभावकारित्वाभावरूपविशेष्याभावोभयप्रयुक्तसहकारिविरहप्रयुक्तकार्यकारित्वाभावरूपविशिष्टाभा-
वात्मकनिमित्ताभावः कुर्वदवस्थे बीजे विद्यत इति तत्रापि जायमानस्य समर्थव्यवहारस्याभावप्रसङ्गस्स्यादिति भावः । तथा च
नैयायिकाभ्युपगते प्रथमपक्षेऽन्वयव्यभिचाराद्द्वितीयपक्षे च व्यतिरेकव्यभिचारादुक्तद्वयस्यापि मुख्यसमर्थव्यवहारनिमित्तत्वाभा-
वात्परिशेषात् फलोपधानरूपकारित्वस्यैव तन्निमित्तत्वं सिद्ध्यतीति यो मुख्यसमर्थव्यवहारगोचरस्स कार्यकारीत्याकारके प्रसङ्गे न

कोऽपि दोष इति पूर्वपक्षनिष्कर्षः। अस्तु जननिमित्तको मुख्यसमर्थव्यवहारः, मास्तु चोक्तदोषाज्जनकवृत्तिजातिमत्त्वनिमित्तकः सहकारिविरहप्रयुक्तकारित्वाभावनिमित्तकश्च, नन्वेवं तर्हि कुशूलस्थे बीजे कारित्वार्थकजननिमित्ताभावात् समर्थव्यवहारगोचरत्वाभावसिद्ध्या तद्विरुद्धसमर्थव्यवहारगोचरत्ववति क्षेत्रस्थबीजे कुशूलस्थबीजभेदसिद्धौ सुगतसुतानामभिमतसिद्धिरेव स्यादिति चेत्, स्यादेतद्यदि स फलोपधानरूपकारित्वनिमित्तकोऽभ्युपगतस्स्यात्, न चैवं,स्वरूपयोग्यतारूपकारित्वनिमित्तकत्वेनैवाभ्युपगमात्तस्य,सा च योग्यता जनकतावच्छेदकधर्मवत्त्वरूपैवेत्यभिप्रायेणोत्तरयति–स इति मूलम् अस्य व्याख्यानं मुख्यसमर्थव्यवहार इति, भूम्नेति अस्य च प्रायेणेति। जन्मविषयोऽपि जननिमित्तकोऽपि, योग्यताया जनकतावच्छेदकधर्मवत्त्वरूपत्वे कः स धर्म इत्याकाङ्क्षायामाह–यद्धर्मावच्छिन्नस्याकरणमिति, यद्धर्माश्रयस्येत्युक्तौ यत्पदेन द्रव्यत्वस्यापि धर्तुं शक्यतया तदाश्रयस्य बीजस्य कुशूलस्थतादशायां कारित्वाभावस्सहकारिविरहप्रयुक्तोऽस्तीति द्रव्यत्ववत्त्वमादाय शीलादावप्यङ्कुरसमर्थव्यवहारप्रसङ्गस्स्यादिति तन्निवृत्तये यद्धर्मावच्छिन्नस्येत्युक्तम्, अत्र यद्धर्मनिष्ठमवच्छेदकत्वं न स्वरूपसम्बन्धरूपं, किन्त्वनतिरिक्तवृत्तित्वरूपं, तच्च स्वव्यापकतत्कत्वं, तथा च यद्धर्मव्यापकस्सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्तद्धर्मवत्त्वनिमित्तको मुख्यसमर्थव्यवहार इति पर्यवसितार्थः, एवञ्च यत्पदेन द्रव्यत्वं न ग्रहीतुं शक्यं, शिलादौ द्रव्यत्वसत्त्वेऽपि तत्र निरुक्तकारित्वाभावस्यासत्त्वेन तद्व्यापकत्वासम्भवादिति तत्पदेन द्रव्यत्ववत्त्वमादाय नोक्तातिप्रसङ्गः, यद्धर्मपदेन बीजत्वं तु ग्रहीतुं शक्यते, बीजत्ववति कुशूलस्थे बीजे सहकारिविरहप्रयुक्तकारित्वाभावस्यैव क्षेत्रस्थबीजेऽपि पूर्वकालावच्छेदेन तस्य सत्त्वमिति बीजत्वं यस्मिन् यस्मिन् बीजे वर्त्तते तत्र सर्वत्रोक्तकारित्वाभावस्य सत्त्वेन तस्य तद्व्यापकत्वसम्भवादिति तद्धर्मपदग्राह्यस्य बीजत्वस्याकरणदशापन्ने बीजे सत्त्वेन

समर्थव्यवहारगोचरत्वस्य प्रसङ्गहेतुत्वखण्डनम् ।

तेन तत्र मुख्यसमर्थव्यवहारोपपादनसम्भवान्नाव्याप्तिः । सहकारिसमवहिते कुर्वत्यपि तदभावस्य प्रसङ्गादित्युक्तदोषोद्धारं दर्शयति--अस्ति चेदमिति अवच्छेदकधर्मस्य तदानीमपि सत्त्वादिति भावः । यद्धर्मावच्छिन्नेत्यनेन द्रव्यत्वादिना बीजजातीये शिलादौ समर्थव्यवहारस्य प्रसङ्गादित्युक्तदूषणमप्युद्धृतमिति दर्शयति--नास्ति च शिलादाविति, तदिति, कार्यानुत्पादेत्यर्थः । ननु बीजत्वावच्छिन्नस्याप्यकरणं न सहकारिविरहप्रयुक्तं, सहकारिसमवधानेऽपि कार्यानुत्पादेन बीजत्ववति भृष्टबीजे शिलादाविवाकरणस्य स्वतस्सिद्धत्वात् , तथा च तद्धर्मपदेन बीजत्वमादाय कुशूलस्थबीजे समर्थव्यवहारमुपपाद्य व्याप्त्यसिद्धिप्रदर्शनं न युक्तियुक्तम्, तद्धर्मपदेन बीजत्वस्यग्रहीतुमशक्यत्वादित्याशयेनाऽऽत्याशङ्कते—

**बीजमपि भृष्टं शिलासमानमिति चेत्, अभृष्टबीजत्वमेवास्तां तादृशो धर्मः, आसादयतु वा भर्जनाद्यभावोऽपि सहकारिभावं, यद्धर्मावच्छिन्नस्य सहकारिसाकल्येऽवश्यं करणं तद्विषयो वास्तु व्यवहारः ॥**

बीजमपीति, शिलासमानमिति, अत्र सादृश्यं स्वतस्सिद्धेनाङ्कुरकार्याजनकत्वेन बोध्यम्, तादृशो धर्म इति यादृशधर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तादृशो धर्म इत्यर्थः । तथा च निमित्तभूतस्याभृष्टबीजत्वस्यापि बीजत्वस्येव सहकारिविरहप्रयुक्ताङ्कुरकार्यानुपधायके कुशूलस्थबीजे सत्त्वेन तन्निमित्तकसमर्थव्यवहारविषयत्वहेतोस्तत्र सत्त्वेन तत्र सर्वदा करणस्य साध्यस्याभावेन व्यभिचाराद्व्याप्त्यसिद्धिप्रदर्शनं सयुक्तिकमेवेति भावः । बीजत्वेनाङ्कुरत्वेन कार्यकारणभावानुरोधेन बीजत्वमात्रस्यापि समर्थव्यवहारनिमित्ततामुपपादयति--आसादयतु वेति, तथा च बीजत्ववति भृष्टबीजे यदकरणं तदपि भर्जनाद्यभावरूपस्य सहकारिणो विरहप्रयुक्तमेवेति तत्र स्वतस्सिद्धकारित्वाभावाभावान्न शिलासमानत्वमिति भावः । योग्यतोत्थ इति मूलं

व्याख्यातुं लाघवात्पक्षान्तरमाह—यद्धर्मावच्छिन्नस्येति, अत्रापि यद्धर्मनिष्ठावच्छेदकत्वं स्वव्यापकतत्कत्वलक्षणानतिरिक्तवृत्तित्वरूपं, तथा च सहकारिसाकल्यविशिष्टयद्धर्मव्यापकं कारित्वं तद्धर्मनिमित्तकस्समर्थव्यवहार इति व्याप्यकुक्षौ सहकारिसाकल्ये इति पदं प्रक्षिप्य व्याख्येयम्, न तु यद्धर्मव्यापकं सहकारिसाकल्यविशिष्टं करणं तद्धर्मवत्त्वं समर्थव्यवहारनिमित्तमिति, बीजत्वस्य कुशूलस्थबीजे सत्त्वेऽपि तत्र सहकारिसाकल्यविशिष्टकारित्वाभावेन तयोर्व्याप्यव्यापकभावाभावात्। ननु व्यापकत्वस्थाने सामानाधिकरण्यप्रवेशे लाघवतर्कोऽस्तीति किमिति तद्घटितं तन्नोक्तमिति चेत्, तथा सति कारित्वस्य क्षेत्रस्थबीजादौ सहकारिसाकल्ये सति पृथिवीत्वद्रव्यत्वादेस्समानाधिकरणत्वाद् यद्धर्मपदेन पृथिवीत्वादेरपि ग्रहीतुं शक्यत्वेन तद्वति शिलादावङ्कुरसमर्थव्यवहारस्स्यात्। यो व्यवहारो यन्निमित्तकः स तद्विषयक इत्येव नियमः, यथा घटोऽयं घटोऽयमित्यनुगतव्यवहारो घटत्वनिमित्तकत्वाद्घटत्वविषयकः, बीजे मुख्यसमर्थव्यवहारश्च कारणतावच्छेदकीभूतबीजत्वनिमित्तक इति बीजत्वविषयकः, न तु स्वानिमित्तसर्वदाकारित्वविषयक इति न यो यदा यत्समर्थव्यवहारगोचरस्स तदा तत्करोत्येवेति नियमः, समर्थव्यवहारगोचरे करणाभाववति कुशूलस्थबीजे व्यभिचारादित्यभिप्रायेण चतुर्थचरणावतरणिकामाह—

न च तद्व्यवहारगोचरस्य सर्वदा करणेन व्याप्तिः, तादृशस्य बीजादेः सहकारिविरहितस्य करणविरहाद्व्यभिचारेण व्याप्त्यसिद्धेः, तदाह—व्याप्तिस्तु हेतौ सहकारिविशेषस्सहकारिविरहप्रयुक्तकार्याभावपरत्वं, तेन लभ्या कदाचित्करणविषयेत्यर्थः। तथा चोक्तव्यवहारहेतोरपि न साध्यसिद्धिरिति फलितम्। अथ भवतां पटादौ नीलव्यवहारस्य नीलं रूपमिव समर्थव्यवहारस्य शुद्धं जननं निमित्तं लाघवात्, अत एव

जनकतावच्छेदकरूपवत्त्वमपि परास्तमिति चेत्, अस्तु तावदेवं, तथापि निमित्तसत्त्वासत्त्वाभ्यामेव व्यवहारतदभावोपपत्तेरविरोधेन फलीभूतक्षणिकत्वसिद्ध्यभावात्, निमित्ततदभावयोः करणाकरणयोरेव विरोधस्य चाग्रे निरसनीयत्वादिति दीधितिकृतः ॥

न च तद्व्यवहारगोचरस्येति, तादृशस्येति, तद्व्यवहारगोचरस्येत्यर्थः । व्याप्त्यसिद्धेरिति, तथा च-मूलशैथिल्यान् मुख्यसमर्थव्यवहारविषयत्वापादकेनैककालगर्भकारित्वापादनं न सम्भवतीति भावः । हेतुसहकारिविशेषलभ्येति मूलं विग्रहप्रदर्शनमुखेन विवृणोति-हेताविति । कदाचित्करणविषयेत्यर्थ इति, यदा तदा विनिर्मोकेणोक्तसाध्यहेत्वोर्व्याप्तिरिति भावः । प्रात्यक्षिकज्ञानात्मकव्यवहारं प्रति व्यवहर्त्तव्यस्यापि विषयविधया कारणत्वाद् नैयायिकानां मतेऽयं नील इत्याकारकप्रत्यक्षात्मके व्यवहारे विशेषणविधया विषयीभूतं नीलरूपमिवेदमेतत्कार्यं प्रति समर्थमित्याकारकप्रत्यक्षरूपे समर्थव्यवहारे यावत्सत्त्वाद्यनन्तर्भावितं फलोपधानरूपं जननमेव निमित्तमिति न सर्वदा फलानुपधायकव्यक्तौ व्यभिचारः, अत एव नोक्तव्याप्त्यसिद्धिरित्याशङ्कते-अथेति, शङ्कितुर्बौद्धस्य स्वमते नीलस्य सर्वदैव नीलत्वाद्यावत्सत्त्वमन्तर्भाव्यापि व्यवहारोपगमस्सम्भवतीति भवतामित्युक्तम्, भवतां नैयायिकानाम्, न च तत्र पटादिरेव निमित्तं, तस्य पाकेन नीलरूपनाशानन्तरं रक्ततादशायामपि सत्त्वेन तदानीमप्ययं नील इति व्यवहारापत्तेः । नीलं रूपमिवेति, शुद्धस्यैव निमित्ततायां दृष्टान्तः । जननं निमित्तमिति, फलोपधानरूपकारित्वमेव निमित्तं, न तु यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वपर्यवसायिस्वरूपयोग्यतारूपकारित्वं, गौरवादिति भावः । ननु किमित्युच्यते-स्वरूपयोग्यतारूपकारित्वनिमित्तकत्वे समर्थव्यवहारस्य गौरवं स्यादिति,

यत उक्तकारित्वं जनकतावच्छेदकधर्मरूपं, धर्मे च जनकतावच्छेदकत्वं परिचायकमात्रं, धर्मश्च प्रकृते बीजत्वमेव,तच्च जातिरूपत्वाद्-
खण्डरूपमिति तस्य निमित्तत्वे फलाव्यवहितप्राक्कालसम्बन्धलक्षणफलोपधानरूपकारित्वस्य सखण्डोपाधेर्गुरुशरीरस्यापेक्षया
शरीरकृतलाघवं सुस्पष्टमेवेत्याशङ्कायामाह—अत एवेति, उपस्थितिकृतलाघवादेव, शुद्धजननापेक्षया गौरवादेव चेत्यर्थः , अस्य
परास्तमित्यनेनान्वयः · जनकतावच्छेदकधर्मस्याखण्डस्य शरीरकृतलघुत्वेऽपीदमस्मिन् कार्ये समर्थमिति प्रत्यक्षव्यवहारस्सामर्थ्यांशे-
ऽलौकिकप्रत्यक्षात्मेति पूर्वं कारित्वस्योपस्थितिं विना स नेति तद्ध्रौव्येण तदन्यस्य तस्योपस्थितिगौरवं स्यादेव, शब्दव्यवहारः
प्रत्येकपदार्थोपस्थितिं विना नेति शब्दव्यवहाररूपत्वेऽपि तस्य विषयतया प्रविष्टस्य कारित्वस्य पूर्वमुपस्थितिं विना स नेति तस्या
अवश्यं मन्तव्यत्वेन कारित्वान्यस्य तस्याखण्डधर्मस्योपस्थितौ गौरवं स्यादेवेति भावः । समाधत्ते—अस्तु तावदेवमिति, अत्रा-
स्त्विति विवादप्रदर्शनायोक्तं, स चैवम्—जनकतावच्छेदकीभूतबीजत्वादेस्समर्थव्यवहारनिमित्तत्वाश्रयणे कृत एव नोपस्थितिगौरवं,
तन्मात्रस्यैवोपस्थित्यङ्गीकारात्, सामर्थ्यस्य जनकतावच्छेदकबीजत्वादिधर्मरूपत्वेन तदतिरिक्तसखण्डकारित्वरूपत्वाभावात्; फलोप-
धानरूपकारित्वस्य तन्निमित्तत्वाश्रयणे तु शरीरकृतगौरवमिवोपस्थितिकृतगौरवमपि स्यादेव, तन्मते कारित्वज्ञानस्येव तदतिरिक्त-
बीजत्वादिज्ञानस्याप्यावश्यकत्वात् , फलोपधानरूपं कारित्वं नाखण्डधर्मः, किन्तु सखण्डधर्मः,फलाव्यवहितप्राक्कालसम्बन्धरूपत्वा-
त्तस्य, तस्य च किञ्चिद्धर्माविच्छिन्नत्वेन तज्ज्ञानस्य बीजत्वादिलक्षणावच्छेदकज्ञानसापेक्षत्वात्, वाक्यरचनां प्रति वाक्यार्थज्ञानस्य
कारणत्वमिति नियमात् शब्दात्मकव्यवहारो व्यवहर्त्तव्यज्ञानपूर्वक एवेति मुख्यसमर्थव्यवहारस्य शब्दात्मकत्वपक्षेऽपि तं प्रत्यपेक्षणी-
यस्य व्यवहर्त्तव्यफलोपधानरूपकारित्वज्ञानस्य बीजत्वाद्यात्मकावच्छेदकज्ञानं विनानुपपद्यमानत्वेन तज्ज्ञानसापेक्षत्वादिति । तथापि

"निमित्तसत्त्वासत्त्वाभ्यामेवेत्यादि,फलोपधानरूपजननस्य समर्थव्यवहारं प्रति विषयविधया निमित्तत्वेऽपि तेन न फलीभूतक्षणिकत्वसिद्धिः, सामग्री वै जनिकेति वचनान्न किमपि कार्यं केनाप्येकेन जन्यते किन्तु सामग्र्येति तत्समवधानासमवधानरूपकालभेदेन फलोपधानरूपजननाऽजननाभ्यामेव समर्थव्यवहारतदभावयोरेकस्मिन् धर्मिणि सत्त्वोपपत्तेरेकनिमित्तेनैकाधिकरणावृत्तित्वरूपविरोधाव्याघातकत्वेन भेदासाधकत्वात् । एतेन करणाकरणलक्षणयोर्निमित्ततदभावयोर्विरोधात्तन्निमित्तकसमर्थव्यवहारगोचरत्वतदभावयोरपि विरोध एवेत्यपि निरस्तम्, तद्विरोधस्यानुपदमेव निरस्यत्वादिति शिरोमणेरभिप्रायः । "उत्पत्तिर्जन्मजनुषी, जननं जनिरुद्भव" इति वचनाज्जननशब्दस्योत्पत्तावेव रूढेशक्यार्थस्योत्पत्तिरूपस्य निमित्तत्वे बाधमनुपन्यस्य लाक्षणिकार्थस्य फलोपधानकारित्वस्य निमित्तत्वमभ्युपगम्य तत्सत्त्वासत्त्वाभ्यां समर्थव्यवहारतदभावोपपादनं न युक्तियुक्तमित्यस्वरसेन ग्रन्थकारस्स्वमतमाह—

**वयं तु ब्रूमः, शुद्धजननिमित्तकः समर्थव्यवहारो नीलव्यवहारदृष्टान्तेनाध्यक्षमूलकविकल्परूपो वाच्यः, स च नैयायिकमते उत्पत्तेरतीन्द्रियत्वेनासिद्धो, बौद्धमतेऽप्यपि बीजस्वलक्षणोत्पत्तितदध्यक्षाङ्कुरस्वलक्षणोत्पत्तितदध्यक्षतत्सम्बन्धस्मरणादिव्यवधानेन तथेत्यापादकासिद्धिः, परम्परयाऽध्यक्षमूलविकल्परूपव्यवहारस्त्वकरणदशायामपीति व्याप्त्यसिद्धेः प्रशिथिलमूलत्वमिति नोक्तव्यवहारस्य प्रसञ्जकत्वमिति ॥**

वयं त्विति, शुद्धजननिमित्तक इति, विषयतयोत्पत्तिमात्रनिमित्तक इत्यर्थः । समर्थव्यवहार इति । यद्यपि प्रवृत्तिनिवृत्युपेक्षा अपि व्यवहाराः, तथापि तेषामुपादानादिरूपाणां फलात्मनां न समर्थ इत्याकारकत्वं किन्तु शब्दज्ञानयोरेव तथात्वम्, त-

त्राद्यस्य मुख्यवृत्त्या सविकल्परूपत्वाभावेऽपि वाक्यरचनां प्रति वाक्यार्थज्ञानस्य कारणत्वमिति सामान्यनियमबलेन कारणीभूतस्य व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य सविकल्परूपत्वेन तद्रूपकारणोपचारात्तस्मिन् कार्यभूते औपचारिकं सविकल्पज्ञानरूपत्वं ज्ञेयम्, अथवा कारणीभूतस्य सविकल्पज्ञानस्य शुद्धजननिमित्तकत्वप्रतिक्षेपे तत्कार्यस्य शब्दस्यापि तत्त्वं प्रतिक्षिप्तमेवेत्युपचारानाश्रयणेऽपि न न्यूनत्वमिति बोध्यम्, दृष्टान्तभूतोऽपि नीलव्यवहारः सविकल्परूप एव, निर्विकल्पस्य प्रकारताशून्यत्वेन व्यवहारपथानवतीर्णत्वात्, इदं नीलमिदं पीतमित्यादिरूपेण सप्रकारकतयैवोल्लेखात्, तदपि सविकल्पज्ञानं प्रत्यक्षरूपमेव, प्रत्यक्षज्ञानस्यैव नियमेन पुरोवर्त्तिवाचकेदमादिशब्दोल्लिख्यमानाकारतया व्यवह्रियमाणत्वात्, अत एव प्रत्यक्षमेवैकं प्रमाणमिति मन्वानश्चार्वाकः प्रत्यक्षप्रमाणात्मकव्यवहारं पुरस्कृत्य प्रवर्त्तकत्वेन व्यावहारिक इति गीयते, नीलव्यवहारस्येवोक्तनीत्या समर्थव्यवहारस्यापि सविकल्पप्रत्यक्षरूपत्वे सिद्धे विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणमिति नियमात् विशेषणज्ञानात्मकनिर्विकल्पाध्यक्षपूर्वकस्स तद्वद्वाच्यः, तथा च समर्थव्यवहारस्य जननिमित्तकत्वे जननस्योत्पत्तिपर्यायत्वादुत्पत्तिविषयकत्वं स्यात्, तेन किमिति चेत् आद्यक्षणसम्बन्धरूपाया उत्पत्तेरतीन्द्रियक्षणघटितत्वेनातीन्द्रियत्वान्न्यायमते तद्विषयकनिर्विकल्पाध्यक्षासम्भवेन तद्विषयकसविकल्पाध्यक्षात्मकव्यवहारस्याप्यसम्भव एव स्यादित्याशयः, बौद्धमते परैरतीन्द्रियतयाभ्युपगतस्यापि पदार्थस्याध्यक्षाभ्युपगमात् स्वर्गप्रापणशक्त्यादेरिवोत्पत्तेरपि निर्विकल्पाध्यक्षसम्भवात्प्रकारान्तरेण समर्थव्यवहाराऽसम्भवमुपपाद्य प्रसङ्गाप्रवृत्तिमाह-बौद्धमतेष्वपीति, यावन्न कार्यकारणरूपधर्मिद्वयज्ञानं तावन्नेदं कारणमस्मिन् कार्ये समर्थमिति सविकल्पात्मकसमर्थव्यवहार इति प्रथमं धर्मिद्वयज्ञानमावश्यकं, तत्राध्यक्षस्य विषयजन्यत्वेन प्रथमं बीजस्वलक्षणरूपकारणोत्पत्तिस्तदनन्तरं तदाकारं निर्विकल्पाख्यं तदध्यक्षं, अत्रान्तरा निर्विकल्पाभ्युपगमो न

विशेषणज्ञानविषया, वासनाबलेनापि सविकल्पज्ञानाभ्युपगन्तॄणां बौद्धानां मते विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणमिति नियमानभ्युपगमात्, किन्तु कारणोत्पत्तिविषयकनिर्विकल्पानभ्युपगमे वासनाप्रभवस्य तत्सविकल्पज्ञानस्याप्रामाण्यं स्यात्, सविकल्पज्ञानस्य निर्विकल्प्यसविकल्प्यैकत्वाध्यवसायबलादेव प्रामाण्याभ्युपगमात् ,तादृशैकत्वाध्यवसायश्च निर्विकल्पसविकल्पयोरव्यवहितपूर्वापरीभाव एव घटते , तथा च तस्याप्रामाण्यशालिनस्सविकल्पज्ञानस्य मुख्यसमर्थव्यवहारजनकत्वमपि न स्यादिति कारणोत्पत्तिविषयकनिर्विकल्पज्ञानमावश्यकं, तदनन्तरं तेन तत्सविकल्पज्ञानमिति क्षणत्रयेण कारणोत्पत्तिज्ञानं, कार्योत्पत्तिज्ञानमपि तथैव तावता कालेन,तथाहि प्रथममङ्कुरस्वलक्षणोत्पत्तिस्ततस्तदध्यक्षं ततस्तत्सविकल्पज्ञानमिति, तदनन्तरं कार्यकारणभावसम्बन्धस्मरणेनेदं कारणमस्मिन् कार्ये समर्थमिति मुख्यसमर्थव्यवहारस्स्यात्, न चासौ युक्तः,तत्पूर्वं कारणोत्पत्तेः कार्योत्पत्तेश्च निमित्तीभूताया अनेकक्षणान्तरितत्वेनाभावात् ,तथा च जननिमित्तकसमर्थव्यवहारविषयत्वरूपापादकासिद्धेः कथं तेन कारित्वरूपापाद्यप्रसङ्गः, यदि चोत्पत्तेरध्यक्षं ततश्च तत्सविकल्पमिति कृत्वा परम्परयोत्पत्तिजन्यत्वादकरणदशायामप्युत्तरकाले जायमानस्य समर्थव्यवहारस्य जननिमित्ततामभ्युपेत्यापादकप्रसिद्धिः क्रियते, तदा तस्यापादकस्य नाभिमतकारित्वरूपापाद्येन समं व्याप्तिः, आपादकस्योत्तरकालावच्छेदेन सत्त्वमापाद्यस्य च पूर्वकालावच्छेदेनेति तयोरेककालावच्छेदेन सामानाधिकरण्याभावात्, तथा च मूलशैथिल्यान्न प्रसङ्गः प्रवर्त्तते इति भावः । ननु यद्यदा कारिपदबोध्यं तत्तदा करोत्येव, यथा सहकारिमध्यमध्यासीनं बीजं, कारिपदबोध्यं च कुशूलस्थं बीजमिति प्रसङ्गः, यद्यदा न करोति न तत्तदा कारिपदबोध्यं, यथा यावत्सत्त्वमङ्कुराकारिशिलाशकलं,न करोति च कुशूलस्थतादशायां बीजमिति विपर्ययः,अनेन समसङ्गविपर्ययेण कारिपदबोध्यत्वाभावस्सिद्धः कारिपदबोध्यत्वं त्वभ्युपगतमेव नैया-

यिकैरिति कारिपदबोध्यत्वतदभावरूपविरुद्धधर्माध्याससिद्धौ भेदसिद्ध्या क्षणिकत्वसिद्धिर्भविष्यतीत्यत आह—

**एतेन कारिपदबोध्यत्वेन करणप्रसञ्जनं करणविरहेण च कारिपदबोध्यत्वाभावसाधनमपि व्याख्यातम्**
**॥ ७ ॥** स्यादेतत् समर्थव्यवहारगोचरत्वस्य सहैव करणेन न व्याप्तिसिद्धिरितीयता व्याप्त्यसिद्धिप्रतिपादन-
मात्रेण भावस्याक्षेपकारिस्वभावत्वं क्षेपकारिस्वभावत्वं वा न निरूपितं, प्रकारान्तरं त्वसम्भावितमेवातो-
ऽन्यतरस्वभावत्वं निरूपणीयम् , अत्रोच्यते—

एतेनेति, व्याख्यातमित्यनेनान्वयः, एतेनेदङ्कारिपदबोध्यमितिकारिव्यवहारतदभावयोरपि तन्निमित्तीभूतकरण-
तदभावयोर्विरोधस्य निराकार्यतया अविरोधेन, आपादकासिद्धिव्याप्त्यसिद्ध्यन्यतरदोषेण वा, पदवाच्यत्वव्यवहारः पदशक्यत्व-
मपि कदाचित्प्रवृत्तिनिमित्तसत्त्वेनोपपद्यमानं स्वाधिकरणकालान्तरे न प्रवृत्तिनिमित्तप्रसञ्जकं व्यभिचारित्वादित्यवधेयम्, अयं
भावः कारिपदजन्यबोधविषयोऽयमित्यत्रापि स्वरूपयोग्यतारूपकारित्वमेव नियामकं, न तु फलोपधानरूपकारित्वं, येनोक्तप्रसङ्गवि-
पर्ययप्रवृत्तिस्स्यात् । किञ्च फलोपधानरूपकारित्वस्य नियामकत्वेऽपि तन्निमित्तसत्त्वासत्त्वप्रयुक्ततत्सत्त्वासत्त्वाभ्यां कारिपदजन्यबोध-
तदभावोपपत्तेस्तयोर्विरोधाभावाद्भेदसाधकत्वासम्भवेन न क्षणिकत्वसिद्धिः । समर्थव्यवहार इव कारिपदबोध्यत्वेऽप्युपपत्तेर्निया-
मकत्वं न सम्भवत्येव, तथा हि तस्याः साक्षात् किं वा परम्परया नियामकत्वमुच्यते,नाद्यः, कारिपदार्थस्य कार्यकारणोत्पत्तिसाका-
ङ्क्षत्वात् कारणीभूतस्वलक्षणोत्पत्तिः ततस्तन्निर्विकल्पकं कार्यभूतस्वलक्षणोत्पत्तिश्च ततः कारणस्वलक्षणसविकल्पकं कार्यस्वलक्षणनि-
र्विकल्पकं कारिपदोत्पत्तिश्च ततः कार्यस्वलक्षणसविकल्प कारिपदनिर्विकल्पकं च ततश्च कारिपदसविकल्पकं ततः कार्यादिपदतत्पदा-

र्थशक्तिग्रहः ततः कारिपदार्थोपस्थितिद्वारा तेन च शब्दबोध इत्यमेवमनेकक्षणैः कारिपदबोध्यत्वघटकस्य बोधस्य व्यवधानात्तस्य साक्षात्कारिपदजन्यत्वासम्भवेनोत्पत्तिनिमित्तककारिपदबोध्यत्वरूपापादकासिद्धेर्न ततः कारित्वरूपापाद्यप्रसञ्जनं, यदि च व्यवधानेऽपि परम्परयोत्पत्तिजन्यत्वात्तस्य तन्निमित्तत्वमिष्यते इत्यर्थको द्वितीयपक्षोऽङ्गीक्रियते, सोऽपि न युक्तः, तथा सति पूर्वकालावच्छेदेन तदुत्पत्तिरूपनिमित्तस्य सत्त्वं नैमित्तिकस्य च कारिपदबोध्यत्वस्योत्तरकालावच्छेदेन सत्त्वमङ्गीकृतं स्यात्, तथा च सति नैककालगर्भाया व्याप्तेस्सिद्धिरिति मूलशैथिल्यान्न प्रसङ्ग इति ॥७॥ अक्षेपकारित्वान्यथानुपपत्त्या क्षणिकत्वं सेत्स्यतीत्यभिमानिनो बौद्धस्य भावस्वाभाव्यप्रश्नमुखेनाष्टमश्लोकावतरणिकामाह—स्यादेतदिति, प्रकारान्तरं त्वसम्भावितमेवेति ययोः परस्परविरहरूपतारूपविरोधस्तयोरेकतराभावे तदन्यतरसत्त्वस्यैव नियमात् क्षेपकारित्वाक्षेपकारित्वयोः परस्परविरहलक्षणविरोधे ताभ्यामतिरिक्तः प्रकारो न सम्भवत्येवेति भावः ॥

एतावतैव हि परप्रकृतप्रसङ्ग—भङ्गेन सिद्ध्यति कथाश्रितपूर्वरूपम् ।
शिष्यैर्विधेयमुचितं विशदस्वभाव—प्रश्नोत्तरं तु तव देव नयप्रमाणैः ॥ ८ ॥

परपक्षदूषणस्वपक्षसाधनाभ्यां द्विरूपा हि कथा, तत्र एतावतैव स्वभावविशेषनिश्चयाभावेऽपि परोक्तव्याप्तेः सन्दिग्धासिद्धिनिर्वाहेणैव, परस्य बौद्धस्य प्रकृतो यः प्रसङ्गो यद् यदा समर्थव्यवहारगोचरस्तत्तदा करोत्येवेत्यादिस्तस्य भङ्गेन दुष्टत्वप्रदर्शनेन, हि निश्चितं, कथाश्रितं पूर्वरूपं प्रतिपक्षदूषणरूपं सिद्ध्यति ॥

हीति निश्चितं,कथाश्रितपूर्वरूपं सिद्धयति—तत्र हेतुमाह—परप्रकृतेति,सोऽपि कथमित्यत आह एतावतैवेति, तुशब्दस्यै-वकारार्थत्वात्तस्य चोचितमित्यनन्तरमन्वयः,तथा च हे देव! विशदस्वभावप्रश्नोत्तरमुचितमेव विधेयम्,कैः तव शिष्यैः,कैः कृत्वेत्यत आह—नयप्रमाणैरिति, इति श्लोकान्वयः । एतावतैवेत्यादिश्लोकपूर्वार्द्धं सङ्गमयति—परपक्षदूषणस्वपक्षसाधनाभ्यां द्विरूपा हि कथेति, कथा हि वादजल्पवितण्डाभेदेन त्रिविधा, तत्र वादिप्रतिवादिनोस्स्वस्वतत्त्वाभिज्ञत्वेन तत्त्वबुभुत्सयाऽनारम्भणीयत्वात् जयं परमतखण्डनस्वमतस्थापनफलमुद्दिश्यारम्भणीयत्वाच्च नायं ग्रन्थो वादकथात्मा, स्वमतस्थापनाशालित्वादेव च नापि वितण्डाकथात्मा, किन्तु जल्पकथात्मा, जल्पकथा च जयार्थं परमतनिराकरणपूर्वकस्वमतस्थापनयुक्तिप्रतिपादकवचनसन्दर्भलक्षणेति सा परपक्षखण्डनरूपपूर्वाङ्गप्रकृतस्थैर्यात्मकस्वपक्षस्थापनरूपोत्तराङ्गभेदेन द्व्यवयवेत्याशयः । तत्रेति उक्तरूपायां कथायामित्यर्थः । एतावतैवेति मूलप्रतीकं,स्वभावेत्यादिनिर्वाहेणैवेत्यन्तं तद्विवरणम्, स्वभावविशेषेति क्षेपकारिस्वभावाऽक्षेपकारिस्वभावान्यतरेत्यर्थः । परोक्तव्याप्तेरिति यद्यदा समर्थव्यवहारगोचरस्तत्तदा करोत्येवेत्याकारिकाया यद्यदा कारिपदबोध्यं तत्तदा करोत्येवेत्याकारिकायाश्च बौद्धोक्ताया व्याप्तेरित्यर्थः । परप्रकृतेत्यादेर्व्याख्यामाह—परस्य बौद्धस्येत्यादिना. तदा करोत्येवेत्यादिरित्यत्र कारिपदबोध्यत्वरूपापादकेन कारित्वरूपापाद्यप्रसङ्गग्रहणार्थमादिपदमुपात्तम्, भङ्गेनेति अस्य लाक्षणिकार्थमाह—दुष्टत्वप्रदर्शनेनेति। ननु शक्यार्थपरित्यागे किं बीजमिति चेत्, विप्रतिपत्तौ सत्यां यत्प्रसङ्गोपदर्शनं प्रतिवादिना वादिनं प्रति क्रियते तच्छब्दात्मकमेव, शब्दस्त्वाकाशगुणः न च तद्विनाशने वादी प्रयतते, योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिविशेषगुणनाश्यत्वनियमेनाद्यादीनामुपान्त्यान्तानां शब्दानां स्वोत्तरवर्त्तिशब्दैरेव नाशात् अन्त्यशब्दस्य च स्वोपान्त्यशब्देनैव नाशात् किन्तु

तत्प्रतिपाद्यार्थगतदूषणोद्भावनेन तद्दुष्टत्वप्रदर्शन इति ॥

तदुद्धारासमर्थे च प्रतिवादिनि तूष्णींभावेन निग्रहस्थानं प्राप्ते वादी लब्धविजयः क इवाधिकोदीरणेनात्मानमायासयेत् । यदि चात्र को विशदो निश्चितः स्वभाव इति सुहृद्भावेन परस्य प्रश्नः, तदा कथोत्तररूपसमर्थनस्य न लब्धावकाशत्वादेव तव शिष्यैः नयप्रमाणार्थजिज्ञासानुरोधेन नयप्रमाणैः कृत्वोचितमेवोत्तरं विधेयम् । प्रश्नोत्तरं त्वित्यत्र तुरेवकारार्थो भिन्नक्रमश्च, स च यथास्थानं योजित एव, एवं हि कथाया उत्तररूपसिद्धिः ॥

तदुद्धारासमर्थे इति, स्वपक्षे वाद्युक्तदूषणे दूषकत्वाभावप्रयोजकतदाभासत्वनिरूपणासमर्थे इत्यर्थः, प्रतिवादिनि बौद्धे, ननु बौद्धस्यात्र प्रतिवादित्वकथनमनुचितमेव पूर्वमृजुसूत्रनयपरिशोधकत्वान्यथानुपपत्त्या वादितयैवाभिधानेन सन्दर्भविरोधापत्तेरिति चेत्, न यस्मिन् काले यस्य स्वपक्षस्थापकत्वं तस्य वादित्वं, यस्य च परपक्षदूषकत्वं तस्य प्रतिवादित्वमिति वादित्वं प्रतिवादित्वं च न नियतम्, तथा च पूर्वं घटदृष्टान्ते सत्त्वक्षणिकत्वयोर्व्याप्तिमुपदर्श्य सत्त्वहेतुना क्षणिकत्वानुमानेन क्षणिकत्वस्य स्वपक्षस्य साधनाद्बौद्धस्य वादित्वेऽप्यिदानीं कश्चित् वादीकृत्य प्रवृत्ताभ्यां प्रसङ्गविपर्ययाभ्यां सामर्थ्यतदभावसाधनेन तद्रूपविरुद्धधर्माध्यासाद्बीजादीनां भेदसाधनेन स्थैर्यात्मकपरपक्षदूषकत्वात्तस्य प्रतिवादित्वं नैयायिकस्य च धरणिस्थतादशायामिव कुशूलस्थतादशायामपि बीजे सामर्थ्याभ्युपगमेन स्थैर्यपक्षस्थापकत्वेन वादित्वं युक्तियुक्तमिति पूर्वापरग्रन्थयोर्भिन्नाभिप्रायकत्वेन सन्दर्भविरोधाभावादिति दिक्, निग्रहस्थानं प्राप्ते इति, वादी परपक्षं प्रामाणिकेनाऽप्रामाणिकेन वा दूषणेन यदा दूषयेत्तदानीं लब्धावसरत्वेन प्रतिवादिना स्वपक्षदार्ढ्यार्थं प्रामाणिकदूषणस्याप्यापाततोऽ-

प्रामाणिकत्वव्यवस्थापनेन प्रस्तुतविषये सम्भवाभावप्रतिपादनेन वा प्रस्तुतविषये सम्भविनो वा विषयान्तरसञ्चारेण अप्रामाणिकस्य चाप्रामाणिकत्वव्यवस्थापनेन यथाकञ्चित्प्रकारेण ध्यान्ध्यकरणेन वा तद्दूषणं दूषयितव्यमिति जानतापि तेन बौद्धेन स्वबुद्धेस्स्फुरणाभावेन प्रस्तुते वादिभूतनैयायिकोक्तदूषणानि न दूषितानीत्युत्तरार्हं परोक्तं बुद्ध्याप्युत्तरस्याप्रतिपत्तिलक्षणाप्रतिभानिग्रहस्थाननिगृहीते सतीत्यर्थः। उत्तरार्द्धं सङ्गमयति—यदि चेति,अत्रेति क्षेपकारित्वाक्षेपकारित्वस्वभावयोर्मध्ये इत्यर्थः,परस्य बौद्धस्य, कथोत्तररूपसमर्थनस्येति, कथायां परमतनिराकरणपूर्वकस्वमतव्यवस्थापनलक्षणजल्परूपायां यदुत्तररूपं प्रकृते स्थैर्यात्मकस्वमतस्थापनात्मकं तस्य यत्समर्थनं तस्येत्यर्थः। यत्र सुहृद्भावेन वादिनः प्रश्नस्तत्र जिज्ञासैव हेतुर्नतु जयादिसमीहा, सा च जिज्ञासा प्रकृते क्षेपकारित्वाक्षेपकारित्वयोर्मध्ये यद्विषयको नयाभ्युपगमः प्रमाणाभ्युपगमश्च तद्विषयको निर्णयो मे जायतामित्याकारिका नयेन प्रमाणेन च तत्तद्धर्मनिर्णयमन्तरेण नोपशाम्यति, तत्तद्धर्मनिर्णयश्च यो नयः क्षेपकारित्वमङ्गीकुरुते यश्चाक्षेपकारित्वं तत्तन्नयेन तत्तद्धर्मप्रतिपादनेन स्यात्, सोऽप्यंशत एव स्यात्,स्याद्वादैकवाक्यतारहिताः प्रत्येकनया वस्तुनो यावन्तोऽनन्ता अंशास्तान् सर्वान् नाभ्युपगच्छन्ति,किन्त्वेकैकांशान्,अत एव,नयानां वचस्तुल्यसङ्ख्यकानामपरिमितत्वेन परसमयानां तत्त्वम्, अभिनिवेशान्वितनयत्वस्यैव परसमयलक्षणत्वात्, तदुक्तं“जावइया वयणवाया तावइया चेव नयवाया। जावइया नयवाया तावइया चेव वयणपहा॥१॥”

इति,नयानां सप्तत्वविधानं तु स्थूलविवक्षाबलात्,इति तेषां निखिलनयानामंशरूपत्वात्, सम्पूर्णरूपस्तु सः क्षेपकारित्वाक्षेपकारित्वयोस्सापेक्षभावेनाविरोधिनोर्व्यस्तयोस्समस्तयोश्च कालभेदाभेदप्रकारेण प्रधानगौणभावेन च विवक्षामापन्नयोस्सप्तविधत्वस्यैव सम्भवेन प्रमाणेन तत्प्रतिपादनेन स्यादिति यथा जिज्ञासा तथा नयैः प्रमाणेन च यथार्हमेवोत्तरं देयमित्याशयेनाह—नयप्रमाणा-

र्थेत्यादि । नयप्रमाणार्थजिज्ञासानुरोधेनेति,अनन्तांशावलीढे वस्तुनि तदितरांशौदासीन्येन प्रत्येकतत्तदंशावधारणलक्षणानां नयानां नित्यानित्याद्यनन्तसमतिपक्षधर्मसबलवस्तुस्वरूपपरिच्छित्तिलक्षणस्य प्रमाणस्य च यावर्थौ वस्त्वंशतत्स्वरूपे तयोर्या जिज्ञासा ज्ञातुमिच्छा नयप्रमाणविषयविषयकं ज्ञानं मे जायतामित्याकारिका तदनुरोधेन तदुपष्टम्भेनेत्यर्थः । यथास्थानमिति,उचितमित्यनन्तरमिति भावः । बीजादिपदार्थः किं क्षेपेण कार्यकारित्वस्वभावः उताक्षेपेणेति वौद्धेन गोष्ठीभावेन प्रश्ने कृते सत्युभयस्वभावयोर्निमित्तापेक्षयोरविरोधात्तद्रूपात्मा बीजादिभाव इत्यभिप्रायवान् ग्रन्थकारो नयप्रमाणैः कृत्वोचितमेवोत्तरं विधेयमिति स्वप्रतिज्ञां प्रतिपालयन् नयेनोत्तरमाह—

तथाहि–करणं प्रत्यविलम्ब इति कोऽर्थः, किमुत्पत्तेरनन्तरमेव सर्वस्य करणं सहकारिसमवधानानन्तरमेव वा । अथ विलम्ब इत्यपि कोऽर्थः किं यावन्न सहकारिसमवधानं तावदकरणं,सर्वथैवाकरणमिति वा । तत्र प्रथमचतुर्थयोः प्रमाणाभावादनिश्चयेऽपि द्वितीयतृतीययोः प्रत्यक्षमेव प्रमाणं, बीजजातीयस्य सहकारिसमवधानानन्तरमेव करणं करणमेवेति प्रत्यक्षसिद्धमेव, तथा सहकारिसमवधानरहितस्याकरणमित्यपि, अत्र च परोऽपि न विप्रतिपद्यत एव, प्रमाणसिद्धत्वाद्विपर्यये बाधकाच्च ॥

तथाहीत्यादिना, एतेन प्रमाणनयैरधिगमः प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते इत्यादौ यथा प्रमाणस्याभ्यर्हितत्वेन लक्षणहेत्वोरित्यादिवत् अल्पाच् तरादपि नयशब्दात्प्रागुपादानस्य पूर्वमहर्षिभिरादृतत्वेनात्र छन्दोभङ्गभीत्या नयप्रमाणैरित्येवमुपन्यासे ग्रन्थकर्तुर्महाननुपयोगदोष उपनिपतेदित्यारेकापि निरस्ता, यथा तत्र तत्र ग्रन्थे प्रमाणस्य प्राग्वर्णनं कृतं तथाऽ-

त्रापि प्रमाणेन पूर्वमेवोत्तरदानं स्यात्, तथा सति वस्तुनस्सर्वांशे परिच्छित्तिजनकस्य प्रमाणवाक्यस्य सम्पूर्णोत्तररूपत्वात् प्रतिवादिनो जिज्ञासोपशान्तेर्नैयवाक्यस्य निराकाङ्क्षतया तेनोत्तराभिधानस्यासङ्गतत्वापत्तेरिदं शास्त्रमुन्मत्तवाक्यवदुपेक्षणीयं स्यादिति । क्षेपकारित्वाक्षेपकारित्वयोः पूर्वं प्रक्रान्तत्वेऽपि तत्राद्यस्य विलम्बेन कार्यकरणरूपत्वाद् द्वितीयस्य चाविलम्बेन कार्यकरणरूपत्वात्तद्रूपार्थपर्यालोचनया विलम्बाविलम्बौ प्रश्नविषयीकरोति करणं प्रत्यविलम्ब इतीत्यादिना, किमुत्पत्तेरिति, किं कारणमात्रस्य स्वोत्पत्त्यव्यवहितोत्तरकाल एव स्वजन्यनिखिलकार्यकारित्वमित्यर्थः । सहकारिसमवधानानन्तरमेवेति, यावतां स्वेतरकारणानां समवधान एव यत्कार्योत्पत्तिस्तावत्कारणकूटाव्यवहितोत्तरसमयावच्छेदेनैव तत्कार्यकारित्वमित्यर्थः, अक्षेपकारिस्वभावत्वे विकल्पद्वयं कृत्वा क्षेपकारिस्वभावत्वे विकल्पद्वयमाह-अथ विलम्ब इत्यपीति, यावन्नेति, अनेन सहकारिविरहस्य प्रयोजकत्वसूचनादिदं सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्वभाव एव पर्यवस्यतीति तत्त्वं, सर्वथैवेति सहकारिसमवधानं भवतु मा वा तथापि स्वभावत एव भावमात्रस्य कार्यकारित्वसामान्याभाव इत्यर्थः, प्रथमेति, शब्दादेः कस्यचित्पदार्थस्योत्पत्तेरनन्तरमेव शब्दादिकार्यकारित्वेऽपि भावमात्रस्य नोत्पत्त्यनन्तरमेव कार्यकारित्वस्वभावः, तस्य तत्कालीनसहकारिसाकल्यनिबन्धनत्वात्, तत्कालावच्छेदेन सहकारिसाकल्यस्य च सर्वत्राभावात्, तथा च नासौ तावता भावस्वभाव इति भावः । चतुर्थेति, भावमात्रस्य सामग्रीसमवधाने कार्यकारित्वस्यानुभवसिद्धतया सर्वथैवाकरणस्वभावस्य प्रत्यक्षबाधितत्वेन तत्र नानुमानादिप्रमाणावकाश इति भावः । प्रत्यक्षमेव प्रमाणमिति यदुक्तं तदुपदर्शयन्नाह-बीजजातीयस्येति, एकस्यां व्यक्तौ सकलसहकारिसमवधाने सत्येव तदुत्तरं करणं तदभावे चाकरणमित्युभयं नोभयमतसिद्धमित्यतो बीजजातीयस्येत्युक्तम्, तथा च

न्यायमतेनैकस्यामेव बीजव्यक्तौ सहकारिसमवधानेऽङ्कुरं प्रति करणस्य तदसमवधाने चाऽकरणस्य बौद्धमतेन तु भिन्नायामेव बीजव्यक्तौ तदुभयस्य सत्त्वेऽपि न क्षतिः तद्व्यक्ताविवापरव्यक्तावपि बीजजातीयत्वाविशिष्टत्वादिति भावः। तथेत्यादि, यद्यपि सहकारिसमवधानरहितस्याकरणमित्येतल्लक्षणं विलम्बकारित्वं सहकारिसमवधानानन्तरमेव करणं करणमेवेत्येवं रूपाऽविलम्बकारित्वे तत्स्वरूपतया एवकारमहिम्नाऽन्तर्भावितमेव तथापि तस्य प्राधान्येन विलम्बकारिस्वरूपतया पृथगुपन्यासान्न पुनरुक्तिदोषः। इत्यपीति प्रत्यक्षसिद्धमेवेत्यनुषङ्गः, अत्रेति उक्तस्वभावद्वयस्य प्रत्यक्षसिद्धत्वे इत्यर्थः, परः बौद्धः, प्रमाणसिद्धत्वादिति सहकारिषु सत्सु करणस्यासत्सु चाकरणस्य प्रत्यक्षसिद्धत्वादित्यर्थः, विपर्यय इति सहकारिसमवधानेऽप्यकरणे सहकारिविरहेऽपि च करणे इत्यर्थः। क्रमेणोभयत्र बाधकतर्कमाह—

**तथा हि—यदि सहकारिविरहेऽकुर्वाणं तत्समवधानेऽपि न कुर्यात् तद्धर्मावच्छिन्नमस्वरूपयोग्यं स्यात्, समवधानासमवधानयोरप्यकरणात्, एवं तत्समवधानविरहेऽपि यदि कुर्यात् सहकारिणो न कारणं स्युस्तानन्तरेणापि करणात्, सहकारिणो यदि तत्कार्यकारणापेक्षणीया न स्युस्तत्कार्यकारणानि न स्युरित्येतदर्थः, तेन न वैयधिकरण्यम्, तथा च तुल्यन्यायतया सर्वेषामेवाकारणत्वे कार्यस्याकस्मिकत्वप्रसङ्गेनाकादाचित्कत्वप्रसङ्गः॥**

तथाहीत्यादिना, यदीत्यस्यानन्तरं यत्तदोर्नित्यसम्बन्धादुत्तरत्र तद्धर्मावच्छिन्नमिति श्रवणाद्यद्धर्मावच्छिन्नमित्यध्याहार्यम्, अस्वरूपयोग्यं स्यात्, कारणतावच्छेदकधर्मानाक्रान्तमेव स्यात्, तथा च बीजत्वावच्छिन्नं यदि तदितरसकलसहकारिविरहेऽ-

ङ्कुरमकुर्वाणं सत् तत्समवधानेऽपि तन्न कुर्यात्तर्ह्यङ्कुरजनकतावच्छेदकजात्यवच्छिन्नं न स्यात् शिलाशकलवदिति प्रसङ्गो यद्धर्मावच्छिन्नं सहकारिविरहे तत्समवधानेऽपि च न करोति तद्धर्मावच्छिन्नमस्वरूपयोग्यं यथाङ्कुरं प्रति शिलाशकलमिति सामान्यव्याप्तिमूलकः पर्यवस्यति, न चास्येष्टापत्त्या तदाभासत्वं, बीजसामान्ये स्वरूपयोग्यत्वस्यान्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धत्वादिति भावः। उक्तविलम्बकारित्वसाधकतर्कमाह—एवमित्यादिना। कुर्यादिति,तत्कारणं तत्कार्यविशेषं कुर्यादिति, भावः। तानिति सहकारिण इत्यर्थः। करणादिति विवक्षितकार्यस्यैकेनैव विवक्षितकारणेनोत्पादादित्यर्थः। ननु सुतर्के यस्मिन् व्याप्यारोपस्तस्मिन्नेव व्यापकारोपेणापि भवितव्यं,बीजं सलिलादिसकलसहकारिसमवधानविरहेऽपि यद्यङ्कुरं कुर्यात्तदा सलिलादिसहकारिणोऽङ्कुरजनका न स्युरित्याकारके प्रकृततर्के तु बीजे सहकारिसमवधानविरहेऽप्यङ्कुरकारित्वरूपव्याप्यारोपः अङ्कुरजनकत्वाभावरूपव्यापकारोपस्तु सलिलधरणिधामादिसहकारिष्विति सोनाभासात्मा न स्यादित्याशङ्कायामाह-सहकारिणो यदीति।न वैयधिकरण्यमिति;सहकारिष्वेवापाद्यापादकयोस्सामाधिकरण्यान्न विभिन्नाधिकरणवृत्तित्वमिति भावः। ननु भवतु सलिलधरण्यादीनां सहकारिणां तत्कार्यकारणानपेक्षणीयत्वादकारणत्वं,न च तथाऽप्यङ्कुररूपकार्यस्याकस्मिकत्वं,बीजस्य कारणत्वेन तस्य तज्जन्यत्वादिति चेत्,न, बीजसलिलधरण्यादीनां सर्वेषा कारणत्वेनाभ्युपगतानां परस्परसापेक्षभावेन सह कर्तृत्वात् यथा सलिलधरणिधामादिकं विना बीजं नाङ्कुरं करोति तथा तदन्तरेण तदपीति कार्यकारित्वाभावप्रयोजकाभावप्रतियोगित्वलक्षणसहकारित्वस्य सलिलधरण्यादाविव बीजेऽप्यविशिष्टत्वात्तदपि सहकार्यन्तर्गतमेव तथा चात्रापि बीजं यद्यङ्कुरं प्रति सलिलाद्यपेक्षणीयं न स्यात् तत्कार्यकारणं न स्यादिति प्रसङ्गप्रवृत्त्या बीजस्याप्यकारणत्वापत्त्या तेनाऽप्यजन्यत्वादङ्कुरकार्यस्याकस्मिकत्वं स्यादेव,बीजसलिलावन्यादीनामिवानन्यथासि-

द्धान्वयव्यतिरेकग्रहविषयीभूतानामपि सर्वेषां कारणानां तुल्ययुक्तेः कारणत्वाभावप्रसक्त्याऽङ्कुरस्येव तदन्यकार्यमात्राणामप्याकस्मिकत्वं नेयम्, तथा च कार्यमात्रं नित्यं गगनवत्सत्स्यादलीकवद्वाऽसत्स्यात् अन्यानपेक्षणाद्धेतोरित्याशयेनाह-तथा चेत्यादि। आकस्मिकत्वेति तच्चैतावत्कारणसत्वेऽवश्यं कार्योत्पत्तिरित्यनिश्चयः, निष्कर्षमाह,

एवं च द्वितीयपक्षविवक्षायामक्षेपकारित्वमेव भावस्य स्वभावः, तृतीयविवक्षायां तु क्षेपकारित्वमेव स्वरूपमिति नोभयप्रकारनिवृत्तिः ॥ ननु यद्येवं करणमकरणं च स्वभावो भावस्य, तदा यावत्सत्त्वं तदुभयापत्तिः, सति धर्मिणि स्वभावविरहायोगादिति चेत् , तत्स्वभावत्वं तत्तादात्म्यं वा स्यात् ? यावत्सत्त्वं तत्र सत्त्वं वा २ तद्धर्मतामात्रं वा ३ , तत्राद्ययोरनुपगमोऽन्तिमस्तु धर्मधर्मिणोरत्यन्तभेदेन धर्मिसत्त्वेऽप्यसत्त्वं न विरुणद्धीति न्यायनयोत्तरम् । एतच्चाभिनिविष्टसौगतनयखण्डनोद्देशेन प्रवृत्तमपि पूर्वरूप एव पर्यवस्यति, एकान्तावगाहित्वेन जातिप्रायत्वादुत्सर्गत ईदृशाभिधानस्य सिद्धान्तनिषिद्धत्वात् ॥

एवं चेति । भावस्य बीजादेः, स्वरूपं स्वभावः, भावस्येत्यनुषङ्गः। उभयप्रकारेति, क्षेपकारित्वाऽक्षेपकारित्वोभयस्वभावेत्यर्थः । स्थैर्येऽपीति शेषः । उक्ताक्षेपकरणविलम्बकरणयोस्स्थिरस्वभावत्वमाक्षिपति-नन्विति । करणमिति,अत्र सहकारिसमवधानानन्तरमेवेति शेषः,अकरणमिति यावन्न सहकारिसमवधानं तावदिति शेषः।अनुपगम इति नैयायिकस्येति शेषः। अत्यन्तभेदेनेति,भेदसम्पृक्ताभेदपक्षे धर्मधर्मिणोर्नियमेनैककालगर्भाविनाभावाद्धर्मानुस्यूत एव धर्मीतिधर्मिसत्त्वे धर्मासत्त्वे विरुद्धमेवेति-सति धर्मिणि न धर्मासत्त्वमित्यत्यन्तपदमुपात्तम् । न्यायनयोत्तरमिति, अत्र न्यायस्य तार्किकमतस्य नैगमनयप्रसूतत्वान्नयत्वं

बोध्यम् ,उक्तञ्च—न्यायदर्शनस्य प्रमाणप्रमेयेत्यादिपदार्थभेदं विना प्रायो वैशेषिकदर्शनसमानविषयत्वात् तदुक्तस्याप्युपलक्षणन्यायेन नैगमनयप्रसूतत्वं नयोपदेशे "स्वतन्त्रव्यक्तिसामान्यग्रहायेष्टे तु नैगमे। औलूक्यसमयोत्पत्तिं ब्रूमहे तत एवहि॥१॥" इति, प्रमाणनयतत्त्वालोकालङ्कारे नैगमाभासोदाहरणेऽप्युक्तम्, "नैयायिकवैशेषिकदर्शनं चैतदाभासतया ज्ञेयमिति," नन्वस्य यथार्थोत्तरत्वमस्ति न वा,आद्ये अनेनैव कथापरिसमाप्तेरुत्तरान्तरोपन्यासवैफल्यप्रसक्तिः,द्वितीये त्वस्यैवोपादानमनर्थकं स्यादिति चेत्,न, यतो यद्यपि विपक्षक्षेप्तुस्तस्य दुर्नयत्वेन वस्तुतत्त्वाऽव्यवस्थापकस्य समीचीनोत्तरत्वाभावेनाद्यपक्षसम्भवाभावेन द्वितीयपक्षाक्रान्तत्वमेव, तथापि दुष्टांशच्छेदतो नांह्री दूषयेद्विषकण्टक इति न्यायेन प्रवर्त्तमानेन विषकण्टककल्पेन तेन बहुव्यवहारोच्छेदिसौगतनयस्य विषकण्टककल्पस्य खण्डनीयत्वेन प्रतिज्ञातस्य खण्डनसिद्धेस्तत्फलकत्वात्तदुपादानस्यानर्थकत्वाभावात् , परन्त्वस्य यथार्थानवगाहित्वेन स्वाश्रयसत्तानियतसत्ताककथञ्चित्क्षेपकारित्वाक्षेपकारित्वादिवस्तुस्वभावाऽसाधकस्य क्षणिकत्वपक्षखण्डनमात्रप्रवृत्तस्य परमतखण्डनात्मके जल्पकथापूर्वरूप एव पर्यवसानं, नतु स्वाभिमततत्त्वव्यवस्थापनात्मके तदुत्तररूपे इत्याशयेनाह—एतच्चेत्यादि,एतच्च न्यायनयोत्तरं च, कथं नोत्तररूपताऽस्येत्याशङ्कायां हेतुमाह—एकान्तावगाहित्वेनेति, एकान्तस्य परनिरपेक्षतां गतस्य कस्यचिद्वस्तुनोऽभावेन तदवगाहिनो नयस्यायथार्थत्वेन वस्तुतत्त्वासाधकत्वादसदुत्तरतुल्यत्वादित्यर्थः, उत्सर्गत इति, सामान्यविधित इत्यर्थः. ईदृशाभिधानस्येति एकान्तवचनस्येत्यर्थः, तथा च तथावचनेऽपसिद्धान्त एव दोष इति भावः। उक्तार्थे सिद्धान्तोक्तिं साक्षात्साक्षिभूतामाह—

अवधारणीं भाषां न भाषेतेति तदुक्तेः,औदासीन्येन स्वार्थावधारणमात्रपरत्वेऽप्यंशोत्तरम् , सम्प्रति-

पक्षधर्मद्वयस्थले सप्तधर्मजिज्ञासया सप्तभिः प्रश्नैर्मिथः साकाङ्क्षसप्तभङ्गात्मकमहावाक्यस्यैव पूर्णोत्तरत्वात्। शबलं हि वस्तु यावद्धर्मैर्जिज्ञासितं तावद्धर्माभिधान एव वाक्यं निराकाङ्क्षं भवति, भङ्गार्थबोधक्रमो वाक्यक्रमगर्भतात्पर्यज्ञानात् आद्यभङ्गादिजन्यबोधस्य द्वितीयादिभङ्गजन्यशाब्दबोधे हेतुत्वाच्चेत्यादि व्यवस्थितमस्मदुपज्ञाष्टसहस्त्र्याम् ॥

अवधारणीमिति, अवधारणीं इदमित्थमेवेत्येवंरूपां प्रतिपक्षीभूतांशान्तरप्रतिक्षेपित्वे सति स्वाभीष्टांशप्रतिपादिकाम्, तदुक्तेः एकपाक्षिकवचननिषेधकसिद्धान्तवचनात्, अवधारण्या भाषाया नयरूपत्वात् नयानां च सर्वेषां स्वपक्षकदाग्रहग्रहिलानां मिथ्यादृष्टित्वादितिभावः। तथा चोक्तं-"सव्वे णया मिच्छावायिणोत्ति", अथास्य न्यायनयस्य विपक्षक्षेप्तृत्वे सत्यसमीचीनोत्तरत्वं स्यात्, तन्माभूदिति तस्य तत्त्वं नाङ्गीकुर्महे, तथा च तस्य विपक्षाक्षेपकस्य प्रमाणप्रतिपन्नवस्त्वेकदेशसङ्ग्राहकस्य सुनयत्वादेव पूर्णोत्तरत्वं स्यादित्याशङ्कायामाह-औदासीन्येनेति, स्वार्थावधारणमात्रपरत्वेऽपीति स्वविषयवस्त्वंशमात्रावगाहनपरत्वेऽपीत्यर्थः, अंशोत्तरमिति खण्डवाक्यतया देशजिज्ञासानिवर्त्तकत्वेनांशोत्तरमिति भावः। एकैकपर्यायमाश्रित्य क्रमेण युगपद्वा एतदित्यनुषञ्जनीयम्, विधिनिषेधप्रधानभावेनोपपद्यमानस्यात्कारलाञ्छितसप्तविधधर्मप्रकारकसप्तविधसंशयमूलकसप्तविधजिज्ञासाधीनसप्तविधप्रश्नतद्विषयविषयकज्ञानहेतुकप्रतिपिपादयिषापूर्वकाविरुद्धसप्तविधधर्मप्रकारकैकधर्मिविशेष्यकशाब्दबोधजनकतापर्याप्तिमत्साक्षात्परम्पराघटिततदुत्थापिताकाङ्क्षानिवर्त्तकत्वतन्निवर्त्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्सप्तभङ्गात्मकमहावाक्यमेव पूर्णोत्तरं, प्रतिपर्यायं विधिनिषेधप्रकारापेक्षया सप्तभिरेव धर्मैर्जिज्ञासितस्य वस्तुनस्तावद्भिरेव धर्मैरभिधानेन श्रोतुरभिलषितबोधोपपत्तेर्जिज्ञासान्तरानुदयादुक्त-

महावाक्यस्य शान्ताकाङ्क्षत्वादित्याशयेनाह—सप्रतिपक्षधर्मद्वयस्थले इत्यादि, प्रकृताभिप्रायेण सप्रतिपक्षधर्मद्वयस्थले इत्यस्य क्षेपकारित्वाक्षेपकारित्वरूपविरुद्धधर्मद्वयस्थले इत्यर्थः, सप्तधर्मजिज्ञासयेति एकस्मिन् धर्मिणि स्यात्क्षेपकारित्वस्यादक्षेपकारित्वस्यात्क्षेपकारित्वस्यादक्षेपकारित्वोभयस्यादवक्तव्यत्वस्यात्क्षेपकारित्वविशिष्टावक्तव्यत्वस्यादक्षेपकारित्वविशिष्टावक्तव्यत्वकथञ्चित्तदुभयविशिष्टावक्तव्यत्वधर्माणां प्रत्येकशः तत्तद्धर्मविषयकज्ञानं मे जायतामिति सप्तविधेच्छयेत्यर्थः। ननु बौद्धस्याधुना सुहृद्भावं शिष्यभावं वा गतत्वेनोत्तरदातारमाप्तत्वेनाभिमन्यमानस्यापि पूर्वमेकान्तत्वज्ञानेन प्रतिबन्धादनेकान्तत्वज्ञानस्यानुदयात् स्याच्छब्दद्योत्यानेकान्तत्वार्थाविमिश्रितस्य क्षेपकारित्वस्याक्षेपकारित्वस्य वा जिज्ञासासम्भवात्किं क्षेपकारि वस्त्विति प्रश्नस्य किं वाऽक्षेपकारि वस्त्विति प्रश्नस्य सावकाशत्वेऽपि परम्परया कारणीभूतस्य स्याच्छब्दलाञ्छितक्षेपकारित्वाद्यवक्तव्यत्वादिधर्मविषयकानुभवस्याभावेन संस्कारस्मरणसंशयद्वारा तत्कार्यभूताया उक्तधर्मजिज्ञासाया अभावान्नोक्तधर्मविषयकप्रश्नावकाश इति तदुत्तररूपभङ्गासम्भवेन न सप्तभङ्गीसम्भव इति चेत्, मैवं, प्रथमतोऽनेकान्तत्वाज्ञानात्कथञ्चिदर्थविनिर्मुक्तक्षेपकारित्वमात्रविषयकजिज्ञासया तन्मात्रविषयकप्रश्नकरणेऽपि पश्चात्कथञ्चिदर्थानेकान्तसंवलितक्षेपकारित्वप्रतिपादकस्यात्क्षेपकार्येव कारणमित्युत्तरवाक्यजन्यबोधानन्तरमनेकान्तत्वावबोधतस्सामान्यतसम्मुग्धाकारधर्मान्तरज्ञानात्तत्तज्जिज्ञासया तत्तद्विषयकप्रश्नानां समुल्लासात्, तथाहि किं क्षेपकारित्वं भावस्य स्वभाव इति प्रश्ने स्यात्क्षेपकार्येवेत्युत्तरवाक्ये निमित्तभेदेनाविरोधद्योतनार्थकस्यात्पदस्य प्रयोगेऽव्याप्यवृत्तित्वं क्षेपकारित्वस्वभावस्य लभ्यते, व्याप्यवृत्तेर्निमित्तभेदानाकाङ्क्षणात्, अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति सामान्यतोऽक्षेपकारित्वोपस्थितौ प्रतियोगिमत्यभावो न निमित्तभेदमन्तरेति तत्संवलितत जिज्ञासया प्रश्ने स्यादक्षेपकार्येवेत्युत्तरे कृते निमित्तद्वयोप-

स्थितौ धर्मद्वयोपस्थितौ च क्रमिकनिमित्तद्वयविवक्षया वस्तु किं स्वरूपं युगपन्निमित्तद्वयविवक्षया किं स्वरूपमित्यादिप्रश्नैस्स्यात्क्षेपकार्येव स्यादक्षेपकार्येव च स्यादवक्तव्यमेवेत्याद्युत्तरभङ्गप्रवृत्त्युपपत्तेस्सप्तभङ्गीसम्भवस्स्यादेवेति, शबलं अनन्तधर्मसङ्कीर्णम्, हिशब्दो हेत्वर्थे, सप्तभङ्गीघटकपूर्वपूर्ववाक्यजन्यबोधानन्तरमुत्तरोत्तरवाक्यं स्वार्थबोधं जनयत्वितीच्छयोच्चरितमिति श्रोतुस्तात्पर्यज्ञानस्य भङ्गार्थबोधक्रमे हेतुत्वेन तदनुरोधात् स्वद्रव्यक्षेत्रकालभावादिरूपेण कथञ्चिदस्तित्वस्य प्रथमं बोधस्तदनन्तरं परद्रव्यादिरूपेण नास्तित्वस्य बोधस्ततोऽप्यनन्तरं क्रमार्पितस्वपरद्रव्यादिचतुष्टयापेक्षया तदुभयस्य बोधो युगपदुभयोक्तनिमित्तविवक्षयाऽवक्तव्यत्वस्य बोध इत्यादिसप्तविधबोधक्रमः इत्याशयेनाह–**भङ्गार्थबोधक्रमो वाक्यक्रमगर्भतात्पर्यज्ञानादिति**, सप्तविधधर्मप्रकारकैकधर्मिविशेष्यकसमूहालम्बनात्मकाखण्डबोधकारणीभूतस्य प्रत्येकभङ्गार्थप्रकारकैकधर्मिविशेष्यकखण्डबोधस्य यः पूर्वापरीभावस्स सप्तभङ्गात्मके महावाक्ये खण्डवाक्यानां यः पूर्वापरीभावस्तद्विषयकतात्पर्यज्ञानादित्यर्थः । ननु स्यादेतद्यदि तात्पर्यज्ञानं सर्वत्र कारणं स्यात्, न चैवं, मानाभावात्, गृहीतनानार्थशक्तिकगृहीतनानार्थलक्षणकगृहीतविभिन्नार्थशक्तिलक्षणकशब्दादिस्थल एव तस्योपयोगादिति यदि ब्रूयात् तदाप्याह–**आद्यभङ्गादिजन्यबोधस्येति**, पूर्वपूर्वशब्दोत्तरोत्तरशब्दानामिव पूर्वपूर्वभङ्गजन्यशाब्दबोधोत्तरोत्तरभङ्गजन्यशाब्दबोधानां कार्यकारणभावात्तद्वत्तेषां कारणक्रमात्कार्यक्रम इति सामान्यनियमावष्टम्भेन क्रम इति भावः । पूर्णोत्तरात्मकं महावाक्यं स्वरूपतः प्रदर्शयति—

**तथा च बीजं स्यादङ्कुराक्षेपकार्येव १ स्यादङ्कुरक्षेपकार्येव २ स्यादुभयमेव ३ स्यादवक्तव्यमेव ४ स्यादङ्कुराक्षेपकार्येव स्यादवक्तव्यमेव च ५ स्यादङ्कुरक्षेपकार्येव स्यादवक्तव्यमेव ६ स्यादङ्कुराक्षेपकार्येव स्या-**

दङ्कुरक्षेपकार्यैव स्यादवक्तव्यमेव च । ७ इति प्रमाणोत्तरं युक्तम् । निमित्तभेदेनाविरोधद्योतनार्थं स्यात्पदस्य अवधारणार्थं च एवकारस्य प्रतिभङ्गं प्रयोगः ॥

तथा चेत्यादिना, अत्राद्यभङ्गाद्विधिमुख्यविषयताकश्शाब्दबोधः, द्वितीयभङ्गान्निषेधमुख्यविषयताकः, तृतीयात्क्रमादुभयमुख्यविषयताकः, न चात्रोभयपदोपादानात् विधिनिषेधज्ञानद्वयं लब्धं तच्चाद्यद्वितीयभङ्गाभ्यामेव सिद्धमिति स भङ्गो न ताभ्यामतिरिच्यत इति वाच्यम्, क्रमगर्भोभयप्राधान्यबोधकत्वाभिप्रायेणोभयपदप्रयोगात्, तत्रैकत्र द्वयमिति रीत्या विधिनिष्ठप्रकारतानिरूपिताया निषेधनिष्ठप्रकारतानिरूपिता विशेष्यता तन्निरूपकबोधान्तरस्यानुभविकत्वात्, न चास्य संशयत्वं, तत्र प्रकारताद्वयनिरूपितैकविशेष्यताकत्वाभावात्, तदीयविशेष्यत्वयोरवच्छेदावच्छेदकस्यैवाभ्युपगमा भावत्, अत्र च तदभावात्, न चोच्चारणं शब्दानां क्रमेणैवेति विधिनिषेधशब्दयोः क्रमव्यापारेऽपि तद्वाच्यार्थयोः क्रमघटितत्वाभावेन तृतीयभङ्गे क्रमोपादानं नातिप्रयोजनमिति वाच्यम् "न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते ॥१॥" इति नयाश्रयणाच्छब्दगतस्यापि क्रमस्यार्थेऽध्यारोपणात्, क्रमपदोपादानस्य ज्ञानाकारविशेषोपलक्षणकत्वाभ्युपगमाद्वोक्तदोषाभावात् । युगपद्विधिनिषेधात्मनाऽवक्तव्यत्वमुख्यविषयताकश्चतुर्थभङ्गाद्वोधः, स चावक्तव्यत्वपदस्य खण्डशः शक्त्या कारितो विशेषशक्त्या वेत्यन्यदेतत्, विध्यात्मना मुख्यविषयतावच्छिन्ना या उभयात्मना युगपदवक्तव्यत्वमुख्यविषयता तद्वान् बोधः पञ्चमाद् भङ्गाद्भवति, षष्ठाद्भङ्गात्तु निषेधात्मना मुख्यविषयतावच्छिन्ना या उभयात्मना युगपदवक्तव्यत्वविषयता तद्वान् बोधः, क्रमादुभयमुख्यविषयताद्वयावच्छिन्नाऽवक्तव्यत्वमुख्यविषयताकशाब्दबोधस्सप्तमभङ्गाद्भवति, यदत्र गौरवभीत्या नोक्तं तत्तदर्थिना नयामृततरङ्गिण्यादिभ्यो बोध्यम् । प्रतिभङ्गघटकस्य स्यात्पदस्यैवपदस्य च फल-

माह—निमित्तभेदेनेति, कथं क्षेपकारित्वाक्षेपकारित्वादिधर्माणामस्तित्वनास्तित्वादीनां च परस्परविरोधिनामेकमेव वस्तु भाजनं स्यादित्याशङ्काव्यपोहपूर्वकमेकत्र घटे पूर्वोत्तरकालभेदेन श्यामतदभावादीनामेकस्मिन् वृक्षे च शाखामूलावच्छेदेन कपिसंयोगतदभावादीनां स्वसमानाधिकरणाभावप्रतियोगिभूतानामिवापेक्षाभेदेनैकत्र समानाधिकरणानामव्याप्यवृत्तीनां तेषां न विरोध इति सूचनार्थं स्यात्पदस्य, यदवच्छेदेन क्षेपकारित्वास्तित्वादिकं तदवच्छेदेन तदेव, न तु तद्विरोध्यक्षेपकारित्वनास्तित्वादिकं, यदवच्छेदेनाक्षेपकारित्वनास्तित्वादिकं तदवच्छेदेन तदेव, न तु तद्विरोधिक्षेपकारित्वास्तित्वादिकमित्येवं निश्चयार्थं चैवकारपदस्य प्रतिभङ्गघटकतयोपन्यास इति भावः। करणाकरणपदवाच्ययोः परस्परविरहरूपत्वं यदि स्यात्तदा तल्लक्षणविरोधपरिहारार्थं स्यात्प्रयोगस्सफलस्स्यात्, न चैवं, सहकारिसाकल्यप्रयुक्तकार्यकारित्वस्य करणपदवाच्यस्य क्षेत्रस्थबीजे सत्त्वेऽपि तत्राकरणपदार्थस्य सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्य प्रतियोगिभूतस्य पूर्वकालावच्छेदेन सत्त्वेन तदभावस्याविद्यमानत्वात्, अकरणपदवाच्यस्य सहकारिविरहप्रयुक्तकार्यकारित्वाभावस्याभावश्शिलासकलादौ वर्त्तते तत्र करणपदवाच्यस्य सहकारिसमवधानप्रयुक्तकार्यकारित्वस्याप्यभावादित्याशयेनाशङ्कते—

**न च सहकारिविरहप्रयुक्तकार्याभाववत्त्वमकरणपदार्थः सहकारिसमवधानप्रयुक्तकार्यवत्त्वं च करणपदार्थ इत्यनयोर्भावाभावत्वरूपविरोधाभावादत्र स्याद्वादानवकाश इति वाच्यम्, सहकारिसाकल्यतदभावप्रयुक्तयोः कारणनिष्ठफलाव्यवहितपूर्ववर्त्तित्वतदभावयोः करणाकरणयोर्निमित्तभेदविनिर्मोकप्रयुक्तो यो विरोधसमारोपस्तद्व्यवच्छेदार्थमत्र स्याद्वादसमाश्रयणस्य युक्तत्वात्। अपि च सर्वथैवाकरणस्य कण्ठतो**

निरासेन कथंचित्करणमेवार्थत उदयनेनापि स्वीकृतं, तत्र च लब्धावकाश एव स्याद्वादप्रयोगः । तदुक्तं समन्तभद्राचार्येण 'स्याद्वादः सर्वथैकान्तत्यागात् किंवृत्तचिद्विधिः । सप्तभङ्गनयापेक्षो हेयादेयविशेषकः'॥१॥इति, न चेत्यादिना । सहकारिसाकल्यतदभावप्रयुक्तयोरिति, करणाकरणशरीरघटकं न सहकारिसाकल्यं तद्वैकल्यं च, येन तद्घटितकरणाकरणयोः परस्परविरहरूपत्वात्मकविरोधाभावेन स्यात्करणमेव स्यादकरणमेवेत्यादिप्रयोगेऽपेक्षाभेदप्रयोज्याविरोधद्योतकस्यात्कारपदमवकाशं न भजेत, किन्तु फलाव्यवहितपूर्ववर्त्तित्वतदभावरूपयोः करणाकरणयोर्यथाक्रमं तन्नियामकमात्रं तथा च श्यामतदभावयोरिव परस्पराभावात्मकत्वेन तयोर्नियामकानपेक्षयोर्विरोधसद्भावेन तद्व्यवच्छेदार्थं स्यात्प्रयोगकरणे कारित्वे सहकारिसाकल्यरूपनियामकाऽपेक्ष्यत्वस्य कारित्वाभावे च सहकारिविरहरूपनियामकापेक्ष्यत्वस्य च लाभे विरोधव्यवच्छेद इति स्याद्वादप्रदर्शनेनैव क्षेपकारित्वाक्षेपकारित्वादिघटितवाक्यस्य पूर्णोत्तरत्वमिति भावः । नैयायिकेनापि प्रकारान्तरेण स्याद्वादोऽभ्युपगत एवेत्याह–अपि चेति, सर्वथैवाकरणस्येति, अत्र सहकारिकालावच्छेदेन करणस्याप्यनुभवसिद्धत्वादेवेति पूरणीयम्, एवकारो वा भिन्नक्रमः, तथा च सर्वथाऽकरणस्यैवेत्यर्थः, सर्वथाऽकरणस्य न तु सहलारिकालावच्छेन करणस्येति भावः । तत्र चेति कथञ्चित्करणे चेत्यर्थः, कथञ्चिद्वादस्यैव स्याद्वादत्वे समानतान्त्रिकसम्मतिमाह–तदुक्तमित्यादि, एकान्तत्यागादित्युक्तावेव सामञ्जस्ये सर्वथेति विशेषणमनर्थकमिति न वाच्यम्, शिरोमण्यादिभिर्नव्यनैयायिकैरेकस्मिन्नेकवृक्षे मूलावच्छेदेन कपिसंयोगावच्छिन्नप्रतियोगिताकभेदस्य शाखावच्छेदेन कपिसंयोगावच्छिन्नप्रतियोगिताकभेदाभावस्य चाभ्युपगमेनाव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदाभेदयोर्निमित्तभेदापेक्षणात्स्याद्वादरूपत्वेऽपि व्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदाभेद-

योरेकत्रानभ्युपगमेन निमित्तभेदानपेक्षणात्स्याद्वादरूपत्वाभावान्न सर्वथैकान्तत्यागे इति तन्मतेन किंवृत्तचिद्विधेरपर्यवसानेन तदर्थं तद्विशेषणस्यावश्यकत्वात् । किं रूपस्स इत्याशङ्कायामाह-किंवृत्तचिद्विधिरिति कथञ्चिदेवं कथञ्चिदेवं नेत्येवं रूप इत्यर्थः, तथा च सर्वस्मिन् वस्तुनि सर्वधर्माणां व्याप्यवृत्तित्वनिरासेनाव्याप्यवृत्तित्वं व्यवस्थाप्य निमित्तभेदापेक्षया तत्तद्भावप्रतिपादनात्मा यः कथञ्चिद्विधिस्स स्याद्वाद इति पूर्वार्द्धफलितोऽर्थः, सप्तभङ्गनयापेक्ष इति भङ्गाश्च ते नयाश्च भङ्गनयाः सप्त च ते भङ्गनया इति सप्तभङ्गनयाः तेषामपेक्षा यस्य स तथेत्यर्थः। एतेन स्याद्वादो नैकभङ्गापेक्षो नवैकनयापेक्षः,ताभ्यामेकस्यैव प्रकारस्य प्रतिपादनेन किं वृत्तचिद्विधेरपूर्त्तेरिति सूचितम्, हेयश्चादेयश्च हेयादेयौ तयोर्विशेषको निवृत्तिप्रवृत्तिकारक इत्यर्थः । अत्रोपलक्षणन्यायेनोपलक्षणीयमपि ग्राह्यम्, तथा चैकमेव कामिन्यादि वस्तु विरक्तापेक्षया हेयं तदेव सरागापेक्षयोपादेयं तदेव चोदासीनापेक्षयोपेक्षणीयमिति त्रिधा विभागस्स्याद्वादाश्रयण एवोपपद्यते नत्वन्यथेति भावः । निमित्तभेदावच्छिन्नकरणाकरणयोरिव प्रतिवस्तुनि सर्वेषां धर्मान्तराणां ग्रहणे स्याद्वादाश्रयणस्यावश्यकत्वमाह—

**किं च स्वभावस्वभाववतोरत्यन्तभेदे सम्बन्धानुपपत्तेः कथंचित्तादात्म्यस्यैव सम्बन्धत्वाश्रयणादनन्तानां धर्माणां स्वभावत्वेऽनन्तस्वभावशबलैकधर्म्यभ्युपगमे परस्परावच्छेदेन तद्व्यावृत्त्यावश्यकत्वे विविच्यैकस्वभावस्यापि ग्रहे स्याद्वादाश्रयणमावश्यकं सकलादेशमहिम्नैकग्रहेऽपि सर्वग्रहान्निमित्तभेदविवेचनस्य च सप्तभङ्ग्यैवोपपत्तेः । अनेनैवाभिप्रायेण 'स्याद्वादकेवलज्ञाने सकलार्थावभासने' इत्युक्तमधिकमन्यत्र ॥ ८ ॥**

स्याद्वादरूपप्रमाणोत्तरेण न केवलमुत्तररूपसिद्धिः किन्तु पूर्वरूपसिद्धिरपि स्यादित्याह—

**किञ्चेत्यादिना ।** स्वभावस्वभाववतोरिति, अनेन युक्तेरसाम्यादुपलक्षणन्यायेनावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोरित्यादीनां ग्रहणं कर्त्तव्यम्, अत्यन्तभेदे सम्बन्धानुपपत्तेरिति, एतत्तत्त्वं स्वयमेव ग्रन्थकारेणात्रैव वक्ष्यमाणं स्याद्वादबिन्दौ मया स्पष्टीकृतञ्चावलोकनीयं विशेषजिज्ञासुभिः । धर्मधर्मिणोस्तत्तद्धर्मत्वेन धर्मित्वेनायुतसिद्धत्वेन च यौ भेदाभेदौ तदात्मकसम्बन्धाश्रयणे सम्बन्धस्य धर्मिस्वरूपतया सम्बन्धिनामनन्तधर्माणां धर्मिस्वभावत्वाभ्युपगमः कुतस्स्यात्, स च स्वव्यापकीभूतमनन्तस्वभावाभिन्नैकधर्म्यभ्युपगममादायैव पर्यवस्यतीति सोऽप्यागत एवेत्यनन्तधर्मात्मके धर्मिणि यदवच्छेदेनाऽस्तित्वादि न तदवच्छेदेन नास्तित्वादि यदवच्छेदेन च नास्तित्वादि न तदवच्छेदेनाऽस्तित्वादीति तद्व्यावृत्तिरावश्यकी, अन्यथा स्वावच्छेदकावच्छेदेनेव परावच्छेदकावच्छेदेनापि वृत्तिमत्तया सर्वेषां धर्माणामैक्यापत्त्याऽनन्तस्वभावत्वमेव धर्मिणो न स्यात्, तथा च यदवच्छेदेनास्तित्वाद्येकधर्माभिन्नत्वमनन्तधर्मात्मकधर्मिणि न तदवच्छेदेन नास्तित्वाद्यपरधर्माभिन्नत्वं तस्य, किन्त्वन्यावच्छेदेनैवेति, तत्तदवच्छेदकापेक्ष्यतत्तद्धर्मस्यापरधर्मासङ्कीर्णतया ग्रहो न स्याद्वादाश्रयणं विना, तस्यैव तत्तद्धर्मसत्त्वनियामकार्पकत्वेन व्यवस्थितेरित्याशयेनाह—अनन्तानां धर्माणामिति, तथा च स्ववृत्तौ यो यन्निमित्तानपेक्षकः स न तदात्मेति सामान्यव्याप्तिमूलकेन अस्तित्वादिकं न नास्तित्वाद्यशेषधर्मात्मकं तन्निमित्तानपेक्षत्वादित्यनुमानेनास्तित्वादेस्स्वान्याशेषधर्मभिन्नत्वे सिद्धे तस्य तदितरधर्मभिन्नतया ग्रहे स्याद्वादाश्रयणमावश्यकमिति भावः । ननु यद्यनन्तधर्मात्मकत्वं धर्मिणस्तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात्सर्वेषां धर्माणामेकधर्म्यभिन्नत्वात्तद्द्वारा तेषामप्यभेद एव स्यात्, तथा चैकधर्मग्रहे तदभिन्नत्वात्तदन्येषामप्यशेषधर्माणां तद्द्वारा ग्रहणं स्यादित्याशङ्कामिष्टापत्त्या परिहरति—सकलादेशमहिम्नेति " कालात्मरूपसम्बन्धाः संसर्गो-

पक्रिये तथा । गुणिदेशार्थशब्दाश्चे-त्यष्टौ कालादयस्स्मृताः ॥ १ ॥ ” इति पद्योक्तकालादिभिरष्टाभिर्द्वारैः पर्यायार्थिकनयसापेक्षद्रव्यार्थिकनयेनाभेदप्राधान्याद्द्रव्यार्थिकनयसापेक्षपर्यायार्थिकनयेनाभेदोपचाराद्वा यौगपद्येन प्रमाणप्रतिपन्नानन्तधर्मात्मकस्य वस्तुन एकधर्ममुखेन तदन्येषां सर्वेषां धर्माणां प्रतिपत्तिजनकं सकलादेशात्मकं यत्प्रतिभङ्गवाक्यं तस्य य उक्तप्रतिपत्तिजनकत्वस्वभावात्मा महिमा तेनेत्यर्थः । एकग्रहेऽपीति, अस्तित्वाद्येकैकधर्मज्ञानेऽपीत्यर्थः, सकलादेशस्य प्रमाणवाक्यत्वात् स्यादस्त्येवेत्यादिप्रमाणवाक्येनेति शेषः । सर्वग्रहादिति, तद्धर्मद्वारेण तदभिन्ननिखिलधर्माऽवबोधादित्यर्थः । न च प्रतिभङ्गस्य सकलादेशत्वादाद्येन भङ्गेन यदेव प्रमाणप्रतिपन्नानन्तधर्मात्मकं वस्तु प्रतिपादनीयं तदेव द्वितीयादिनेत्यर्थैक्यात्पौनरुक्त्यमेव स्यादित्याशङ्कनीयं, आद्यादिभङ्गेन स्वद्रव्यक्षेत्रादिनिमित्तापेक्षकास्तित्वादिमुखेन तदभिन्ननास्तित्वाद्यनन्तधर्मात्मकवस्तुनः प्रतिपादनेऽपि परद्रव्यक्षेत्रादिनिमित्तापेक्षकनास्तित्वादिमुखेन तेनाप्रतिपादितस्यानन्तधर्मात्मकवस्तुनो द्वितीयादिभङ्गेन प्रतिपादनेन पौनरुक्त्याभावात्, तस्मादेकस्यापि भङ्गस्य वस्तुन्यन्यूनधर्मप्रतिपादकत्वेऽपि तत्रैतन्निमित्तापेक्षयाऽयं धर्मः एतदपेक्षया चायं धर्म इति पृथक् करणं नैकभङ्गेनोपपादयितुं शक्यं, किन्तु सप्तभङ्ग्यैवेत्याशयेनाह—निमित्तभेदविवेचनस्येति । अनेनैवाभिप्रायेणेति, एकस्य घटादिवस्तुनस्स्वपरानन्तपर्यायात्मकत्वेन तत्र साक्षात्परम्परया जगत एव प्रविष्टत्वेन निखिलतत्त्वानां सकलादेशमहिम्नैकभङ्गेनापि प्रधानीभूतैकधर्मद्वारेण प्रतिपादनाभिप्रायेणेत्यर्थः । स्याद्वादकेवलज्ञाने इति, स्याद्गर्भितवाक्यजन्यमाकाङ्क्षायोग्यतादिसामग्र्यपेक्षं यत् सकलादेशमहिम्ना शाब्दबोधात्मकं परोक्षज्ञानं, यच्च सम्यग्दर्शनाद्यन्तरङ्गजिनकालिकमनुष्यभवादिबहिरङ्गलक्षणात्रिकलसामग्रीसमुद्भूतघातिकर्मसङ्घातविघातोत्थं निखिलद्रव्यपर्यायावलम्बि प्रत्यक्षात्मकं केवलज्ञानं तदुभे इत्यर्थः । सकलार्थावभासने इति

कल्पलतिकोपेतम्

भेदाभेदादिविवेके स्याद्वादोपयोगः ।

सकलद्रव्यक्षेत्रकालभावरूपार्थमव.ाशके इत्यर्थः । तत्राद्यज्ञानं सामान्यलक्षणाप्रत्यासत्त्यभ्युपगन्तॄणां नैयायिकानां प्रमेयत्वेन रूपेण सकलपदार्थावभासकं प्रमेयमिति ज्ञानमिव जिनचरणानुगानां सकलादेशमहिम्नैकधर्ममुखेनैव सकलार्थावभासकम्,नतु स्वस्वासाधारणरूपेण,अत एव तद्वतो न विशेषतस्सार्वज्ञ्यापत्तिः,द्वितीयज्ञानं तु करामलकवत् प्रातिस्विकरूपेणैव प्राधान्येनेति भावः ॥८॥ नवमश्लोकावतरणिकामाह–स्याद्वादरूपेत्यादिना,उत्तररूपसिद्धिरिति कथाया इति शेषः, एवमग्रेपि, पूर्वरूपसिद्धिरपीति,तथा च वादकथायामिव जल्पादिकथायामपि स्याद्वादामृतभोजिनां नानधिकार इति भावः ॥

स्याद्वादनाम्नि तव दिग्विजयप्रवृत्ते सेनापतौ जिनपते ? नयसार्वभौम ।
नश्यन्ति तर्कनिवहाः किमु नाम नेष्टा–पत्तिप्रभूतबलपत्तिपदप्रचारात् ॥ ९ ॥

हे जिनपते ? तव सदा केवलश्रीललनाभोगसौभाग्यभाजः सकलनयस्वामिनो धर्मचक्रवर्त्तिनः स्याद्वादनाम्नि सेनापतौ निखिलकुनयवासनाराजधानीषु पृथक् पृथग् राज्यं कुर्वाणस्य महामोहपरिवारस्य निर्दलनाय दिग्विजयप्रवृत्ते तदीयसुभटप्रायास्तत्तत्तन्त्रतर्कनिवहाः किमु नामेष्टापत्तय एव ये प्रभूतबलपत्तयस्तेषां पदप्रचारान्न नश्यन्ति, अपि तु नश्यन्त्येवेत्यहो महिमा तव स्याद्वादस्य ।

हे जिनपते ! हे नयसार्वभौम ? तव स्याद्वादनाम्नि सेनापतौ दिग्विजयप्रवृत्ते तर्कनिवहा इष्टापत्तिप्रभूतबलपत्तिपदप्रचारात् किमु नाम न नश्यन्ति, अपि तु नश्यन्त्येवेति श्लोकान्वयः, हे नयसार्वभौमेति सम्बोधनपदमहिम्ना यल्लब्धं तदाह–केवले-

त्यादि, केवलमेव केवलज्ञानमेव श्रीः लक्ष्मीरिति केवलश्रीः, यद्वा केवलं केवलज्ञानं श्रीर्वाणी च, " श्रीः लक्ष्म्यां, लवङ्गे, शोभायां, वाण्यां " इत्यादि शब्दस्तोममहानिधिकोशोक्तेः केवलश्रियौ, प्रथमपक्षे सैव ललना तस्याः,द्वितीयपक्षे ते एव ललने नार्यौ तयोर्यो भोगोऽविप्रम्भावेन स्वात्मनि सम्बन्धः घातिकर्मनिर्मूलकार्षकषणात्, केवलज्ञानश्रिया सहात्मनस्संयोजनमिति यावत् , द्वितीयपक्षे सुष्ठुप्रयोगादि वाण्या सह सम्बन्धः, इति केवलश्रीललनाभोगः, तस्य यत्सौभाग्यं सौन्दर्यं क्षायिकत्वानन्तत्वार्थाव्यभिचारित्वादिलक्षणं तद्राजस्स्वाश्रयवत्त्वसम्बन्धेन तद्वत इति केवलश्रीललनाभोगसौभाग्यभाजः, चक्रवर्तिपक्षे केवला निश्चिता अद्वितीया वा श्रीः लक्ष्मीः शोभा वा यासां ताः केवलश्रियस्ताश्च ता ललना नार्यश्चेति केवलश्रीललनाः, तासां भोग आसेवनादिकमिति केवलश्रीललनाभोगः, तेन तज्जन्यं सौभाग्यं पतिप्रियत्वमिति केवलश्रीललनाभोगसौभाग्यं, तद्भजतीति केवलश्रीललनाभोगसौभाग्यभाक्, तस्य केवलश्रीललनाभोगसौभाग्यभाजः, यद्वा केवला निश्चिता चासौ श्रीः लक्ष्मीश्चेति केवलश्रीः सा च ललना नार्यश्चेति केवलश्रीललनास्तासां ये भोगसौभाग्ये, केवलश्रिया भोगो यथोचितदानादिकं, नारीणां सौभाग्यं पतिप्रियत्वमिति केवलश्रीललनाभोगसौभाग्ये, ते भजति सेवते इति केवलश्रीललनाभोगसौभाग्यभाक्, तस्य केवलश्रीललनाभोगसौभाग्यभाजः,सकलेति, सकलास्समग्रा ये नया अभिप्रायविशेषास्सङ्ग्रहादयः,पक्षे सकला समग्रा ये नया दण्डादयो राजनीतयस्तेषां स्वामिनः तत्प्रवर्त्तकत्वेन तदधिपस्येत्यर्थः,धर्मेति, तीर्थकृतां पुरः पद्मप्रतिष्ठितं स्फुरत्किरणचक्रं यत्र यत्र जगद्गुरुर्विचरति तत्र तत्र देवैर्नीयमानं गगनगतं धर्मप्रकाशकं यच्चक्रं धर्मचक्रं, तेन वर्त्तितुं शीलं यस्य तस्य, धर्मस्य अहिंसासंयमतपोमयस्य चक्रवर्त्ती नायकः तस्य, यद्वा धर्म एव चक्रं कर्मरिपुप्रमर्द्दनाद् आयुधविशेषस्तेन वर्त्तते इत्येवं शील इति स धर्मचक्रवर्त्ती तस्य ध-

कल्पलतिकोपेतम्

जिनस्य चक्रवर्त्तिसाम्याविष्कारः ।

र्मचक्रवर्त्तिनः, यद्वा चक्रं राष्ट्रेऽपीति कोशबलाद् धर्म एव चक्रं अनेकजनाश्रितत्वाद्राष्ट्रं तत्र वर्त्तते इत्येवं शीलस्य, यद्वा चक्रं राष्ट्रेऽपीत्यत्रापि शब्दात् सैन्यरथाङ्गयोश्चक्रमित्युक्तेर्धर्म एव चक्रं मोहादिरिपुभ्यो रक्षितृत्वात् सैन्यं, यद्वा धर्मस्य चारित्रधर्मस्य चक्रमष्टादशसहस्रशीलरथाङ्गं तेन तस्मिन् वा वर्त्तत इत्येवंशीलस्य, यद्वा धर्मस्य सदाचारस्य यच्चक्रं समूहस्तत्र वर्त्तते इत्येवं शीलस्य, चक्रवर्त्तिपक्षे च धर्मेण पूर्वजन्मोपार्जितशुभकर्मणा चक्रवर्त्ती षट्खण्डाधिपो राजेति धर्मचक्रवर्त्ती तस्य, यद्वा धर्मेण सदाचारादिलक्षणेन चक्रेण आयुधविशेषेण च सह वर्त्तते इत्येवंशीलस्य, यद्वा धर्मेण जातं यच्चक्रमायुधं राष्ट्रं सैन्यं च धर्मचक्रं तेन वर्त्तितुं शीलस्य, यः खलु चक्रवर्त्ती तस्य स्वरिपुप्रमर्द्दने मुख्याङ्गं सेनापतिरेवेति रूपकालङ्कारेण धर्मचक्रवर्त्तितयोपमितस्य भगवतो यन्नामा सेनापतिस्तमाह—स्याद्वादनाम्नीति, सेनापतावित्यस्य दिग्विजयप्रवृत्त इत्यनेन सम्बन्धः। अन्यचक्रवर्त्तिसेनापतिस्स्वसैनिकपदप्रचारमात्रेणैकहेलया परसैनिकविजेता न, किन्तूत्कृष्टतष्षष्टिसहस्रवर्षाणि यावत् जघन्यतश्च द्वादशवर्षाणि यावत् महासङ्ग्रामे शस्त्रादिप्रयोगेणैव, अपूर्वप्रौढप्रभावशाली श्रीधर्मचक्रवर्त्तिभगवत्स्याद्वादसेनापतिस्त्विष्टापत्त्यात्मकातिभूरितमसामर्थ्योपेतसैनिकपदप्रचारेणैव सुतरां क्षणमात्रेणाऽखिलैकान्तकदाग्रहव्याप्तस्वान्तजनाभिप्रायविशेषलक्षणकुनयजन्यनानाविधसंस्कारात्मकपृथग्राजधानीव्यवस्थितराज्यकर्तृमहामोहपरिवारनृपसक्ततत्तत्सिद्धान्तानुसारिकुतर्कनिवहात्मकसुभटानां विजेतेत्यलौकिकस्याद्वादसेनापतिमहिमावर्णनमाह—निखिलकुनयेत्यादि, तदीयेति, महामोहपरिवारसम्बन्धीत्यर्थः, श्लोकार्थं व्याख्याय भावार्थमाह—

इदमुक्तं भवति, नित्यानित्यत्वाद्यनन्तधर्मशबलैकार्थप्रतिपादकस्याद्वादाभ्युपगमे किं परतर्कप्रसङ्गैः कर्त्तव्यम्, तदापाद्यानुमेयार्थस्य कथञ्चिदभ्युपगमेनेष्टापत्तिसिद्धसाधनैरेव तेषामनुत्थानोपहतत्वात्, न ह्येकस्मि-

न् जननाजननादि प्रसज्यमानं स्याद्वादपक्षे दुरभ्युपगमम्, न च पर्यायद्रव्यार्थनयाभ्यां शब्दादौ क्षणिकत्वा-दिकमपि तथेति किमपरं परवादिना साधनीयम्। एवं च शब्दः क्षणिको न वा सत्त्वमुत्पत्तिव्याप्यं न वेत्या-दिविप्रतिपत्तयोऽपि नास्मदभिमतसाधारण्यं स्वीकर्त्तुं प्रगल्भन्ते, पर्यायार्थतया सर्वत्र क्षणिकत्वस्य सर्वस-त्त्वोत्पत्तिव्याप्यतायाश्चाभ्युपगमात्। सत्त्वं क्षणमात्रवृत्त्यनेकवृत्तिधर्मवन्निष्ठान्योन्याभावप्रतियोगितानवच्छे-दकत्वव्याप्यं न वेति विप्रतिपत्तिरपि नैयायिकबौद्धमतयोर्विधिनिषेधकोटिशालिनी न चतुरस्रा, अस्मदपे-क्षया सिद्धसाधनाद्वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नायाः प्रतियोगितायास्तदवच्छेदकताया वा घटकत्वात्॥

इदमुक्तमिति, तदापाद्यानुमेयार्थस्येति, प्रसङ्गे यदापाद्यं विपर्यये च यदनुमेयं तद्रूपार्थस्येत्यर्थः, कथञ्चिदभ्युप-गमेनेष्टापत्तिसिद्धसाधनैरिति, जैनमतानुगानां प्रसङ्गे आरोप्यस्य कथञ्चिदभ्युपगमेन तस्मिन्निष्टापत्त्या विपर्यये च यत्साध्यं तदपि कथञ्चिदभ्युपगमेन स्याद्वादक्रोडीकृतमेवेति तस्मिन् सिद्धसाधनेन चेत्यर्थः, यद्यप्यत्र प्रसङ्गविपर्ययोभयापेक्षया द्विवचनमेव युक्तियुक्तं तथापि तयोर्व्यक्त्यपेक्षयानेकत्वेन तदभिप्रायेण बहुवचनम्, तेषां प्रसङ्गविपर्ययाणाम्, कथञ्चिदभ्युपगममेव निषेधमुखेनाह— नहीति, हिर्हेत्वर्थे, यद्यद्बौद्धैः क्षणिकत्वानित्यत्वभेदादिकं शब्दघटादौ यद्यच्च नैयायिकैस्तत्प्रतिपक्षतयाऽक्षणिकत्वनित्यत्वाभेदादि-कं साधनीयं तत्सर्वं नयसमूहमयसिद्धान्तवादिनाऽऽर्हतेन नयभेदेनाभ्युपगतमेवेति सिद्धसाधनदोषबलात्तदनुमानस्याप्यनुत्थितिरेवेत्या-शयेनाह—न चेति, अस्य तथेत्यनेनान्वयः, तथेति, दुरभ्युपगममित्यर्थः, एवं चेति, यत्पराभ्युपगतं जैनानभ्युपगतं तथाविधतत्त्वाभावे च सतीत्यर्थः। नवेत्यादीति, अत्रादिपदेन शब्दादिः स्वोत्पत्त्यव्यवहितोत्तरकालीनध्वंसप्रतियोगी न वा स्वोत्पत्तिव्याप्यो न वा

कल्पलतिकोपेतम्

स्याद्वादेप-प्रसङ्गादी-नामशाम-अस्यम्।

स्वाधिकरणक्षणोत्तरत्वं स्वध्वंसव्याप्यं न वेत्यादिविप्रतिपत्तयो गृह्यन्ते । विधिकोटौ सिद्धसाधनमाह–**पर्यायार्थतयेत्यादिना** । इदमुपलक्षणं, द्रव्यार्थिकनयेन शब्दादौ सर्वत्र क्षणिकत्वाभावस्य सत्त्वे उत्पत्तिव्याप्यत्वाभावस्य चाभ्युपगमेन निषेधकोटावपि सिद्धसाधनादिति, बौद्धपक्षीयविधिकोटिकनैयायिकपक्षीयनिषेधकोटिकविप्रतिपत्तिवन्नैयायिकपक्षीयविधिकोटिकबौद्धपक्षीयनिषेधकोटिका या प्रागुपदर्शिता विप्रतिपत्तिस्साऽप्यस्मन्मतसाधारणी नेत्युपदर्शनायाह–**सत्त्वमिति**। तत्र हेतुमाह-**अस्मदपेक्षयेति**, द्रव्यस्येव पर्यायस्यापि द्रव्यनयविवक्षायां द्रव्यत्वार्पणेन स्थिररूपतयाऽनेकक्षणवृत्तित्वेन तदुभयं क्रमिकक्षणमात्रवृत्त्यनेकवृत्तिधर्मस्य द्वित्वस्यान्यतरत्वस्य वा समानाधिकरणमिति तादृशधर्मसमानाधिकरणो योऽन्योन्याभावस्स न द्रव्यवान्नेत्याकारकः पर्यायवान्नेत्याकारको वा, किन्त्वन्य एव, तत्प्रतियोगितानवच्छेदकत्वस्य द्रव्ये पर्याये वा सत्त्वेन द्रव्यपर्यायस्वरूपातिभेदिवस्तुनोऽभावेन सत्त्वस्यापि च तत्रैव सत्त्वेन तस्य तादृशानवच्छेदकत्वव्याप्यत्वाद् विधिकोटौ सिद्धसाधनम्, एवं पर्यायनयादेशाद्द्रव्यस्यापि क्षणिकत्वेन निषेधकोटौ सिद्धसाधनेन भाव्यमिति भावः । ननु द्रव्यपर्याययोः शुद्धयोर्द्रव्यनयापेक्षया नित्यत्वेनोक्तभेदस्तादृशधर्मसमानधिकरणो मास्तु क्षणिकपर्यायविशिष्टद्रव्यवान्नेति द्रव्यवद्घटोभयं नेति वा क्षणविशिष्टपर्यायवान्नेति वा पर्यायवद्घटोभयं नेति प्रतीतेर्वा विषयो भेदस्तु तथा स्यादेवेति द्रव्ये पर्याये च तादृशावच्छेदकत्वस्यैव सत्त्वेन तद्व्यतिरिक्तस्य च वस्तुनोऽभावेन कुत्राप्यनवच्छेदकत्वस्याप्रसिद्ध्या तद्व्याप्यत्वस्य सत्त्वेऽभावेन कथं सिद्धसाधनं विधिकोटौ स्यादित्याशङ्कायामाह-**वैशिष्ट्येत्यादि**, वैशिष्ट्यानवच्छिन्नत्वं प्रतियोगितावच्छेदकतायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वञ्च प्रतियोगितायां निवेशनीयमिति, अथवा द्रव्यपर्यायोभयवान्नेति भेदस्यापि पर्यायवान्नेति भेदस्येव द्रव्यवत्तत्क्षणविशिष्टं नेति भेदस्यापि च तादृशधर्मसमानाधिकरणत्वेन

तादृशभेदमादाय पूर्वोक्तदोषतादवस्थ्यादवच्छेदकतायामपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं वैशिष्ट्यानवच्छिन्नत्वं च प्रतियोगितायामपि निवेश्यमिति, वेति चार्थे । वैशिष्ट्यानवच्छिन्नत्वप्रवेशफलं द्रव्ये पर्याये च यथाक्रममाह—

क्षणिकपर्यायविशिष्टस्यैव द्रव्यस्याक्षणिकत्वानभ्युपगमात्, पर्यायेऽपि द्रव्यत्वेन स्थिरत्वग्रहे क्षणविशिष्टत्वेनैव क्षणिकत्वोपगमौचित्यात् । नैयायिकानामप्येकदेशिनामन्त्यशब्देऽन्त्यस्मृतिनाश्योपान्त्यस्मृतिजन्यसंस्कारेऽतिरिक्तक्षणे च क्षणिकत्वस्वीकर्तॄणां विधौ बाधाच्च । किन्त्वस्माभिः सह बौद्धानां विवादे शुद्धद्रव्यत्वं क्षणिकतावच्छेदकं नवेत्यादिविप्रतिपत्तिर्युक्ता । न च तदुत्तरं शुद्धद्रव्यत्वेन क्षणिकतासाधनाय किञ्चित् प्रमाणं परस्य प्रगल्भते, अनुभवबाधादिति विजयते जैनेश्वरं शासनम् ॥ ९ ॥

क्षणिकपर्यायेत्यादिना, उक्तविप्रतिपत्तौ यथा नास्मन्मतसाधारण्यं तथाविधिकोट्यभ्युपगन्तॄणां नैयायिकानामेकदेशिमतेन विधौ बाधान्न तन्मतसाधारण्यमपि तस्या इत्याह–नैयायिकानामिति, शुद्धद्रव्यत्वमिति, प्राधान्येनाविवक्षितपर्यायं यद्द्रव्यं तत्त्वमित्यर्थः, न तु पर्यायाविमिश्रं यद् द्रव्यं तत्त्वं, तथा सति स्याद्वादिनां द्रव्यपर्यायोभयात्मत्वस्य वस्तुत्वसामनैयत्यात्तस्याऽप्रसिद्धिस्स्यात्, न चात्राशङ्क्यं क्षणिकवादिनां शुद्धद्रव्यत्वस्याप्रसिद्ध्या पक्षत्वं कथं युक्तमिति, तन्मतेऽसत्ख्यात्या प्रसिद्धिं नीतस्यापि पक्षत्वसम्भवात्, अत एव स्थिरो भावो न सन् अक्षणिकत्वात् शशशृङ्गवदिति व्यतिरेक्यनुमाने असद्भूतस्यापि स्थिरभावस्य पक्षतया शशशृङ्गस्य च दृष्टान्तविधयोपन्यासोऽपि तेषां सङ्गच्छते । विप्रतिपत्तिरिति, अत्र विधिकोटिस्सुगतसुतानाम्, निषेधकोटिरर्हद्भक्तिभरनिर्भरहृदयानाम्, तदुत्तरम् विप्रतिपत्त्यनन्तरम्, शुद्धद्रव्यत्वेनेति, तृतीया याअवच्छेद्यत्वार्थकत्वा-

कल्पलतिकोपेतम्

स्याद्वादिबौद्धयोर्वादे विप्रतिपत्तिविशेषोपदर्शनम् ।

च्छुद्दद्रव्यत्वावच्छेदेनेत्यर्थः, परस्य बौद्धस्य, उक्तविमतिपत्तौ स्वीकृतविधिपक्षनिर्णायकनिषेधात्मकपरपक्षबाधकप्रमाणाभावेन तूष्णींभूते वादिनि बौद्धे यत् स्यात्तदाह–विजयते जैनेश्वरं शासनमिति, तत्प्रामाण्याभ्युपगन्तुः ऋजुनयशुद्ध्यर्थं प्रतिवादित्वमात्मन्याकलयतस्स्याद्वादिनो विजयादिति भावः ॥ ९ ॥ दशमश्लोकमवतारयितुं भूमिकामाह—

इदानीं तु न्यायनये प्रस्तुते बौद्धपूर्वपक्षः, स्यादेतत् बीजत्वेन सामर्थ्ये सिद्धे समर्थानां बीजजातीयानामिवैकस्यापि बीजस्य सहकारिसाकल्यवैकल्याभ्यामेव करणाकरणयोरुपपत्तौ स्थैर्यं सिद्धयति, न त्वेतदस्ति, समर्थस्य क्षेपायोगेन सहकारिसमवधानसमनियतस्यैव कल्पनात्, समर्थस्यापि सहकारिविरहे तदा कार्यानुत्पत्तौ तदकरणत्वस्योत्पत्तौ च सहकारिणामकारणत्वस्यासमर्थे च सहकारिसाकल्ये समर्थबीजविरहेऽपि कार्योत्पत्तौ बीजाकरणत्वस्यानुत्पत्तौ च बीजविरहेण समर्थस्यापि सहकारिणोऽकारणत्वस्य प्रसङ्गात् ॥

इदानीं त्वित्यादिना । यदि बीजत्वेनाङ्कुरानुकूलसामर्थ्यं सिद्धं स्यात्तदा निखिलबीजेषु तदविशेषेऽपि यथैकस्य बीजस्य सहकारिसाकल्येऽङ्कुरकारित्वमपरस्य च तस्य सहकारिवैकल्ये तदकारित्वं तथा बीजत्वावच्छिन्नाया एकबीजव्यक्तेरपि यदा सहकारिसाकल्यं तदाङ्कुरकारित्वं यदा च सहकारिवैकल्यं तदा नेत्येवं तदुभयमुपपन्नं भवेत्तदैकत्र तदुभयान्यथानुपपत्त्या स्थैर्यं सिद्धयति, न च बीजत्वेन सामर्थ्यं सिद्धमित्यभिप्रेत्याह बौद्धः–स्यादेतत् बीजत्वेन सामर्थ्ये इत्यादिना, तत्र हेतुमाह–समर्थस्येत्यादि, तथा च बीजत्वस्य सहकारिकारणासमवहितेऽसमर्थेऽपि बीजे सत्त्वेनातिप्रसक्तत्वेनानवच्छेदकत्वान्न तद्रूपेण सामर्थ्यम्, किन्तु कुर्वद्रूपत्वेनैवेति न सहकारिसाकल्यवैकल्याभ्यां करणाकरणे, किन्तु सामर्थ्यासामर्थ्याभ्यामेव, न च कुर्वद्रूपत्वेन बीजस्य सामर्थ्येऽ-

पि तत्र सामग्री वैजनिकेति नियमान्नह्येकं कार्यकरणदक्षं किन्त्वन्यसापेक्षमित्यपेक्षणीयसत्त्वतद्विरहप्रयुक्ते एव करणाकरणे इति वाच्यम्, समर्थे बीजे सत्येव सकलसहकारिसमवधानं सहकारिसमवधान एव च समर्थबीजमित्येवं मिथो व्याप्यव्यापकभावाभ्युपगमेन सामर्थ्यवतो नियमेन सहकारिसमवधानसम्भवेनादोषादिति भावः। सामर्थ्यसहकारिसमवधानयोस्सामनैयत्यानभ्युपगमे दण्डमाह—**समर्थस्यापीत्यादिना**, वीजस्येति शेषः। **सहकारिविरहे** सहकारिविरहलाभोपगमे, **तदकरणत्वस्येति**, अन्यत्र तदकरणस्येति पाठः। समर्थेऽपि बीजेऽङ्कुरनिरूपितकारित्वाभावस्येत्यर्थः। वीजसत्त्वेऽप्यङ्कुरानुत्पादेनान्वयव्यभिचारादिति भावः। **उत्पत्तौ**, अङ्कुरकार्योत्पत्तौ, सहकारिविरहे इत्यनुषज्यते, **सहकारिणामकारणत्वस्येति**, अत्र सहकारिणामभावेऽपि बीजमात्रादङ्कुरोत्पत्तेर्व्यतिरेकव्यभिचारादिति हेतुरूह्यः। यदि सहकार्यसमवधानकालीनं बीजमङ्कुरमुत्पादयेत्तदा व्यतिरेकव्यभिचारात्सहकारिणां यदि चाङ्कुरं नोत्पादयेत्तदाऽन्वयव्यभिचाराद् बीजस्याकारणत्वं स्यादिति दोषमुद्भाव्य समर्थबीजविरहितं तदितरसकलसहकारिकारणं यद्यङ्कुरं कुर्यात् तदा व्यतिरेकव्यभिचाराद्वीजनिष्ठाङ्कुरकार्यकारित्वाभावस्य यदि च न कुर्यात् तदाऽन्वयव्यभिचारात्सहकारिणोऽकारणत्वस्य प्रसङ्गस्स्यादिति दोषोद्भावनार्थमाह—**असमर्थे च सहकारिसाकल्ये** इत्यादि, सहकारिसाकल्यस्यैकविशिष्टापरत्वरूपत्वेन विनिगमनाविरहेण गुरुभूतानेककारणत्वप्रसक्तेस्तद्रूपेण सामर्थ्याभावात् सहकारिसाकल्यं विशेषयति—**असमर्थे चेति**। **प्रसङ्गादिति** अनेन तदकरणत्वस्येत्यादिचतुर्णामपि षष्ठ्यन्तानामन्वयः। ननु कुशूलस्थबीजे शिलाशकलादङ्कुरजननप्रयोजकविशेषाऽस्वीकारेऽङ्कुरार्थिनः कृषीवलाः प्रवर्त्तन्ते कुशूलस्थबीजे न तु शिलादाविति प्रवृत्तिनियमो न स्यात्, अङ्कुरजनकतावच्छेदकत्वेनाभ्युपगतस्य कुर्वद्रूपत्वस्य कुशूलस्थबीजेऽभावेनाज्ञानात्तद्रूपेणेष्टसाधनत्वस्याप्यभावेनाज्ञा-

नादिति तदन्यथानुपपत्त्या बीजत्वेनैव सामर्थ्यमभ्युपगन्तव्यम्, एवं च कुशूलस्थबीजे बीजत्वेन सामर्थ्यसिद्धौ तत्राकरणं सहकारिविरहाधीनमेवेत्यायातं समर्थस्यापि क्षेपकारित्वं, तेन च समर्थस्य क्षेपायोग इति नियमे मानाभाव इत्याशयेनाशङ्कते—नैयायिकः,

प्रवृत्त्यन्यथानुपपत्त्या बीजत्वेनैव सामर्थ्यम्, अन्यथाङ्कुरार्थिनः शिलाशकलाविशिष्टे कुशूलस्थबीजेऽप्रवृत्तिः,तथा च समर्थेऽपि भवति सहकारिवैकल्यात् क्षेपयोग इति चेत्। न। परम्परया समर्थक्षणं प्रत्येवानायत्या बीजत्वेन सामर्थ्यकल्पनात् प्रवृत्त्युपपत्तेः। एवं सति सर्व एव तत्सन्तानान्तःपातिनो बीजक्षणाः समानशीलाः स्युर्यत्र तत्र सहकारिसमवधाने सति करणनियमात् सर्वत्र च सहकारिसमवधानसम्भवादिति चेत्, न, समर्थ एव क्षणे क्षित्यादिसमवधानं, तत्र च न बीजत्वेन कारणत्वं, किन्तु तत्कुर्वद्रूपत्वेनेत्यभ्युपगमे दोषाभावात्। न चैवमिष्टसाधनताज्ञानाभावाद्बीजे प्रवृत्त्यनुपपत्तिः, लाघवादिष्टप्रयोजकताज्ञानस्यैव प्रवर्त्तकत्वात् ॥

प्रवृत्त्यन्यथानुपपत्त्येति, प्रवृत्तिनियमान्यथानुपपत्त्येत्यर्थः। बीजत्वेनैवेति, तथा च बीजजातीयदृष्टान्तेनैकत्रापि व्यक्तौ सहकारिसाकल्यवैकल्याभ्यां करणाकरणोभयवत्त्वं वाच्यमिति भावः। अप्रवृत्तिरिति अप्रवृत्तिप्रसङ्गस्स्यादित्यर्थः। कुर्वद्रूपात्मकैः पूर्वपूर्वबीजैरुत्तरोत्तरबीजोत्पत्तिक्रमेणोत्पन्नं यदङ्कुरसमर्थसहकारिसमवहितबीजं तत्प्रति कुशूलस्थबीजस्य परम्परया तद्बीजजननान्यथानुपपत्त्या बीजत्वेन जनकत्वं कल्प्यत इति परम्परयाऽङ्कुरजननानुकूलस्सामर्थ्यलक्षणो यो विशेषस्स कुशूलस्थबीज एव न शिलाशकलादावित्येकत्र प्रवृत्तिर्नापरत्रेति प्रवृत्तिनियमस्स्यादेवेत्युत्तरयति—परम्परयेत्यादिना। पु-

नन्नैयायिकः शङ्कते—**एवं सतीत्यादिना, एवं सति** अङ्कुरकुर्वद्रूपात्मकं बीजं प्रति कुशूलस्थबीजस्य बीजत्वेन कारणत्वाभ्युपगमे
सति; **तदिति** बीजेत्यर्थः, **बीजक्षणा इति** पूर्वपूर्वबीजव्यक्त्युत्पन्नोत्तरोत्तरबीजव्यक्तय इत्यर्थः । **समानशीला इति** अङ्कु-
रसमर्थबीजक्षणकारणतावच्छेदकीभूतबीजत्वधर्मवत्त्वेन समानयोग्यताका इत्यर्थः, **यत्रेति** अङ्कुरसमर्थबीजात्मके कार्ये इत्यर्थः,
**तत्रेति** अत्र सप्तम्या निरूपितत्वार्थकत्वेन तादृशबीजात्मककार्यनिरूपितत्वमित्यर्थः, अस्य च करणनियमादित्येतद्घटककरणप-
दार्थे कारित्वेऽन्वयः, **करणनियमादिति,** भवदभिप्रायेणेति शेषः, भवता यत्र कारणतावच्छेदकधर्मवत्त्वं तत्र सर्वदैव सहकारि-
समवहितत्वविशिष्टकारित्वमित्यभ्युपगम्यत इति सर्वस्माद् बीजादङ्कुरकुर्वात्मकबीजोत्पत्तावङ्कुरोत्पत्तिः प्रसज्यत इति बीजपर-
म्पराभ्युपगमोऽपि व्याहन्येत, प्राथमिकादेव बीजात्कुशूलादिस्थादङ्कुरकुर्वद्रूपात्मकबीजोत्पादतः तृतीयक्षण एवाङ्कुरोत्पत्त्या
विसभागसन्तानापत्तेरित्याशयः ॥ **निराकरोति—नेति,** अङ्कुरसमर्थबीजं प्रति बीजत्वेन कारणत्वमुक्तदोषान्नाङ्गीकृतं, किन्तु त-
त्कुर्वद्रूपत्वेन, तत्रापि तत्पूर्वस्य तत्कुर्वद्रूपत्वेनेत्येवं पूर्वपूर्वबीजक्षणस्य तत्तत्कुर्वद्रूपत्वेन कारणत्वमिति तद्रूपेण सर्वासां बीजव्य
क्तीनां न समानयोग्यताकत्वं, तस्यैकस्य सर्वेषु बीजेष्वभावेन योग्यतावच्छेदकत्वाभावादिति नोक्तदोष इति भावः । नन्वेवं कुशूल-
स्थबीजस्याङ्कुरं प्रति कारणत्वमेव न स्यात्, बीजत्वेन तत्र कारणत्वानङ्गीकारात्, परम्परया कुर्वद्रूपत्वेन तत्र कारणत्वस्य चान्यथा
सिद्ध्याऽसम्भवादिति तत्राङ्कुरात्मकं यदिष्टकार्यं तत्साधनत्वज्ञानाभावादङ्कुरार्थिनः प्रवृत्तिरेव न स्यात् इत्याशयेनाशङ्क्य निषे-
धति **नचेत्यादिना** । लाघवमेवाह—

**अन्यथासिद्धिपञ्चकविरहघटितकारणत्वप्रवेशापेक्षया तच्चतुष्टयविरहघटितप्रयोजकत्वप्रवेशो हि लाघवं** ॥ ६६ ॥

स्फुटमेव । नियतान्वयव्यतिरेकाभ्यां बीजजातीयस्याङ्कुरं प्रति कारणत्वग्रहश्च न बीजत्वमवच्छेदकमवगाहते, समर्थस्य क्षेपायोगात्, कुशूलस्थादपि बीजादङ्कुरोत्पादप्रसङ्गात्, किन्तु बीजत्वावान्तरकुर्वद्रूपत्वम् । समर्थानां च स्वकारणसामर्थ्याधीनः समाजनियमः प्रमाणबलादेव कल्प्यते, एकविरहेऽपरस्मात्कार्योत्पादे तस्याकारणत्वप्रसङ्गात्, अनुत्पादे च सामर्थ्यायोगात्,

अन्यथासिद्धीत्यादि, अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्त्तित्वरूपं यदेव कारणत्वस्य लक्षणं तदेव प्रयोजकत्वस्य, तत्रैतावानेव विशेषः कारणत्वस्य लक्षणे सत्यन्तेनान्यथासिद्धिपञ्चकशून्यत्वं विवक्षितं, प्रयोजकत्वलक्षणे त्वन्यथासिद्धिचतुष्टयशून्यत्वं, नियतावश्यकपूर्ववर्त्तिभिन्नत्वलक्षणपञ्चमान्यथासिद्धिवतोऽपि परम्पराकारणस्य प्रयोजकत्वाक्षतेः, तथा च प्रवृत्तिं प्रतीष्टप्रयोजकत्वज्ञानस्य कारणत्वे तस्यान्यथासिद्धिचतुष्टयशून्यत्वावगाहित्वेन लाघवम्, इष्टसाधनत्वज्ञानस्य कारणत्वे त्वन्यथासिद्धिपञ्चकशून्यत्वविषयकत्वेनाधिकविषयकत्वाद् गौरवं स्यादिति भावः । नन्वङ्कुरत्वावच्छिन्नं प्रति बीजस्य कारणत्वग्रहः कथं कुर्वद्रूपत्वमवच्छेदकविधयाऽवगाहते, यज्जातीययोरन्वयव्यतिरेकौ तज्जातीययोरेव कार्यकारणभाव इति सामान्यनियमावष्टम्भिनौ बीजत्वावच्छिन्नस्य सत्त्वेऽङ्कुरत्वावच्छिन्नस्य सत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकौ बीजत्वेनाङ्कुरत्वेन कार्यकारणभावग्राहकौ विद्येते इत्यङ्कुरं प्रति बीजस्य कारणत्वग्रहे तदवच्छेदकविधया बीजत्वस्यैवावगाहनस्य युक्तिसिद्धत्वादित्याशङ्कायामाह–नियतान्वयव्यतिरेकाभ्यामिति । तत्र बाधकमाह–समर्थस्येति, न च समर्थस्यापि सहकारिविरहात्क्षेपो युक्त एवेति वाच्यम्, सहकारिसमवधानतदभावयोः करणाकरणप्रयोजकत्वापेक्षया सामर्थ्यतदभावयोस्तथात्वकल्पने लाघवादिति भावः ।

**किन्त्वित्यादि**, तथा च न बीजत्वेनाङ्कुरत्वेनान्वयव्यतिरेकग्रहौ, किन्तु सहकारिसमवहितबीजत्वेनाङ्कुरत्वेनैवेति ताभ्यां जायमानः कारणत्वग्रहो बीजत्वव्याप्यकुर्वद्रूपत्वात्मकवैजात्यमेवावच्छेदकविधयावगाहते सहकारिसमवहितबीजत्वस्यैव कुर्वद्रूपत्वात्मकत्वादिति भावः। सहकारिसंवलनतदभावयोः करणाकरणप्रयोजकत्वानुपगमे सहकार्यसमवधानकालेऽपि समर्थादुपादानकारणात्कार्योत्पादप्रसङ्गस्स्यादित्यत आह—**समर्थानां चेति**, कुर्वद्रूपत्ववतां चेत्यर्थः, **समाजनियमः** कल्प्यते इत्यनेन सम्बध्यते, **कारणसामर्थ्याधीन** इत्येतत्तु समाजनियमोपपादकम्, अस्य च स्वम्, अङ्कुरकुर्वद्रूपात्मकं यद्बीजं तस्य यत्कारणं तत्कुर्वद्रूपात्मकं बीजं तस्य यत्सामर्थ्यं सहकारिसमवहिताङ्कुरकुर्वद्रूपात्मकबीजजननयोग्यत्वं तदधीन इत्यर्थः, अथवाङ्कुरकुर्वद्रूपात्मकबीजादिसमर्थकारणसत्त्वासत्त्वाधीन इत्यर्थः, समाजनियमग्राहकप्रमाणानुग्राहकतर्कमाह—**एकविरहे** इति, एकविरहे क्षित्यादिविरहे, **अपरस्मात्** समर्थत्वेनोपगताद्बीजादितः, **कार्योत्पादे** आपादनीयकार्योत्पादोपगमे, तस्य क्षित्यादिरूपसहकारिणः अकारणत्वप्रसङ्गादिति अत्र व्यतिरेकव्यभिचारेणेत्यादिः, **अनुत्पादे चेति**, एकविरहेऽपरस्मात्कार्यस्येत्यस्यानुषङ्गः, सिद्धे इति शेषः। **सामर्थ्यायोगादिति**, सामर्थ्योपगमायोगादित्यर्थः, अपरस्य बीजादिलक्षणस्य सामर्थ्योपगमोऽन्वयव्यभिचारेण न स्यादिति भावः। तथा च क्षित्याद्यसमवहिते बीजादौ सामर्थ्याभावसिद्ध्या सामर्थ्यस्य सहकारिसमुदायसंवलनव्याप्यत्वसिद्धिर्निष्प्रत्यूहेति भावः। यथा क्षित्याद्यसमवहितस्य बीजादेर्नाङ्कुरसामर्थ्यं तथा बीजासमवहितानां शिलादिसमवहितानामपि क्षितिसलिलपवनानां न सामर्थ्यम्, तेषामङ्कुरं प्रति कारणभावो यो गृह्यते स बीजसहकृतानामेव, न तु शिलादिसहकृतानां, तेषामङ्कुरकार्यं प्रत्यन्वयव्यतिरेकाभावेनाकारणत्वादेवेत्याह—

**शिलादिमिलितास्तु बीजविरहिणः क्षित्यादयोऽसमर्था एव, कार्याजनकत्वात् । कुर्वद्रूपत्वाङ्गीकारश्चानुगताङ्कुरजातीयनियामकतया । कार्यव्यक्तिभेदस्य तु तथोत्पन्नकारणव्यक्तिभेदादेवोपपत्तेः । जातिश्च नैयायिकानां विधिरूपा अन्येषां च व्यावृत्तिरूपा धर्मिणि वर्त्तमाना जन्यत्वजनकत्वयोरवच्छेदिकाऽनुगतव्यवहारादिनियामिका च सम्भाव्यते ॥**

शिलादिमिलितास्त्वित्यादि, क्षित्यादिसकलसहकारिसंवलितासु शालियवादिबीजव्यक्तिष्वनुगताङ्कुरकुर्वद्रूपत्वकल्पने बीजमाह-**कुर्वद्रूपत्वाङ्गीकारश्चेति**, अथवा मिलितबीजादिव्यक्तीनां तत्तद्व्यक्तित्वेनैवाङ्कुरोत्पादप्रयोजकत्वमास्तां तत्तदङ्कुरव्यक्तौ तत्तद्बीजव्यक्तीनां विशिष्य हेतुताया आवश्यकत्वात् ययोस्सामान्ययोः कार्यकारणभावस्तयोर्विशेषयोरपीति नियमादिति किमर्थमनुगतकुर्वद्रूपत्वकल्पनमत आह--**कुर्वद्रूपत्वाङ्गीकारश्चेति, अनुगताङ्कुरजातीयनियामकतयेति**, अनुगताङ्कुरत्वावच्छिन्नोत्पादजनकतावच्छेदकतयेत्यर्थः, अनुगतधर्मावच्छिन्नकार्यस्यानुगतधर्मावच्छिन्नकारणघटितसामग्रीनियम्यताया आवश्यकत्वादिति भावः । ननु यद्यङ्कुरकुर्वद्रूपत्वं बीजत्वव्याप्यं क्षित्यादिसमवहितशालियवाद्यनुगतं तर्ह्यङ्कुरकुर्वद्रूपात्मकशालिबीजाद्यवाङ्कुरोत्पत्तिप्रसङ्ग इत्याकाङ्क्षायामाह--**कार्यव्यक्तिभेदस्य त्विति**, तत्तदङ्कुरं प्रति तत्तदङ्कुरकुर्वद्रूपात्मकतत्तद्बीजादिव्यक्तित्वेन कारणत्वमिति सामर्थ्यविशिष्टतयोत्पन्नकारणव्यक्तिविशेषस्य नियामकत्वादेव कार्यव्यक्तिविशेषनियमस्योपपत्तेरिति भावः । ननु सुगतसुतानां मते जातिर्नाङ्गीकृतेति कथमङ्कुरत्वकुर्वद्रूपत्वजातिभ्यां कार्यकारणभावो युक्त इत्यत आह-**जातिश्चेति**, **विधिरूपा** भावरूपा, **अन्येषां** बौद्धानां, **व्यावृत्तिरूपा** इतरभेदरूपा, **धर्मिणीति** जन्यत्वस्य जनकत्वस्य च धर्मिणी-

त्यर्थः । कुर्वद्रूपत्वजातौ तत्तन्मतेन विधिनिषेधकोटिपरिग्रहेण जायमानसाधकबाधकविचाराङ्गतया विप्रत्तिपत्तीराह—

अङ्कुरकारीणि बीजानि अङ्कुराकरणदशापन्नबीजावृत्तिजातिमन्ति न वा, तादृशबीजावृत्त्यङ्कुरजनकतावच्छेदकजातिमन्ति नवेत्यादिका कुर्वद्रूपत्वे विप्रतिपत्तिः । पूर्वत्र विधिकोटिप्रसिद्धिसौलभ्याय बीजपदम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया बीजत्वेन पक्षतायामंशतो बाधवारणायाङ्कुरकारीणीति विशेषणम् । अङ्कुरकारिबीजत्वावच्छेदेन साध्यसिद्धेरिष्टजातेर्जनकतावच्छेदकत्वलाभः । साध्ये बीजावृत्तिजातिमत्त्वमात्रोक्तौ बाधः अकरणदशापन्नत्वस्य बीजविशेषणत्वेऽपि निखिलफलोपधायकमात्रवृत्तिजातिसिद्ध्या न क्षणिकत्वोपपादनमतोऽङ्कुरेति ॥

अङ्कुरकारीणि बीजानीत्यादि, न च वाच्यं विधिकोट्यप्रसिद्धिरिति, अङ्कुराकरणदशापन्नं यत्कुशूलस्थं बीजं तदवृत्तिजातिर्घटत्वादिकैवेति तद्वत्त्वस्य घटादावेव प्रसिद्धेः, पक्षे च तत्सिद्ध्यत्कुर्वद्रूपत्वमादायैव सिद्ध्यतीति निरुक्तविप्रतिपत्तेः कुर्वद्रूपत्वविषयकत्वाक्षतेस्तत्साधनं युक्तमेवेति भावः । कुर्वद्रूपत्वस्याङ्कुरजनकतावच्छेदकत्वसिद्धये तद्घटितसाध्यकविप्रतिपत्त्यन्तरमाह—तादृशबीजेत्यादि, तादृशेति अङ्कुराकरणदशापन्नेत्यर्थः, न चात्रापि विधिकोट्यप्रसिद्धिरिति वाच्यम्, विधिरूपस्य तादृशबीजावृत्त्यङ्कुरजनकतावच्छेदकजातिमत्त्वस्य नैयायिकानां मते धरणित्वसलिलत्वपवनत्वादिजातिमादाय धरणिसलिलादावेव प्रसिद्धेः, अनुमानात्पक्षभूतेऽङ्कुरकारिबीजे च तादृशजातिमत्त्वसिद्धिर्बौद्धाभ्युपगतकुर्वद्रूपत्वजातिमन्तर्भाव्यैवेति, विप्रतिपत्तिद्वयेऽपि विधिकोटिर्बौद्धानां, निषेधकोटिस्तु नैयायिकानाम्, आदिपदेन अङ्कुरकरणाभाववन्ति बीजानि

अङ्कुरजनकतावच्छेदकबीजवृत्तिजातिशून्यानि नवेत्यादिविप्रतिपत्तिपरिग्रहः, तादृशजातिशून्यत्वस्याङ्कुरमकुर्वाणे बीजे सिद्धत्वभावप्रतियोगितया कुर्वद्रूपत्वरूपजातेर्बीजे सिद्धिर्द्रष्टव्या, पूर्वत्रेति आद्यविप्रतिपत्तावित्यर्थः, विधिकोटिप्रसिद्धिसौलभ्यायेति, अयं भावः, यद्यङ्कुराकरणदशापन्नावृत्तिजातिमत्त्वं बीजाघटितं विधिरूपं स्यात्तर्हि न कुत्रापि तत्प्रसिद्धिस्स्यात्; सर्वथैवाङ्कुराकारिणां घटपटादीनां सर्वेषामङ्कुराकरणदशापन्नवृत्तिघटत्वपटत्वादिजातिमत्त्वेन तदवृत्तिजातिमत्त्वाभावात् अङ्कुरकारिणां बीजावनिसलिलादीनामपि पूर्वकालावच्छेदेनाङ्कुराकरणदशापन्नतया तद्वृत्तिबीजत्वधरणित्वादिजातिमत्त्वस्यैव तेषु सत्त्वेन तदवृत्तिजातिमत्त्वासम्भवात्, बीजपदोपादाने च तादृशबीजावृत्तिजातिर्धरणित्वसलिलत्वादिकापीति तद्वत्त्वस्य धरण्यादावपि प्रसिद्धिरिति, कुर्वद्रूपत्वजातावङ्कुरत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वलाभाय पक्षतावच्छेदकावच्छेदेनैवाङ्कुराकरणदशापन्नबीजावृत्तिजातिमत्त्वसाध्यकानुमितिर्बौद्धैः कर्त्तव्या, सा च पक्षभूते बीजेऽङ्कुरकारिणीति विशेषणानुपादाने न स्यात्, तथा सति बीजत्वस्यैव पक्षतावच्छेदकतया तद्वति अङ्कुराकारिबीजे तादृशजातिमत्त्वस्याभावेन पक्षतावच्छेदकसामानाधिकरण्येन बाधस्य तत्प्रतिबन्धकस्य सद्भावादित्यतो बीजेऽङ्कुरकारीणीति विशेषणमुपात्तमित्याशयेनाह—पक्षतावच्छेदकावच्छेदेनेति, बौद्धाधिकारे त्वेतत्फलमङ्कुराकारिबीजे विधिनिषेधसाधने बाधसिद्धसाधनवारणात्मकमुक्तमिति, अङ्कुराकारिधरण्यादावङ्कुराकरणदशाविशेषापन्नबीजावृत्तिजातिसाधने धरणित्वादिजातिमादाय सिद्धसाधनं तन्निषेधसाधने बाध इत्यतो बीजानीति, पक्षतावच्छेदकावच्छेदेनानुमितेः प्रयोजनमाह—अङ्कुरकारिबीजत्वावच्छेदेनेति, इष्टजातेः कुर्वद्रूपत्वस्य, अङ्कुराकरणदशापन्नेति विशेषणं साध्यघटके बीजे यदुपात्तं तत्फलमाह—साध्य इति, यत्

क्षेत्रस्थं बीजमङ्कुरं करोति यच्च कुशूलस्थादिबीजं तदन्यत्किमपि कार्यं करोति तस्य सर्वस्य बीजस्य सामान्यतोऽकरणदशापन्नत्वाभावात् यानि बीजानि न कान्यपि कार्याणि कुर्वन्ति तेषामेवाकरणदशापन्नत्वमिति तदवृत्तेरङ्कुरतदन्यकार्याव्यवहितपूर्वक्षणवर्त्तिनिखिलबीजमात्रवृत्तेः कुर्वद्रूपत्वजातेस्सिद्धौ न क्षणिकत्वसिद्धिः; उक्तजातेः करणदशापन्ने कुशूलस्थबीजेऽपि सत्त्वात्, नन्वेवं तर्हि कुशूलस्थबीजमप्यक्षेपेण कार्यं कुर्यादिति चेन्मैवं उक्तापादनस्येष्टापादनरूपत्वेन तदाभासत्वात्, स्थिरभूतस्यापि बीजस्य विनाशं यावत् प्रतिक्षणं किञ्चित्कार्यकारित्वेनाभ्युपगमात्, तथा च कुशूलस्थक्षेत्रस्थबीजोभयसाधारणकुर्वद्रूपत्वजातेरभ्युपगमेनापि अकरणदशापन्नबीजावृत्तिजातिमत्त्वसाध्यकानुमानस्य चरितार्थत्वान्न क्षेत्रस्थबीजमात्रवृत्तिरङ्कुरकुर्वद्रूपत्वजातिसिद्धिरित्यतोऽङ्कुरपदमुपात्तमित्याह--अकरणदशापन्नत्वस्येति, निखिलेति उपधायकत्वस्य विशेषणं, न तु फलस्य, तथा च निखिलफलोपधायकमात्रवृत्तीत्यस्य यानि फलाव्यवहितप्राक्क्षणस्थानि कारणानि तत्सर्ववृत्तीत्यर्थः, अङ्कुरकारिभेदस्य व्याप्यवृत्तेर्बीजव्यावर्त्तकतयोपादाने सर्वदैवाङ्कुराकारिणो बीजादेव व्यावृत्ता जातिस्सिद्धयति नैतावता नैयायिकैः कालान्तरेऽङ्कुरकारितया स्वीकृतात् कुशूलस्थबीजाद्व्यावृत्ताया जातेः क्षेत्रस्थबीजे सिद्धिरतो न्यायमते कालिकाव्याप्यवृत्तेरङ्कुरकरणात्यन्ताभावस्य निवेशलाभाय दशापन्नेति ॥ अत्रोच्यते—

उत्तरत्र बीजत्वेनैव पक्षता, तत्सामानाधिकरण्येन सिद्धावपि जनकतावच्छेदकतया सिद्धेरेवाभिमतलाभ इति तत्त्वम्। बीजवृत्तिजातित्वं प्रत्यक्षत्वव्याप्यं नवेति तु न वाच्यं, कुशूलस्थबीजसाधारणातीन्द्रियजातिसिद्धावपि कुर्वद्रूपत्वासिद्धेः। एवं च सामर्थ्यासामर्थ्यप्रयोजककुर्वद्रूपत्वाकुर्वद्रूपत्वाभ्यां बीजादिभे-

दात् क्षणिकत्वसिद्धिरिति ॥

उत्तरत्र द्वितीयविप्रतिपत्तौ, ननु बीजत्वेनैवेत्यत्रैवकारेणाङ्कुरकारिबीजत्वेन पक्षत्वव्यवच्छेदः कृत इति पक्षतावच्छेदकीभूतबीजत्वाक्रान्तेऽङ्कुराकारिबीजे उक्तविधिकोट्यभावात्पक्षतावच्छेदकसामानाधिकरण्येन बाधस्स्यादिति चेत्, न उक्तविप्रतिपत्तौ जातेरङ्कुरजनकतावच्छेदकत्वस्य विशेषणत्वादेवाङ्कुरजनकतावच्छेदकतयाभिमतकुर्वद्रूपत्वजातिस्सिद्ध्यतीति पक्षतावच्छेदकसामानाधिकरण्येनैवानुमितिरुद्देश्या, तां प्रति चोक्तबाधस्याप्रतिबन्धकत्वादित्याशयवान् आह--तत्सामानाधिकरण्येनेत्यादि, तदिति बीजत्वेत्यर्थः; अन्याभिमतं विप्रतिपत्त्यन्तरमुपन्यस्य निराकरोति--बीजवृत्तिजातित्वमिति, विधिकोटिर्नैयायिकानाम्, बीजस्य प्रत्यक्षगोचरतया योग्यत्वेन तद्गतजातीनामपि तन्मते तथात्वात्, येनेन्द्रियेण यद्वस्तु गृह्यते तेन तद्गता जातिस्तदभावश्च गृह्यते इति नियमाभ्युपगमात्तैः, जातित्वं मनस्त्वादिजातौ वर्त्तते न च तत्र प्रत्यक्षगोचरत्वमिति व्यभिचारेण जातित्वस्य प्रत्यक्षत्वव्याप्यत्वाभावाद्विधौ बाधस्स्यादिति स माभूदित्यतो बीजवृत्तीति, प्रत्यक्षत्वमिति प्रत्यक्षगोचरत्वमित्यर्थः, निषेधकोटिस्तु बौद्धानां, तैरुक्तनियमानभ्युपगमेनैकधर्मिगताया अपि कस्याश्चिज्जातेस्स्वभावात्प्रत्यक्षत्वं कस्याश्चिन्नेत्येवमभ्युपगमात् । निषेधे हेतुमाह--कुशूलस्थेत्यादि, बीजवृत्तिजातित्वात्मकपक्षे प्रत्यक्षत्वव्याप्यत्वाभावरूपसाध्यमङ्कुरकरणाकरणदशापन्नबीजद्वयवृत्तिपराभिमतजात्यसिद्धेरित्यर्थः । बौद्धस्स्वीयपक्षोपसंहारमाह--एवञ्चेति, एवञ्च अङ्कुरजनकतावच्छेदकतया कुर्वद्रूपत्वात्मकवैजात्यसिद्धौ च । अद्यापि समर्थस्याक्षेपकारित्वनियमस्यासिद्ध्या बीजत्वेन सामर्थ्येऽपि कार्योत्पादप्रयोजकसहकारिसमवधानविरहादेव कार्यविलम्ब उपपद्यत इत्याशयवान् समाधत्ते--अत्रो-

च्यत इति ।

जात्यन्तरेण मिलिते न विभो समर्थे, क्षेपो न युज्यत इति क्षणिकत्वसिद्धिः ।
जात्यन्तराननुभवादपि च प्रवृत्तिः, सामान्यतो हि घटते फलहेतुभावात् ॥ १० ॥

हे विभो ! जात्यन्तरेण कुर्वद्रूपत्वेन, मिलिते सम्बद्धे, समर्थे बीजे, क्षेपो न युज्यत इति हेतोर्या क्षणिकत्वसिद्धिः परेणोद्घुष्यते सा न सम्भवति, बीजत्वेन सामर्थ्येऽपि सहकार्यभावतत्समवधानाभ्यां क्षेपाक्षेपोपपत्ते, जात्यन्तरस्य चाननुभवेनैव निरस्तत्वाद्, दृष्टेनैवोपपत्तावदृष्टकल्पनायां प्रमाणाभावात् ॥

विभो इति भगवद्विषयकामन्त्रणम्, नेत्यस्य क्षणिकत्वसिद्धिरित्यनेनान्वयः,क्षणिकत्वसिद्धौ हेतुमाह–क्षेपो न युज्यत इति, कस्मिन्नित्याशङ्कायामाह-समर्थे इति, किंविशिष्टे जात्यन्तरेण मिलित इति, क्षणिकत्वासिद्धौ हेतुद्वयमाह-जात्यन्तराननुभवादित्येकम्, अपि च प्रवृत्तिरित्यादिद्वितीयं, प्रवृत्तिरित्यस्य घटत इत्यनेनान्वयः, हीति एवार्थे इति श्लोकान्वयः। पूर्वार्द्धं विवृणोति हे विभो इति,-कथं न सम्भवतीत्यत आह-बीजत्वेनेति,यदि बीजत्वेनाङ्कुरसमर्थं बीजं स्यात्तर्हि कुशूलस्थबीजमप्यक्षेपेणाङ्कुरं कुर्यात्,समर्थस्य क्षेपायोगात्,न च करोतीति न तत्त्वेन समर्थमिति पारिशेष्यात्कुर्वद्रूपत्वेनैति यदभिमेतं बौद्धस्य तत्खण्डनायोत्तरार्द्धं विवृणोति—जात्यन्तरस्येति, कुर्वद्रूपत्वात्मकवैजात्यस्येत्यर्थः । अननुभवादिति मूलस्य व्याख्यामाह–अननुभवेनैवेति प्रमाणसामान्याभावेनैवेत्यर्थः, नन्वत्र न प्रमाणसामान्याभावस्सिद्धः, अनुगताङ्कुरजातीयनियामकतया सामर्थ्यप्रयोजकतया च कुर्वद्रूपत्वस्याङ्गीकरणीयत्वेनानुमानप्रमाणस्यैव तत्र सत्त्वादित्यत आह–दृष्टेनैवेति, दृष्टेनैव प्रत्यक्षविषयबीजत्वसामान्ये-

नैव, उपपत्तौ अङ्कुरादिकार्यसजातीयत्वसामर्थ्ययोरसम्भवे, अदृष्टकल्पनायामिति ताभ्यां स्वनियामकतया कुर्वद्रूपत्वात्मकातीन्द्रियवैजात्यानुमितावित्यर्थः । प्रमाणाभावादिति प्रमाणजन्यत्वाभावात्, जन्यतासम्बन्धेन प्रमाणाभावादिति वार्थः, तथा च तदनुमानस्य कूटलिङ्गजत्वेनाप्रमाणत्वमेवेति भावः । ननु यथा कुर्वद्रूपत्वमस्तीत्यत्र न किञ्चित्प्रमाणं तथा कुर्वद्रूपत्वं नास्तीत्यत्रापि न प्रमाणमिति कथं तदभावोऽवधारित आयुष्मता, प्रमाणमन्तरेण तस्यासत्त्वस्यावधारणे सत्त्वमेव किमिति न तथाऽवधार्यत इत्यत आह—

**अभिमतं च परेषां प्रमाणाभावमात्रेणैव प्रमेयाभावावधारणम् । किं च तादृशजातितदभावान्यतरवत्त्वस्य तादृशजातिप्रकारकप्रमाविषयत्वतदभावप्रकारकप्रमाविषयत्वान्यतरस्य वा साधकात् सत्त्वादेः वलृप्तसजातिबाधादक्लृप्तकल्पनगौरवप्रतिसन्धानसहकृतात्तदभावसिद्धिः ॥**

**अभिमतं चेति, परेषां बौद्धानां, प्रमाणाभावमात्रेणैवेति,** तथा चाभावसाधिका प्रमाणतोऽनुपलब्धिरेव तन्मतसिद्धास्तीति भावः । तादृशजात्यभावसाध्यकहेतुसौलभ्याय केवलान्वयितावच्छेदकरूपेण साध्यतामाह—**किञ्चेत्यादिना, तादृशजातितदभावान्यतरवत्त्वस्येति** अङ्कुराकरणदशापन्नबीजावृत्तिजातितदभावान्यतरत्वावच्छिन्नस्य अङ्कुराकरणदशापन्नबीजावृत्त्यङ्कुरजनकतावच्छेदकजातितदभावान्यतरत्वावच्छिन्नस्य वेत्यर्थः । जातितदभावयोर्वृत्तौ सम्बन्धभेदात्तयोस्स्वस्वासाधारणधर्मेणैकेन सम्बन्धेनावर्त्तमानत्वात् अन्यतरत्वेन साधारणधर्मेण सम्बन्धत्वानुपगमादन्यतरस्य नैकेन सम्बन्धेन साध्यत्वं सम्भवतीत्यालोच्यैकेन स्वरूपसम्बन्धेन वर्त्तमानयोस्तत्प्रकारकप्रमाविषयत्वतदभावप्रकारकप्रमाविषयत्वयोरन्यतरत्वेन साध्यतामाह—

ताद्दशजातिप्रकारकेति, सत्त्वादेरिति हेतोरिति शेषः, क्लृप्तजातिबाधादिति क्लृप्ता जातयोऽङ्कुराकरणदशापन्नबीजावृत्तित्वेन घटत्वादिकास्ताद्दशबीजावृत्त्यङ्कुरजनकतावच्छेदकत्वेन च क्षितित्वसलिलत्वादिका वा तासां बाधादङ्कुरकारिबीजत्वावच्छिन्ने बीजत्वावच्छिन्ने वा पक्षेऽभावनिश्चयादित्यर्थः, नाद्यापि कुर्वद्रूपत्वं नास्तीति सिद्धमिति तत्सन्देहदशायां ताद्दशजातिसामान्यबाधाऽसम्भवात् क्लृप्तेत्युक्तम्' अक्लृप्तकल्पनगौरवप्रतिसन्धानसहकृतात्तदभावसिद्धिरिति, अनुभवसिद्धस्य बीजत्वस्याङ्कुरजनकतावच्छेदकतया प्रमाणेनोपपत्तावप्यसिद्धस्य कुर्वद्रूपत्वात्मकवैजात्यस्य तथात्वेन कल्पने निरुक्तान्यतरविधेयकानुमितौ तद्विषयकत्वे यद्गौरवप्रतिसन्धानं अङ्कुराकरणदशापन्नबीजावृत्तिजात्यभावापेक्षया ताद्दशबीजावृत्त्यङ्कुरजनकतावच्छेदकजात्यभावापेक्षया वा यदुपस्थितिकृतगौरवज्ञानं तत्सहकृतात्सत्त्वादिहेतोस्तदभावसिद्धिरङ्कुराकरणदशापन्नबीजावृत्तिजात्यभावस्य ताद्दशबीजावृत्त्यङ्कुरजनकतावच्छेदकजात्यभावस्य वाऽनुमितिरित्यर्थः, अङ्कुराकरणदशापन्नबीजावृत्तिजातित्वेन ताद्दशबीजावृत्त्यङ्कुरजनकतावच्छेदकजातित्वेन वा क्लृप्ता या घटत्वादिका धरणित्वादिका वा जातयस्तासां सर्वासामभावनिर्णयेऽक्लृप्तायाश्च कुर्वद्रूपत्वजातेः कल्पनायामङ्कुरकारिबीजनिष्ठजातावङ्कुराकरणदशापन्नबीजावृत्तित्वस्य ताद्दशबीजावृत्त्यङ्कुरजनकतावच्छेदकत्वस्य वाऽक्लृप्तस्य कल्पने गौरवप्रतिसन्धाने च सत्त्वत्वताद्दशान्यतरत्वसामान्यधर्मावच्छिन्नयोर्व्याप्त्या प्रसिद्धेतरजातिबाधाऽप्रसिद्धजातिकल्पनागौरवसहकाराभ्यां व्यापकतानवच्छेदकेनापि ताद्दशजातिसामान्याभावत्वरूपविशेषधर्मेणानुमितिर्निराबाधैवेति भावः। कुर्वद्रूपत्वेन क्षेत्रस्थबीजस्याङ्कुरजनकत्वकल्पनायां समर्थस्य क्षेपायोगनियमस्य सर्वत्र जागरूकत्वाच्चक्षुरादिनाऽतीन्द्रियचक्षुरादीनां चाक्षुषादिप्रत्यक्षं प्रति करणत्वोपगमे उक्तनियमबलात्सहकारिणामवश्यंभावेन प्रागेव व्यवहितकालोत्पद्यमान-

घटपटादिसर्वचाक्षुषादिप्रत्यक्षोदयप्रसङ्गस्स्यादिति युक्तेरपक्षपातित्वेन तेषामपि तद्रूपेण करणत्वं न स्यात् तद्वदेव प्रत्यक्षसिद्धगोलकादीनामेव कुर्वद्रूपत्वेन तं प्रति करणत्वोपगमसम्भवात्; तथा च सति घटादिप्रत्यक्षं सकरणकं कार्यत्वादनुमित्यादिवदित्यनुमानात्सकरणकत्वे सिद्धे गोलकादीनां सत्त्वेऽपि चक्षुरादिविहीनानां चाक्षुषादिप्रत्यक्षाभावेन तेषां बाधेन परिशेषानुमानेन यातीन्द्रियचक्षुरादीन्द्रियसिद्धिर्भवति सापि न स्यादित्याशयेन दूषणान्तरमाह—

किञ्चैवमतीन्द्रियेन्द्रियादिकल्पनापि विलीयेत । न च परेषामिष्टापत्तिः रूपोपलब्धौ गोलकस्यापि कुर्वद्रूपत्वेनैव हेतुत्वादिति वाच्यम्, शालिवृत्तेस्तस्याऽशालाविव गोलकवृत्तेस्तस्याऽगोलकेऽपि सम्भवात्, अपरिदृश्यमानगोलकादिव्यक्तिविलोपप्रसङ्गादित्यर्थः । न चैवं कार्येण कारणानुमानविलयः, अस्यापि दोषस्याधिकत्वात् । तदुक्तं ॥ प्रत्यक्षानुपलम्भगोचरो ( जातिभेदो ) न कार्ये प्रयोजक इति वदतो बौद्धस्य शिरस्येष प्रहारः । अपि च प्रवृत्तिः सामान्यत एव फलहेतुभावाद् घटते, तथा च बीजगतविशेषस्याङ्कुरगतविशेषं प्रति प्रयोजकत्वमस्तु, न तु बीजसामान्येऽङ्कुरसामान्यहेतुत्वप्रतिक्षेपो युक्त इत्यङ्कुरत्वावच्छिन्नं प्रति बीजगतकुर्वद्रूपत्वेन हेतुत्वे क इवोपयोगः किं वा प्रमाणमिति विचारणीयम् । तदुक्तम् उत्पत्तेरारभ्य मुद्गरप्रहारपर्यन्तं घटस्तावज्जात्यन्तरानाक्रान्त एवानुभूयमानः क्रमवत्सहकारिवैचित्र्यात् कार्यकोटीः सरूपविरूपाः करोति तत्रैतावत्येव सर्वस्मिन्समञ्जसेऽनुपलभ्यमानजातिविशेषकल्पनं केन प्रमाणेन, केन वोपयोगेन गौरवप्रसङ्गदोषो न स्यात् । यो यदर्थं कल्प्यते तस्यान्यथासिद्धिरेव तस्याभाव इति हि भवानाहेति ॥१०॥

जात्यन्तरकल्पन एव दोषान्तरं समुच्चिचीषुराह—

**किञ्चैवमिति**, परेषां गोलकातिरिक्तातीन्द्रियेन्द्रियानभ्युपगन्तॄणां बौद्धानां, गोलकस्य प्रत्यक्षं प्रति कुर्वद्रूपत्वेन हेतुत्वे तस्य गोलकभिन्नेऽपि तात्कालिके प्रत्यक्षकुर्वद्रूपात्मके कायादावपि सम्भवेन तत एव प्रत्यक्षकार्योत्पत्त्या तद्विलोपप्रसङ्गस्स्यादित्याशयेन निषेधति **शालिवृत्तेरिति** तस्येति, अङ्कुरकुर्वद्‌रूपत्वस्येत्यर्थः,**अशालाविति** यवादिबीजे इत्यर्थः,तस्य रूपप्रत्यक्षकुर्वद्‌रूपत्वस्य,**अपरि-दृश्यमानेति**,किञ्चैवमतीन्द्रियेन्द्रियेत्यत्र प्रकृतातीन्द्रियपदेनापरिदृश्यमान उक्तः इन्द्रियपदेन च गोलक उक्तः, तथा च स्वप्रत्यक्षेणापरिदृश्यमानानां चाक्षुषादिरूपकार्यैकप्रमाणगम्यानामिन्द्रियत्वेन परैरभ्युपगतानामिन्द्रियाधिष्ठानस्वीयगोलकानामसिद्धिप्रसङ्गादित्यर्थः, गोलकमन्तरेणापि तात्कालिकात्कुर्वद्‌रूपत्ववतः कायादेरेव तत्कार्योपपत्तेरिति भावः। कुर्वद्‌रूपत्वेन कारणत्वे कार्यतावच्छेदकीभूतधूमत्वाद्यवच्छिन्नेन कार्येण वन्हित्वाद्यवच्छिन्नस्य कारणस्यानुमानं न स्यात् ,वह्न्यादिवृत्तिधूमादिकुर्वद्‌रूपत्वस्य वह्न्यादिभिन्नेऽपि सम्भवज्ञानेन वह्न्यसमवहिताद् धूमकुर्वद्‌रूपत्ववतोऽन्यस्मादपि धूमोत्पत्तिसम्भवात् वह्न्यादौ धूमादिहेतुत्वाभावसंशयनिरासतर्कासम्भवेन व्यभिचारशङ्काया अनिवृत्तेरित्याशङ्क्य तमपि दोषं बौद्धं प्रत्येवावतारयति—**नचैवमित्यादिना**, एवं गोलकवृत्तिकुर्वद्रूपत्वस्याऽगोलकेऽपि स्वीकारे, **अधिकत्वादिति** भवतामिति शेषः, **तदुक्तमिति** कुसुमाञ्जलिप्रथमस्तबक इति शेषः, **प्रत्यक्षानुपलम्भगोचर इति** कारणताग्राहकान्वयव्यतिरेकोपलम्भविषयतावच्छेदक इत्यर्थः, **जातिभेदः** जातिविशेषः वह्नित्वादिः, क्वचिज्जातिभेद इति पाठो नास्त्येव, **न कार्यं प्रयोजक इति** न धूमत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदक इत्यर्थः, अपि तु कुर्वद्‌रूपत्वमिति शेषः, अङ्कुरत्वावच्छिन्नं प्रति बीजत्वेन बीजं कारणमित्यङ्कुरत्वबीजत्वसामान्यधर्मावच्छिन्नयोः

कार्यकारणभावज्ञाने सत्यङ्कुरार्थिनो बीजत्वावच्छिन्न एव प्रवृत्तेस्तदुपयुक्ततया बीजत्वाभ्युपगमोऽस्तु, अस्तु च यत्सामान्ययोः कार्यकारणभावस्तद्विशेषयोरपीति न्यायेन बीजत्वावान्तरभूतेन शालित्वयवत्वादिनाङ्कुरत्वावान्तरभूतेन शाल्यङ्कुरत्वयवाङ्कुरत्वादिना च कार्यकारणभावात्तदुपयुक्ततया शालित्वाद्यभ्युपगमः, न तु कुर्वद्रूपत्वाभ्युपगमः, तस्य प्रवृत्त्यनुपयुक्तत्वात्, अङ्कुरं प्रति कुर्वद्रूपात्मकमव्यवहितपूर्वकालीनं क्षेत्रस्थमेव बीजं, तस्य चाङ्कुरार्थिनो बीजानयनप्रवृत्तिकालेऽभावादित्याशयेन चतुर्थचरणं सङ्गमयति—अपि चेत्यादिना, बीजगतविशेषस्य शालित्वादेः, अङ्कुरगतविशेषं शाल्यङ्कुरत्वादिकं, प्रयोजकत्वं जनकतावच्छेदकत्वं, तदुक्तमिति बौद्धाधिकारे वक्ष्यमाणमेतदुक्तमित्यर्थः, जात्यन्तरानाक्रान्त एवानुभूयमान इति जात्यन्तराक्रान्ततयाननुभूयमान इत्यर्थः , यद्वा जात्यन्तरशून्यतयानुभूयमान इति यथाश्रुतार्थः न च वाच्यमयमर्थो न सङ्गतः बौद्धैरभ्युपगतायाः कुर्वद्रूपत्वजातेरतीन्द्रियत्वेनायोग्यत्वात्तदभावस्यापि तथात्वात् तस्य प्रत्यक्षानुपपत्तेरिति, जातेर्योग्यत्वे योग्यव्यक्तिवृत्तितामात्रस्य प्रयोजकत्वेन बीजस्य प्रत्यक्षयोग्यत्वेन तद्गतजातिविशेषस्याप्ययोग्यत्वासम्भवात्, तदभावस्य प्रत्यक्षेण ग्रहीतुं शक्यत्वात्, न च वाच्यं योग्यवृत्तित्वेऽपि कुर्वद्रूपत्वजातेः प्रत्यक्षविरोधित्वकल्पनया तदभावस्य दुर्ग्रहत्वमिति, तस्येन्द्रियग्राह्यत्वविरोधिताकल्पनाया अप्रामाणिकत्वात्, एतावता प्रमाणाभावो विवृत्तः। सरूपविरूपा इति सजातीयविजातीयरूपा इत्यर्थः, घट इत्युपलक्षणं देहादीनामपि, मुद्गरप्रहारेति च देहादिनाशकानाम्, अत्र पूर्वतनोराहारादिपुद्गलसहकृतात् यदुत्तरशरीरमुत्पद्यते तत्तस्य सजातीयं कार्यं, यच्चावच्छेदकतासम्बन्धेन ज्ञानं प्रति तादात्म्येन कारणीभूताच्छरीराज्ज्ञानमुत्पद्यते तस्य तद्विजातीयकार्यमिति सजातीयविजातीयकार्योदाहृतिरवसेया, अत्र सरूपा विरूपा इति पाठान्तरं। तत्राप्यर्थ उक्त एव, प्रदर्शितप्रमाणाभावमेव स्पष्टयति तत्रैतावत्येवेति, तत्रैतावतैवेति पाठान्तरम्, यस्य कल्पना-

यां किमपि फलमनन्यथासिद्धं भवेत्तत्रैव गौरवस्यादोषत्वेन कुर्वद्रूपत्वात्मकवैजात्यकल्पनायामनन्यथासिद्धफलाभावाद् गौरवस्य दोषत्वं स्यादेवेत्याह– केन वोपयोगेन गौरवप्रसङ्गदोषो न स्यादिति, उपयोगेनेति फलेनेत्यर्थः, अथवा केन वोपयोगेनेति उपयोगस्यापि प्रमाणत्वात् गोवलीवर्दन्यायेन पृथगुपादानमिति, येन गौरवेत्यादि पाठान्तरं, यदि जातिविशेषकल्पने प्रमाणं भवेत् तदा प्रमाणमूलकत्वाद् गौरवस्यादोषत्वं स्यात्, न चैवमत्रेति भावः । ननु कुर्वद्रूपत्वात्तत्फलं भिन्नं न च तदभावे तदभावो युक्त इत्याशङ्कायामाह–यो यदर्थमिति, उपयोगपदस्य प्रमाणार्थकत्वपक्षे यो यदर्थमित्यादेः अन्यथानुपपद्यमानकार्यविशेषस्याभावेन न तल्लिङ्गकानुमानेन तस्य सिद्धिरिति भावः ॥ १० ॥ एकादशश्लोकावतरणिकामाह–जात्यन्तरकल्पन एवेति,

सङ्ग्राहकेतरविकल्पहतिश्च तत्र, व्यक्तौ विरोधगमने व्यवहारबाधः ॥
व्यावृत्तयोऽप्यनुहरन्ति निजं स्वभाव–माकस्मिकव्यसनिता द्विषतां तवाहो ॥११॥

च पुनः, परेण कुर्वद्रूपत्वजातौ स्वीक्रियमाणायां सङ्ग्राहकेतरयोः सङ्ग्राहकप्रतिक्षेपकयोर्यौ विकल्पस्तेन कृत्वा हतिः कल्प्यमानबाधः । तथाहि–स खलु जातिविशेषः शालित्वस्य सङ्ग्राहको वा स्यात् प्रतिक्षेपको वेति वक्तव्यं, सङ्ग्राहको व्यापकः, प्रतिक्षेपको व्यापकीभूताभावप्रतियोगी ॥ आद्ये कुशूलस्थस्यापि शालेः कथं न कल्प्यमानजात्यन्तरवत्त्वमिति कृतं तेन बीजत्वसमशीलेन । द्वितीये त्वङ्कुरकारित्वेनाभिमतस्यापि शालेः कथं तद्वत्त्वमित्यभ्युपगमव्याघातः ॥

चशब्दः पुनरर्थे दोषान्तरसङ्ग्रहण इति यावत्। ननु कुर्वद्रूपत्वजातौ स्वीक्रियमाणायां कोऽन्यो दोष इत्याशङ्कायामाह–सङ्ग्राहकेति। ननु न कुर्वद्रूपत्वे सङ्ग्राहकेतरविकल्पहतिः धरणिस्थशालिबीजवृत्तित्वविशिष्टशालित्वव्यापकत्वकुशूलस्थशालिबीजवृत्तित्वविशिष्टशालित्वविरोधित्वोभयसम्भवादित्याशङ्कायामाह–व्यक्तौ विरोधगमने व्यवहारबाध इति, कुर्वद्रूपत्वस्य विध्यात्मकजातित्वपक्षे दोषमुक्त्वा व्यावृत्तिरूपत्वपक्षेऽपि दोषमाह–व्यावृत्तय इति, तत्तद्व्यक्तिविश्रान्तकार्यकारणभावाभ्युपगमेऽङ्कुरत्वाद्यवच्छिन्नस्याकस्मिकत्वापत्त्या बौद्धानां सहृदयहृदयचमत्कृतिकारकोपहासपात्रतामाह–आकस्मिकेति, अहो तव छिषतामाकस्मिकव्यसनितेत्यन्वयः, इति श्लोकसङ्क्षेपार्थः। परेण बौद्धेन, मूलोक्तं तत्रेति पदं विवृणोति–कुर्वद्रूपत्वजातौ स्वीक्रियमाणायामिति, हतिशब्दार्थमाह–कल्प्यमानबाध इति, कुर्वद्रूपत्वात्मकवैजात्यनिराकरणमित्यर्थः। सङ्ग्राहकत्वस्य सामानाधिकरण्यरूपत्वे कुशूलस्थस्य शालेः कथं न कुर्वद्रूपत्वमिति प्रश्नानवकाशस्स्यात् तत्र तदभावेऽपि क्षेत्रस्थशालौ शालित्वकुर्वद्रूपत्वयोस्सामानाधिकरण्यस्य सत्त्वादित्यतस्तस्य व्यापकत्वरूपतामाह–सङ्ग्राहको व्यापक इति, तद्वन्निष्ठात्यन्ताभावाप्रतियोगीत्यर्थः, तत्प्रतिक्षेपकत्वस्य तत्समानाधिकरणाभावप्रतियोगितारूपत्वे सहकारिसमवहितशालेः कुर्वद्रूपत्वे कथन्ताया असङ्गतिस्स्यात् क्षेत्रस्थशालौ कुर्वद्रूपत्ववत्त्वेऽपि तस्मिन् शालित्वाधिकरणकुशूलस्थबीजवृत्तिकुर्वद्रूपत्वाभावप्रतियोगित्वस्याक्षतेरित्यतो विरोधरूपतामाह–व्यापकीभूताभावप्रतियोगीति शालित्वसमानाधिकरणात्यन्ताभावाप्रतियोगीभूताभावप्रतियोगीत्यर्थः, कथं न कल्प्यमानजात्यन्तरवत्त्वमिति, व्याप्यसत्त्वे व्यापकस्याप्यवश्यंभावनियमाद् व्याप्यीभूतस्य शालित्वस्य कुशूलस्थशालौ सत्त्वे व्यापकीभूतस्य कुर्वद्रूपत्वस्यापि सत्त्वमावश्यकमिति भावः, कृतं तेनेति अलं जातिविशेषेण कुर्वद्रूपत्वेन स्वीकृतेनेत्यर्थः, बी-

जत्वसमशीलेनेति यथा बीजत्वं कुर्वदकुर्वदवस्थाद्वयशालिनि बीजे वर्त्तते तथा कुर्वद्रूपत्वमपीत्यकारिसाधारणेनेत्यर्थः, तथा च तद्रूपेण हेतुत्वेऽपि सहकारिविरहस्य कार्याभावप्रयोजकताया आवश्यकत्वाद्बीजत्वेन हेतुत्वेऽपि न क्षतिरिति भावः। तद्वत्त्वमिति कुर्वद्रूपत्ववत्त्वमित्यर्थः, कुर्वद्रूपत्वविरोधिनश्शालित्वस्यैव क्षेत्रस्थशालौ सद्भावादिति भावः।

एवं शालित्वस्य तत्सङ्ग्राहकत्वप्रतिक्षेपकत्वपक्षयोरपि दोषोऽभ्यूह्यः। न च नोभयमपीति वाच्यं, जातेस्तद्वदवृत्तित्वरूपविरोधे प्रतिक्षेप्यप्रतिक्षेपकभावस्य,तद्वदवृत्तित्वरूपाविरोधे च सङ्ग्राह्यसङ्ग्राहकभावस्यावश्यकत्वात्। लाघवेन सामान्यत एव मिथो व्यभिचारिजात्योः सामानाधिकरण्यविरहस्य समानाधिकरणजात्योश्च मिथो व्यभिचारविरहस्य, विशेषतश्च तज्जातिसमानाधिकरणाभावप्रतियोगिन्यास्तदभावसमानाधिकरणाया जातेस्तत्सामानाधिकरण्याभावस्य तज्जातिसमानाधिकरणाभावप्रतियोगितत्समानाधिकरणजातेस्तदभावसामानाधिकरण्याभावस्य तादृशसमानाधिकरणधर्मस्य वा तदभावसमानाधिकरणजातित्वाभावस्य एतत्समानशीलनियमानां चावधारणादिति भावः। सामानाधिकरण्यं सर्वत्र समवायेन ॥

तत्सङ्ग्राहकत्वप्रतिक्षेपकत्वेति, कुर्वद्रूपत्वव्यापकत्वविरुद्धत्वेत्यर्थः, शालित्वस्य कुर्वद्रूपत्वव्यापकत्वे सहकारिसमवहितयवादिबीजेष्वपि व्याप्यीभूतकुर्वद्रूपत्वसद्भावेन व्यापकीभूतं शालित्वमपि स्यात्,यद्वा व्यापकीभूतस्य शालित्वस्याभावेन व्याप्यीभूतस्य कुर्वद्रूपत्वस्याप्यभावस्स्यात्, तथा च तेभ्योऽङ्कुरोत्पत्तिरपि न स्यात्, कुर्वद्रूपत्वप्रतिक्षेपकत्वे कुर्वद्रूपात्मकशालावपि शालित्वं न स्यात्, तद्विरोधिनः कुर्वद्रूपत्वस्यैव सत्त्वात्, न स्याद्वा कुशूलस्थशालाविव क्षेत्रस्थशालावपि कुर्वद्रूपत्वं, तद्विरो-

धिनश्शालित्वस्यैव सत्त्वादित्याशयेनाह—दोषोऽभ्यूह्य इति, अत्रैकस्य सङ्ग्राहकत्वे प्रतिक्षेपकत्वे वा लब्धे प्रतिक्षिप्ते वाऽन्यस्य सङ्ग्राह्यत्वं प्रतिक्षेप्यत्वं वा लब्धं प्रतिक्षिप्तं वेति न तदुभयं विकल्प्य निराकृतमिति ध्येयम्। नोभयमपीति न सङ्ग्राहकं नापि प्रतिक्षेपकमित्यर्थः, प्रतिक्षेप्यप्रतिक्षेपकभावस्येति विरोध्यविरोधिभावस्येत्यर्थः, गोत्वाश्वत्वयोरिवेति शेषः। सङ्ग्राह्यसङ्ग्राहकभावस्येति, व्याप्यव्यापकभावस्येत्यर्थः, वृक्षत्वशिंशपात्वयोरिवेति शेषः। ननु व्याप्यव्यापकभावाभावेऽपि भूतत्वमूर्तत्वाद्योरिव शालित्वकुर्वद्रूपत्वजात्योरपि सामानाधिकरण्यरूपोऽविरोधस्स्वीकरणीय इति चेत्, तर्हि शालित्वादिना कुर्वद्रूपत्वस्य साङ्कर्याज्जातित्वमेव न स्यात्। ननु साङ्कर्यस्य जातित्वबाधकत्वे किं बीजमित्याशङ्कायां तद्बीजभूतनियमप्रदर्शनायाह—लाघवेनेत्यादि, मिथो व्यभिचारिजात्योः सामानाधिकरण्यविरहस्येति, परस्परात्यन्ताभावसमानाधिकरणजात्योः सामानाधिकरण्याभावस्य जातिमात्रस्य वा स्वनिरूपितव्यभिचारानुयोगिस्वनिष्ठव्यभिचारनिरूपकजातिसामानाधिकरण्याभावस्येत्यर्थः। निखिलषष्ठ्यन्तस्यावधारणादित्यनेनान्वयः, यथा घटत्वपटत्वजात्योः, तथाहि पटे घटत्वव्यभिचारिणः पटत्वस्य घटे पटत्वव्यभिचारिणो घटत्वस्य च नैकाधिकरणवृत्तित्वं तथा सहकारिसमवहिते यवबीजे शालित्वव्यभिचारिणः कुर्वद्रूपत्वस्य कुशूलस्थशालिबीजे कुर्वद्रूपत्वव्यभिचारिणश्शालित्वस्य च नैकाधिकरणे कुर्वद्रूपात्मकशालौ वृत्तित्वं स्यात्, तथा चोक्ताधिकरणे शालित्वमभ्युपगम्यते चेत्, न तर्हि कुर्वद्रूपत्वं, तथा सत्यभ्युपगमबाधः, कुर्वद्रूपत्वमभ्युपगतं चेत्, न शालित्वं, तथा सति सार्वजनीनप्रतीतिविरोध इति, जातेस्सङ्कीर्णत्वाभावमूलं नियमान्तरमाह—समानाधिकरणेति, मिथो व्यभिचारश्च धर्मविशिष्टधर्मत्वं वैशिष्ट्यञ्च स्वाभावाधिकरणवृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन, वृत्तित्वञ्च स्वाभावाधिकरणवृत्तित्वसम्बन्धेन, यथा द्रव्यत्वपृथिवीत्वयोस्समाना-

धिकरणयोर्न मिथो व्यभिचारः, शालित्वकुर्वद्रूपत्वयोरपि सहकारिमध्यमध्यासीने शालिबीजे समानाधिकरणयोर्मिथो व्यभिचारविरहाभ्युपगमे शालित्वस्य कुर्वद्रूपत्वव्यभिचाराभावे शालित्वस्य कुर्वद्रूपत्वाभाववति कुशूलस्थशाली वृत्तित्वं न स्यात्, कुर्वद्रूपत्वस्य वा शालित्वव्यभिचाराभावे शालित्वाभाववत्सु क्षेत्रस्थयवादिबीजेषु कुर्वद्रूपत्वस्य वृत्तित्वं न स्यात्, तथा च तेभ्यो नैवाङ्कुरमुत्पद्येत, आद्यनियमे प्रतिक्षेप्यप्रतिक्षेपकभावप्रदर्शनम्, द्वितीयनियमे च सङ्ग्राह्यसङ्ग्राहकभावप्रदर्शनम्, एवं विशेषत इत्यत्रापि ज्ञेयम्, लाघवेनेति सर्वत्र हेतुः। शालित्वादिजातिं विशिष्य निवेश्य तदव्यापकतद्व्यभिचारिजातेस्तत्सामानाधिकरण्याभावादिनियमकल्पनयापि शालित्वादिसङ्कीर्णकुर्वद्रूपत्वनिराकरणसम्भवात् तादृशनियमानपि दर्शयति-विशेषत इति, यथा घटत्वाव्यापकघटत्वव्यभिचारिपटत्वजातेर्घटत्वसामानाधिकरण्याभावस्तथा कुर्वद्रूपत्वजातेरपि शालित्ववति कुशूलस्थशालावृत्तित्वेन शालित्वाव्यापिकायाश्शालित्वाभाववति कुर्वद्रूपात्मकयवबीजे वृत्तित्वेन च शालित्वव्यभिचारिभूतायाश्शालित्वाधिकरणे सहकारिमध्यमध्यासीने क्षेत्रस्थशालौ वृत्तित्वं न स्यादिति तत्त्वम्। द्रव्यत्वाव्यापकद्रव्यत्वसमानाधिकरणपृथिवीत्वजातेर्द्रव्यत्वाभावसामानाधिकरण्याभाव इव शालित्वाव्यापकशालित्वसमानाधिकरणकुर्वद्रूपत्वजातेश्शालित्वाभावसामानाधिकरण्याभावः कुर्वद्रूपत्वाव्यापककुर्वद्रूपत्वसमानाधिकरणशालित्वजातेः कुर्वद्रूपत्वाभावसामानाधिकरण्याभावो वाऽभ्युपगन्तव्यः, तथा चाद्ये क्षेत्रस्थयवादावङ्कुरकुर्वद्रूपत्वं न वर्त्तेत, द्वितीये च कुशूलस्थशालौ शालित्वं विशीर्णं स्यादित्युपदर्शनार्थमाह-तज्जातीति, पूर्वनियमस्तु विरुद्धजात्योरयन्तु समानाधिकरणजात्योरिति विशेषः। ननु यादृशजातेर्व्याप्यजातिर्नास्ति, तत्र जातिसाङ्कर्यं न बाधकमायातमित्यत आह-तादृशसमानाधिकरणधर्मस्येति, तज्जातिसमानाधिकरणाभावप्रतियोगितत्समानाधिकरणधर्मस्येत्यर्थः। इति

भाव इति, सङ्ग्राहकेतरविकल्पहतिश्च तत्रेति प्रथमचरणस्य सामान्यविशेषाभ्यां प्रदर्शितनियमैः क्लृप्तस्य जातिबाधकतया सा-ङ्कर्यस्य कुर्वद्रूपत्ववैजात्यप्रतिक्षेपकत्वे तात्पर्यमित्यर्थः ॥ सर्वत्र प्रदर्शितनियमेषु, सामानाधिकरण्ये समवायसम्बन्धप्रवेशादेव जातित्वलक्षणे प्रविष्टस्यानेकसमवेतत्वस्य यत्फलं तत्सिद्धेस्तस्योक्तनियमघटकजातित्वस्वरूपे प्रवेशो निष्फल इत्याशयेनाह—

जातित्वं च नित्यत्वमात्रम्, इतरांशवैयर्थ्यात्। यत्र भूतत्वविभुत्वादौ विनिगमकाभावाद्द्वयोरेव जातित्वाभावस्तत्र कीदृक्कल्पनमित्याशङ्कायामेतत्समानशीलेति। तत्रापि भूतत्वाभावसमानाधिकरणस्य स्वात्यन्ताभावसमानाधिकरणस्य च सामानाधिकरण्यसामान्ये जातिमात्रनिरूपितत्वाभावो वाच्यः, मात्रग्रहणान्मूर्त्तत्वस्य जातित्वेऽपि न क्षतिरित्यादि बोध्यम्। अथैवं मृत्पाषाणसुवर्णादिघटेषु कथं घटत्वमेका जातिः। न च संस्थानाख्यतदारम्भकसंयोगविशेषवृत्त्येव घटत्वं, द्रव्यत्वादौ तत्सामानाधिकरण्यबुद्धिश्च स्वाश्रयसमवायिसमवेतत्वरूपपरम्परासम्बन्धघटितसामानाधिकरण्यमादायेति वाच्यम्। रूपत्वादावपि तत्प्रसङ्गात् ॥

जातित्वञ्चेति एतत्समानशीलनियमानामित्यस्यावतरणिकां ग्रन्थकारस्स्वयमेवाह—यत्रेति, तत्रापि भूतत्वविभुत्वादावपि, भूतत्वाभावसमानाधिकरणस्येति भूतत्वाभाववति काले दिश्यात्मनि च वृत्तेर्विभुत्वस्येत्यर्थः। स्वात्यन्ताभावसमानाधिकरणस्येति विभुत्वात्यन्ताभाववति पृथिव्यादौ वृत्तेर्भूतत्वस्येत्यर्थः, सामानाधिकरण्यसामान्ये इति सामानाधिकरण्यत्वव्यापक इत्यर्थः, जातिमात्रनिरूपितत्वाभाव इति जातिभिन्नाऽनिरूपितत्वे सति जातिनिरूपितत्वाभाव इत्यर्थः, तथा च भूतत्वविभुत्वोभयस्य जातित्वे परस्परात्यन्ताभावसमानाधिकरणस्य भूतत्वस्य विभुत्वस्य च सामानाधिकरण्यसामान्ये य-

थाक्रमं विभुत्वात्मकजातिनिरूपितत्वस्य भूतत्वात्मकजातिनिरूपितत्वस्य च सत्त्वेन निरुक्तसामानाधिकरण्यत्वव्यापकं जातिमात्रनिरूपितत्वमेव नतु तदभाव इति तादृशनियमस्य भूतत्वविभुत्वयोस्संघटनाभावान्न तेन तयोर्जातित्वमिति भावः। उक्तनियमघटकमात्रपदफलमाह—मात्रग्रहणादिति, मात्रपदाग्रहणे क्रियासमवायिकारणतावच्छेदकतया मूर्त्तत्वस्य कैश्चिज्जातित्वाभ्युपगमेन परस्परात्यन्ताभावसमानाधिकरणस्य मूर्त्तत्वस्य भूतत्वस्य च सामानाधिकरण्यत्वव्यापको न जातिनिरूपितत्वाभावस्स्यात् निरुक्तसामानाधिकरण्यत्ववति मूर्त्तत्वनिष्ठसामानाधिकरण्ये जातिनिरूपितत्वाऽभावसत्त्वेपि भूतत्वनिष्ठसामानाधिकरण्ये मूर्त्तत्वजातिनिरूपितत्वस्य सत्त्वात्, तथा चोक्तनियमाभावस्स्यात्, मात्रपदोपादाने च तादृशसामानाधिकरण्यत्ववति भूतत्वनिष्ठसामानाधिकरण्ये न जातिमात्रनिरूपितत्वं यथा जातिरूपस्य तादृशस्य मूर्त्तत्वस्य सामानाधिकरण्यं भूतत्वे तथा जात्यनात्मकस्य तादृशस्य विभुत्वस्यापीति तन्निरूपितत्वस्यापि तत्र सत्त्वाद्भवत्येव जातिमात्रनिरूपितत्वाभावस्तादृशसामानाधिकरण्यत्वव्यापक इति नोक्तनियमक्षतिः। मूर्त्तत्वस्य जातित्वेऽपीति, क्रियासमवायिकारणतावच्छेदकतयेति शेषः, अत्रापिशब्देनाऽविभुवृत्तिसंयोगे वैजात्यमङ्गीकृत्य तादृशविजातीयसंयोगस्य वेगाद्यजन्यक्रियायां कारणत्वमङ्गीकृत्यापि विभौ क्रियावारणसंभवेन न क्रियासमवायिकारणतावच्छेदकतया मूर्त्तत्वजातिसिद्धिरिति मूर्त्तत्वं न जातिरूपं किन्त्वविभुवृत्तिपरिमाणवत्त्वरूपमित्यस्वरससूचनं कृतम्। ननूक्तनियमैस्साङ्कर्यस्य जातित्वबाधकत्वाभ्युपगमे मृत्पाषाणादिघटेषु घटत्वजातेर्घटपदप्रवृत्तिनिमित्तभूताया अनुगतैकस्वरूपत्वं न स्यात्, मृत्त्वादिना साङ्कर्यात्, किन्तु मृद्घटेषु घटपदप्रवृत्तिनिमित्ताऽनुगता घटत्वजातिर्भिन्ना पाषाणादिघटेषु चान्यैत्येव स्यात्, तथा चापसिद्धान्तस्स्यात्, न च मार्द एव घटत्वमन्यत्र घटव्यवहारस्तु स्वीयसंस्थानसजातीयसंस्थानवत्त्वाद्गौण एवेति वाच्यं विनिगमकाभावादित्याशयेन तटस्थश्शङ्कते—अथैवमिति,

एवं साङ्कर्यस्यंजातित्वबाधकत्वाभ्युपगमे। घटत्वं गुणवृत्तिरेवजातिर्नतु द्रव्यवृत्तिरिति मूर्त्त्वादिघटत्वयोर्मिथो व्यभिचारित्वेऽपि सामानाधिकरण्याभावान्मूर्त्त्वादिना न साङ्कर्यमित्येकदेशिमतेनाशङ्कते-न चेति वाच्यमित्यनेनान्वयः, तदारम्भकेति घटासमवायिकारणेत्यर्थः, एवकारेण घटत्वस्य समवायेन द्रव्यवृत्तित्वव्यवच्छेदः। नन्वेवं सति घटो द्रव्यं रक्तो महान् नीलो घटश्चलति चेत्याकारिकाया द्रव्यत्वगुणक्रियासु घटत्वस्यैकाधिकरणवृत्तित्वप्रतीतिर्भवति,सा कथमुपपन्ना स्यादित्याशङ्कायामाह-द्रव्यत्वादाविति,आदिना गुणक्रिययोरुपग्रहः, तदिति घटत्वेत्यर्थः, स्वाश्रयेति स्वं संस्थानगतजातिविशेषो घटत्वं तदाश्रयः नदधिकरणं कपालद्वयसंयोगः तत्समवायि तस्य समवायसम्बन्धेनानुयोगि कपालद्वयं तत्समवेतत्वं तस्मिन् समवायसम्बन्धेन वृत्तित्वं घटद्रव्ये इत्युक्तपरंपरासम्बन्धस्य घटद्रव्ये सत्त्वमिति तेन सम्बन्धेन घटारम्भकसंयोगविशेषवृत्तिघटत्वं तत्र वर्त्तते सम्बन्धिसत्तायास्सम्बन्धसत्ताधीनत्वात्, तस्मिंश्च घटद्रव्ये समवायसम्बन्धेन द्रव्यत्वं रक्तरूपादिगुणश्चलनादिक्रिया च वर्त्तत इति तत्र घटो द्रव्यमित्याद्युक्तसामानाधिकरण्यबुद्ध्युपपत्तिः। एकदेशिमतनिरासे हेतुमाह—रूपत्वादाविति, तत्प्रसङ्गात्, घटो रूपमित्याकारकघटत्वसामानाधिकरण्यप्रतीतिप्रसङ्गात्, उक्तपरंपरासम्बन्धस्य कपालरूपे सत्त्वेन तेन सम्बन्धेन घटत्वस्य तत्र सत्त्वात्तत्र च समवायसम्बन्धेन रूपत्वस्यापि सत्त्वादिति भावः। रूपत्वादावित्यत्रादिपदेन रसत्वगन्धत्वादेः परिग्रहाद् घटो रसः घटो गन्ध इत्यादिसामानाधिकरण्यबुद्धीनां प्रसङ्गोऽपि वोध्य इति। यद्यपि मुख्यवृत्त्या घटत्वं घटारम्भकसंयोगविशेषवृत्तिजातिरूपमेव, न च तथापि तद् घटो द्रव्यमित्यादि सामानाधिकरण्यबुद्धौ प्रतिभासते, किन्तु स्वासमवायिकारणकद्रव्यत्वसम्बन्धेन कपालद्वयसंयोगवत्त्वमेव, तच्च स्वरूपसम्बन्धेन घट एव वर्त्तते नतु कपालरूपादाविति न घटो रूपमित्यादिसामानाधिकरण्यप्रतीतिप्रसङ्ग इत्येकदेशिमतं पुनराशङ्क्य निषेधति—

न च तादृशसंस्थानवत्त्वमुपाधिरेव घटत्वं, मत्वर्थश्च न तदसमवायिकारणकत्वमात्रं, तादृशसंयोगासमवायिकारणके परिमाणविशेषेऽतिप्रसङ्गात्, किन्तु तदसमवायिकारणकद्रव्यत्वमित्यदोष इति वाच्यम्। तत्राप्यन्यतरकर्मजत्वादिना साङ्कर्येणैकजात्यसम्भवात्, गुणगतजातौ न साङ्कर्यमित्यस्य तु निर्बीजत्वाद्दिति चेत्। अत्राहुः–सुवर्णत्वादिव्याप्यं नानैव घटत्वं, घटपदमपि नानार्थमेव, अनुगतव्यवहारस्तु संस्थानवैजात्याग्रहेणैकजातीयत्वेन संस्थानभ्रमात्। सार्वजनीनानुगतप्रतीतिसिद्धायाः संस्थानगततादृशजातेर्व्याप्यं भिन्नमेव वाऽन्यतरकर्मजत्वादिकं, बाधकबलेन जन्यतावच्छेदकभेदेऽप्यदोषात्, कर्मत्वेन तत्तदवच्छिन्नं प्रति हेतुत्वे व्यभिचाराभावात्॥

नचेति, वाच्यमित्यनेनान्वयः, तादृशसंस्थानवत्त्वमिति तादृशं घटारम्भकं संस्थानं संयोगविशेषः तदस्यास्तीति तादृशसंस्थानवत्, स्वाऽसमवायिकारणकद्रव्यत्वसम्बन्धेन घटारम्भकसंयोगविशेषविशिष्टम्, तस्य भावस्तत्त्वमित्यर्थः। केचित्तु तादृशेति जातिविशेषवदित्यर्थः, संस्थानवत्त्वं संस्थानसमानाधिकरणद्रव्यत्वमित्याहुः। परिमाणविशेषे इति, प्रचयाख्यसंयोगजन्यपरिमाणे इत्यर्थः, अतिप्रसङ्गादिति, घटः परिमाणमिति सामानाधिकरण्यबुद्धिप्रसङ्गस्स्यात् तादृशसंयोगासमवायिकारणकत्वरूपोपाधिरूपस्य घटत्वस्य सामानाधिकरण्यप्रतीतिविषयीभूतस्य परिमाणत्वस्य च शिथिलकपालद्वयसंयोगासमवायिकारणकघटपरिमाणे सत्त्वादिति भावः। अदोष इति, उक्तोपाधिरूपं घटत्वं घटद्रव्य एव वर्त्तते नतु गुणे क्रियायां वेति द्रव्यत्वादौ घटत्वसामानाधिकरण्यधीरुपपद्यते नतु रूपत्वादाविति तत्त्वम्। अथेत्यादिपूर्वपक्षवादी एकदेशिमतनिषेधे हेतुमाह–तत्रापीत्यादिना। तत्रा-

पि संस्थानाख्यतदारम्भकसंयोगेऽपि। अन्यतरकर्मजत्वादिनेति, अन्यतरक्रियात्वावच्छिन्नकारणतानिरूपितकार्यतानवच्छेदकतया सिद्धेनान्यतरकर्मजत्वेनादिपदबोध्येनोभयक्रियात्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया सिद्धेनोभयकर्मजत्वेन चेत्यर्थः। साङ्कर्येणेति, घटत्वाभाववत्यन्यतरकर्मजहस्ततरुसंयोगेऽन्यतरकर्मजत्वस्यान्यतरकर्मजत्वाभाववति चोभयकर्मजघटारम्भकसंयोगे घटत्वस्य तदुभयस्य चान्यतरकर्मजकपालद्वयसंयोगे सत्त्वात् साङ्कर्यम्, तेनेत्यर्थः, एवं घटत्वाभाववत्युभयकर्मजन्यमेषद्वयसंयोगे उभयकर्मजत्वस्य तदभाववति चान्यतरकपालक्रियाजन्यकपालद्वयसंयोगे घटारम्भके घटत्वस्य द्वयोश्च कपालद्वयक्रियाजन्यकपालद्वयसंयोगेघटारम्भके सत्त्वेन साङ्कर्यं तेनेत्यर्थः॥ न साङ्कर्यमिति, बाधकम्, अपि तु द्रव्यगतजातावेवेति शेषः, इत्यस्येति एतादृशशेषस्येत्यर्थः। अथैवमित्याद्याशङ्कायां शङ्करमिश्रमतानुसारिणां समाधानमाह—अत्राहुरित्यादिना, सुवर्णत्वादीति, आदिपदेन मृत्त्वपाषाणत्वरजतत्वादि ग्राह्यम्, नानैव घटत्वमिति घटपदशक्यतावच्छेदकं घटत्वं भिन्नभिन्नमेवेत्यर्थः। तथा च परस्परव्यभिचारिणोर्मृत्त्वघटत्वजात्योः पाषाणत्वसुवर्णत्वादिजातिघटत्वजात्योर्वा सामानाधिकरण्याभावान्न साङ्कर्यं, तथाहि मृत्त्वाभाववति पाषाणघटे सौवर्णघटे वा वृत्तं यद् घटत्वं तदेव न मार्द्दघटे, किन्तु भिन्नमेवेति न तन्मृत्त्वसमानाधिकरणं, यन्मृत्त्वसमानाधिकरणं न तत्तदभाववति पाषाणादिघटे वृत्तमिति न मृत्त्वेन साङ्कर्यम्, एवं पाषाणत्वाद्यभाववति मार्द्दघटे वृत्तिमद् यद् घटत्वं तदेव न पाषाणादिघटे, यदेव च पाषाणादिघटे न तदेव मार्द्दघटे तत्र तस्मात्तस्य भिन्नत्वादिति तत्र न पाषाणत्वादिघटत्वोभयोस्सामानाधिकरण्यमिति न पाषाणत्वादिना साङ्क

र्थमिति भावः। **घटपदमपि नानार्थमेवेति**, मृत्पाषाणादिघटेषु शक्यतावच्छेदकस्य घटत्वस्य भिन्नत्वाद्धर्यादिपदवद् घटपदमप्यनेकार्थकमेवेति भावः । मार्द्दपाषाणादिघटेषु घटो घट इत्यनुगतव्यवहारस्तु घटारम्भकमृत्पाषाणसुवर्णादिकपालद्वयसंयोगानां विभिन्नजातीयानां यद्वैजात्यं तस्याज्ञानेन तादृशसंयोगविशेष्यकैकजातीयत्वप्रकारकभ्रमात्तादृशसंयोगजन्येषु घटेषु विजातीयेष्वेकजातीयत्वभ्रमादेव भवतीत्याशयेनाह–**अनुगतव्यवहारस्त्विति**, व्यवहारश्च प्रतीतेरप्युपलक्षकः। नन्वनुगतप्रतीतिव्यवहारौ बाधकं विना भ्रमात्मकाविति कल्पनं निर्मूलमित्याशङ्कायां संस्थानगतघटत्वाभ्युपगमेन पक्षान्तरमाह–**सार्वजनीनेति**, अत्र प्रतीतिपदं व्यवहारस्याप्युपलक्षकं, तेन तस्याप्यनुगतघटत्वसाधकत्वं बोध्यम्, **भिन्नमेवेति**, घटानारम्भकान्यतरकर्मादिजन्यसंयोगादिवृत्तितज्जन्यतावच्छेदकजातितोऽन्यदेवेत्यर्थः, पटत्वादिव्याप्यतन्त्वादिसंयोगगतान्यतरकर्मजत्वजातितो घटत्वव्याप्यस्य कपालद्वयसंयोगगतान्यतरकर्मजत्वस्य भिन्नत्वादेव न साङ्कर्यम्, यद्घटत्वव्याप्यमन्यतरकर्मजत्वं तस्य घटत्वाभाववति तन्त्वादिसंयोगे वृत्तित्वाभावात्, यच्च पटत्वव्याप्यं तन्त्वादिसंयोगे वृत्तमन्यतरकर्मजत्वं तस्य घटत्वसामानाधिकरण्याभावादिति भावः । **अन्यतरकर्मजत्वादिकमिति**, अत्रादिपदग्राह्येनोभयकर्मजत्वेनापि साकं घटत्वस्य न च साङ्कर्यम्, सङ्कीर्णजात्योर्व्याप्यव्यापकभावस्यासत्त्वात्, अनयोश्च तत्सत्त्वादिति । भिन्नत्वकल्पनाबीजमाह–**बाधकबलेनेति**, मार्द्दपाषाणादिघटेष्वनुगतप्रत्ययव्यवहारानुरोधाद् घटपदप्रवृत्तिनिमित्तघटारम्भककपालद्वयसंयोगगतघटत्वजातावैक्यस्यावश्यकतयाऽन्यतरकर्मजत्वादिजातेरेकत्वे साङ्कर्यं स्यादिति तद्रूपबाधकबलेनेत्यर्थः । जन्यतावच्छेदकभेदेऽपीति, घटत्वपटत्वादिव्याप्यान्यतरकर्मजत्वादिरूपाणां कर्मजन्यतावच्छेदकानां भेदेऽपीत्यर्थः **अदोषादिति**, कार्यकारणभावबाधकव्यभिचारादिदोषविरहादित्यर्थः, तदेव विवृणोति–**कर्मत्वेनेति**, तत्तदवच्छिन्नं प्रतीति घटत्वपटत्वादिव्याप्यान्य-

तरकर्मजत्वाद्यवच्छिन्नं प्रतीत्यर्थः, घटत्वव्याप्याऽन्यतरकर्मजत्वजातिरुभयकर्मजत्वजातिश्च भवति तत्र यथा तादृशान्यतरकर्मजत्वावच्छिन्नं प्रति कर्मत्वेन रूपेण कारणत्वं तथा तादृशोभयकर्मजत्वावच्छिन्नं प्रत्यपि तद्रूपेणैव कारणत्वमित्यभ्युपगमे दोषमाशङ्क्य निषेधति-न च संस्थानगतेत्यादिना, अथवा घटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नं प्रतीव पटत्वादिव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नं प्रत्यपि कर्मत्वसामान्यरूपेण कारणत्वेऽतिप्रसङ्गदोषमाशङ्क्य निषेधति,

न च संस्थानगतघटत्वव्याप्यजातेरपि कर्मसामान्यजन्यतावच्छेदकत्वे एकजात्यवच्छिन्ने जायमाने इतरावच्छिन्नस्येतराद्यवच्छिन्नत्वमापद्येतेति वाच्यम्, अनायत्यैकावच्छिन्नसामग्र्या इतरावच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनात्, प्रागभावादिवैलक्षण्येन सामग्रीवैलक्षण्यस्य पाकजादिष्विवावश्यवक्तव्यत्वात्, अन्यतरकर्मजत्वादिजात्यनङ्गीकाराद्वा न दोषः। संयोगजसंयोगस्तु द्रव्यानारम्भक एव स्वीक्रियते, न च विनिगमनाविरहः, कर्मजसंयोगस्यारम्भकत्वे व्यवस्थिते द्रव्यारम्भकतावच्छेदकजातेः कर्मजन्यतावच्छेदकव्याप्यत्वकल्पनादिति निष्कर्षः। परे तु परस्परविरुद्धसंस्थानव्यङ्ग्यानां गोत्वाश्वत्वादीनां मिथोविरुद्धसामग्रीप्रयोज्यानां च गन्धत्वसुखत्वादीनां व्यञ्जकसामग्रीसङ्करासम्भवेन सङ्करो नेष्यते, न पुनः परासां जातीनां सति-प्रमाणे। अत एव जातिसङ्करस्यौत्सर्गिकबाधकतायाः कारणत्वग्राहकप्रमाणेनापवदनादनुद्भूतरूपादिव्यावृत्तं शुक्लपीतशीतोष्णादिसाधारणं प्रत्यक्षप्रयोजकमेकमुद्भूतत्वम्। अनुद्भूतत्वं तु न जातिर्मानाभावात्। प्रत्यक्षप्रतिबन्धकतावच्छेदकतया तत्कल्पने तदवच्छिन्नाभावहेतुत्वकल्पने गौरवात्॥

न च संस्थानगतेत्यादिना, न चेत्यस्य वाच्यमित्युत्तरेण सम्बन्धः, एकजात्यवच्छिन्न इति, घटत्वव्याप्यान्यतरकर्मजत्वावच्छिन्ने पटत्वव्याप्योभयकर्मजत्वाद्यवच्छिन्ने वा, पक्षान्तरे घटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्ने पटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्ने वेत्यर्थः । इतरावच्छिन्नस्येतरावच्छिन्नत्वमिति, घटत्वव्याप्यान्यतरकर्मजत्वावच्छिन्नस्य संयोगस्य घटत्वव्याप्योभयकर्मजत्वावच्छिन्नत्वं तादृशोभयकर्मजत्वावच्छिन्नस्य संयोगस्य तादृशान्यतरकर्मजत्वावच्छिन्नत्वं वा, पक्षान्तरे घटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नस्य संयोगस्य पटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नत्वं पटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नस्य संयोगस्य घटत्वव्याप्यान्यतरकर्मजत्वाद्यवच्छिन्नत्वं वा आपद्येत, तदुभयधर्मावच्छिन्नजनकस्य कर्मणः सत्त्वादित्यर्थः । निषेधे हेतुमाह—अनायत्त्येति गत्यन्तरविरहेणेत्यर्थः । ननूक्ततादृशैकजात्यवच्छिन्नकार्यप्रयोजकीभूतसामग्रीतस्तादृशतदितरजात्यवच्छिन्नकार्यप्रयोजकसामग्र्या भेदो यदि स्यात्तदा तत्तज्जात्यवच्छिन्नसामग्र्यास्तत्तदन्यजात्यवच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनेन तादृशैकजात्यवच्छिन्नस्य तदितरतादृशजात्यवच्छिन्नत्वं परिहृतं स्यात्, न चैवं, तादृशतत्तज्जात्यवच्छिन्नं प्रति कर्मत्वरूपैकजात्या कर्मण एव कारणत्वाभ्युपगमात्, तदतिरिक्तस्य कारणस्य तत्तदवच्छिन्नं प्रति विलक्षणस्याभावेन सामग्रीभेदस्यासम्भवादित्याशङ्कायामाह—प्रागभावादिवैलक्षण्येनेति, तादृशतत्तज्जात्यवच्छिन्नकार्यं प्रति कर्मत्वावच्छिन्नस्येव स्वस्वप्रागभावस्यापि कारणत्वेन तद्भेदेन तद्घटितसामग्र्या अपि भेदस्यावश्यंभावात्, पार्थिवपरमाणौ पाकजरूपादिचतुष्टयम्प्रत्यग्निसंयोगस्यासमवायिकारणस्य समवायिकारणस्य च परमाणोरविशेषेऽपि रूपादितत्कार्यप्रागभावभेदेन तद्घटितसामग्रीभेदस्यैवेति भावः । प्रागभावादीत्यत्रादिपदेन देशविशेषकालविशेषादृष्टविशेषादिकारणपरिग्रहः । नन्वन्यतरकर्मजत्वादिकं कर्मजन्यतावच्छेदकजातिरूपं न किन्तूपाधिरूपमेवेति संस्थानविशेषवृत्तिघटत्वजातेस्तेन

साकं साङ्कर्येऽपि न तस्य जातिबाधकत्वं, तथा सति उपाधिना साङ्कर्यस्य सर्वत्र सौलभ्येन जातिमात्रस्यैवोच्छेदापत्तिस्स्यात् ,इत्याशयेनाह–अन्यतरेति । ननु तथापि कर्मजन्यतावच्छेदिकयाऽन्यतरोभयकर्मजसाधारणकर्मजत्वजात्या साङ्कर्यं भविष्यति, यत्र कपालसंयुक्तकपालिकायां कपालिकान्तरसंयोगात्कपालान्तरोत्पत्तिस्तत्र कपालद्वयसंयोगरूपे घटे कर्मजत्वाभाववति घटत्वस्य घटत्वाभाववति च कर्मजन्यतन्त्वादिसंयोगे कर्मजत्वस्य तदुभययोश्च कर्मजसंयोगरूपे घटे सत्त्वात्, अथवा संयोगजसंयोगत्वजात्या साङ्कर्यं भविष्यति, तदभाववति कपालकर्मजकपालद्वयसंयोगे घटत्वस्य घटत्वाभाववति च हस्ततरुसंयोगाच्छरीरतरुसंयोगे संयोगजसंयोगत्वस्योभयोश्च यत्र कपालसंयुक्तायां कपालिकायां कपालिकान्तरसंयोगात्कपालान्तरोत्पत्त्या तद्द्वयसंयोगाद् घटोत्पत्तिस्तत्र कपाले तद्द्वये वा क्रियाया अभावात्कपालद्वयसंयोगस्संयोगजसंयोगरूप एवेति तत्र सत्त्वात्, इति चेत्, मैवं, संयोगजसंयोगस्य द्रव्यारम्भकत्वानभ्युपगमात्, न च संयोगजसंयोग एव द्रव्यारम्भको न कर्मजसंयोग इति विपरीतकल्पना कर्तुं शक्या,यत्र कपाले कपालयोर्वा क्रियया कपालद्वयसंयोगस्तत्र द्व्यणुकोपादाने परमाणौ च संयोगजसंयोगासंभवेन कर्मजसंयोगे द्रव्यारम्भकत्वस्योभाभ्यामभ्युपगन्तव्यत्वेन तत्र क्लृप्तस्य तस्य सर्वत्राभ्युपगमार्हत्वात्, उक्तस्थले च कपालेऽनुपलक्ष्यमाणेषच्चलनमभ्युपेत्य तज्जन्यसंयोगोत्पत्त्यैव घटोत्पत्तिरित्यभ्युपगमात्, । तच्च द्रव्यारम्भकत्वं द्रव्यासमवायिकारणत्वलक्षणं सर्वेषु कर्मजसंयोगेष्वनुगतजातिमन्तरा नेनि तदवच्छेदकजातेः कर्मजन्यतावच्छेदिका याऽन्यतरोभयकर्मजसाधारणकर्मजत्वजातिस्तद्व्याप्यत्वकल्पनाच्च कर्मजत्वजात्या घटत्वस्य साङ्कर्यं, कर्मजत्वाभाववति संयोगजसंयोगे द्रव्यानारम्भके घटत्वस्य वृत्तित्वाभावात् ,पक्षान्तरे संयोगजसंयोगत्वजात्या साकं यत्साङ्कर्यमुक्तं, तदपि न, द्रव्यारम्भकसंयोगे घटत्वं वर्त्तते न च तत्र संयोगजसंयोगत्वमिति तयोस्सामानाधिकरण्याभावादित्याशयेनाह-संयोगजसंयोगस्त्वित्यादि,

सङ्कीर्णप्रामाणिकजातिमभ्युपगच्छतामेकदेशिनां मतमाह—परे त्विति । मिथो विरुद्धसंस्थानाभिव्यङ्ग्यानां गोत्वाश्वत्वघटत्वपटत्वतुरगत्वविहगत्वादिद्रव्यगतजातीनां मिथो विरुद्धसामग्रीप्रयोज्यानां गन्धत्वसुखत्वरूपत्वरसत्वादिनीलत्वपीतत्वादिगुणगतजातीनां कथं सङ्करो नेष्यते इत्याशङ्कायां यथाक्रमं हेतुद्वयमाह—व्यञ्जकसामग्रीसङ्कराऽसम्भवेनेति, गोत्वस्य व्यञ्जकं सास्नाद्यवयवाकृतिरश्वत्वस्य च केसराद्यवयवाकृतिः एवमन्यत्रापीत्यभिव्यञ्जकानां संस्थानविशेषाणां गन्धत्वस्य प्रयोजकीभूता पृथिव्यादिघटिता सामग्री सुखत्वस्य चात्मादिघटिता सामग्री पाकजरूपरसादिगतरूपत्वरसत्वादेश्च स्वस्वप्रागभावरूपकारणभेदात्तद्घटितभिन्नभिन्नसामग्री अपाकजरूपत्वरसत्वादेश्च स्वस्वसमवाय्यसमवायिकारणादिघटिता भिन्नभिन्नसामग्री एवमन्यत्रापीति प्रयोजकीभूतानां सामग्रीणां च सङ्कराऽसम्भवेनेत्यर्थः । व्यञ्जकासङ्करे प्रमाणाभावेन जातिद्वयसामानाधिकरण्याऽप्रसिद्ध्या प्रयोजकसामग्रीविरोधस्य च प्रयोज्यैकाधिकरण्यबाधकत्वात्सङ्कराऽसम्भव इत्यवधेयम् । परासामिति परस्परविरुद्धसंस्थानव्यङ्ग्यभिन्नानां मिथो विरुद्धसामग्रीप्रयोज्यभिन्नानां चेत्यर्थः, सति प्रमाणे इति सङ्कीर्णजातेः प्रमाणसिद्धत्वे सतीत्यर्थः, सङ्करो नेष्यत इत्यस्य पुनश्शब्दबलादनुषङ्गः, परस्परविरुद्धसंस्थानव्यङ्ग्यभिन्नानां मिथो विरुद्धसामग्रीप्रयोज्यभिन्नानां मध्ये यस्यां जातौ बलवत्तरप्रमाणं स्यात् सा जात्यन्तरेण सङ्कीर्णाऽप्यभ्युपगन्तव्या, नान्या, तथा, च मृत्त्वघटत्वयोस्सुवर्णत्वघटत्वयोः पाषाणत्वघटत्वयोर्वा परस्परविरुद्धसंस्थानाभिव्यङ्ग्यत्वाभावात् परस्परविरुद्धसामग्रीप्रयोज्यत्वाभावाच्च मृत्त्वादिसङ्कीर्णस्यापि पक्षान्तरेऽन्यतरकर्मजत्वादिसङ्कीर्णस्यापि घटत्वस्य प्रामाणिकत्वान्न साङ्कर्यबाध्यता, सहकारिमध्यस्थबीजमात्रवृत्त्यङ्कुरकुर्वद्रूपत्वजातेस्त्वप्रमाणिकत्वाद्भवत्येव साङ्कर्यबाध्यतेति भावः । अत एवेति प्रमाणविषयीभूतायां जातौ साङ्कर्यस्य जातित्वाऽबाधकत्वादेवेत्यर्थः । कारणत्वग्राहकप्रमाणेनापवदनादिति,

विशेषशास्त्रेण सामान्यशास्त्रं बाध्यते इति नियमस्य जागरूकत्वेन कारणत्वग्राहकप्रमाणेन विशेषशास्त्रकल्पेनापवदनादिति भावः। रूपादेर्विशेषगुणस्योद्भूतत्वानुद्भूतत्वभेदेन द्विविधत्वं, तत्रोद्भूतत्वस्य लौकिकप्रत्यक्षजनकतावच्छेदकतया जातित्वसिद्धिः, अन्यथा प्राचां मते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपत्वेन नव्यमते च चाक्षुषस्पार्शने प्रति रूपत्वस्पर्शत्वाभ्यां हेतुत्वमनुद्भूतरूपवतो द्रव्यस्य प्रत्यक्षाभावेन वक्तुमशक्यमिति सूचनायाह—अनुद्भूतरूपादिव्यावृत्तमिति, अनेन सामान्यतो रूपत्वादिना साङ्कर्यं व्यञ्जितं, रूपत्वावान्तरजात्या स्पर्शत्वावान्तरजात्याऽपि साङ्कर्यं सूचयितुमुक्तं शुक्लपीतशीतोष्णादिसाधारणमिति, अत्रादिपदोपादानेन मधुरादिभेदभिन्ना रसादयोऽप्युद्भूतत्वाश्रयाः सङ्गृहीताः, तेन रासनादिप्रत्यक्षेऽप्युद्भूतरसादेः कारणत्वेन तदवच्छेदककोटावप्युद्भूतत्वस्य प्रवेशे रसत्वादिना तदवान्तरजात्याऽपि च साङ्कर्यमुद्घाटितम्, धर्मे जातित्वस्य जातिसाङ्कर्यं सामान्यत एव न बाधकं, किन्तु जातित्वसाधकप्रमाणविरहिते धर्म एवेति सङ्कोचकरणाभावे उद्भूतत्वं शुक्लत्वादिना साङ्कर्याज्जातिरूपं न स्यादिति भावः। चिन्तामणिकृता जातिसङ्करभयेनोद्भूतत्वं जातिरूपमनङ्गीकृत्य नीलत्वादिव्याप्या भिन्नभिन्नानुद्भूतत्वजातयः स्वीकृताः तदवच्छिन्नभेदकूटरूपोद्भव एव प्रत्यक्षताप्रयोजक इत्युपगतम्, तन्मतं निराकरोति—अनुद्भूतत्वं त्विति, प्रत्यक्षप्रतिबन्धकतावच्छेदकतयेति अनुद्भूतत्वावच्छिन्नसत्त्वे न प्रत्यक्षस्योदयः यथा चक्षुरादौ, तदभावे तस्योदयः यथा घटादावित्यन्वयव्यतिरेकप्रमाणबलात्प्रत्यक्षत्वावच्छिन्नप्रतिबध्यतानिरूपिता याऽनुद्भूतत्वावच्छिन्ना प्रतिबन्धकता तदवच्छेदकतयेत्यर्थः, । तत्कल्पने इति अनुद्भूतत्वजातिकल्पने इत्यर्थः। तदवच्छिन्नेति प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वलक्षणत्वेन अनुद्भूतत्वावच्छिन्नाभावस्य कारणत्वं कल्प्यं स्यात्, तथा च तस्योद्भूतत्वावच्छिन्नकारणत्वापेक्षया गुरुभूतत्वं स्या-

दिति भावः ।

न च व्यवहारविषयतावच्छेदकतया तत्सिद्धिः, शब्दसुखादावनुद्भूते मानाभावेन तद्व्यावृत्तानुद्भूतत्वव्यवहारस्याप्रत्यक्षत्वनिमित्तकत्वात् । अत एव मन्दं सुखमपेक्ष्यानुगतो विभिन्नजातीयेषूत्कटत्वव्यवहारः । इत्थं च त्रसरेणुमहत्त्वमपेक्ष्य गगनादिमहत्त्वपर्यन्तमुत्कर्षो गगनादिमहत्त्वमपेक्ष्य परमाणुपरिमाणपर्यन्तमपकर्षश्चैक एवेति प्राहुः । ननु न सङ्ग्राहकेतरविकल्पहतिः कुर्वद्रूपत्वे व्यक्तिविशेषवृत्तित्वावच्छिन्नसङ्ग्राहकत्वव्यक्तिविशेषवृत्तित्वावच्छिन्नप्रतिक्षेपकत्वोभयसम्भवादित्याशङ्कायामाह—व्यक्तौ विरोधगमने व्यक्तिविश्रान्तविरोधगतौ स्वीक्रियमाणायां, व्यवहारबाधः सार्वजनीनतदतज्जातीयत्वव्यवहारविलोपप्रसङ्गः, तथा च बहु विप्लवेत, तदुक्तं, "व्यक्तिभेदेन सङ्ग्रहप्रतिक्षेपावपि न विरुद्धाविति चेत्, विलीनमिदानीं तदतज्जातीयत्वं, विरोधेन परिदृश्यमानकतिचिद्व्यक्तिप्रतिक्षेपेऽपि मिथः क्वचित्तुरगविहगयोरपि सम्भेदसम्भवादिति", तस्मान्न विरुद्धजात्योर्व्यक्तावपि समावेशसम्भवः ॥

व्यवहारेति, अत्रानुद्भूतं नीलादिरूपम् अनुद्भूतो मधुरादिरसः अनुद्भूतस्सुरभ्यादिगन्धः अनुद्भूतः शीतादिस्पर्श इत्याद्यनुगतानुद्भूतव्यवहारेत्यर्थः, तत्सिद्धिः अनुद्भूतत्वजातिसिद्धिः, वीचितरङ्गन्यायेन कदम्बगोलकन्यायेन वा पूर्वपूर्वशब्देनोत्तरोत्तरशब्दोत्पत्तिक्रमेण यस्य शब्दस्य श्रोत्रेण समवायसन्निकर्षो भवति, तस्यैव साक्षात्कारो भवति न च कण्ठताल्वादिजन्यस्याद्यशब्दस्य कर्णशष्कुल्यवच्छिन्नाकाशरूपेण श्रोत्रेण सम्बन्धः, विभिन्नदेशत्वात्, इति तत एव तस्य न प्रत्यक्षं, नत्वनुद्भूतत्वात्, ए-

वमन्तरालवर्त्तिशब्दानामिति मते तेष्वनुद्भूतत्वे मानाभाव एव, सुखस्य दुःखस्य वा कस्यचिदुत्पत्तावहं सुखी दुःखी वेति साक्षात्कारप्रत्ययो भवत्येव, अन्यथा नाश एव तयोर्न स्यात् तयोः स्वसाक्षात्कारनाश्यत्वनियमादिति तत्राप्यनुद्भूतत्वं नास्त्येव, एवं च शब्दसुखादिव्यावृत्तो यश्चक्षुरादिरूपादिष्वनुद्भूतत्वव्यवहारस्स नानुगतानुद्भूतत्वात्मकवैजात्यप्रयोज्यः, किन्तु लौकिकप्रत्यक्षजनकतावच्छेदकस्योद्भूतत्वस्याभावनिबन्धनो यः प्रत्यक्षाभावस्तत्प्रयोज्य एवेत्याशयेनाह—शब्दसुखादाविति। अत एवेति प्रामाणिकजातिसङ्करस्यादोषत्वादेवेत्यर्थः, मन्दम् अपकृष्टम्, अपेक्ष्य अवधित्वेन विषयीकृत्य, अस्य अनुगत इत्यस्य चोत्कटत्वव्यवहार इत्यनेनान्वयः । विभिन्नजातीयेष्विति सुखदुःखेच्छाद्वेषादिष्वित्यर्थः, साङ्कर्यं जातिबाधकमेवेति सामान्यनियमस्य सङ्कोचाऽभावे सुखत्वाभाववत्युत्कटदुःखादावुत्कटत्वस्योत्कटत्वाभाववति च मन्दसुखे सुखत्वस्य तयोश्चोत्कटसुखे समावेशात्सुखत्वादिनोत्कटत्वस्य साङ्कर्याज्जातित्वं न स्यात् । अपरे तु विभिन्नजातीयेष्विति, मधुररसास्वादमधुरशब्दश्रवणादिरूपविभिन्नजातीयहेतुसमुत्थेष्वित्यादिः, एतावता तत्तज्जातीयकारणप्रयोज्योत्कटानुत्कटसुखसाधारणजातिभिः सहोत्कटत्वस्य सङ्करो दर्शित इत्याहुः । केचित्तु विषयताविशेषमुत्कटत्वमिति मन्यन्ते इति ध्येयम् । इत्थञ्चेति, जातिसङ्करस्यादोषत्वे चेत्यर्थः । एक एवेति, जातिसङ्करस्य दोषत्वे एकहस्तादिपरिमाणगतजातिविशेषैः ह्रस्वत्वत्वदीर्घत्वत्वादिभिर्ह्रस्वत्वत्वाभाववति गगनपरिमाणे त्रसरेणुमहत्त्वावधिकोत्कर्षस्य तदभाववति द्व्यणुकादिह्रस्वत्वे ह्रस्वत्वत्वस्य सत्त्वेन तदुभयोश्च घटादिपरिमाणे सद्भावेनैवं दीर्घत्वत्वाभाववति परमाणुद्व्यणुकह्रस्वत्वे गगनमहत्त्वावधिकापकर्षस्य तदभाववति गगनदीर्घत्वे दीर्घत्वत्वस्य तयोश्च घटदीर्घत्वे सत्त्वेनेत्येवं सङ्करेण तदैक्यानुपपत्तिस्स्यात्, अथवाऽपकर्षजात्या सहोत्कर्षजातेस्साङ्कर्यात्सा जातिरूपा न स्यात् साऽपि चोत्कर्षजात्या सह सा-

ङ्कर्याङ्जातिरूपा न स्यादिति भावः । द्वितीयचरणमवतारयति–नन्वित्यादिना, यद्यपि निर्विशेषितशालित्वस्य सङ्ग्राहकं प्र-
तिक्षेपकं वा न कुर्वद्रूपत्वं, तथा कुर्वद्रूपत्वस्य सङ्ग्राहकं प्रतिक्षेपकं वा न शुद्धशालित्वम्, उक्तयुक्तेः, तथापि तद्वृत्तित्वविशिष्टस्य
तत्रैव सत्त्वमिति नियमेन व्यक्तिविशेषो यद्धरणिस्थशालिवीजं तद्वृत्तित्वावच्छिन्नं तद्वृत्तित्वविशिष्टं यच्छालित्वं तस्य सहकारि-
मध्यमध्यासीनधरणिस्थशालिवीज एव सत्त्वेन तत्सङ्ग्राहकं तद्व्यापकं कुर्वद्रूपत्वं भवत्येव, तथा व्यक्तिविशेषः कुशूलस्थशालिवी-
जं तद्वृत्तित्वविशिष्टस्य शालित्वस्य तत्रैव सत्त्वेन तत्प्रतिक्षेपकं तद्विरुद्धं कुर्वद्रूपत्वं भवत्येव, एवं व्यक्तिविशेषः सहकारिसमवहितं
शालिबीजं तद्वृत्तित्वविशिष्टं यत्कुर्वद्रूपत्वं तद्व्यापकं शालित्वं सहकारिसमवहितयववीजात्मकव्यक्तिविशेषवृत्तित्वावच्छिन्नस्य कु-
र्वद्रूपत्वस्य विरुद्धं च शालित्वं भवत्येव, सङ्ग्राहकत्वाद्यनिरूपकस्यापि विशेषणविशेषावच्छिन्नस्य तन्निरूपकत्वस्याविरुद्धत्वादिति न
सङ्ग्राहकत्वप्रतिक्षेपकत्वयोर्विकल्पेन कुर्वद्रूपत्वस्य बाध इत्याशङ्काशयः । तदुक्तमिति बौद्धाधिकारे उदयनाचार्येणेति शेषः, व्य-
क्तिभेदेनेति, शालित्वकुर्वद्रूपत्वयोस्स्वस्वरूपत ऐक्येऽप्याधेयतासम्बन्धेन तत्तद्बीजादेस्तत्तद्बीजादिवृत्तित्वस्य वा विशेषणस्य भेदेन
तद्विशिष्टयोस्तयोर्भेदेन सङ्ग्राहकत्वप्रतिक्षेपकत्वयोरुपपत्तिरिति भावः । विलीनमिति अयं तुरगजातीयो न विहगजातीयः, अयं
च विहगजातीयो न तुरगजातीय इति तदतज्जातीयत्वव्यवस्थाविलोपप्रसङ्ग इत्यर्थः, तत्र हेतुमाह–विरोधेनेति व्यक्तिविश्रान्तवि-
रोधेन तुरगत्वविहगत्वयोः परिदृश्यमानकतिचिद्व्यक्तावसामानाधिकरण्येऽपि कस्यांचिद्व्यक्तौ तयोरपि सामानाधिकरण्यसंभवा-
दित्यर्थः, अयं भावः, यत्र तुरगत्वमुपलभ्यते न विहगत्वं तद्व्यक्तिवृत्तित्वविशिष्टस्य तुरगत्वस्य विहगत्वेन सह यत्र वा विहगत्वमु-
पलभ्यते न तुरगत्वं तद्व्यक्तिवृत्तित्वविशिष्टविहगत्वस्य तुरगत्वेन सह विरोधेऽपि क्वचिद्देशविशेषे तुरगात्मकविहगस्स्यात्तदा त-

द्व्यक्तिवृत्तित्वविशिष्टविहगत्वसङ्ग्राहकत्वं तुरगत्वे स्यात्, नरसिंहादिवद्वेोभयात्मकव्यक्तिवृत्तित्वविशिष्टतुरगत्वसङ्ग्राहकत्वं वा विहगत्वे स्यात् इति विहगजातीयो न तुरगजातीयः तुरगजातीयश्च न विहगजातीयः, एवमन्यत्रापीति सामान्यनियमो लोकसिद्धो व्याहन्येतेति । मुद्रिते त्वात्मतत्त्वविवेके विलीनमिदानीं तदतज्जातीयताविरोधेन इति पाठः, तत्र तदतज्जातीयत्वे तज्जातितत्प्रतिक्षेपकजातिमत्त्वे तयोर्विरोधेन विलीनमित्यर्थः । फलितोपसंहारमाह– तस्मान्नेति । ननु मास्तु विरुद्धजात्योरुक्तदोषाद्व्यक्तिविशेषे समावेशः, समानाधिकरणजात्योस्तु मिथो व्यभिचाराभ्युपगमे को दोष इत्याशङ्कायामाह—

समाविष्टयोश्च जात्योः सङ्ग्राह्यसङ्ग्राहकभावव्यभिचाराभ्युपगमे क्वचन शिंशपापि पादपं व्यभिचरेदिति गतं स्वभावहेतुना । वृक्षस्वभावा वृक्षसामग्र्यन्तर्गतसामग्रीका च शिंशपा यदि वृक्षमतिपतेत् वृक्षसामग्रीमतिपत्य वा जायेत, तदा स्वात्मानमेवातिपतेत् स्वसामग्रीमतिपत्य वा जायेतेति विपर्यये बाधकं तत्र विशेषोऽस्तीति चेत् । न । अङ्कुरकुर्वद्रूपस्वभावस्तत्सामग्र्यन्तर्गतसामग्रीकश्च शालिरङ्कुरकुर्वद्रूपं च शालिस्वभावं तत्सामग्र्यन्तर्गतसामग्रीकं च यदि तदतिपतेत् तत्सामग्रीमतिपत्य वा जायेत स्वात्मानमेवातिपतेत् स्वसामग्रीमतिपत्य वा जायेतेत्येवंरूपस्य विपर्यये बाधकस्येहापि सत्त्वात् ॥

समाविष्टयोरिति समानाधिकरणयोर्जात्योर्व्याप्यव्यापकभावस्यावश्यम्भावः, तदनभ्युपगमे क्वचिच्छिंशपाव्यक्तिरपि वृक्षानात्मिका स्यादिति सम्भावनया कस्यापि पुंसस्तदुपलब्धेरपि सम्भावनायास्सम्भवेन ततो वृक्षं विना कदापि कस्यापि न शिंशपोपलब्धिरित्येवमनुपलब्धिरूपस्य विपक्षबाधकतर्कस्यावतारासम्भवेन तदप्रतिरुद्धायाः शिंशपात्वमपि वृक्षत्वाभाववद्वृत्ति स्या-

दिति व्यभिचारशङ्कायास्सत्त्वाच्छिशपाया वृक्षस्वभावत्वरूपोऽविनाभावोऽपि न निश्चीयेत, तथा च शिंशपात्वादिलिङ्गकवृक्षत्वाद्य-नुमानमुच्छिन्नमेव स्यादिति भावः। शिंशपापीति. शिंशपाया जातिरूपत्वाभावेऽपि तादात्म्येन तत्र वृक्षव्यभिचारे शिंशपात्वे वृक्षत्वव्यभिचारोऽप्ययत्नोपनत एवेति नामस्तुतत्वशङ्काकदर्थना विधेयेति ध्येयम्। विपक्षबाधकतर्कोपदर्शनार्थमाशङ्कते बौद्धः—वृक्षस्वभावा इति, वृक्षस्वभावा शिंशपा यदि वृक्षमतिपतेत् तादात्म्येन वृक्षं व्यभिचरेत् वृक्षत्वं वा परित्यजेत् तदा स्वात्मानमेव शिंशपास्वरूपमपि शिशपात्वरूपस्वभावमेव वा अतिपतेत् परित्यजेत् व्यापकाभावाद्व्याप्याभावनियमात्, तथा वृक्षस्वभावसामग्र्य-न्तर्गतसामग्रीका वृक्षजनकपत्रकाण्डादिसामग्र्यन्तर्भूतसामग्रीका शिंशपा यदि व्यापकसामग्रीरूपां वृक्षसामग्रीमतिपत्य तां विना जायेत तदा व्याप्यसामग्रीरूपां स्वसामग्रीमतिपत्य जायेत, यथा वृक्षशिंशपयोर्व्याप्यव्यापकभावस्तथा तत्सामग्र्योरपीति व्यापक-सामग्र्यभावे व्याप्यसामग्र्या अप्यभावस्यावश्यंभावनियमादिति तद्रूपस्य शिंशपात्वहेतौ वृक्षत्वव्यभिचारशङ्कायां सत्यां तन्नि-वर्त्तकतर्कस्य तादात्म्यहेतुकानुमाने सद्भावेन न तदुच्छेदप्रसङ्ग इत्यर्थः। उक्तस्वभावानुमाने विपर्ययबाधकतर्कस्येव शालित्वकुर्वद्रूप-त्वयोर्मिथो व्यभिचारबाधकतर्कस्यापि सम्भवोपदर्शनमुखेन नैयायिकः प्रतिक्षिपति—, न, अङ्कुरेति, अङ्कुरकुर्वद्रूपस्वभावश्शालिर्यदि तदतिपतेत् स्वात्मानमेवातिपतेदित्यत्र प्रसङ्गे अङ्कुरकुर्वद्रूपत्वस्य व्यापकत्वं, शालित्वस्य च व्याप्यत्वं, तत्रत्यं तत्पदं कुर्वद्रूपस्य स्वपदं च शालेः परामर्शकम्, तथा तत्सामग्र्यन्तर्गतसामग्रीकश्शालिर्यदि तत्सामग्रीमतिपत्य जायेत तदा स्वसामग्रीमतिपत्य जायेतेत्यस्मिंश्च प्रसङ्गे तत्पदद्वयमङ्कुरकुर्वद्रूपस्वभावपरं स्वपदं च शालिपरम् अङ्कुरकुर्वद्रूपस्वभावसामग्र्या व्यापकत्वं शालिसामग्र्याश्च व्याप्यत्वम्, शालित्वे अङ्कुरकुर्वद्रूपत्वव्यभिचारबाधकतर्कमुपदर्श्य शालित्वस्य शालिसामग्र्याश्च व्यापकत्वं अङ्कुरकुर्वद्रूपत्वस्याङ्कुरकुर्वद्रूपसाम-

प्रयाश्च व्याप्यत्वमिति व्याप्यव्यापभावमूलकमङ्कुरकुर्वद्रूपत्वे शालित्वव्यभिचारबाधकं तर्कं प्रदर्शयति— अङ्कुरकुर्वद्रूपं चेति। शालिस्वभावमिति अङ्कुरकुर्वद्रूपात्मकपक्षविशेषणं, एवं तत्सामग्र्यन्तर्गतसामग्रीकमित्यपि, तत्सामग्र्यन्तर्गतेत्यादौ तत्पदं तदतिपतेदित्यत्र तत्सामग्रियमत्यत्र च तत्पदं शालिपरामर्शकम्, स्वपदद्वयं चाङ्कुरकुर्वद्रूपपरामर्शकम्, इहापीति, शाल्यङ्कुरकुर्वद्रूपयोरपीत्यर्थः।

विपर्यये बाधकस्य स्वभावं प्रति व्यापकत्वेन स्वभावत्वबलेन तदुन्नयनस्य सुशकत्वात्, बाधकमन्तरेणापि क्वचित् स्वभावत्वोपपत्तौ शिंशपादावपि स्वभावत्वसिद्धये किं बाधकानुसरणव्यसनेन, तन्न कुर्वद्रूपत्ववैजात्यसिद्धिः॥ शालित्वादिव्याप्यकुर्वद्रूपत्वविशेषसिद्धावपि तस्याङ्कुरविशेषं प्रति प्रयोजकत्वात् स्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकत्वरूपमङ्कुरत्वं प्रति प्रयोजकत्वं बीजत्वस्यैव वाच्यम्, अन्यथाऽबीजादपि तदुत्पत्तिप्रसङ्गात्॥

स्वभावत्वबलेनेति शालावङ्कुरकुर्वद्रूपस्वभावत्वस्याङ्कुरकुर्वद्रूपे च शालिस्वभावत्वस्य बलेनेत्यर्थः, यत्र यत्र स्वभावत्वं तत्रावश्यं विपर्यये बाधकसद्भाव इति व्याप्तिरूपबलवता कुर्वद्रूपशालिस्वभावत्वहेतुनेति भावः। तदुन्नयनस्येति विपर्यये बाधकानुमितेरित्यर्थः। किं बाधकानुसरणेनेति, अलं शिंशपात्वे पादपत्वव्यभिचारशङ्कानिवर्त्तकोक्ततर्कोद्भावनेनेत्यर्थः, यदि शिंशपा वृक्षमतिपतेत्तदापि तस्यास्तत्स्वभावत्वस्वीकारसम्भवेन व्याप्त्यसिद्ध्या तत्तर्कस्याप्यनवतारादिति भावः। ननु कुर्वद्रूपत्वस्य शालित्वादिना साङ्कर्यं तदा स्याद्यदि शाल्यशालिबीजसाधारणमेकं जातिरूपं तदभ्युपगतं स्यात्, नचैवं, शालित्वव्याप्यं कुर्वद्रूप-

पत्वमन्यत् अन्यत्र यवत्वादिव्याप्यमित्येवमभ्युपगमात्, नच तत्र कोऽपि दोष इत्याशङ्कायामाह—शालित्वादिव्याप्येत्यादि,
तस्य शालित्वादिव्याप्यकुर्वद्रूपत्वविशेषस्य। अङ्कुरविशेषम् शाल्यङ्कुरत्वयवाङ्कुरत्वाद्यवच्छिन्नम्, प्रयोजकत्वात् कारणताव-
च्छेदकत्वात्, स्वेति अङ्कुरत्वेत्यर्थः, अन्यथेति बीजत्वस्याङ्कुरत्वं प्रत्यप्रयोजकत्वे इत्यर्थः, तदुत्पत्तीति अङ्कुरोत्पत्तीत्यर्थः।

न च वैयधिकरण्यमिष्टापत्तिश्च बीजभिन्नधरण्यादेरपि तदुत्पादादिति वाच्यम्, अङ्कुरत्वं यदि जा-
तित्वे जन्यतावच्छेदकत्वे वा सति बीजमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्या-
द्बीजाजन्यवृत्ति स्यात् बीजासमवहितसामग्रीजन्यवृत्ति वा स्यादित्यत्र तात्पर्यात्। अङ्कुरत्वं यदि बीजमात्र-
वृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यादङ्कुरमात्रवृत्तिजातिर्न स्यादित्यत्र तात्पर्यमित्य-
न्ये। न च बीजत्वेनाजनकत्वेऽपि बीजमात्रवृत्तिनाङ्कुरकुर्वद्रूपत्वेन जनकत्वादापादकासिद्धिः, शाल्येकदेश-
वृत्तेः शालित्वव्यभिचारवद्बीजैकदेशवृत्तेरपि बीजत्वव्यभिचारसम्भवात् सन्दिग्धव्यभिचाररूपेण कार-
णत्वग्रहायोगात्॥

वैयधिकरण्यमिति, आपादकीभूतस्याङ्कुरत्वं प्रत्यप्रयोजकत्वस्य बीजत्वे आपाद्यस्य चाबीजात्तदुत्पत्तेरङ्कुरे सत्त्वमि-
त्येवमापाद्यापादकयोर्विभिन्नाधिकरणे वृत्तित्वाद्वैयधिकरण्यमित्यर्थः, अबीजादित्यत्र निषेधः पर्युदासरूप इत्याशयेनेष्टापत्तिं सङ्गम-
यति—बीजभिन्नेति। तदुत्पादादिति अङ्कुरोत्पादाभ्युपगमादित्यर्थः। अङ्कुरत्वं यदीति अत्रावृत्तिमति गगनादौ अङ्कुरवृ-
त्तिरूपादौ च व्यभिचारवारणं जातित्वे सतीतिविशेषणस्य फलम्, एतदेव च जन्यतावच्छेदकत्वे सतीति विशेषणस्य, अत एव वि-

कल्पार्थकवाशब्दोपादानं सार्थकम् । बौद्धैरङ्कुरत्वेनाङ्कुरकुर्वद्रूपत्वेन कार्यकारणभावाभ्युपगमादङ्कुरत्वे बीजवृत्तिकुर्वद्रूपत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वस्यैव सत्त्वादापादकासिद्धिस्स्यादतो मात्रपदमुपात्तम्, परैस्तदङ्कुरव्यक्तिं प्रति तद्बीजव्यक्तित्वेन कारणत्वाभ्युपगमाद्बीजमात्रवृत्तितद्व्यक्तित्वावच्छिन्नकारणतानिरूपितकार्यताश्रयवृत्तित्वस्याङ्कुरत्वे सत्त्वादापादकासिद्धिस्स्यादतस्तादृशकार्यताश्रयवृत्तित्वमुपेक्ष्य तादृशकार्यतावच्छेदकत्वपर्यन्तानुधावनम्, अबीजादपि तदुत्पत्तिप्रसङ्गादित्यतो न बीजमबीजमिति नञ्तत्पुरुषसमासे कृते अबीजपदं बीजभिन्नपरं पञ्चम्यर्थश्च जन्यत्वमिति बीजभिन्नजन्यत्वमात्रं लभ्यते, नास्ति बीजं यत्र सामग्र्यामिति बहुव्रीह्यादरे बीजाऽसमवहितसामग्रीजन्यत्वं लभ्यते न तु बीजाजन्यत्वं कथमपीति बीजाजन्यवृत्तित्वरूपमापाद्यमुदक्षरमेव, नञ्तत्पुरुषसमासपक्षेऽपि बीजभिन्नसलिलादितोऽङ्कुरस्योत्पादादङ्कुरत्वे बीजभिन्नजन्यवृत्तित्वापादनमिष्टापत्तिदोषसम्वलितमिति बहुव्रीहिमाश्रित्य व्याचष्टे—बीजासमवहितेत्यादि, । आपाद्यकोटौ जातित्वप्रवेशेन वैयधिकरण्यादिजिहीर्षूणामन्येषां व्याख्यामुपन्यस्यति—अङ्कुरत्वमिति, अङ्कुररूपादौ व्यभिचारवारणायापाद्यकोटौ जातित्वप्रवेशः, आपाद्यकोटौ मात्रपदोपादानाद् द्रव्यत्वादौ न व्यभिचारः, तस्याङ्कुरतदितरोभयवृत्तिजातित्ववत्त्वेनाङ्कुरेतरावृत्तित्वे सत्यङ्कुरवृत्तिजातित्वाभावस्यापाद्यस्य तत्रापि सत्त्वात्, अन्ये इत्यनेनास्वरसः सूचितः तद्बीजन्तूदक्षरत्वमप्रयोजकत्वञ्चेति । नचेत्यस्यापादकासिद्धिरित्यनेनान्वयः । बीजमात्रवृत्तिनेति—उपादानविधया जनकतावच्छेदकतया परैरुपगतेनेति शेषः, अन्यथा धरणिधामादिकमप्यङ्कुरकारीति तत्राप्यङ्कुरकुर्वद्रूपत्वस्य सत्त्वेनाऽसङ्गतमेव तत्स्यात्, आपादकासिद्धिरिति बीजमात्रवृत्तिधर्मावच्छिन्नकारणतानिरूपितकार्यतानवच्छेदकत्वस्यापादकस्य बौद्धमतेनानभ्युपगम इत्यर्थः । निषेधे हेतुमाह—शाल्येकदेशवृत्तेरिति, स्वेतरधरण्यादिसकलसहकारिविशिष्टशालि-

वृत्तेरङ्कुरकुर्वद्रूपत्वस्येत्यर्थः। शालित्वव्यभिचारवदिति शालित्वाभाववति धरणिस्थयवादिबीजे वृत्तित्वमिवेत्यर्थः, बीजैकदेशवृत्तेरपीति, बीजत्वाव्यापकत्वे सति बीजवृत्तेरपीत्यर्थः। सम्भवादित्यत्र सम्भवपदं सम्भाव्यमानत्वार्थकम्, सम्भावना चोत्कटकोटिकसंशयरूपेत्याऽऽश्रित्याह—संदिग्धव्यभिचाररूपेणेति बीजमात्र एव कुर्वद्रूपत्वं वृत्तिमत् किं वाऽबीजेऽपीत्येवमाशङ्क्यमानेन कुर्वद्रूपत्वेनेत्यर्थः। ननु शुद्धसमवायेन कुर्वद्रूपत्वस्याबीजे सत्त्वसम्भवेऽपि बीजानुयोगिकसमवायेन बीजमात्र एव सत्त्वाद्बीजत्वाऽव्यभिचरितेन तेन कारणत्वग्रहसम्भवादङ्कुरत्वे उक्तापादकाऽसिद्धिरसत्त्वैवेत्याशयेनाऽऽशङ्क्य निषेधति—

न च बीजत्वैकार्थसमवायेन तस्य प्रयोजकता, तस्योपलक्षणत्वे शालित्वैकार्थसमवायवदतिप्रसङ्गावारकत्वात्, । विशेषणत्वे तु प्रत्यक्षसिद्धत्वाल्लाघवाद्विशिष्टस्य प्रयोजकत्वे विशेषणस्यापि तथात्वेनावश्यकत्वाद्विशेषणविशेष्यभावे विनिगमकाभावाच्च शुद्धबीजत्वस्यैव प्रयोजकत्वकल्पनौचित्यात्, करणाकरणयोस्तु सहकारिसाकल्यवैकल्याभ्यामेवोपपत्तेः, अन्यथा समवहितबीजत्वेनापि जनकत्वस्य सुवचत्वादिति ॥

नचेति, तस्य कुर्वद्रूपत्वस्य, प्रयोजकता, जनकतावच्छेदकता, निषेधे हेतुमाह—तस्येति, उक्तसम्बन्धान्तःप्रविष्टस्य बीजानुयोगिकत्वपर्यवसितस्य बीजत्वैकार्थत्वस्येत्यर्थः, उपलक्षणत्वे अङ्कुरत्वावच्छिन्नकार्यतानिरूपितकुर्वद्रूपत्वावच्छिन्नकारणतानिरूपिता या धर्मविधयाऽवच्छेदकता तन्निरूपिता या संसर्गविधयाऽवच्छेदकता तदनवच्छेदकत्वे, शालित्वेति, शाल्यनुयोगिकत्वोपलक्षितसमवायेन कुर्वद्रूपत्वस्य शालिबीज इव यवादिबीजेऽपि सत्तया तस्य सम्बन्धस्य कुर्वद्रूपत्वे शालित्वव्यभिचाराऽवारकत्ववद्बीजानुयोगिकत्वोपलक्षितसमवायेन बीज इवाबीजेऽपि कुर्वद्रूपत्वस्य सत्तया तस्य सम्बन्धस्य कुर्वद्रूपत्वे बीजत्वव्यभिचारावारकत्वादित्यर्थः

विशेषणत्वे त्विति तस्येत्यनुवर्त्तते, तथा च बीजत्वैकार्थत्वस्योक्तकारणतावच्छेदकतानिरूपितसमवायगतसंसर्गतावच्छेदकत्वे-त्वित्यर्थः प्रत्यक्षसिद्धत्वा-दित्यादिहेतुचतुष्कं शुद्धबीजत्वस्यैव प्रयोजकत्वकल्पनौचित्यादित्यनेन सम्बध्यते, शुद्धबीजत्वस्य प्रत्यक्षसिद्धत्वाभिधानेन कुर्वद्रूपत्वस्य विशेष्यस्याप्रामाणिकत्वं सूचितम्। लाघवादिति, विशिष्टापेक्षया लघुशरीरत्वादित्यर्थः। विशिष्टस्येति, बीजत्वैकार्थसमवायेन कुर्वद्रूपत्वस्य प्रयोजकत्वं हि समवायघटितसामानाधिकरण्येन बीजत्वविशिष्टकुर्वद्रूपत्वस्य प्रयोजकत्वे पर्यवस्यति, विशिष्टवृत्तित्वं च प्रयोजकत्वे विशेषणवृत्तित्वं विना न सम्भवतीति विशेषणस्य बीजत्वस्य प्रयोजकत्वेऽवश्याभ्युपेये तत एव निर्वाहादलं विशिष्टस्य प्रयोजकत्वकल्पनयेति भावः॥ विशेषणविशेष्यभाव इति, उक्तसम्बन्धेन बीजत्वविशिष्टस्य कुर्वद्रूपत्वस्य प्रयोजकत्वं किंवा कुर्वद्रूपत्वविशिष्टस्य बीजत्वस्येत्यत्र विनिगमकाभावेनोत्तरपक्षस्याप्यभ्युपगन्तुं शक्यतया विशिष्टवृत्तिधर्मस्य विशेष्यमात्रवृत्तित्वेऽपि बीजत्वस्य प्रयोजकत्वमावश्यकमिति भावः। शुद्धेति, कुर्वद्रूपत्वाविशिष्टेत्यर्थः। ननु बीजत्वस्य कारणतावच्छेदकत्वे तद्वतस्समर्थत्वात्समर्थस्य च क्षेपाऽयोगात्सहकारिविकलस्यापि तस्य कार्योत्पादकत्वप्रसङ्गस्स्यादित्यत आह—करणाकरणयोस्त्विति, यद्धर्मावच्छिन्नं यावत्सत्वं कार्यं करोत्येव तद्धर्मेणैव कारणत्वमिति नियमानुसारेण न च समवायघटितसामानाधिकरण्येन बीजत्वविशिष्टकुर्वद्रूपत्वेन कारणत्वोपगमो युक्तियुक्तः, तथा सति सहकारिसमवधानविशिष्टबीजत्वेनाप्युक्तनियमादेव कारणत्वं सुवचं स्यात्, तावताऽप्यतिप्रसङ्गवारणसम्भवादप्रामाणिकावान्तरजातिकल्पनागौरवमपि परिहृतं भवतीत्याह—अन्यथेति, अथवा बीजत्वेन कारणत्वेऽपि सहकारिसाकल्यवैकल्ययोः करणाकरणप्रयोजकतयाऽतिप्रसङ्गभङ्गेऽपि बीजवृत्तित्वविशिष्टकुर्वद्रूपत्वेन कारणत्वोपगमे सहकारिविशिष्टबीजत्वेनापि विनिगमनाविरहात्कारणत्वं स्यात् यद्धर्मावच्छिन्नं याव—

तस्त्वं कार्यं करोत्येव तद्धर्म एव कारणतावच्छेदक इति नियमस्योभयथाप्युपपत्तेरित्याह—अन्यथेति, परः पृच्छति—

कस्य पुनः प्रमाणस्यायं व्यापारकलाप इति चेत्, तदुत्पत्तिनिश्चयहेतोः प्रत्यक्षानुपलम्भात्मकस्येत्यवेहि । न्यायेन विना न परितोष इति चेत्, तमपि शृणु, यदङ्कुरं प्रत्यप्रयोजकं न तद्बीजजातीयं यथा शिलाशकलम्, अङ्कुरं प्रत्यप्रयोजकं च कुशूलनिहितं बीजमभ्युपेयते परैरिति, व्यापकानुपलब्धिः प्रसङ्गहेतुः, व्यापकस्य बीजत्वव्यापकस्याङ्कुरप्रयोजकत्वस्यानुपलब्धिरनुपलब्धिविषयोऽभावो व्यापकानुलब्धिः, प्रसङ्गहेतुः प्रसङ्गप्रयोजको हेतुरित्यर्थः । विपर्यये किं बाधकमिति चेत्, अङ्कुरस्य जातिप्रतिनियमाकस्मिकत्वप्रसङ्ग इत्युक्तमेव ॥ बीजत्वं तस्य प्रत्यक्षसिद्धमशक्यापह्नवमिति चेत्, अस्तु तर्हि विपर्ययः, यद्बीजं तदङ्कुरं प्रति प्रयोजकं यथान्त्यसामग्रीमध्यमध्यासीनं, बीजं चेदं विवादपदमिति, स्वभावहेतुरनुमापको हेतुः, तादात्म्यहेतुरित्यन्ये ॥ अङ्कुरस्य हि जातिप्रतिनियमो न तावन्निर्निमित्तः, कार्यमात्रावृत्तित्वप्रसङ्गात् ।

कस्येति, प्रमाणं विना समाचरणमात्रं सर्वमिदमिति भावः । अयमिति, बीजत्वमेवाङ्कुरं प्रति स्वरूपयोग्यतावच्छेदकं नतु कुर्वद्रूपत्वमिति प्रतिपादनार्थं यः पूर्वोक्तो व्यापारकलाप इत्यर्थः । तदुत्पत्तिनिश्चयहेतोरिति, बीजत्वादिनाङ्कुरत्वादिना बीजाङ्कुरादेर्हेतुहेतुमद्भावनिश्चायकस्येत्यर्थः । प्रत्यक्षानुपलम्भात्मकस्येति कारणस्य सत्त्वेऽसत्त्वे च कार्यस्य सत्त्वमसत्त्वं चेत्यन्वयव्यतिरेकात्मकप्रत्यक्षद्वयस्येत्यर्थः । ननु प्रमाणोपदर्शनं परं प्रति कथायामेव, कथा च न्यायप्रयोगरूपैवेति न्यायेन विना सा न पर्यवस्यतीति पृच्छति—न्यायेन विनेति पञ्चावयववादिनां नैयायिकानां परार्थानुमानरूपायां कथायां न्याये प्रयोक्तव्ये उदाहरणो-

पनययोरेव प्रयोगः सिद्धान्तविरुद्ध इत्यत आह–परैरिति, परैः बौद्धैः, तथा चावयवद्वयवादिनं बौद्धं प्रति अवयवद्वयोपन्यास एव न्याय्यानिति भावः। उपलम्भाभावस्य हेतुत्वापाकरणायाह–अनुपलब्धिविषय इति, कुशूलादिस्थं बीजमङ्कुरं प्रत्यप्रयोजकमपि बीजत्वजातिमद्भविष्यतीत्याकारके उक्तप्रसङ्गहेतौ व्यभिचारसन्देहे को बाधकस्तर्क इत्याशङ्कते–विपर्यये किं बाधकमिति,

अङ्कुरस्य जातिप्रतिनियमाकस्मिकत्वप्रसङ्ग इति, बीजत्वेनाङ्कुरत्वजात्यप्रयोजकत्वे तद्वद्धरणित्वादेरप्यकुर्वत्साधारणत्वेन तथात्वात्तादृशजातेः प्रतिनियमः प्रतिनियमत्वं क्वचिदेव धर्मिणि सत्त्वमिति यावत् तस्याकस्मिकत्वं निर्निमित्तत्वं तस्य प्रसङ्ग इत्यर्थः। बीजत्वमकुर्वाणेऽपि कुशूलस्थबीजे निर्विवादमिति चेत् तर्ह्यस्तु तेनापाद्याभावरूपेणाङ्कुरप्रयोजकत्वरूपापादकविपर्ययसिद्धिस्तत्र कुर्वद्रूपापन्नबीजदृष्टान्तेनेति शङ्कोत्तराभ्यामाह–बीजत्वमिति, तस्य, कुशूलस्थबीजस्य, स्वभावहेतुरिति, अत्र बीजत्वमिति शेषः। स्वभावहेतुरित्यस्य विवरणमनुमापको हेतुरिति पक्षधर्मताशालीहेतुरित्यर्थः। तादात्म्यहेतुरिति तादात्म्यसम्बन्धेन हेतुरित्यर्थः। आपाद्यापादकयोर्वैयधिकरण्यादिदोषं निराचिकीर्षुः उक्तप्रसङ्गं परिष्कृत्य दर्शयति—

**अङ्कुरत्वं यदि किञ्चिद्रूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात्कार्यमात्रवृत्तिजातिर्न स्यादिति तदाकारः॥ नाप्यन्यनिमित्तकः, तथाभूतस्य तस्याभावात्। तथा च सनिमित्तकत्वसाधकं कार्यमात्रवृत्तिजातित्वं क्लृप्तशालित्वादिबाधादक्लृप्तकल्पनागौरवप्रतिसन्धानसहितं बीजत्वस्य निमित्तत्वं साधयति। सेयं निमित्तवत्ता विपक्षान्निर्निमित्तात् स्वव्याप्यं कार्यमात्रवृत्तिजातित्वमादाय व्यावर्त्तमानाऽङ्कुरत्वे सिद्ध्यन्ती परिशेषाद्बीजप्रयोजकतायामेव विश्राम्यति।**

**अङ्कुरत्वं यदीति**,अन्यनिमित्तक इति बीजत्वान्यनिमित्तक इत्यर्थः, अङ्कुरस्य जातिप्रतिनियम इत्यनुवर्त्तनीयम्, **तथाभूतस्येति**–अङ्कुरत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वलक्षणाङ्कुरत्वजातिनियामकत्ववत इत्यर्थः,अङ्कुरत्वं बीजत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं बीजत्वान्यधर्मावच्छिन्नकारणतानिरूपितकार्यतानवच्छेदकत्वे सति किञ्चिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वादिति परिशेषानुमानशुद्धये अन्यनिमित्तकत्वं यन्निराकृतं तदेव स्फुटयति–**तथाचेति**, **सनिमित्तकत्वसाधकम्** किञ्चिद्धर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकत्वसाधकम्, **क्लृप्तशालित्वादिबाधादिति**, यवाद्यङ्कुरवृत्त्यङ्कुरत्वजातौ कार्यमात्रवृत्तिजातित्वं वर्त्तते न च तत्र शालित्वाद्यवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वं वर्त्तत इत्येवं व्यभिचारेण शालित्वादेरङ्कुरत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वबाधादित्यर्थः। नन्वेवं तर्हि शालियवादिसाधारणबीजत्वव्याप्यकुर्वद्रूपत्वेनाङ्कुरत्वावच्छिन्नं प्रति कारणत्वकल्पनायां बाधनिश्चयासम्भवात्तद्रूपेणैव कारणत्वमस्त्वित्याशङ्कायां बाधनिश्चयकारिणस्तत्र तादृशजात्यवच्छिन्नत्वसम्भावनाविरोधिगौरवज्ञानस्य सहकारितामाह–**अक्लृप्तकल्पनेति**, **निमित्तत्वमिति**, कारणतावच्छेदकत्वमित्यर्थः। **विपक्षादित्यस्य**–व्याख्या **निर्निमित्तादिति**, आत्मत्वादिजातेरित्यर्थः। ननु परिशेषानुमानेनाङ्कुरत्वे पक्षे साध्यविशेषो बीजत्वावच्छिन्नप्रयोज्यत्वमेव सेद्धुमर्हति, नतु बीजत्वावच्छिन्ने अङ्कुरप्रयोजकत्वमित्यसङ्गतं बीजप्रयोजकतायामितीत्याशङ्कायां बहुव्रीहिणोक्तपदस्य बीजप्रयोज्यतायामित्यर्थकत्वमाह—

**बीजप्रयोजकतायामिति** बीजं प्रयोजकं यस्येति बहुव्रीहिणा बीजप्रयोज्यतायामित्यर्थः॥ यद्यपि चैतावता बीजत्वस्य प्रयोजकत्वं न सिद्ध्यति, क्षितित्वादेरपि तथात्वसम्भवात्, तथाप्यकुर्वाणसाधारणरूपस्य प्रयोजक-

त्वसिद्धौ सिद्धमीहितं, व्युदस्ते च बाधकेऽन्वयव्यतिरेकयोस्तुल्यतया बीजत्वस्यापि प्रयोजकत्वं न दुर्लभमिति द्रष्टव्यम् ॥ ननु साङ्कर्यादिकं जातावेव बाधकमित्यतद्व्यावृत्तेरङ्कुरत्वप्रयोजकत्वाभ्युपगमे न दोषः, सा च समर्थबीजमात्रवृत्तिर्न दुर्लभेत्याशङ्कायामाह–व्यावृत्तयोऽपि निजमकृत्रिमं स्वभावमनुहरन्ति, गोत्वाश्वत्वयोरिवागोव्यावृत्त्यनश्वव्यावृत्त्योरपि सङ्करानभ्युपगमात्। तथा च तासां जातिसमानशीलत्वाज्जात्याऽप्रतिनियमेऽतद्व्यावृत्त्याप्यप्रतिनियम इति भावः ॥

बीजप्रयोजकतायामिति, केचित्तु तुल्यवित्तिवेद्यतयाऽङ्कुरत्वस्य बीजप्रयोज्यत्वे सिद्ध्यति बीजस्याप्यङ्कुरप्रयोजकत्वं सिद्ध्यतीत्यर्थं इत्याहुः । अत्र च बीजपदं बीजत्वपरं तेनाङ्कुरत्वे बीजप्रयोज्यत्वाभावेऽपि बीजत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वस्य बीजत्वप्रयोज्यत्वस्य सत्त्वेन न क्षतिः । क्वचित् बीजप्रयोज्यतायामिति पाठः स तु सुगम एव । एतावतेति शालित्वादेरङ्कुरत्वावच्छिन्नप्रयोजकताबाधमात्रेणापीत्यर्थः । क्षितित्वादेरपि तथात्वसम्भवादिति, सामग्री वै जनिकेति नियमाद्बीजक्षितिसलिलादयः परस्परं सहकारितामासादयन्तोऽङ्कुरमुत्पादयन्तीति बीजसहकारितावच्छेदकतयाभिमतस्य क्षितित्वसलिलत्वादेरेकतरस्याप्यङ्कुरत्वं प्रति प्रयोजकत्वसम्भवेन तस्य निमित्ततामादायाप्युक्तानुमानस्य पर्यवसानसम्भवादित्यर्थः । तथापीति, क्षितित्वादेः प्रयोजकत्वसम्भवेऽपि जनकतावच्छेदकीभूतस्य तस्याफलोपहितेऽपि वृत्तेर्नाऽक्षणिकत्वक्षतिरित्यर्थः, उक्ताशयेनाह–अकुर्वाणसाधारणरूपस्येति अङ्कुरानुपहितक्षित्यादिसाधारणस्य कस्यचिद्धर्मस्येत्यर्थः । सिद्धमीहितमिति, तावतैव समर्थस्यापि सहकारिविरहेणाकरणमित्यस्य स्थैर्योपपादकस्य सिद्धेरिति भावः । एतावता समर्थस्य करणाविलम्बनियमरूपस्याकुर्वाण-

साधारणधर्मे कारणतावच्छेदकत्वबाधकस्य निरासे कृतेऽन्वयव्यतिरेकबलाद्धरणित्वादेरिव बीजत्वादेरपि कारणतावच्छेदकत्वसिद्धि-र्निष्प्रत्यूहैवेत्याह—व्युदस्ते चेति । ननु कुर्वद्रूपत्वं शालित्वयवत्वादेर्न सङ्ग्राहकम् नवा प्रतिक्षेपकम् नवा तदुभयम्, उक्तदोषात्, किन्त्वनुभयरूपं, नच शालित्वाभाववति कुर्वद्रूपात्मके यवबीजे कुर्वद्रूपत्वं कुर्वद्रूपत्वाभाववति च कुशूलस्थशालिबीजे शालित्वं ते चोभे कुर्वद्रूपात्मकशालिबीजे समानाधिकरणे इत्येवं शालित्वादिना सह तस्य साङ्कर्यं नःक्षतिकरम्, यतो नोपगम्यते कुर्वद्रूपत्वस्य विधिरूपजातित्वम्, उपगम्यते चातद्व्यावृत्तिरूपत्वं, तस्य च कुर्वद्रूपात्मकशालियवादिबीजान्यतमत्वरूपोपाधिरूपत्वेन तत्र सांकर्यस्याबाधकत्वात् तथाच तदेवाङ्कुरत्वप्रयोजकमित्यभिप्रायवतां बौद्धानामाशङ्कामुत्थाप्योत्तरार्द्धमवतारयति—नन्विति, अनुगतकार्यकारणभावोपपादनाय तस्याः फलोपहितकारणमात्रेऽनुगतत्वमाह—सा चेति, एतेन शाल्येकदेशवृत्तेः शालित्वव्यभिचारवद्बीजैकदेशवृत्तेरपि बीजत्वव्यभिचारसंभवात् संदिग्धव्यभिचाररूपेण कारणत्वग्रहाऽयोगादित्युक्तं निरस्तम्, यतः कुर्वद्रूपात्मकानि यावन्ति बीजानि तावन्मात्र एव तस्या वृत्तित्वेन बीजत्वव्यभिचारसम्भव एव नास्ति । जात्याऽप्रतिनियम इति, कुर्वद्रूपात्मकवैजात्येनाङ्कुरत्वप्रयोजकत्वव्यवस्थित्यभाव इत्यर्थः । अतद्व्यावृत्त्यापि वैजात्यस्थानाभिषिक्तयाऽकुर्वद्रूपव्यावृत्त्यापि,

अत एव परेषां जातिमात्रस्य जनकतावच्छेदकत्वेऽनैयत्यान्नावश्यं बीजत्वस्याङ्कुरं प्रति प्रयोजकत्वसाधनेनैवावान्तरजातिबहिष्कारेण सहकारिलाभालाभाभ्यां करणाकरणोपपत्तिः साधनीया, किन्तु यत्किञ्चित् कार्यं प्रति प्रयोजकत्वसाधनेनाऽपि सा शक्या साधयितुमित्यभिप्रायवन्तः प्राहुर्न्यायाचार्याः—अथवा कृतमङ्कुरग्रहेण, बीजस्वभावत्वं क्वचित्कार्ये प्रयोजकं न वा, न चेत्, न तत्स्वभावं बीजं, तेन रूपेण क्वचिद-

प्यनुपयोगात्। एवं च प्रत्यक्षसिद्धं बीजस्वभावत्वं नास्ति सर्वप्रमाणागोचरवस्तुविशेषश्चास्तीति विशुद्धा बौद्धबुद्धिः, क्वचिदङ्कुरादावेकस्य कुर्वद्रूपस्य बीजस्य बीजत्वेन जनकत्वरूपोपयोगे तु सर्वेषामङ्कुराद्यकुर्वद्रूपाणामपि बीजानामविशेषः, अङ्कुरादिजनकतावच्छेदकबीजत्वशालित्वात्, तथा च किञ्चिदेव बीजं स्वकार्यं कुर्यान्नापराणीति कथं युज्येत यदि समर्थस्यापि सहकारिविरहान्नाकरणम् ॥

अत एवेति, अस्येत्यभिप्रायवन्त इत्युत्तरेण सम्बन्धः, जात्यतद्व्यावृत्त्योस्समानशीलत्वाज्जात्येवाऽतद्व्यावृत्त्याप्यप्रतिनियमादेवेत्यर्थः । परेषां बौद्धानाम् । अनैयत्यात् नियमाभावात्, जातिरूपस्यैव जनकतावच्छेदकत्वमिति नियमस्य बौद्धैरनभ्युपगमादिति यावत्, अतद्व्यावृत्तिरूपस्य कुर्वद्रूपत्वस्य जातिरूपत्वेनानभ्युपगतस्यापि जनकतावच्छेदकत्वेनाभ्युपगमादिति भावः । अथवा जातिमात्रस्य जनकतावच्छेदकत्वेऽनैयत्यादिति बीजत्वादिजातिमात्रमस्यैव जनकतावच्छेदकं नान्यस्येति नियमाभावादित्यर्थः । अन्यथा तदकरणकाले तस्यैव कार्यान्तरस्याप्यनुत्पत्तेरर्थक्रियाकारित्वाभावात्तदवच्छिन्नस्याऽसत्त्वमेव स्यादिति भावः । नेत्यस्य साधनीयेत्यनेनान्वयः । प्रयोजकत्वसाधनेनापीति, बीजत्वस्येत्यनुषङ्गः, अत्रापिशब्देनाङ्कुरत्वावच्छिन्नं प्रसिद्धकार्यं प्रति बीजत्वस्य प्रयोजकत्वसाधनेन सहकारिलाभालाभाभ्यां करणाकरणोपपत्तिश्शुशक्यैव साधयितुमिति कैमुतिकन्यायप्राप्तमेवेति सूचितम्, सेति सहकारिलाभालाभाभ्यां करणाकरणोपपत्तिरित्यर्थः । न्यायाचार्याभिप्रायं विवेचयति—अथवेति, कृतमङ्कुरग्रहेणेति, अलं बीजत्वस्याङ्कुरजनकतावच्छेदकत्वव्यवस्थापननिर्बन्धेनेत्यर्थः । वक्ष्यमाणयुक्त्या यत्किञ्चित्कार्यं प्रति तस्य प्रयोजकत्वसिद्ध्यैव तदवच्छिन्नेतरसकलकारणसमवहिततदन-

च्छिन्नसत्त्वे तत्कार्यसत्त्वस्यावश्यंभावेनोक्तस्थैर्यबाधकनिरासादभीष्टसिद्धेरिति भावः । बीजस्वभावत्वमिति बीजत्वमित्यर्थः, तथा च बीजत्वं यत्किञ्चिद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं नवेत्यर्थः । नेति पक्षं दूषयति–न तत्स्वभावमिति । ननु माभूद्बीजत्वेन बीजं यत्किञ्चित्कार्यं प्रत्यकारणत्वेन तत्स्वभावं का नो हानिरित्याशङ्कायामाह–एवञ्चेति, सर्वप्रमाणागोचरवस्तुविशेष इति कुर्वद्रूपत्वमित्यर्थः । सर्वप्रमाणागोचरस्तु विशेष इति पाठान्तरम्, तत्र विशेषः कुर्वद्रूपत्वम् । विशुद्धेत्युपहासवचनम्, प्रयोजकमित्याद्यपक्षं दूषयति–क्वचिदिति । किञ्चिदेवेति अङ्कुरकुर्वद्रूपात्मकं धरणिस्थमेवेत्यर्थः । स्वकार्यम् अङ्कुरादि, अपराणि अङ्कुराद्यऽकुर्वाणि कुशूलस्थबीजानि; ननु यत्सत्तत्क्षणिकमिति सिद्धान्तोक्तेर्वस्तुत्वावच्छिन्नस्यास्माकं मते क्षणिकत्वेन कार्यरूपत्वात्तज्जनकं बीजत्वावच्छिन्नं भविष्यत्येवेत्याह—

न च वस्तुमात्रं बीजस्वभावत्वावच्छिन्नकार्यं, बीजशून्यकारणकलापात्तदनुत्पत्तिप्रसङ्गात् । नापि पूर्वबीजक्षणेनोत्तरबीजक्षणजननाभ्युपगमाद्बीजमात्रं तथा, अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात्, प्राथमिकबीजानुत्पादे बीजसन्तानानुपलम्भप्रसङ्गाच्च । न चाङ्कुरबीजानुभवान्यतममात्रं तत्कार्यं, प्रागङ्कुरस्य पश्चाच्च बीजस्याङ्कुरोत्पत्तिप्रसङ्गात् । अथ यथाङ्कुरत्वावच्छिन्नं प्रति बीजत्वेन कारणत्वाभ्युपगन्तॄणामपि एकव्यक्तेरुत्पादकाले नापरासामुत्पत्तिप्रसङ्गो व्यक्तिस्थानीयापत्यभावात्, तत्तद्व्यक्तिकारणीभूततत्तद्व्यक्त्यभावाद्वा, तथा ममापि क्वचिद्बीजव्यक्तिरुत्पद्यते क्वचिदङ्कुरः क्वचिच्चान्ये इति नानुपपत्तिरिति चेत्, न, एतन्मतेऽपि प्राथमिकबीजानुत्पत्तिप्रसङ्गात्, अन्यतमत्वेन जन्यत्वे मानाभावात्, सम्मुग्धसाधनादपि

प्रसङ्गविपर्ययपरिशेषैरङ्कुरत्वावच्छिन्नजन्यतासिद्धेश्च ॥

न च वस्तुमात्रमिति । बीजशून्येति, बीजाऽसमवधाने घटपटादिसामग्रीतो वस्तुत्वरूपकार्यतावच्छेदकधर्मालीढस्य घटपटादिकार्यस्याप्यनुत्पत्तिप्रसङ्गादित्यर्थः । बीजमात्रं तथेति बीजत्वधर्मालीढं बीजत्वावच्छिन्नकार्यमित्यर्थः, अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गादिति सकलसामग्रीसमवहितेन कुर्वद्रूपात्मकेन येन चरमबीजक्षणेनाङ्कुरोत्पत्तिर्भवति तेनापि बीजत्वरूपकारणतावच्छेदकधर्मालीढेन बीजात्मककार्यं प्रति समर्थेन बीजमेवोत्पद्येत तेनापि चान्यद्बीजमित्येवं बीजसजातीयसन्तानाविच्छित्तिप्रसक्तिस्स्यादित्यर्थः । दूषणान्तरमाह—प्राथमिकेति, बीजकार्यतावच्छेदकाक्रान्तादाद्यबीजात्प्राग्बीजरूपकारणाभावेन तदनुत्पत्त्या बीजसजातीयसन्तानोच्छेदप्रसक्तिश्च स्यादित्यर्थः । नन्वेवं तर्हि बीजत्वावच्छिन्नात् कदाचिदङ्कुरः कदाचिद्बीजं कदाचिच्च बीजप्रत्यक्षमुत्पद्यतां को दोष इत्यत्राह—न चाङ्कुरेति, प्रागङ्कुरस्येति यस्मिन् क्षणेऽङ्कुरकुर्वद्रूपात्मकं पूर्वबीजक्षणाद्बीजमुत्पद्यते स एव क्षणोऽङ्कुरस्य प्राक् स एव च पूर्वबीजक्षणस्य पश्चादिति तस्मिन्नपि क्षणेऽङ्कुरोत्पत्तिस्स्यात्, एवं तत्पूर्वपूर्वमपि बीजत्वेन पूर्वपूर्वबीजक्षणानामपि तं प्रति सामर्थ्याविशेषादिति भावः । अत्र प्रागङ्कुरस्य पश्चाच्च बीजस्योत्पत्तिप्रसंगादित्यपि, पाठः, तत्र प्रागिति यदा बीजाद्बीजमुत्पद्यते तत्काले, अङ्कुरोत्पत्तिपूर्वकाल इति यावत्, अङ्कुरस्येत्यस्योत्पत्तिप्रसङ्गादित्यनेनान्वयः । तत्पूर्वक्षणे बीजरूपकारणस्य सत्त्वादिति भावः । पश्चाच्च बीजस्येति चरमबीजस्योत्पत्तेः पश्चाद्बीजस्येत्यर्थः, यथा बीजमङ्कुरं प्रति कारणं तथा बीजं प्रत्यपीति चरमबीजस्यापि बीजत्वेन बीजकारणत्वाविशेषात्तेनापि बीजस्योत्पत्तिप्रसङ्गात्, बीजाङ्कुरयोरैन्द्रियकयोरुत्पत्त्यभ्युपगमे तद्देशस्थितपुरुषेण नियमेन तयोरुपलम्भः स्यादुपलम्भाभावाच्च न तथोपगमः श्रेयानिति भावः । अङ्कुरत्वादेः

कार्यतावच्छेदकत्वोपगम एव प्रागङ्कुरस्य पश्चाच्च बीजस्योत्पत्तिप्रसङ्गस्सङ्गतिमङ्गति न त्वन्यतमत्वस्य कार्यतावच्छेदकत्वोपगमे अतस्तं पक्षं दूषणान्तरेण निराकर्तुमाशङ्कते—अथेति—व्यक्तिस्थानीयापत्त्यभावादिति सामान्यधर्मावच्छिन्नसामग्र्यास्सामान्यधर्मावच्छिन्नकार्यस्यैवापादकत्वेन विशेषधर्मावच्छिन्नकार्यमापादयितुमशक्यत्वात् दण्डत्वाद्यवच्छिन्नसत्त्वे तद्घटत्वावच्छिन्नतद्घटात्मककार्यवदिति भावः। तत्तद्व्यक्तीति, तत्तदङ्कुरादिकार्यव्यक्तिं प्रति कारणीभूतायास्तत्तद्बीजादिव्यक्तेरभावादित्यर्थः। अन्य इति, अन्यतमत्वघटकस्याङ्कुरस्य बीजस्य च नाम्नैव सङ्कीर्त्तनात्परिशेषादनुभव इत्यर्थः। नानुपपत्तिरिति बीजत्वस्याङ्कुरबीजानुभवान्यतमत्वावच्छिन्नं प्रत्येव प्रयोजकत्वेन तद्व्यक्तित्वावच्छिन्नमिवाङ्कुरत्वबीजत्वानुभवत्वरूपविशेषधर्मावच्छिन्नमपि न बीजत्वावच्छिन्नकार्यमित्यङ्कुरादयो व्यक्तिस्थानीया इति तदापत्त्यभावेन नान्यतमघटकैकव्यक्त्युत्पादकालेऽपरव्यक्त्युत्पादप्रसङ्गः नवाऽन्यतमत्वरूपकार्यतावच्छेदकाक्रान्तत्वात्तदङ्कुरतद्बीजादिव्यक्तेरपि तदापत्तिः तत्कारणीभूततत्तद्व्यक्तित्वावच्छिन्नाभावादिति भावः। प्राथमिकबीजेति, तत्पूर्वं बीजसाधारणान्यतमत्वावच्छिन्नहेतुभूतबीजाभावात्, तदनुत्पादे च द्वितीयतृतीयादेरप्यनुत्पाद एव कारणाभावादिति निर्बीजमेव जगत्स्यादिति भावः। कार्यतावच्छेदककोटौ प्राथमिकबीजव्यावर्त्तकविशेषणोपादानान्नोक्तापादनमित्याशङ्कायां दूषणान्तरमाह—अङ्कुरत्वावच्छिन्नं प्रत्यपि प्रयोजकत्वस्यावश्यवक्तव्यत्वादिति, अयं च पाठोऽन्यत्र दृश्यते। अवश्यवक्तव्यत्वादिति अन्यथा तदवच्छिन्नजनननियमानुपपत्तेरिति भावः। **मानाभावादिति** अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदलक्षणस्य कूटत्वघटितत्वेन दुर्ग्रहत्वात्, अन्यतमत्वघटकतावच्छेदकतत्तद्धर्मावच्छिन्नोत्पत्तिनियामकादेव तदवच्छिन्नोत्पत्तिनियमोपपत्तेरर्थसमाजग्रस्तत्वेनाप्यन्यतमत्वस्य कार्यतावच्छेदकत्वाभावात्, धूमस्याप्यन्यतमत्वेन कार्यत्वसम्भवेन

धूमत्वेन वह्न्यनुमानाभावप्रसङ्गश्चेति भावः । ‘ सम्मुग्धसाधनादपि ’ सामान्यानुमानादपि ।

तथा हि–यद् येन रूपेणार्थक्रियासु नोपयुज्यते न तत् तद्रूपं यथा बीजं कुञ्जरत्वेन किञ्चिदप्यकुर्वन्न कुञ्जरस्वरूपं तथा च शाल्यादयो यत्किञ्चित्सामग्रीप्रविष्टा बीजत्वेनार्थक्रियासु नोपयुज्यन्त इति व्यापकानुपलब्धिः प्रसङ्गहेतुः, तद्रूपतया अर्थक्रियां प्रति योग्यतया व्याप्तत्वात्, अन्यथाऽतिप्रसङ्गात् । तद्रूपत्वमेतस्य प्रत्यक्षसिद्धत्वादशक्यापन्हवमिति चेत्, अस्तु तर्हि विपर्ययः, यद् यद्रूपं तत् तेनार्थक्रियासूपयुज्यते, यथा स्वभावेन सामग्रीनिवेशिनो भावाः, बीजरूपाश्चैते कुशूलस्थादय इति स्वभावहेतुः, तद्रूपत्वमात्रानुबन्धित्वाद् योग्यतायाः, ततश्चास्ति किञ्चित् कार्यं यत्र बीजत्वेन बीजमुपयुज्यते । न च बीजानुभव एवासाधारणं कार्यं, यौगिकतदनुभवस्य तदन्तरेणाप्युत्पत्तेस्तस्यातीतानागतावगाहित्वात् ॥

विपर्ययस्य प्रसङ्गपूर्वकत्वात्प्रसङ्गमाह–तथाहीत्यादिना, येन रूपेणेत्यादि रूपपदमिह जातिपरम्, न धर्ममात्रपरम्, अत एव बीजत्वं यथा बीजधर्मस्तथा चैत्राद्यवलोकितत्वादिकमपि, न च तद्रूपेण बीजं कस्मिंश्चिदपि कार्ये उपयुज्यते तथापि तद्रूपमेव तदिति व्यभिचारस्स्यादिति निरस्तम्, तथा च जातिमात्रस्यैव जनकतावच्छेदकत्वनियमान्नोक्त व्यभिचार इति भावः । येन रूपेणेत्यत्र तृतीयार्थोऽवच्छिन्नत्वम्, अर्थक्रियास्विति किञ्चिद्धर्म्मावच्छिन्नकार्येष्वित्यर्थः, सप्तम्यर्थो निरूपितत्वम् नोपयुज्यते इति नोपयोगिताशालीत्यर्थः, न कारणताशालीति यावत्, तद्घटकीभूतकारणतायामवच्छिन्नत्वस्य निरूपितत्वस्य चान्वयः, तथा च किञ्चिद्धर्म्मावच्छिन्नकार्यतानिरूपितयज्जात्यवच्छिन्नकारणताशून्यं यत्तत्ज्जातिमन्न, यथा कुञ्जरत्वाव-

च्छिन्नकारणताशून्यं बीजं न कुञ्जरत्वजात्याक्रान्तमिति पर्यवसितार्थः । नोपयुज्यन्ते इत्यत्र परमते इति पूरणीयं नातः स्वमते बीजत्वेन शाल्यादिबीजानामङ्कुरादिकार्यकारित्वादसङ्गतिः । व्यापकानुपलब्धिरिति व्यापकाभाव इत्यर्थः । आपाद्यापादक-प्रतियोगिनोस्तद्धर्म्मावच्छिन्नत्वतद्धर्मावच्छिन्नकिञ्चित्कार्यकरणस्वभावत्वयोः प्रसङ्गमूलभूतव्याप्तिप्रदर्शनमुखेन प्रसञ्जकहेतोर्व्यापका-भावरूपतां स्पष्टयति–तद्रूपताया इति ।अन्यथेति तद्रूपावच्छिन्नकारणताशून्यस्यापि तद्रूपत्वे इत्यर्थः, अतिप्रसङ्गादिति बी-जादेरपि कुञ्जरत्वादिप्रसङ्गात् इत्यर्थः । भवतां बीजत्वकुञ्जरत्वयोः किञ्चित्कार्यतानिरूपितकारणतानवच्छेदकत्वाविशेषादिति भावः । प्रसङ्गो हि विपर्यये पर्यवस्यतीति प्रसङ्गानुमानप्रदर्शनं कृत्वा विपर्ययमवतारयति–तद्रूपत्वमेतस्येति,तद्रूपत्वम् ,बीजजातीयत्वम्, एतस्य शाल्यादेः । उपदर्शितव्याप्तौ बीजमाह–तद्रूपत्वेति । ननु भवतु बीजत्वेन बीजं किञ्चित्कार्यप्रयोजकं न च तथाऽप्य-ङ्कुरात्मककार्यविशेषोत्पादकमिति सिद्ध्यति बीजानुभवादिकार्योत्पादनेनैव चरितार्थत्वादित्याशङ्कामुद्भाव्येतरकार्यनिषेधमुखेन परिशेषानुमानमवतारयितुमाह–न च बीजानुभव एवेति, बीजाभावेऽप्युपजायमानाया बीजानुमित्यादेर्बीजकार्यत्वाभावादनुभव-पदमत्र साक्षात्कारपरम्, अत एवाग्रे तदनुसृत्य विकल्पद्वयमिति—

लौकिकस्य चावश्यं सर्वस्माद्बीजादभावादिन्द्रियादिप्रत्यासन्नोत्पादस्य सर्वत्राभावात् । ततश्च यो-ग्यमपि सहकार्यसिद्धेर्न करोतीत्यर्थसिद्धम् । कार्यान्तरमेवातीन्द्रियं सर्वबीजाव्यभिचारि भविष्यतीति चेत्, तन्न तावदुपादेयम्, अमूर्त्तमूर्त्तविकल्पग्रासात्, अमूर्त्तस्य मूर्त्तानुपादेयत्वात्, परिदृश्यमानोत्तरोत्तर-मूर्त्तबीजप्रतिहततया मूर्त्तस्य च तद्देशस्थस्यानुपपत्तेः । नापि सहकार्यं, यदुपादानसाहित्येन हि येन यत् क्रियते

तत् तस्य कार्यं तत्सहकार्यमिति व्यवस्थितेः, **मिथः सहकारिणामव्यभिचारानुपपत्तेः ॥**

इन्द्रियादिप्रत्यासन्नोत्पादस्येति, एतत्स्वमतेन, न बौद्धमतेन, तन्मतेन तु कुर्वद्रूपात्मकतयोत्पन्नस्य चक्षुरादिगोलकविशेषस्येति द्रष्टव्यम् । अर्थसिद्धमिति, तावतापि स्थैर्यसिद्धिरिति भावः । सर्वबीजजन्यं यत्कार्यान्तरं तत्समवेतकार्यं सहकार्यकार्यं वा, समवेतमप्यमूर्त्तं मूर्त्तं वा स्यात्, आद्ये अमूर्त्तस्येति, एतच्च बौद्धमतमाश्रित्य, तन्मते मूर्त्तोपादेयस्य रूपादेर्मूर्त्तत्वादेव, घटादिद्रव्याणां रूपादिस्कन्धात्मकत्वेन रूपाद्यतिरिक्तस्य द्रव्यस्याऽभावात्, स्वमते तु द्रव्यस्येति विशेष्यम् । अन्त्ये परिदृश्यमानेति, परिदृश्यमानमूर्त्तकार्यमुत्तरोत्तरबीजरूपमङ्कुररूपं वा यदा पूर्वबीजदेशे उत्पद्यते न तदैव तत्रैव मूर्त्तातीन्द्रियकार्यान्तरमुत्पद्यते, समवायेन मूर्त्तद्वयस्यैककालघटितसमानदेशत्वविरहनियमादिति भावः । निमित्तान्तरसहकृतेनोपादानात्मकेन बीजेनातीन्द्रियकार्यमुपादेयरूपं मोत्पद्यताम्, उपादानान्तरसहकृतेन तेन तु सहकार्यरूपं तदुत्पत्स्यत एवेति द्वितीयपक्षं निराकरोति, नापीति, सहकार्यकार्यलक्षणमाह- यदुपादानेति, निराकरणयुक्तिमाह-**मिथः सहकारिणामिति**, उपादानसहकारिणोर्मध्ये एकस्य सत्वे तदपरस्यावश्यंभावाभावेन तदसन्निधाने कार्यानुत्पत्तौ बीजस्य कार्याव्यभिचाराभावादित्यर्थः । मिथः सहकारिणामव्यभिचारानुपपत्तेरित्यस्य फलितार्थमाह—

**उपादानसहकारिणोर्विरहेऽपि सहकार्युपादानसत्त्वे कार्यस्योत्पादे व्यभिचारात्, अनुत्पादे च सिद्धं समर्थस्यापि सहकारिविरहादकरणमिति ।** न च ध्वंस एवासाधारणं कार्यम्, कार्यातिरिक्तस्य तस्य तवालीकत्वात्, कार्यस्य च विवेचितत्वादिति भाव इति दीधितिकृतः । न च तत्कार्येषु बीजध्वंसत्वमनुगतं का-

यैतावच्छेदकमस्तु व्यवहारबलादनुयोगिताविशेषस्य पारमार्थिकस्यान्यस्य वा तैरवश्यमभ्युपगमादिति वाच्यम्, सभागकार्येषूभयसिद्धध्वंसत्वव्यवहाराभावेन तेषु तत्त्वे मानाभावादिति गुणानन्दः। स परभावानभिज्ञः, अन्ते नाशदर्शनाद्भावमात्रे नाशव्याप्तिस्वीकर्त्तुः परस्य मुख्यनाशत्वस्य स्वकार्यसन्ततावेवेष्टत्वात्, स्वोपादानातिरिक्तहेत्वभावेन च तत्र निर्हेतुकत्वप्रतिज्ञानात्, सर्वथा निर्हेतुकत्वस्य च तैर्नैयायिकाद्यभिमते तुच्छध्वंस एव स्वीकारात्, सभागकार्यक्षणेष्विव तत्रोपादानध्वंसत्वे उभयसिद्धयभावस्याप्रयोजकत्वात् ॥

उपादानसहकारिणोरिति, उपादानस्य विरहेऽपि सहकारिणस्सत्त्वसम्भवात्तन्मात्रेण एवं सहकारिणो विरहेऽप्युपादानस्य सत्त्वसम्भवात्तन्मात्रेण बीजसहकार्यकार्यस्योत्पादे व्यतिरेकव्यभिचारादुपादानकारणस्य तत्सहकारितयोपगतस्य बीजस्य चाकारणत्वं स्यात्, तयोरेकाऽसत्त्वेऽपरस्मात्कार्योत्पादानुपगमे बाधक-माह-अनुत्पादे चेति। सिद्धमिति, तथा च गतं क्षणभङ्गेनेति भावः। अन्ये तु मिथः सहकारिणामव्यभिचारानुपपत्तेरिति तत्कार्योपादानान्तरबीजरूपतत्कारणानां तत्कार्यजनने परस्परसहकारिणां एकविरहेऽपरस्य कार्याऽजननानुपपत्तेरित्यर्थः, समर्थस्य क्षेपाऽयोगादिति भावः, तावता को दोष इत्याकाङ्क्षायामाह-उपादानसहकारिणोरिति, अस्य चार्थः पूर्ववदित्यर्थमाहुः। न्यूनताभङ्गाय सर्वबीजाव्यभिचारिध्वंसलक्षणकार्यान्तरमाशङ्क्य निराकरोति-नचेति। कार्यातिरिक्तस्येति बीजाङ्कुरादिरूपबीजकार्यातिरिक्तस्येत्यर्थः, तस्येति, अभावभूतध्वंसस्येत्यर्थः! तव पूर्वपूर्वकारणध्वंसो ह्युत्तरोत्तरकार्यात्मेत्यभ्युपगच्छतो बौद्धस्य। अलीकत्वात् तुच्छरूपाभावात्मकस्य तस्यार्थक्रियाकारित्वाभावेनासद्भूतत्वात्, कार्यस्येति, बीजाङ्कुरयौगिकलौकिकबीजानुभवमूर्त्तामूर्त्तोपादेयसहकार्यातीन्द्रियकार्यान्तररूपस्येत्यर्थः। अनुगत-

मिति ये तत्तद्बीजानां सजातीयकार्यात्मका ध्वंसाः ये च विजातीयकार्यात्मकास्तेषु सर्वेषु ध्वंसो ध्वंस इत्यनुगतप्रतीतिविषयीभूतमित्यर्थः । अनुयोगिताविशेषस्येति, एतेन घटो भविष्यति घटो ध्वस्तः घटो नास्ति घटो न पटः इत्यादि प्रतियोग्युपरक्ताभावबुद्धिषु प्रतियोगितानिरूपकतावच्छेदकतया भासते यत्प्रागभावत्वं ध्वंसत्वमत्यन्ताभावत्वमन्योन्याभावत्वं च तदनुयोगिताविशेषरूपमेव, लाघवात्, न तु विनाश्यभावत्वादिरूपमिति सूचितम्। अत्र विशेषपदं सांसर्गीयप्रतियोगितानिरूपितानुयोगिताव्यावृत्त्यर्थम् । पारमार्थिकस्येति, स्वमतेन, न तु बौद्धमतावष्टम्भेन, तन्मते निर्विकल्पप्रत्यक्षमेव परमार्थभूतस्वलक्षणविषयकत्वेन प्रमाणं तज्जन्यं तु सविकल्पकं तन्मूलकत्वादेव प्रमाणं, नतु वस्तुगत्या, असद्भूतधर्मविषयकत्वादित्यनुगतसविकल्पप्रतीतिगोचरस्य ध्वंसत्वस्यापि काल्पनिकत्वात्, तन्मतेन त्वाह-अन्यस्य वेति काल्पनिकस्यातद्व्यावृत्तिरूपस्य वेत्यर्थः। तैः बौद्धैः । बीजकार्यत्वं सजातीयकार्यसन्तानेऽपि वर्तते न च तत्र बीजध्वंसत्वं उभयमतसिद्धत्वाभावादिति बीजध्वंसत्वं कार्यताया न्यूनवृत्तित्वेन न तदवच्छेदकमित्याशयेनाह—सभागकार्येष्विति । गुणानन्दस्य बौद्धतन्त्राशयानभिज्ञतामेवाभिव्यनक्ति, अन्त इति। नाशव्याप्तिस्वीकर्तुः परस्य ये ये भावास्ते ते प्रतिक्षणं विनश्वराः पर्यन्तवर्तिनाशप्रतियोगित्वात् दीपशिखावदित्याद्यनुमानमभ्युपगच्छतो बौद्धस्य। ननु यद्युत्तरोत्तरकार्यसन्तानात्मैव पूर्वपूर्वकारणध्वंसस्तर्हि तद्वदेव तस्य ध्वंसस्य सहेतुकत्वे सिद्धे तत्र निर्हेतुकत्वप्रवादः किं मूलक इत्याशङ्कायामाह—स्वोपादानेति । निरुपचरितं निर्हेतुकत्वं यत्र चरितार्थं तदाह—सर्वथेति, यद् गुणानन्देनोभयसिद्धत्वं व्यवहाराङ्गमुक्तं तन्निरसनायाह—सभागेति, उभयसिद्धयभावस्येति अत्रोभयसिद्धत्वस्येति पाठस्सम्भवति। अनुभवादिव्यवहारे प्रकाशांशे विशेष्यांशे च वादिप्रतिवाद्युभयसिद्धेस्तन्त्रत्वेऽपि सम्बन्धांशे तन्त्रत्वाभावात् स्वाश्रयध्वंसत्वं कार्यतायाः स्वाश्रयत्वं कारणतायाश्चावच्छेदकता-

वच्छेदकसम्बन्धकोटौ प्रवेश्यैकस्यैव वीजत्वस्य कार्यकारणतावच्छेदकत्वाभ्युपगमेन स्वाश्रयध्वंसत्वसंसर्गेण वीजत्वविशिष्टं यत्प्रतियोगितासंसर्गेण तत्प्रति स्वाश्रयत्वसम्बन्धेन वीजत्वविशिष्टं यत्तत् तादात्म्यसम्बन्धेन कारणमित्येवं कार्यकारणभावसम्भवान्न गुणानन्दोक्तखण्डनं युक्तियुक्तमित्याह—

अस्तु वा स्वाश्रयध्वंसत्वस्वाश्रयत्वसम्बन्धाभ्यां वीजत्वमेकमेव कार्यकारणतावच्छेदकम्। न च सम्बन्धांशेऽप्युभयप्रसिद्धिर्मृग्या, समवायतादात्म्यादिसम्बन्धयोरुभयानभिमतत्वेनोभयसाधारणकार्यकारणभावादिकथामात्रस्यैवोच्छेदप्रसङ्गात्। सम्मुग्धव्यवहारेण समयबन्धानपायस्य चाविशेषात् तस्मान्नायं पन्थाः॥

अस्तु वेति स्वाश्रयेति, ननु स्वाश्रयत्वं स्वनिष्ठाधेयतानिरूपिताधारत्वं आधेयत्वञ्च किञ्चित्सम्बन्धावच्छिन्नमेव भवतीति तदवच्छेदकविधया कस्सम्बन्धः प्रविष्ट इति चेत्, न्यायमते समवायः, अन्यमते च स्वरूपतादात्म्यादिर्यथायथं बोध्यः। यथा प्रमाणे व्यवहर्त्तव्यमित्यादिरूपे कथाव्यवहारप्रयोजकीभूते सङ्केतबन्धे प्रमाणसामान्यस्यैव प्रवेशः नतु तद्विशेषस्य तथा कार्यं कारणं पक्षसाध्यसाधनं च सम्बन्धपूर्वकमेव वक्तव्यमित्यादिरूपे सङ्केतबन्धेऽपि सम्बन्धसामान्यस्य प्रवेशो नतु तद्विशेषस्येति न तत्प्रयोजकतयापि सम्बन्धविशेषे उभयसिद्धिर्मृग्येत्याह—सम्मुग्धव्यवहारेणेति। नायं पन्था इति गुणानन्दोक्तखण्डनप्रकारो न प्रमाणभूत इत्यर्थः।

किन्तु तद्ध्वंसध्वंसेऽपि तद्ध्वंसत्वस्वीकाराद्विसभागसन्ततौ व्यभिचारान्नेदं युक्तमिति वयं पश्यामः॥ एतेन बीजप्रागभावध्वंसत्वस्यापि बीजोपादेयतावच्छेदकत्वमपास्तम्। आद्यबीजे व्यभिचाराच्च।

अथ न तद्व्यतिरेकप्रयुक्तकार्यकारित्वाभाववत एव सहकारित्वमक्लृप्तकार्यतदुपादानवदुपादेयाविनाभावोऽपि सहकारिणः कल्पयिष्यत इत्यतीन्द्रियाव्यभिचारिबीजकार्याभ्युपगमे न क्षतिरिति चेत्, एवं सति प्रयोजकः स्वभावो नान्वयव्यतिरेकगोचरस्तद्गोचरस्तु न प्रयोजको दृश्यं कार्यजातमदृश्येनैव स्वभावेन क्रियते दृश्येन त्वदृश्यमेवेति सोऽयं यो ध्रुवाणीत्यस्य न्यायस्य विषयः। ("यो ध्रुवाणि परित्यज्य अध्रुवाणि तु सेवते॥ ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ १ ॥ इति संपूर्णः श्लोकः ॥ )

तद्ध्वंसत्वस्वीकारादिति, प्रतियोग्युन्मज्जनप्रसङ्गभीत्येति शेषः। बीजसन्तानापेक्षया विसभागसन्तानरूपायामप्याद्याङ्कुरव्यक्तौ न व्यभिचारः कुर्वद्रूपात्मकान्तिमबीजादेव तदुत्पत्तेः, किन्तु द्वितीयाद्यङ्कुरव्यक्ताविति हेतोर्विसभागसन्ततावित्यत्र तत्पूर्वमन्तरितेति पदं पूरणीयम्। व्यभिचारात् व्यतिरेकव्यभिचारात् । एतेनेति, बीजप्रागभावध्वंसत्वस्य बीजसन्तान इव सान्तराङ्कुरसन्तानेऽपि पूर्वपूर्वबीजप्रागभावध्वंसध्वंसरूपे बीजप्रागभावोन्मज्जनप्रसङ्गभीत्या स्वीकर्त्तव्यत्वेन तस्मिन् बीजानुपादेये व्यभिचारेणेत्यर्थः। दोषान्तरमप्याह—आद्यबीज इति, बौद्धमते आद्यबीजप्रागभावोऽङ्कुररूपतदुपादानकारणात्मा तद्ध्वंसश्च बीजात्मक एव उपादानध्वंसस्योपादेयरूपत्वादित्याद्यबीजस्य प्रागभावध्वंसत्ववतस्तत्पूर्वं बीजाभावेऽप्युत्पत्तेर्व्यभिचारादित्यर्थः। नापि सहकार्यमित्यादिनोक्तं दूषणमुद्धृत्यैवं सतीत्यादिदूषणमवतारयति—अथेति, न तद्व्यतिरेकेति यदभावप्रयुक्त उपादाने कार्यकारित्वाभावस्तस्य सहकारित्वमित्येवं नेष्यते येनोपादानसहकारिणोरेकतरविरहस्थलेऽन्यस्मात्कार्यजननेन व्यभिचारात्तत्कारणत्वाऽनिर्वाह इत्यादिदूषणं सावकाशं स्यात् किन्त्वेकसत्त्वकाले तदितरेषां सर्वेषां कारणानां सम्मेलनसम्भवात्तानि सर्वाणि स-

हैव कार्यं कुर्वन्तीत्येतावतैव सहकारित्वं तेषामित्यर्थः, अक्लृप्तकार्यतदुपादानवदिति यथा च बीजस्यातीन्द्रियं कार्यान्तरं बीजभिन्नं तदुपादानं चाक्लृप्तमेव कल्प्यते तद्वदित्यर्थः, उपादेयाविनाभावोऽपीति, अतीन्द्रियकार्यैकरणनियमोऽपि सहकारिणः कल्पयिष्यते इत्यर्थः, उपादानाविनाभावोऽपीत्याद्यन्यत्र पाठः, तस्य च तादृशोपादानबीजरूपसहकारिणोरेकसत्त्वेऽपरसत्त्वनियमोऽपि परिकल्पयिष्यत इत्यर्थः । एवं सतीति, बीजस्य बीजत्वेनैवातीन्द्रियकार्यं प्रति कारणत्वमङ्कुरत्वावच्छिन्नं प्रति तु न तद्रूपेण किन्तु कुर्वद्रूपत्वेनेत्यभ्युपगमे सतीत्यर्थः। प्रयोजकः स्वभावः अङ्कुरादिजनकतावच्छेदकः कुर्वद्रूपत्वात्मकबीजस्वभावः । तद्गोचरस्त्विति. अन्वयव्यतिरेकग्रहविषयो बीजत्वादिस्त्वित्यर्थः । न प्रयोजकः नाङ्कुरत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकः । दृश्यं कार्यजातम् प्रत्यक्षसिद्धमंकुरत्वाद्यवच्छिन्नम् । अदृश्येनैव स्वभावेन अतीन्द्रियेण कुर्वद्रूपत्वाख्यवैजात्येन । दृश्येन प्रत्यक्षसिद्धबीजत्वेन । अदृश्यम् अतीन्द्रियसहकार्यकार्यम्, क्रियत इत्यनुपपद्यते, तथा च वैजात्यमपि न सिद्ध्येत्, दृश्यादृश्ययोः कार्यकारणभावे प्रत्यक्षाभावेऽनुमानस्याप्यभावात् वृद्धिमिच्छतो मूलमपि नश्येदित्यर्थः । सोऽयं यो ध्रुवाणीत्यस्य न्यायस्य विषय इति एतत्स्वीकर्त्ता सौगतो यो ध्रुवाणीत्यादि न्यायपदाभिषिक्तो भवतीत्यर्थः ।

अथवा व्यतिरेकेण प्रयोगः, विवादाध्यासितं बीजं सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यविकलं तदुत्पत्तिनिश्चयविषयीभूतबीजजातीयत्वात्, यत् पुनः सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यविकलं न भवति न तदेवंभूतबीजजातीयं यथा शिलाशकलमिति । विवादाध्यासितमिति स्वरूपकथनं, स्थैर्यपक्षे फलोपहितस्यापि प्राक्कार्यवैकल्यात् । अङ्कुरादीत्यादिपदेन सामान्यव्याप्तिः सूचिता ॥

व्यतिरेकेण प्रयोग इति, बौद्धमते भावानां क्षणिकत्वाद्यद्यत्कार्यं न करोति तत्तत्कार्यं प्रति सर्वथाऽसमर्थत्वादेव सहकारिसमवधानाऽसम्भवेन कदापि न करोत्येवेति तत्र तत्कार्यकारित्वाभावस्य स्वाभाविकत्वेन सहकारिवैकल्यप्रयुक्तत्वाभावात् सहकारिविरहप्रयुक्ताङ्कुरादिकार्योपधानाभाववत्त्वरूपवक्ष्यमाणसाध्यस्य क्वचिदपि न प्रसिद्धिरित्यन्वयदृष्टान्ताऽसम्पत्तेर्व्यतिरेक्यनुमानप्रयोग इत्यर्थः । नन्वेवं सति वक्ष्यमाणसाध्यस्यालीकरूपत्वात्तत्प्रतियोगिकाभावस्यापि न कुत्रापि प्रतीतिस्स्यादिति वक्ष्यमाणव्यतिरेक्युदाहरणमपि कथं सङ्गतं स्यादिति चेत्, न, बौद्धस्यासत्ख्यातिवादिनो मते असत्प्रतियोगिकाभावस्यापि प्रतीत्युपगमादितिभावः । तदेवंभूतेति, अङ्कुराद्युत्पत्तिनिश्चयविषयीभूतेत्यर्थः । उक्तानुमाने पक्षतावच्छेदकावच्छेदेन बीजस्य पक्षत्वात्तदेकदेशे क्षेत्रपतितबीजे सहकारिविरहप्रयुक्तत्वरूपविशेषणस्याङ्कुरादिकार्यकारित्वाभावरूपविशेष्यस्य चाऽभावाद्विशिष्टस्य साध्यस्याभावात् यदि पक्षतावच्छेदकसामानाधिकरण्येन बाधस्स्यात्तदा तद्व्यावर्त्तकतया विवादाध्यासितमिति पदं सार्थकं स्यात्, न चैवं, तत्रापि तादृशसाध्यवत्ताया उपपादनीयत्वादिति तस्योपरञ्जकविशेषणतामाह—विवादेति, उक्तसाध्यसत्त्वप्रदर्शनमुखेनोपरञ्जकत्वमेव व्यनक्ति—स्थैर्यपक्ष इति, फलोपहितस्यापि सहकारिकालावच्छेदेनाङ्कुरकार्यकारिणो बीजस्यापीत्यर्थः । प्रागिति, सहकारिसमवधानपूर्वकालावच्छेदेनेत्यर्थः । कार्यवैकल्यात् सहकारिसमवधानविरहप्रयुक्तकार्योपधानाभाववत्त्वात् । न्यायमते यदेव कुशूलस्थकालावच्छिन्नं तदेव धरणिस्थकालावच्छिन्नमिति बीजस्यैकत्वादेव सहकारिसमवधानकालावच्छेदेनाङ्कुरत्वावच्छिन्नं कार्यं बीजत्वेन रूपेण कुर्वीत क्षेत्रपतितबीजेऽपि तत्पूर्वकालावच्छेदेन सहकारिविरहप्रयुक्तस्यैवाङ्कुरकार्याकारित्वस्य साध्यस्य सत्त्वान्नोक्तबाध इति स्वरूपोपरञ्जकमेव विवादाध्यासितमिति पदमिति भावः । अङ्कुरात्मककार्यस्यैव प्रकृततया नोपयुक्तमादिपदमित्याशङ्का-

यां तत्प्रयोजनं दर्शयति—आदिपदेनेति, सामान्यव्याप्तिरिति, साध्ये हेतौ चोभयत्र विशेषपदोपादानविनिर्मुक्ता सामान्यमुखी व्याप्तिरित्यर्थः । साध्य इव हेतौ यद्यादिपदमुपात्तं स्यात्तदा सामान्यव्याप्तिसूचनं स्यात्, न चैवमत्रेत्याशङ्कायामाह—

एवं च हेतावपि बीजादीति बोध्यम् । विशेषव्याप्त्यादरे त्वादिपदमनुपादेयम्, हेतौ च तदुत्पत्तिरङ्कुरनिरूपिता वक्तव्या, वैकल्पिकं च भूतान्तबीजपदयोरुपादानम् अन्यथा बीजजातीयत्वादित्यस्यैव समर्थत्वे भूतान्तवैयर्थ्यापत्तेः । कार्यवैकल्यं कार्योपधायकत्वाभावः, क्षणिकत्वपक्षे कारणमात्रस्यैव कार्यकालवृत्तित्वेन यावत्सत्त्वमेव कार्याभाववत्त्वात् तस्य सहकारिवैकल्यप्रयुक्तत्वाभावात् । तदुत्पत्तीति, यद्यपि परेषां सहकारिविरहितं न तदुत्पत्तिनिश्चयविषयः, कारणतावच्छेदकरूपेण तत्साजात्यं चासिद्धं, रूपान्तरेण त्वतिप्रसक्तं, तथापि तदुत्पत्त्या तन्निश्चायकावन्वयव्यतिरेकावुपलक्षितौ, नियतान्वयव्यतिरेकितावच्छेदकरूपवत्त्वं फलितार्थः । शिलादौ सहकारिसाकल्येऽपि कार्यवैकल्यात् स्वरूपायोग्यत्वप्रयुक्तमेतदिति विशिष्टाभावात् न व्यतिरेकदृष्टान्तत्वानुपपत्तिः ॥

एवं चेति, आदिपदम् साध्येऽङ्कुरादीत्यत्रादिपदम् । तदुत्पत्तिरङ्कुरनिरूपितेति, तदुत्पत्तिस्थानेऽङ्कुरोत्पत्तीति वाच्यम्, तथा चाङ्कुरत्वावच्छिन्नकार्यतानिरूपितकारणतानिश्चयविषयीभूतबीजजातीयत्वादिति हेतुः पर्यवसित इति भावः । नन्वतत्पक्षे हेतौ भूतान्तविशेषणं न व्यभिचारस्य नवाऽसिद्धेर्वारकं तदुभयाभावादिति तस्य व्यर्थत्वात्तद्घटितहेतोर्व्याप्यत्वासिद्धिस्स्यादित्याशङ्कायामाह—वैकल्पिकमिति, कार्यवैकल्यमिति साध्यघटकमिति शेषः । कार्यवैकल्यपदस्य कार्योपधायकत्वाभावपर-

त्वाभावेऽपि न स्थिरत्वपक्षे साध्याऽप्रसिद्धिः समवायिकारणे कार्योत्पत्तिपूर्वकालावच्छेदेन कार्यवैकल्यस्य सहकारिविरहप्रयुक्तत्वेन तत्र साध्यस्य प्रसिद्धेरित्यतः क्षणिकत्वपक्षे तामाह—क्षणिकत्वपक्ष इति, तदुत्पत्तिनिश्चयविषयबीजजातीयत्वादिति हेतुं निरूपयति—तदुत्पत्तीतीति, ननु कुशूलस्थबीजादिकस्य तत्तत्कार्योपधाननिश्चयविषयत्वतद्योग्यतानिश्चयविषयत्वान्यतररूपे तदुत्पत्तिनिश्चयविषयत्वे बौद्धानां विवादान्माभूत् तदुत्पत्तिनिश्चयविषयो यद्बीजजातीयं तत्त्वस्य हेतुत्वं, क्षेत्रस्थबीजस्य तूक्तत्रिपरत्वे विवादाभावात् तत्सजातीयत्वं हेतुस्स्यादेव, एवञ्च तदुत्पत्तिनिश्चयविषयः सहकारिसमवहितं यद्बीजं तत्सजातीयत्वस्य कुशूलस्थबीजेऽप्युभयसिद्धत्वान्न तस्य हेतुत्वासिद्धिरित्याशङ्क्य कारणतावच्छेदकरूपेण साजात्यं विवक्षितं येन केनापि रूपेण वा, द्वयमपि दुष्टमित्याह—कारणतावच्छेदकेति । असिद्धमिति, बौद्धैरकुर्वद्रूपसाधारणधर्मस्य कारणतावच्छेदकत्वानुपगमात्, तथा च दृष्टान्तीभूते कुशूलस्थबीजे हेत्वसिद्धिरिति भावः । अतिप्रसक्तमिति साध्यशून्यशिलाशकलादिसाधारणं, तस्यापि द्रव्यत्वादिना कुर्वद्रूपबीजसजातीयत्वात्, तथा च व्यभिचारस्स्यादिति भावः । तदुत्पत्त्येति, तदुत्पत्तिपदेनेत्यर्थः । तन्निश्चायकौ, तत्कारणतारूपतदुत्पत्तिनिश्चयजनकौ, उपलक्षितौ विवक्षितौ, तथा च तत्कारणताग्राहकान्वयव्यतिरेकनिश्चयविषयतावच्छेदकरूपवत्त्वं पर्यवसितं तादृशञ्च बीजत्वादिकमिति भावः । नन्वङ्कुरत्वावच्छिन्नकार्यान्वयव्यतिरेकानुस्यूतबीजत्वावच्छिन्नान्वयव्यतिरेकनिश्चयो द्रव्यादिघटितसमूहालम्बनरूपोऽपि स्यादिति तद्विषयतावच्छेदकद्रव्यत्वसत्त्वादिवत्त्वस्य शिलाशकलादावपि सत्त्वाद्व्यभिचारस्स्यादित्याशङ्कायां निश्चयत्वाघटितं लघुभूतं फलितार्थमाह—नियतान्वयेति । शिलाशकलादौ व्यतिरेकदृष्टान्तत्वनिर्वाहायाह—शिलादाविति । कार्यवैकल्यादिति कार्यकारित्वाभावादित्यर्थः, एतदिति कार्यवैकल्यमित्यर्थः । सम्मुग्धसाधनादपि प्रसङ्गविपर्ययपरि-

शेषैरङ्कुरत्वावच्छिन्नजन्यतासिद्धेश्चेत्यादिप्रक्रान्तमर्थमुपसंहरति—

तदेवं बीजस्वभावत्वेन यत्किञ्चित्कार्यप्रयोजकत्वसिद्ध्याप्यवान्तरजातिबहिष्कारेण करणाकरणे साधिते अङ्कुरत्वावच्छिन्ने कार्यत्वं चार्थतः । स्यादेतत् बीजत्वं पराभिमता जातिरतद्व्यावृत्तिरेव, सा च व्यावृत्तित्वादेवासती, न चासतः कस्यचित् सता स्वलक्षणेन सम्बन्धः सम्भवति, न च कारणेनासम्बद्धं कारणतावच्छेदकमिति न बीजत्वस्याङ्कुरत्वाद्यवच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकतासिद्ध्यावान्तरजातिनिरासः ॥

तदेवमित्यादिना, अवान्तरजातीति बीजत्वव्याप्यकुर्वद्रूपत्वजातीत्यर्थः। कार्यत्वं चेति बीजस्वभावत्वेनेत्यस्यानुषङ्गः, बीजस्येति शेषः, बीजस्वभावत्वं च बीजत्वमेव, तथा च बीजत्वावच्छिन्नबीजनिष्ठकारणतानिरूपितकार्यत्वञ्चेत्यर्थः । अर्थत इति, परिशेषानुमानेनेत्यर्थः । अर्थत इत्यनन्तरं सिद्ध्यतीति शेषः । परमते जातिः पारमार्थिकीति तन्मतमालम्ब्य तस्य बीजत्वजातिपुरस्कारेण कारणत्वाक्षेपोत्तरभावमुखेन "आकस्मिकव्यसनिता द्विषतां तवाहो" इति चतुर्थचरणवतरणिकामारचयति–स्यादेतदिति, बीजत्वस्येवाङ्कुरत्वस्यापीतरव्यावृत्तिरूपत्वेनालीकत्वाविशेषात्स्वलक्षणासम्बन्धोऽप्यविशिष्ट एवेति बीजत्वस्य कारणतावच्छेदकत्वाभावेऽङ्कुरत्वस्यापि कार्यतावच्छेदकत्वं न स्यात् तथा च तत्प्रयोजकतयापि बीजे कुर्वद्रूपत्वाख्यवैजात्यं कथं सिद्ध्येदित्याशयेन कुर्वद्रूपत्ववादिनं सुगतसुतं प्रति गौतमीयश्शङ्कते—

न चैवमङ्कुरत्वादेरप्यलीकत्वात् कस्यानुरोधेन कुर्वद्रूपत्वमपि तादृशं कारणतावच्छेदकं वक्तव्यम्,

तत्तत्कार्यविश्रान्ते च कार्यकारणभावे लोकयात्राविलोपप्रसङ्ग इति वाच्यम्, स्वकारणसामर्थ्यादासादितस्वभावविशेषस्यैवोत्पद्यमानस्य क्षणिकस्य भावस्य स्वकार्यं कुर्वाणस्य कुर्वद्रूपत्वेनाभिधानात्, क्षणिकत्वस्य च भावानां करणाकरणलक्षणविरुद्धधर्माध्यासादेव सिद्धेर्लौकिकस्य च व्यवहारस्यानादिविकल्पवासनामहिम्ना कल्पितैरेवानुगतरूपैः कार्यकारणभावग्रहेणोपपत्तेरिति ॥ अत्राह–हे भगवंस्तव द्विषतः सर्वनयात्मकत्वत्प्रवचनद्रोहिणः परस्याहो आश्चर्यकरी आकस्मिके कार्ये व्यसनमाग्रहो यस्य तत्ता, भवति हि बुद्धिमतोऽप्यनुपपन्नार्थग्रहे परीक्षकाणामाश्चर्यम् । न चोपपद्यते तत्तद्व्यक्तिविश्रान्तः कार्यकारणभावः, अङ्कुरत्वाद्यवच्छिन्नस्याकस्मिकतापत्तेः । किमाकस्मिकत्वं, तदवच्छिन्नसामग्र्यनिश्चये एतावत्सत्त्वेऽवश्यमङ्कुराद्युत्पत्तिरित्यनिश्चयः, इत्थं च प्रवृत्तिरपि दुर्घटा, तादृशनिश्चय एव कृतिसाध्यताधीचिकीर्षाक्रमेण तदुत्पत्तिसम्भवात् ॥

न चैवमिति, लोकयात्राविलोपप्रसङ्ग इति, अङ्कुरत्वावच्छिन्नं प्रति बीजत्वेन कारणत्वानभ्युपगमे अङ्कुरत्वं यदि किञ्चिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं न स्यात् कार्यमात्रवृत्तिजातिर्न स्यात् नित्यवृत्ति वा स्यात् आत्मत्ववत्, तथा चाङ्कुरार्थिनो बीजस्योपादानं नियमतो न स्यादित्यर्थः । एवं बीजादङ्कुरमिवाङ्कुरादपि बीजमुत्पद्यत इति बीजत्वावच्छिन्नं प्रत्यङ्कुरत्वेन कारणत्वानभ्युपगमे बीजत्वं यदि किञ्चिद्धर्म्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं न स्यात् कार्यमात्रवृत्तिजातिर्न स्यात् आत्मत्ववत्, तथा च बीजार्थिनोऽङ्कुरस्योपादानं नियमतो न स्यादित्यपि बोध्यम् । स्वकारणसामर्थ्यादिति, अरोङ्कु-

त्पत्त्यव्यवहितपूर्वद्वितीयक्षणोत्पन्ने बीजे पूर्वपूर्वबीजगतकुर्वद्रूपत्वसामर्थ्योपजातं यत्सहकारिसमवहितत्वविशिष्टाऽङ्कुरकुर्वद्रूपात्मकबीजजनककुर्वद्रूपत्वात्मकसामर्थ्यं तस्मादित्यर्थः । कुर्वद्रूपत्वेनाभिधानादिति, ननु कार्यजनकतावच्छेदकजातिविशेषयोगेन तथाऽभिधीयत इति शेषः । ननु कुर्वद्रूपत्वस्य कार्यजनकतावच्छेदकजातिरूपत्वाभावे तद्रूपसामर्थ्यतदभावरूपविरुद्धधर्माध्यासाभावात् कुशूलस्थक्षेत्रस्थबीजयोरभेदसम्भवेन कुतः क्षणिकत्वं सिद्धं स्यादित्याशङ्कायामाह—क्षणिकत्वस्य चेति, करणेति, क्षेत्रस्थे बीजे करणं कुशूलस्थे चाकरणं तयोः परस्पराभावरूपतया विरोधापन्नयोस्सद्भावादेवेत्यर्थः । बीजत्वाद्यनुगतधर्मेण बीजादीनामङ्कुरत्वाद्यनुगतधर्मावच्छिन्नं प्रति कारणत्वाभावपक्षे यो लोकयात्राविरोधप्रसङ्ग उक्तस्तं काल्पनिकानुगतसामान्यकार्यकारणभावोपगमेनोद्धरति–लौकिकस्य चेति, व्यवहारस्येति, अङ्कुराद्यर्थिलोकानां बीजादौ या प्रवृत्तिस्तद्रूपस्येत्यर्थः । अनादिविकल्पवासनामहिम्नेति, बीजेषु बीजं बीजमित्यङ्कुरेषु चाङ्कुरमङ्कुरमित्यनुगतपूर्वपूर्वकुर्वद्रूपात्मकसविकल्पबुद्धिजन्योत्तरोत्तरतादृशसविकल्पबुद्धिजन्यसंस्कारप्रवाहबलादित्यर्थः । ननु यथा नैयायिकमते वासना समानविषयकस्मृत्युत्पादिकाऽनुभवजन्या स्थिरा संस्काराख्यान्तरा विज्ञानाद् व्यतिरिक्तस्वभावाऽभ्युपगता, न तथा बौद्धमते, किन्तु क्षणिकविज्ञानस्वभावैवेति विवक्षितकार्यकारणभावावच्छेदकसामान्यधर्मकल्पनामूलभूतवासना ज्ञानस्वभावा यद्यत्काले उत्पद्यते तत्तदव्यवहितोत्तरक्षण एव विनश्यति, तद्विषयकवासनासन्ततिरप्यविच्छिन्ना न प्रवर्त्तते, विषयान्तरज्ञानसन्तानस्यैवानुत्पत्तिप्रसक्तेः, भिन्नविषया वासना तु न सामान्यधर्मावच्छिन्नकार्यकारणभावविकल्पोत्पादिकेति न कथमपि वासनायामनादित्वं सम्भवतीति चेत्, मैवम्, अविवक्षितविशेषविषयाया ज्ञानसन्ततेरनादित्वात्तत्प्रवाहापेक्षया क्षणिकविज्ञानस्वभावाया वासनाया अप्यनादित्वसम्भवात् । कल्पितैरिति, कल्पना असत्ख्यातिः तया विषयी-

कृतैरित्यर्थः। नन्वस्थाने भवतामुत्तरप्रयासोऽयम्, नैयायिकादीन् प्रत्येव बौद्धस्य शत्रुभावात्, तत्पक्षस्य स्थिरैकान्तस्य तेन खण्डनादित्याशङ्कायां प्रवचनेत्यस्य सर्वनयात्मकेति विशेषणमुपात्तम्, तथा च नैगमनयप्रसृतस्य न्यायनयस्य खण्डने देशखण्डने देशिखण्डनन्यायेन नैगमादिसर्वनयात्मकभगवत्प्रवचनस्यापि खण्डनमायातमेवेत्युक्तस्वरूपप्रवचनैकभक्तिभरनिर्भरहृदयैः कृतस्य तदुद्धरणस्यापि सावकाशत्वमेवेति भावः। तन्त्रेति आकस्मिकव्यसनितेत्यर्थः। तदवच्छिन्नसामग्र्यनिश्चय इति, अङ्कुरत्वाद्यवच्छिन्नं प्रति यानि यद्धर्मावच्छिन्नकारणानि तत्सर्वनिश्चयाभाव इत्यर्थः। एतावत्सत्त्व इति, बीजधरणिधामपवनसलिलादिसत्त्व इत्यर्थः। भवत्वङ्कुरत्वाद्यवच्छिन्ने आकस्मिकत्वं तेन किमित्याशङ्कायामाह–इत्थञ्चेति। तादृशनिश्चय एवेति, बीजत्वसलिलत्वधरणित्वाद्यवच्छिन्नैतावत्कारणसमुदायसंवलनेऽङ्कुरत्वाद्यवच्छिन्नोत्पत्तिरिति निश्चय एवेत्यर्थः। तदुत्पत्तीति प्रवृत्त्युत्पत्तीत्यर्थः

**अथैवं प्रवृत्त्यौपयिकसामान्यरूपाभाव एवाकस्मिकत्वमित्यायातं, तच्चाकिञ्चित्करं, तदभावेऽप्यनादिवासनामहिमोपनीतविकल्पेन सामान्यकार्यकारणभावनिश्चयात् प्रवृत्त्युपपत्तेरिति चेत्, न, विना निमित्तं विषयं तस्याप्ययोगात्, अन्यथा नीलादिविकल्पानामपि निर्विषयतया बाह्यार्थोच्छेदापत्तेः॥**

प्रवृत्त्यौपयिकसामान्यरूपाभाव इति, प्रवृत्त्यनुगुणकार्यकारणभावावच्छेदकीभूतानुगतधर्माभाव इत्यर्थः, आकस्मिकत्वस्य प्रवृत्त्यप्रतिबन्धकत्वे हेतुमाह–तदभावेऽपीति, प्रवृत्त्यौपयिकसामान्यरूपाभावेऽपीत्यर्थः। अनादिवासनामहिमोपनीतविकल्पेनेति, बीजत्वादिकमङ्कुरत्वादिकञ्चानुगतप्रतीतिविषयः कार्यकारणभावप्रत्यलमित्याकारिका या पूर्वपूर्वाऽविवक्षितविशेषविषयकविज्ञानसन्तत्यपेक्षयाऽनादिकालीना विज्ञानात्मिका वासना तया कुर्वद्रूपात्मिकयाऽनुगतजातिविषयकविकल्पसहकारि-

संवलितया जन्येनानुगतविकल्पेनेति भावः । अत्र विकल्पेनेति तृतीया प्रकृत्या चारुः धान्येन धनवानित्यत्रेवाऽभेदे, तथा च विकल्पाभिन्नसामान्यकार्यकारणभावनिश्चयादित्यर्थः । अथवा तृतीया हेत्वर्थे, तथा च तादृशविकल्पहेतुकसामान्यकार्यकारणभावनिश्चयादिति भावः । अथवा अनादिवासनामहिमोपनीतविकल्पेनेति अनादिवासनामहिम्नोपनीतो विकल्पो यस्य विषयस्य तेनेत्यर्थः, बीजत्वादिनाऽङ्कुरत्वादिना चेति भावः । विषयान्तरवासनातोऽपि विषयान्तरविकल्पोत्पत्तिभिया विषयतासम्बन्धेन विकल्पं प्रति विषयतासम्बन्धेन वासनायाः विषयतासम्बन्धेन वासनाविकल्पादीन् प्रति तादात्म्यसम्बन्धेन विषयस्य वा कारणत्वमभ्युपगन्तव्यमिति प्रवृत्त्यौपयिकसामान्यात्मकविषयस्यालीकत्वे तस्य निमित्तत्वाभावात्तेन तद्विषयकवासनाविकल्पादीनामुत्पत्तिः कथमपि न सम्भवतीत्युत्तरयति, नेति, तस्यापि उक्तविकल्पस्यापि, सामान्यात्मकविषयस्यालीकत्वेन तद्रूपनिमित्ताभावेऽपि तद्विषयकवासनामात्रतो विकल्पोपपत्त्यभ्युपगमेऽलीकसामान्यमात्रविषयकानां नीलादिविकल्पानां वस्तुगत्या निर्विषयत्वाऽविशेषात्कुर्वद्रूपात्मकपूर्वविकल्पमात्रादुपपादनसम्भवेन वाह्यार्थोच्छेदापत्तेरित्याह—अन्यथेति, बौद्धमते विकल्पमात्रस्यासद्भूतसामान्यमात्रावलम्बित्वेऽपि यस्य स्वलक्षणाकाराध्यक्षमूलकत्वं तस्य प्रमाणकोट्यन्तर्गतत्वात्तन्मूलभूताध्यक्षविषयव्यवस्थापकत्वं, यस्य च न तथात्वं तस्य तथात्वं न, तथा च नीलपीतादिस्वलक्षणस्य वस्तुभूतत्वात्तदध्यक्षोत्पत्तेस्तन्मूलकेन प्रमाणभूतेन नीलादिविकल्पेन नीलादिवाह्यपदार्थसिद्धेर्न वाह्यार्थोच्छित्तिः, कार्यकारणभूतव्यक्तीनां तु स्थूलावयवितया परैरभ्युपगतानामवस्तुभूतत्वात्तदध्यक्षासम्भवेन न तन्मूलिका कार्यकारणभावविकल्पोत्पत्तिः किन्तु कुर्वद्रूपात्मकपूर्वपूर्वविकल्पादेवेति नोक्तदोष इत्याशङ्कते—

विनाप्यध्यक्षमूलं तद्विकल्पकुर्वद्रूपादेव तद्विकल्पोपपत्तेर्न दोष इति चेत्, न, तथापि वासनामात्रज-

नितत्वेन तत्राप्रामाण्यग्रहध्रौव्ये ततः प्रवृत्त्यनुपपत्तेः, विकल्पस्य स्वलक्षणास्पर्शित्वेनेष्टसाधनताधीप्रवृत्त्योः समानविशेष्यतया कार्यकारणभावस्य कथमप्यनुपपादनाच्च । एतेनासद्विषयकत्वंरूपाप्रामाण्यग्रहाभावस्य व्यवहारजनकतावच्छेदककोटावनिवेशान्न क्षतिरित्यपि निरस्तम् । न च स्वविषयविकल्प्यतादात्म्यग्रहविषयत्वसम्बन्धोक्तावपि निस्तारः, अध्यक्षेण तद्ग्रहाद्विकल्पविषयत्वस्य च विचार्यत्वात् ॥ ११ ॥

विनाऽप्यध्यक्षमूलमिति ॥ प्रवृत्तिं प्रति न निर्विशेषितं कार्यकारणभावविज्ञानं कारणं, तथा सति तत्राप्रामाण्यनिश्चयेऽपि सा स्यात्, किन्त्वप्रामाण्यज्ञानानास्कन्दितत्वविशेषितम्, तादृशं च तत्प्रकृते नास्ति, अङ्कुरत्वाद्यवच्छिन्नरूपेष्टकार्यं प्रति बीजत्वाद्यवच्छिन्नं साधनमित्याकारकं ज्ञानम् अप्रमात्मकं निर्विकल्पासहकृतवासनाजनितत्वादित्यनुमानेन तत्राप्रामाण्यनिश्चयादिति प्रवृत्त्यनुपपत्तिस्स्यादित्युत्तरयति—तथाऽपीति । दूषणान्तरमाह—विकल्पस्येति, यद्विशेष्यकमिष्टसाधनताप्रकारकज्ञानं तद्विशेष्यिकैव प्रवृत्तिर्भवतीति विधेयताख्यविशेष्यतासम्बन्धेन प्रवृत्तिं प्रति विशेष्यतासंसर्गेणेष्टसाधनताज्ञानस्य कारणत्वमनुभवसिद्धम्, तच्च भवतां मते नोपपन्नं भवति, तस्य विकल्पात्मकस्य स्वलक्षणरूपविशेष्यानवगाहित्वेनाभ्युपगमादित्यर्थः । एतेनेति, इष्टसाधनताज्ञानस्य बाह्यार्थागोचरत्वेन तेन बाह्यार्थे प्रवृत्त्यनुपपत्त्येत्यर्थः । निरस्तमित्यनेनास्यान्वयः । व्यवहारजनकतावच्छेदककोटाविति, व्यवहारः प्रवृत्त्याख्यः इष्टसाधनताज्ञाननिष्ठा या तज्जनकता तदवच्छेदककोटावित्यर्थः । अनिवेशादिति, अन्यथा बौद्धमते विकल्पमात्राणामसद्विषयकतया तद्रूपाप्रामाण्यग्रहध्रौव्येण सर्वत्र प्रवृत्तिरेव न स्यादिति भावः । न च विधेयताख्यविशेष्यतासंसर्गेण प्रवृत्तिं प्रति स्वविषयविकल्प्यं यत्सामान्यं तस्य यस्स्वलक्षणेन सह तादात्म्यग्रहस्तद्विषयत्वसंसर्गेणेष्टसाधनताज्ञानस्य कारणत्वमि-

त्युक्तावप्युक्तदोषोद्धरणं, यतः स्वलक्षणमात्रस्पर्शिना प्रत्यक्षेण सामान्यं न गृह्यते, सामान्यमात्रग्राहिणा च विकल्पेन स्वलक्षणं नावगाह्यते न च प्रतियोग्यनुयोग्यात्मकतदुभयग्राहिणा केनापि तदुभयतादात्म्यं गृह्यत इत्याशयेनाह–न च स्वविषयेति, उक्तसंसर्गघटको यस्तादात्म्यग्रहस्स यदि निर्विकल्पाध्यक्षरूपोऽभ्युपगतस्स्यात्तदैव तद्विषयत्वसंसर्गस्स्वलक्षणे सङ्गतस्स्यात्, नान्यथा, विकल्पात्मकस्य तस्य सामान्यमात्रविषयत्वेन तद्विषयत्वस्य संसर्गस्य स्वलक्षणे सत्त्वासम्भवादित्याशयेन विकल्पेनेत्यघटितमेवाध्यक्षेणेत्याह–स्वविषयत्वरूपविशेषणस्याप्यसिद्धेरुक्तसंसर्गासिद्धिमाह–विकल्पविषयत्वस्येति, अथवा तादात्म्यग्रहो हि द्विविधः निर्विकल्पसविकल्पभेदात्, आद्यभेदमभिप्रेत्याहाध्यक्षेणेति, द्वितीयभेदञ्चाभिप्रेत्याह विकल्पविषयत्वस्य चेति ॥११॥ कारणता सामान्यविशेषोभयधर्माश्रयः सत्त्वात्, यत्र सत्त्वं तत्र सामान्यविशेषोभयधर्मः यथा घटादौ, सत्त्वं च कारणतायामिति तत्रापि सामान्यविशेषोभयधर्मः, कारणतायां सामान्यधर्मः सामान्यधर्मावच्छिन्नत्वं सामान्यधर्मावच्छिन्नकार्यतानिरूपितत्वं च, विशेषधर्मः विशेषधर्मावच्छिन्नत्वं विशेषधर्मावच्छिन्नकार्यतानिरूपितत्वं च, तथा च बीजनिष्ठा बीजत्वरूपसामान्यधर्मावच्छिन्ना याऽङ्कुरत्वधर्मावच्छिन्नकार्यतानिरूपिता कारणता तदपेक्षयैतावत्सत्त्वेऽवश्यमङ्कुरत्वावच्छिन्नोत्पत्तिरिति निश्चयसम्भवात् तद्रूपं बीजत्वेनाङ्कुरत्वेन च सामान्यकार्यकारणभावरूपनिमित्तापेक्षया स्वविषयोत्पत्तिमत्त्वसम्बन्धेनांकुरत्वावच्छिन्नेऽनाकस्मिकत्वं, या च तत्तद्बीजत्वावच्छिन्ना तत्तदङ्कुरत्वावच्छिन्नकार्यतानिरूपिता कारणता तदपेक्षयैतावत्सत्त्वेऽवश्यं तत्तदङ्कुरत्वावच्छिन्नोत्पत्तिरिति निश्चयासम्भवात्तदभावरूपं तत्तद्बीजत्वतत्तदङ्कुरत्वाभ्यां विशिष्य कार्यकारणभावरूपनिमित्तापेक्षया स्वप्रतियोगिनिश्चयविषयोत्पत्तिमत्त्वसम्बन्धेन तत्तदङ्कुरत्वावच्छिन्ने आकस्मिकत्वं, तदुभयधर्मस्यापि च स्वस्वनिमित्तसव्यपेक्षधर्मान्तरसापेक्षत्वादङ्कुरादिकार्यमात्रमाकस्मित्वानाकस्मिक-

त्वादिसप्तधर्मसङ्कलितमेवेति तावद्धर्मप्रतिपादनत एव जिज्ञासूनां निराकांक्षप्रतिपत्त्युत्पत्तेरनेकान्त एव सौभाग्यनिधिरिति स एवोपासनीयः प्राज्ञवरैरित्युपदेशार्थं प्रथमं नैयायिकं प्रत्याकस्मिकत्वविषयां बौद्धाशङ्कामुद्भावनपुरस्सरं प्रतिक्षिप्यानन्तरं नैयायिकमतमपि समानन्यायेन निरस्यन् द्वादशं श्लोकमवतारयति—

**अथ तत्तदङ्कुरत्वाद्यवच्छिन्ने आकस्मिकत्वं परेषामपीष्टं तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथानिश्चयाभावात्, तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्च, तदङ्कुरत्वाद्यवच्छिन्ननियामकविचारे च सामान्यतः क्लृप्तकारणताकतत्तद्बीजतत्तत्संयोगादेरेव तथात्वोपगमात्, तादृशनियामकत्वस्यैव तादृशहेतुत्वस्वरूपत्वेऽपि प्रवृत्त्यौपयिकरूपाभावेनाकस्मिकत्वानपायात्, तादृशकारणतानामेव च सामान्यकारणतात्वेनानुगमस्य ग्रहः सामान्यविषयप्रवृत्तिहेतुरतो नानुपपत्तिः**

**अथे**त्यादिना, एतावत्सत्त्वे तत्तदङ्कुराद्युत्पत्तिरित्यनिश्चयरूपमाकस्मिकत्वं तत्तदङ्कुरत्वाद्यवच्छिन्ने नैयायिकानामपि कथमिष्टमित्यत आह—**तद्धर्मावच्छिन्नेति**, तत्तदङ्कुरत्वाद्यवच्छिन्नेत्यर्थः। **तथानिश्चयेति**, एतावत्कारणसमुदायसंवलनेऽवश्यं तदङ्कुरादिव्यक्त्युत्पत्तिरिति निश्चयेत्यर्थः। तथानिश्चय एव कुतो नेत्याकांक्षायामाह—**तद्धर्मावच्छिन्न इति**, यदि तथानिश्चयस्स्यात् तर्हि तत्तदङ्कुरत्वाद्यवच्छिन्नोद्देश्यकतत्तद्बीजाद्युपादानकप्रवृत्तिरपि स्यात्, न च भवति, अङ्कुरत्वाद्यवच्छिन्नमुद्दिश्यैव बीजत्वाद्यवच्छिन्ने प्रवृत्तेरिति भावः। **सामान्यत इति**, सामान्यकार्यकारणभावमर्यादयेत्यर्थः। **तथात्वोपगमादिति** तत्तदङ्कुरत्वावच्छिन्ननियामकत्वोपगमादित्यर्थः। **तादृशनियामकत्वस्यैवेति** तत्तदङ्कुरत्वावच्छिन्ननियामकत्वस्यैवेत्यर्थः। **तादृशहे-**

तुत्वेति तत्तदङ्कुरत्वावच्छिन्ननिरूपितहेतुत्वेत्यर्थः, तादृशकारणतानामेव च सामान्यकारणतात्वेनानुगमय्य ग्रह इति, सामान्यधर्मावच्छिन्ननिरूपिताधिकरणत्वानभ्युपगन्तृमते महानसीयधूमत्वचत्वरीयधूमत्वपर्वतीयधूमत्वाद्यवच्छिन्ननिरूपिताधिकरणतासु धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात् धूमत्वसामान्यधर्मावच्छिन्नाधिकरणतात्वधर्मस्वीकारेण तद्रूपेणोक्तविशेषाधिकरणता अनुगमय्य धूमवानिति प्रतीतौ धूमत्वावच्छिन्नाधिकरणतात्वावच्छिन्नतत्तद्धूमत्वावच्छिन्नाधिकरणताकूटनिष्ठविषयतानिरूपकत्वसमर्थनेन प्रामाण्योपपादनं कृतं, तथा सामान्यधर्मावच्छिन्नकारणत्वानभ्युपगन्तॄणामस्माकं मतेऽप्युक्तन्यायेन तत्तद्बीजत्वावच्छिन्नकारणतासु बीजत्वसामान्यधर्मावच्छिन्नकारणतात्वस्य तत्तदङ्कुरत्वावच्छिन्नकार्यतास्वङ्कुरत्वसामान्यधर्मावच्छिन्नकार्यतात्वस्य च स्वीकारेण विशेषकार्यतानां विशेषकारणतानामनुगमकेन तेन सामान्यधर्मेण कार्यकारणभावोपपादनं प्रवृत्त्युपपादनं च भविष्यतीति भावः । ननु पर्वतीयधूमवान् चत्वरीयधूमवानित्यादिप्रतीतिबलसिद्धत्वात्तत्तद्धूमत्वावच्छिन्नाधिकरणतानां धूमत्वसामान्यधर्मावच्छिन्नाधिकरणतात्वेनानुगमय्य ग्रहो भवतु, न च तत्तद्बीजत्वतत्तत्सलिलत्वाद्यवच्छिन्नकारणतानां सिद्धिः, येन तासां बीजत्वसलिलत्वादिसामान्यधर्मावच्छिन्नकारणतात्वेन ग्रहो भवेत्, नन्वत्रापि तद्बीजमेतद्बीजं तत्सलिलमेतत्तत्सलिलं सावनिरेषावनिरित्यादिप्रतीतेर्जागरूकत्वात्कथं न सिद्धिरिति चेत्, मैवं, यतस्तद्बीजत्वादिविशेषधर्मस्य सखण्डत्वेन तच्छरीरे बीजत्वादिसामान्यधर्मः प्रविष्ट एवेति यावन्न बीजत्वाद्युपस्थितिस्स्यात् न तावत्तद्बीजत्वादिज्ञानं भवतीति बीजत्वाद्युपस्थितिः प्रागेषितव्या, बीजत्वादिसामान्यधर्मस्त्वखण्ड एवेति न स तद्बीजत्वादिसंघटितमूर्त्तिरिति न तज्ज्ञाने तज्ज्ञानापेक्षा, तथा च प्रथमोपस्थितिकत्वाल्लघुभूते बीजत्वादौ कारणतावच्छेदकत्वत्यागे मानाभावात्तदवच्छिन्नस्यावश्यक्लृप्तनियतपूर्ववृत्तितया कारणत्वसम्भवे तद्भि-

भानां विलम्बोपस्थितिकृतगुरुभूततत्तद्बीजत्वाद्यवच्छिन्नानामन्यथासिद्धत्वादकारणत्वमेवेत्यभिप्रायेण नैयायिकश्शंकते—

शीघ्रोपस्थितिकसामान्यधर्मेणैव कार्यकारणभावसम्भवे विशेषरूपेणान्यथासिद्धत्वादेवाहेतुत्वमिति तु न युक्तम्। एवं सति जन्यसत्त्वेन सत्त्वेन हेतुहेतुमद्भावेऽङ्कुरत्वाद्यवच्छिन्ने बीजत्वादिनाप्यन्यथासिद्धिप्रसङ्गाद्विशेषनियमप्रकारस्य चोक्तत्वात्तेनैवातिप्रसङ्गवारणसम्भवात्, तत्तद्बीजव्यक्तिनिष्ठकारणतास्वङ्कुरत्वावच्छिन्नकार्यताप्रतियोगिकत्वं बीजत्वावच्छेदेन व्यवहारेण कल्प्यते न त्वतिरिक्ता कारणता गौरवादिति निष्कर्ष इति चेत्। मैवम्। एवं सत्येकत्रैव रूपभेदेनाकस्मिकत्वमनाकस्मिकत्वं चायातमित्येकान्तकृतान्तकोपात् कुतो न भयम्। तुल्यमिदं नैयायिकादीनामपीति चेत्। तर्हि यच्छरणगतानां ततो न भयं तस्यैव चरणोपासना क्रियतामिति परं प्रत्यनुशासनाभिप्रायवान् भगवन्तमभिष्टौति।

आकस्मिकत्वमपि तस्य भयाय न स्यात्, स्याद्वादमन्त्रमिह यस्तव बम्भणीति॥
यत् साधनं यदपि बाधनमन्यदीयाः, कुर्वन्ति तत् तव पितुःपुरतः शिशुत्वम्॥ १२॥

हे भगवन् य इह विचारे तव स्याद्वादमन्त्रमतिशयेन भणति तस्याकस्मिकत्वमपि भयाय न स्यात्, अङ्कुरादिकार्यं स्यादाकस्मिकं, स्यादनाकस्मिकं, स्यादुभयात्मकं, स्यादवक्तव्यं, स्यादाकस्मिकमवक्तव्यं च, स्यादनाकस्मिकमवक्तव्यं च, स्यादुभयमवक्तव्यं चेत्यभ्युपगमस्य केनापि दूषयितुमशक्यत्वात्॥

शीघ्रोपस्थितिकसामान्यधर्मेणैवेति, । यद्धर्मावच्छिन्नं प्रति लघुभूतेन सामान्यधर्मेण नियतपूर्ववर्तित्वं तद्धर्मावच्छिन्नं प्रत्येव विलम्बोपस्थितिकेन विशेषधर्मेणान्यथासिद्धत्वं न तु तद्धर्मव्याप्यधर्मावच्छिन्नं प्रति । तं प्रति तु यत्सामान्ययोः कार्यकारणभावस्तद्विशेषयोरपीति नियमेन कारणत्वस्यैव भवतां मतेऽभ्युपगमात्, तथा च प्रकृते भवत्वङ्कुरत्वावच्छिन्नं प्रति लघुभूतेन बीजत्वादिना बीजादीनां कारणत्वं, तं प्रति व्यतिरेकव्यभिचारितावच्छेदकेन तत्तद्बीजत्वादिना तेषां कारणत्वसम्भावनैव नास्ति, अङ्कुरत्वव्याप्यतत्तदङ्कुरत्वावच्छिन्नं प्रति तु तत्तद्बीजादीनां तत्तद्बीजत्वेन कारणत्वमेव, तस्य यत्सामान्ययोरित्यादिन्यायसंसिद्धत्वात्, तथानभ्युपगमे दोषमाह—एवं सतीति । नीलादौ नीलाद्युत्पत्तिवारणाय जन्यसत्त्वावच्छिन्नं प्रति लघुभूतेन सत्त्वेन रूपेण समवायेन सतः समवायकालिकोभयसम्बन्धेन सत्त्वविशिष्टं यत्तत्प्रति लघुभूतेन द्रव्यत्वेन द्रव्यस्य वा तादात्म्यसंसर्गेण कारणत्वस्यावश्यं स्वीकरणीयत्वेन जन्यत्वविशिष्टसत्त्वस्य सत्त्वस्य वाऽपेक्षया व्याप्येन विलम्बोपस्थितिकत्वाद्गुरुभूतेन चाङ्कुरत्वादिरूपविशेषधर्मेणाङ्कुरादिकं प्रति सत्त्वस्य द्रव्यत्वस्य वापेक्षया व्याप्येन विलम्बोपस्थितिकत्वाद्गुरुभूतेन बीजत्वादिविशेषधर्मेण बीजादीनामन्यथासिद्धिप्रसक्तिस्स्यादिति भावः । ननु जन्यसत्त्वेन सत्त्वेन सत्त्वेन द्रव्यत्वेन वा हेतुहेतुमद्भावाभ्युपगमेऽपि बीजत्वादिनाङ्कुरत्वादिना विशेषरूपेण हेतुहेतुमद्भावोऽभ्युपगन्तव्य एव, अन्यथा बीजाऽसमवधानेऽपि शिलाशकलघटितसामग्रीतोऽङ्कुरोत्पत्तिस्स्यात्, अङ्कुरस्यैव वा बीजघटितसामग्रीतो घटपटादीनामप्युत्पत्तिप्रसक्तिरित्यत आह—विशेषनियमप्रकारस्य चोक्तत्वादिति । दशमश्लोकावतरणिकायां पूर्वपक्षे " कुर्वद्रूपत्वाङ्गीकारश्चानुगताऽङ्कुरजातीयनियामकतया, कार्यव्यक्तिभेदस्य तु तथोत्पन्नकारणव्यक्तिभेदादेवोपपत्तेः " इत्यनेनग्रन्थेनोक्तत्वादित्यर्थः । तत्तत्कार्यप्रागभावादेस्तत्तत्कार्यनियामकस्यान्यत्राभावात्, तत्तत्कार-

णानां तत्तत्कार्यंकुर्वद्रूपत्वेनानुत्पादाद्वा तदापत्त्यसम्भवादिति भावः। उक्तार्थं सङ्गृण्हाति—तत्तद्बीजव्यक्तिनिष्ठेति, यथा विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारेपि न सामान्याभावस्यातिरिक्तस्य सिद्धिस्तथात्राङ्कुरत्वावच्छिन्नकार्यतानिरूपितत्वस्य बीजत्वावच्छेद्यत्वावच्छेदेन तत्तद्बीजव्यक्तिनिष्ठकारणतासु कल्पनेपि नातिरिक्तसामान्यकारणतासिद्धिरिति भावः। आकस्मिकत्वमनाकस्मिकत्वञ्चेति—तत्तद्बीजत्वाद्यवच्छिन्नकारणत्वान्याश्रित्यतत्तद्बीजादिसत्त्वेऽवश्यं तत्तदङ्कुरोपत्तिरितिनिश्चयाभावेनाङ्कुरेतदङ्कुरत्वेनाकस्मिकत्वं बीजत्वावच्छिन्नकारणतात्वेन तत्तत्कारणत्वान्यनुगमय्य बीजत्वावच्छिन्नसत्त्वेङ्कुरत्वावच्छिन्नोत्पत्तिरितिनिश्चयसद्भावेनाङ्कुरेङ्कुरत्वेनानाकस्मिकत्वञ्चेत्यर्थः। ननु नैयायिकैर्नोक्तदोष उद्भाव्यः तेषामपि तद्दोषसाम्यात् तदुक्तं "यत्रोभयोस्समो दोषः, प्रतीकारोऽपि वा समः। नैकः पर्यनुयोज्यस्स्यात्, तादृश्यर्थविचारणे" इति, इत्याशङ्कते बौद्धः तुल्यमिदमिति॥ आकस्मिकत्वमपि तस्य भयाय न स्यात्, तस्य कस्येत्याकाङ्क्षायामाह—स्याद्वादमन्त्रेति। कथमित्याकाङ्क्षायामाह—यत्साधनमित्यादि। तत्र कुर्वन्तीतिक्रियापदं, तच्च कर्तृपदसापेक्षत्वात्के कर्तार इत्याकाङ्क्षायामाह—अन्यदीया इति, कुर्वन्तीति सकर्मकक्रियायाः कर्मसापेक्षत्वादुक्तं—यत्साधनं यदपि बाधनमिति, यत्साधनमित्याद्युद्देश्यमुक्त्वा विधेयं दर्शयति—तदिति, यत्साधनं यच्च बाधनं न तदन्येषां सकलमहत्त्वातीतस्य जगत्पितुर्भवतोग्रे स्वप्रौढिमाख्यापकं, किन्तु बाललीलारूपमेवेत्याह—तव पितुः पुरतः शिशुत्वमिति; इतिश्लोकसङ्क्षेपार्थः स्याद्वादस्य कारणताव्यापकत्वमतिदेशेनोपदर्शयन्नाह—

एवं तत्तत्प्रतिनियतकारणतायामपि स्याद्वादोऽस्मदुपज्ञाष्टसहस्रीप्रोक्तरीत्याऽवतारणीयः, कस्या अपि कारणतायाः केनापि रूपेण स्याद्वादं विना नियन्तुमशक्यत्वात्। अत एव सप्तभङ्गीविधिसमारूढत्वे-

नार्थक्रियाकारित्वमिति प्राचीनोक्तिरपि सङ्गच्छते । तथान्वयव्यतिरेकग्रहसध्रीचीनविचारस्य तथाकारणत्वग्रहहेतुत्वात्, यावति विचारे किंवृत्तचिद्विधिः पूर्यते तावत एव प्रमाणत्वात् ॥

एवमिति, यथा आकस्मिकत्वे स्याद्वादोऽवतारितस्तद्वदित्यर्थः । तत्तत्प्रतिनियतकारणतायाम्–तत्तदङ्कुरत्वाद्यवच्छिन्नं प्रति तत्तद्वीजत्वादिना कारणतायामङ्कुरत्वावच्छिन्नं प्रति च वीजत्वादिना कारणतायाम् । यद्यपि यावत् किञ्चिद्वीजं तावत्कथञ्चित् यावदङ्कुरजनकमित्याद्यग्रेतनग्रन्थेनात्रापि कार्यकारणभावे स्याद्वादोऽवतारितस्तथापि धूमोवह्नौधूमत्वेनैको हेतुः पक्षधर्मत्वादिरूपैः पृथग्रूपो, दण्डो घटे दण्डत्वेन हेतुर्द्रव्यत्वेन न हेतुरिति प्रतीत्या हेतावेकत्वपृथक्त्वयोर्भेदाभेदयोश्चान्योन्यानुगमप्रसिद्ध्या तद्दृष्टान्तेन जीवादिवस्तुनि तत्साधनस्य युक्तिपथानतिवर्त्तित्वादित्यादिग्रन्थेनाष्टसहस्र्यामेव विविक्तनिमित्तादिविस्तारप्रतिपादनात्सैव तदर्थिनाऽवलोकनीयेत्यभिमेत्याह–अस्मदुपज्ञाष्टसहस्रीप्रोक्तरीत्याऽवतारणीय इति, स्याद्वादस्य कारणतात्वव्यापकत्वे हेतुमाह–कस्या अपीति, यद्यङ्कुरत्वेन सङ्गृहीतत्वादङ्कुरमात्रं प्रति वीजत्वेन सङ्गृहीतत्वाद्वीजमात्रमेकान्तेन कारणं स्यात्तर्हि सर्वाणि वीजानि सर्वदैव सर्वेषामङ्कुराणामुत्पादकानि स्युः, सर्वानङ्कुरान् प्रति सर्वेषां वीजानां सर्वकालावच्छेदेन कारणैकस्वभावत्वात्, ननु वीजत्वेन न वीजमात्रं कारणं किन्तु विवक्षितविशेषं किमपि वीजमिति चेत्तथापि तद्वीजादतदङ्कुरोत्पत्तिप्रसक्तिः, ननु वीजत्वेनाङ्कुरत्वेन कार्यकारणभाववत्तत्तद्वीजत्वेन तत्तदङ्कुरत्वेन कार्यकारणभावोऽप्यस्तीति नोक्तदोष इति चेन्नन्वेवं सति वीजमात्रं वीजत्वेन कारणं तद्वीजत्वेन च न कारणमिति प्रतीत्युपगमात् स्याद्वादमहाराजशरणं विना न त्राणमित्यायातम्, ननु तद्वीजत्वेनेत्यत्र तृतीयार्थस्यावच्छेद्यत्वस्य नञर्थेऽन्वयात्तद्वीजत्वेन न कारणमित्यस्य तद्वीजत्वावच्छे-

घत्वाभाववत्कारणतावदित्यर्थं इति न स्याद्वादावकाश इति चेत्तथा सति मूले न कपिसंयोगी वृक्ष इति प्रतीत्या वृक्षादौ कपिसंयोगाभावोऽपि न सिद्ध्येत्, तत्रापि मूलावच्छेद्यत्वाभाववत्कपिसंयोगवद्वृक्षविषयकत्वापत्तेः, बीजत्वावच्छिन्नबीजमात्रवृत्तिकारणतानवच्छेदकं तद्बीजत्वमित्यर्थस्तूदक्षरत्वादेवोपेक्ष्यः, अन्यथा शाखायां कपिसंयोगी वृक्षो न मूले इति प्रतीतेरपि शाखावच्छिन्नवृक्षवृत्तिकपिसंयोगानवच्छेदकं मूलमित्यवगाहनं स्यात्,नन्वेवं कपिसंयोगतदभावयोरव्याप्यवृत्तित्वादवच्छेदकभेदेनैकत्रवृत्तित्वं सम्भवति, नैवं कारणत्वतदभावयोः, व्याप्यवृत्तित्वादिति चेत्, उभयत्र प्रतीतेस्साम्ये बाधकाभावे च तुल्ये किं कृतं वैषम्यमिति न जानीमहे। नमूक्तयुक्त्या भवतु बीजत्वावच्छिन्नकारणतायां स्याद्वादावतारः, तद्बीजत्वावच्छिन्नकारणतायां कथमिति चेत्, तद्बीजमपि तदङ्कुरं प्रति सर्वदैव कारणं किंवा यदा कदाचित्, नाद्यः, सर्वदैव तदङ्कुरोत्पत्तिप्रसक्तेः, न द्वितीयः, तथा सति तन्नानास्वभावस्वरूपमेव पर्यवस्यतीति कथञ्चित्कारणत्वसंसिद्ध्याऽनायासेनैव स्याद्वादावतारस्सञ्जात इति भावः। उक्तार्थे प्राचामुक्तिविशेषमन्यथानुपपन्नं संवादत्वेनोपढौकयति अत एवेति, बीजाङ्कुरसत्त्वयोर्व्याप्यव्यापकभावरूपान्वयसहचारस्य तदभावसत्त्वयोर्व्याप्यव्यापकभावरूपव्यतिरेकसहचारस्य च कथञ्चिद्घटितस्याभावेन तज्ज्ञानाभावात् कथं कथञ्चित्कार्यकारणभावविनिश्चय इत्याशङ्कायामाह–तथान्वयव्यतिरेकेति। तथेति, सप्तभंगीविधिसमारूढत्वेनेत्यर्थः। विचारस्येति ऊहाख्यतर्कप्रमाणरूपस्येत्यर्थः। तथा चान्वयो बीजत्वेन बीजसत्त्वेऽङ्कुरत्वेनाङ्कुरसत्त्वमित्येवंरूपो न, तथा सति कुशूलस्थतादशायामपि बीजमङ्कुरोत्पादकं स्यात्, स्याच्च क्षेत्रस्थतादशायां यावदङ्कुरोत्पादकं, किन्तु स्वेतरसकलकारणसमवहितस्य बीजस्य कस्यचिद् बीजत्वेन सत्त्वे कस्यचिदेवाङ्कुरस्याङ्कुरत्वेनोत्पादकं बीजम्, व्यतिरेकोऽपि तद्घटिततदभावयोरेवेति कथं न कथञ्चिद्घटितत्वं तयोः, उक्तविशेषणस्यैव कथञ्चि-

द्रूपत्वादिति भावः । एकेनैव कार्ये सिद्धे किं द्व्यकल्पनयेति न्यायात् स्यादर्थक्रियाकारीत्येकेनैव भङ्गेन कारणत्वे कथञ्चित्तत्त्वसिद्धौ किं तत्र सप्तभङ्गीकल्पनयेत्याशङ्कायामाह—यावति विचारे इति, किंवृत्तचिद्विधिः पूर्यत इति, कथञ्चित्तत्त्वोक्तिर्निराकांक्षप्रतिपत्त्युपयोगिनी भवतीत्यर्थः । तावत एवेति विभक्तिव्यत्यासेन विचारस्येत्यनुषज्यते,

एतेन विशेषान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारानिर्णयादनुगतागुरुविशेषान्तरानुपस्थितिलाघवादिप्रतिसन्धानवशात् सामान्यत एव हेतुहेतुमद्भावग्रहाद्ग्राहकाभावादेव न विशेषकार्यकारणभावसिद्धिरिति नैयायिकाद्यभिमतं परास्तम् । यावत् किञ्चिद्वीजं तावत् कथञ्चिद् यावदङ्कुरजनकं यावान् कश्चिदङ्कुरस्तावान् कथञ्चित यावद्बीजजन्य इत्याद्याकारस्यैव कार्यकारणभावग्रहस्य स्याद्वादसंस्कृतात् ऊहप्रमाणात् सिद्धेः, विशेषकार्यकारणभावासिद्धौ च विशेषव्याप्यव्यापकभावादेरप्युच्छेदप्रसङ्गाद्बहुविप्लवेत, यत्किञ्चिद्व्यापकसामानाधिकरण्यं व्याप्यस्य यावद्व्यापकनिरूपिता व्याप्तिरिति दीधितिकृतोऽप्येकान्ताभिधानं न तमोभेदिनीं दीधितिमनुसरति किंवृत्तचिद्विधेररुणोदयस्यैवाभावात् ॥

एतेनेति वक्ष्यमाणहेतुनेत्यर्थः । विशेषान्वयव्यतिरेकाभ्यामित्यस्य सामान्यत एव हेतुहेतुमद्भावग्रहादित्युत्तरेण सम्बन्धः । विशेषान्वयव्यतिरेकौ स्वरसतो विशेषकार्यकारणभावस्यैव ग्राहकाविति कथं ताभ्यां सामान्यकार्यकारणभावग्रह इत्याशंकानिरसनाय सामान्यव्यभिचारानिर्णयादित्यादिको मध्यपतितो हेतुग्रन्थः । वीजत्वाद्यवच्छिन्नाङ्कुरत्वाद्यवच्छिन्नकार्यकारणभावेऽन्वयव्यतिरेकव्यभिचारानिर्णयादित्यर्थः, वीजत्वाद्यवच्छिन्नसत्त्वेऽङ्कुरत्वाद्यवच्छिन्नाऽनुत्पत्तिः वीजत्वाद्यवच्छिन्नाभावेऽप्यङ्कुरत्वाद्यवच्छि-

न्नोत्पत्तिरित्यनिश्चयादिति यावत् । बीजत्वेनाङ्कुरत्वेन सामान्यधर्मेण कार्यकारणभावे हेत्वन्तरमाह—अनुगताऽगुरुविशेषान्तरानुपस्थितीति अनुगतमगुरुभूतं यद्बीजत्वाऽपेक्षया विशेषान्तरं धर्मान्तरं तदनुपस्थितेः द्रव्यत्वस्य पृथिवीत्वस्य च बीजमात्रे सत्त्वसम्पादनार्थं स्वीकरणीयबीजानुयोगिकसमवायादिसम्बन्धकृतगौरवशालित्वात्, तत्तद्बीजत्वस्याप्यननुगतत्वात् शरीरकृतोपस्थितिकृतगौरववत्त्वाच्च । अथवा विशेषरूपेण व्यभिचारे सत्येव सामान्यरूपेण कारणत्वं प्रकृते च द्रव्यत्वापेक्षया विशेषो बीजत्वं तद्रूपेणाङ्कुरत्वावच्छिन्नं प्रति कारणत्वे न व्यभिचारोऽतोनद्रव्यत्वेनरूपेणाङ्कुरत्वावच्छिन्नं प्रति कारणत्वं अनुगताऽगुरुभूतस्य बीजत्वस्य विशेषान्तरस्योपस्थितेः, बीजत्वेनत्वङ्कुरत्वावच्छिन्नं प्रति कारणत्वं संभवत्येव, बीजत्वापेक्षया लघुभूतस्यानुगतस्य विशेषान्तरस्यानुपस्थितेः तत्तद्बीजत्वस्य विशेषान्तरत्वेऽप्यनुगतत्वाभावात्, । एवं तत्तद्धूमत्वरूपविशेषधर्मावच्छिन्ननिरूपिताधिकरणत्वानां धूमवानितिप्रतीतिविषयत्ववादिमते तत्तद्धूमत्वावच्छिन्नाधिकरणत्वेऽनेकस्मिन् धूमवानिति प्रतीतिविषयत्वं कल्प्यं स्यादिति गौरवं, न च तत् धूमत्वसामान्यधर्मावच्छिन्नाधिकरणत्वाभ्युपगमपक्षे, धूमत्वावच्छिन्नाधिकरणत्वे एकस्मिन्नेवोक्तप्रतीतिविषयत्वकल्पनादिति लाघवसन्धानवत् तत्तदङ्कुरत्वावच्छिन्नकार्यतानिरूपिततत्तद्बीजत्वावच्छिन्नकारणतानामेव बीजाङ्कुरसामान्यकार्यकारणभावग्राहिप्रतीतिविषयत्वाभ्युपगमे बीजमङ्कुरकारणमिति प्रतीतिविषयत्वं तत्तद्बीजत्वावच्छिन्नकारणताकूटे कल्प्यं स्यात् । बीजत्वेनाङ्कुरत्वावच्छिन्नं प्रति कारणत्वमित्यभ्युपगमेत्वेकस्मिन्नेव बीजत्वावच्छिन्नकारणत्वे उक्तप्रतीतिविषयत्वं कल्पनीयम्, तथा च पूर्वापेक्षयात्रलाघवं सुस्पष्टमेवेत्येवं लाघवप्रतिसन्धानात् बीजत्वावच्छिन्नविधेयकाङ्कुरत्वावच्छिन्नोद्देश्यकप्रवृत्त्युपपत्तिप्रतिसन्धानाच्चेत्यर्थः । ग्राहकाभावादेवेति· विशेषान्वयव्यतिरेकावेवविशेषकार्यकारणभावग्राहकौ, तौ च सामान्यकार्यकारणभाव-

ग्राहकावेवेति भावः । यावदित्यनेन सर्वस्यापिबीजस्याविशेषेण यावदङ्कुरजनकत्वं किञ्चिदित्यनेन तत्तदसाधारणेन स्वगतेन यावदङ्कुरजनकत्वमित्युपदर्शितम्, कथञ्चिदित्यनेनचाविशेषेणापि बीजत्वेनैव यावदङ्कुरजनकत्वं, न तु द्रव्यत्वसत्त्वादिना, अन्यथाबीजासत्त्वेऽपिबीजव्यतिरिक्तद्रव्यतोऽङ्कुरोत्पत्तिः स्यात्, तत्तद्बीजत्वादिनाऽपि तदभिन्नाभिन्नस्य तदभिन्नत्वमितिनियमं द्रव्यार्थिकनयाभिमतमाश्रित्य बीजान्तरसत्त्वेऽपि स्वाभिन्नबीजत्वद्वारातत्तद्बीजस्य सत्त्वमित्याश्रित्यैव यावदङ्कुरजनकं न तु पर्यायनयमाश्रित्य, अन्यथा प्रतिनियतबीजव्यक्त्यभावे बीजव्यक्त्यन्तरादङ्कुरोत्पत्तिर्नस्यात्, यावदित्यनेन बीजत्वेन यावदङ्कुरजनकत्वमित्युक्तौ च कथञ्चिदित्यनेन सामग्रीसमवधानकालावच्छेदेनैवजनकत्वमित्यर्थोज्ञाप्यते तेन न कुशूलस्थाद्बीजादङ्कुरापत्तिः, एकस्यापिबीजस्य स्वान्यबीजकार्याङ्कुरान्तरम्प्रति कारणत्वमित्यर्थोद्बोधाय यावदित्यङ्कुरेविशेषणम्, अन्यथा तद्बीजेतदङ्कुरजनकत्वमादायाप्यङ्कुरजनकमित्यस्योपपत्तेर्नसर्वस्यबीजस्यप्रत्येकं सर्वाङ्कुरव्यक्तिकारणत्वं ततः सिद्ध्येदिति अङ्कुरस्यापि सर्वस्य सामान्यतोविशेषतश्च कार्यत्वं व्यवस्थापयितुमाह—यावानित्यादि, एतद्व्याख्यानं पूर्ववदेव बोध्यम्, तथा च सामान्यतोविशेषतश्च बीजाङ्कुरयोः कार्यकारणभावग्रह उक्तोहप्रमाणादेवेति सिद्धमितिभावः ।

**पृथिवीत्वजलत्वोभयवान् पृथिवीजलान्यतरत्वादित्यादेरप्यदुष्टत्वप्रसङ्गात् । तद्धूमत्वादिना धूमस्तद्वह्निव्याप्यो धूमत्वेन तु यावद्वह्निव्याप्यो यावद्वह्नेरपि व्यापकता वह्नित्वेन न यावत्त्वेनेत्यादिविविक्तव्यवहारस्य तु स्याद्वादेनैवोपपत्तेः ॥**

**पृथिवीत्वेति** यथा धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नतद्वह्निसामानाधि-

करण्यस्य शून्यत्वावच्छिन्ने यावद्धर्मनिरूपितत्वं तथा पृथिवीजलान्यतरत्वस्य पृथिवीत्वजलत्वान्यतरपर्यवसितस्यैकं पृथिवीत्वं जलत्वं वादाय तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं जलत्वत्वं पृथिवीत्वत्वं वा तदवच्छिन्नं यज्जलत्वं पृथिवीत्वं वा तत्सामानाधिकरण्यस्याप्यन्यतरत्वे पृथिवीत्वजलत्वोभयनिरूपितत्वसम्भवात् पृथिवीत्वजलत्वोभयविरुद्धस्यापि पृथिवीजलान्यतरत्वहेतोरदुष्टत्वं स्यात्, यद्यप्युभयत्वमेव साध्यतावच्छेदकं, नतु पृथिवीत्वत्वादिकं प्रत्येकं, तथाप्युभयत्वस्यैकविशिष्टापरत्वरूपस्य वैज्ञानिकसंसर्गेण कालिकादिसम्बन्धघटितस्वसामानाधिकरण्यसंसर्गेण वा पृथिवीत्वविशिष्टजलत्वत्वे जलत्वविशिष्टपृथिवीत्वत्वे वा पर्यवसायित्वेन विशिष्टस्य च शुद्धानतिरिक्तत्वेनोक्तं प्रत्येकं साध्यतावच्छेदकं स्यादेवेति भावः। दीधितिकृदुक्तस्य व्याप्यव्यापकभावव्यवहारस्य प्रामाण्यं निरस्य यादृशस्य तस्य स्याद्वादनीत्या भवत्युपपादनं तादृशस्वरूपमाह–तद्धूमत्वादिनेति। उत्तरार्द्धमवतारयति–

कथं तर्हि कारणतालक्षणानां नानात्वात् तीर्थिकविचाराणां चाऽनेकविधत्वादेकनयेन कारणत्वेन दर्शित एवान्यनयेनान्यथासिद्धत्वस्याप्रयोजकत्वस्य वा दर्शनान्नियतप्रवृत्त्युपपत्तिरित्याशङ्कायामाह। यत् तत्तदर्थसाधनं तत्तदर्थबाधनं च कतिपयलक्षणतन्त्रनयैकरुचयः कुर्वन्ति तत् स्याद्वादनायकस्य तव पितुः पुरतः शिशुत्वं बाललीला, यथा शिशुभिर्धूलीगृहकरणे तद्भङ्गे वा प्रासादस्थस्य पश्यतः पितुर्मुख्यार्थबाधाभावात् न प्रतिकूलप्रवृत्त्यपराधः, तथा नानन्तधर्मात्मकवस्तुप्रतिपादकस्याद्वादपतेर्लोकालोकावलोकिनो भगवतोऽपि नयैः कल्पितार्थसाधनबाधनप्रकारैरिति भावः।

कथं तर्हीति, अस्य नियतप्रवृत्त्युपपत्तिरित्युत्तरेण सम्बन्धः। कारणतालक्षणानां नानात्वादित्यादिकश्च तत्रैव हेतुग्रन्थः।

अत्र कारणतानां नानात्वादित्युक्तावपि प्रवृत्त्यनुपपत्तिर्निर्वहत्येव कारणतालक्षणानां नानात्वादित्यनेनापि तस्यैव ज्ञाप्यत्वात्, तथापि कथं कारणतानां नानात्वमिति जिज्ञासा प्रोल्लसत्येवेति तन्निवृत्तये तदुक्तिः, लक्षणानां नानात्वं लक्ष्यभेदप्रयोजकमिति तु नेयं पृथिवी जलं गन्धवत्त्वात् नेदं जलं पृथिवी शीतस्पर्शवत्त्वादित्यादौ सुप्रसिद्धमेव, यद्यपि एकस्या अपि पृथिव्या गन्धवत्त्वं पृथिवीत्वजातिमत्त्वं पाकजस्पर्शवत्त्वमित्यादिकन्नानालक्षणमस्त्येवेति लक्षणानां वैयधिकरण्यमेव लक्ष्यभेदप्रयोजकं, तथापि कथञ्चिद्भेद एव सिद्धान्ते लक्ष्यलक्षणभावस्वीकाराल्लक्षणभेदस्यापि लक्ष्यभेदप्रयोजकत्वम्, स्वरूपलक्षणान्याश्रित्य वा तथा, तथा च प्रवृत्तिं प्रतीष्टसाधनत्वज्ञानस्य कारणत्वेन तत्र विषयविधया प्रविष्टं कारणत्वं किमेतल्लक्षणलक्षितं किंवा तदन्यलक्षणलक्षितमित्येवं संदेहवतां विषयविधया प्रवृत्तिकारणतावच्छेदकस्य तस्य निश्चयाभावे नेष्टसाधनत्वज्ञाने कारणत्वविनिश्चयः अवच्छेदकज्ञाननियम्यत्वादवच्छेद्यज्ञानस्येति भवति कारणत्वलक्षणानां नानात्वेऽङ्कुरार्थिनां बीजादौ नियतप्रवृत्त्यनुपपत्तिरित्याशयः ॥ लक्षणानां नानात्वेपि कथंताशङ्कायामाह—तीर्थिकविचाराणामिति ॥ आर्हतसिद्धान्ते परमर्षिणा संगीयमाननयसंज्ञकानां तत्तत्पुरुषीयाभिप्रायरूपाणामित्यर्थः, कारणत्वं तत्तन्नयभेदेन सखण्डरूपमखण्डरूपञ्च, सखण्डरूपमपि बौद्धनयेन कार्याव्यवहितपूर्वक्षणस्य कुर्वद्रूपात्मकतया भवनलक्षणं, न्यायनयेन च कार्यकारणयोस्सामानाधिकरण्यानुरोधेनाऽन्यथासिद्धिशून्यत्वेसति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वलक्षणम्, अखण्डरूपन्तु मीमांसकादिमते सैद्धान्तिकमते च शक्तिमत्त्वलक्षणं, तत्रापि बीजत्वादयो न धर्मविधयावच्छेदकाः किन्त्वभिव्यञ्जकविधयेत्येवं कारणतालक्षणानां नानात्वं तीर्थिकविचाराणाञ्चानेकविधत्वमवसेयम् । ननु विचारभेदानां नोपमर्द्योपमर्दकभाव इति तदनेकविधत्वं न नियतप्रवृत्तिविघातकमित्यत आह—एकनयेनेति, कल्पितार्थसाधन-

साधनप्रकारैरिति, प्रतिकूलप्रवृत्त्यपराध इत्यनुषज्यते, नियतप्रवृत्त्युपपादनायाह–

तथा च तत्तन्नयप्रयोज्यप्रवृत्तौ तत्तन्नयजन्येष्टोपायत्वग्रहस्य प्रमाणप्रयोज्यप्रवृत्तौ च सकलनयजन्यतद्ग्रहस्य हेतुत्वान्न दोषः। लौकिका अपि स्थूलव्यवहारनयानुयायिन इति तत्प्रवृत्तेरपि नासङ्ग्रहः। अत एव समुट्ठाणवायणालद्धिओअ इत्यादिना तवसंजमो अणुमओ इत्यादिना च मुमुक्षूणामिष्टोपायताग्राहकनयवैचित्र्यप्रदर्शनं भगवद्भद्रबाहुभिरभिहितम्। परीक्षकाणां निष्कम्पप्रवृत्तौ सर्वनयसमूहजन्येष्टोपायत्वग्रहस्यैव हेतुत्वादंशे तद्विसंवादेऽपि सामग्रीहेतुत्वग्रहे कस्याप्यविवादात्।

तथाचेति, कारणताया लक्षणं तत्तन्नयापेक्षं प्रमाणापेक्षं च, तत्राद्यपक्षमवलम्ब्याह–तत्तन्नयेति, कारणताया यल्लक्षणं यन्नयप्रयुक्तं तन्नयप्रयोज्यप्रवृत्तौ तन्नयजन्येष्टसाधनत्वग्रहस्य हेतुत्वान्नियतप्रवृत्त्युपपत्तिरिति भावः। द्वितीयपक्षमवलम्ब्याह-प्रमाणप्रयोज्यप्रवृत्ताविति, ननु तत्तन्नयप्रयोज्यप्रवृत्तौ तत्तन्नयजन्येष्टसाधनत्वग्रहस्यैव प्रमाणप्रयोज्यप्रवृत्तौ प्रमाणजन्येष्टसाधनत्वग्रहस्यैव हेतुत्वाभिधानमुचितम्, नतु सकलनयजन्येष्टसाधनत्वग्रहस्य, अन्यप्रयोज्यप्रवृत्तावन्यस्य हेतुत्वे नियमानुपपत्तेरिति चेत्, न, अभिप्रायविशेषरूपाणां तज्जन्यशब्दसन्दर्भरूपाणां वा नयानां परस्परनिरपेक्षाणां युगपदवस्थानाऽसम्भवतो युगपदुपस्थित्याद्यऽसम्भवतो वा तज्जन्येष्टसाधनत्वग्रहस्याऽसम्भवेन "यद्वा परीक्षकीयनिष्कम्पप्रवृत्ता" वित्याद्युत्तरग्रन्थेन सकलनयजन्येत्यनेनांऽशान्तरसापेक्षांशग्राहिसुनयजन्यत्वस्य सप्तभङ्गात्मकमहावाक्यजन्यत्वस्य वेष्टसाधनत्वग्रहे विवक्षितत्वेन तस्य प्रमाणजन्येष्टसाधनत्वग्रहरूपतायामेव पर्यवसानेन दोषाभावादिति भावः। ननूक्तविशिष्टेष्टसाधनत्वग्रहोक्तविशिष्टप्रवृत्त्योः कार्यकारणभावाभ्युपगमे तत्तन्नयप्रमाणा-

भिज्ञजनानामिष्टसाधनत्वग्रहप्रवृत्त्योस्सङ्ग्रहेऽपि तत्तन्नयप्रमाणस्वरूपं किञ्चिन्मात्रमजानतां गोपालादिजनानां तयोस्सङ्ग्रहो न स्यादित्यत आह–लौकिका अपीति, तथा च नयभेदेन कार्यकारणभावोपि भिन्न एवेतीनरनयानभिज्ञानां स्थूलव्यवहारनयाभिज्ञानां लौकिकानामिष्टसाधनत्वज्ञानप्रवृत्त्योर्व्यवहारनयगर्भ एव कार्यकारणभाव इति तेषां सामान्यतो जायमानमपीष्टसाधनत्वज्ञानं व्यवहारनयजन्यमेव, प्रवृत्तिश्च सामान्यतोजायमानाऽपि व्यवहारनयप्रयोज्यैवेति न तयोरसङ्ग्रह इति भावः। उक्तार्थे तातपादश्रीभद्रबाहु सम्मतिमाह–

अत एव 'तं सव्वणयविसुद्धं जं चरणगुणट्ठिओ साहुत्ति,' फलितार्थकथनं भगवतां चरणगुणयोः स्थित उभयत्र समपक्षपातः गुणशब्देन ज्ञानदर्शनयोर्ग्रह इति प्रमाणार्पणायां व्याख्यानम्। यद्वा परीक्षकीयनिष्कम्पप्रवृत्तौ निश्चयजन्येष्टोपायत्वग्रह एव हेतुः, निश्चयस्य च सकलनयविषयताव्यापकविषयताकत्वात्, अदूरविप्रकर्षेण सकलनयाश्रयणम्। यद्भाष्यम् 'अहवा सव्वणयसमूहमयं विणिच्छओत्ति'। एतत्तत्वं च 'सव्वणयमयत्तं पुणे' त्यादिनाऽध्यात्ममतपरीक्षायामस्माभिर्निरूपितमिति विस्तरार्थिना तत एवानुसन्धेयम् ॥ १२ ॥ प्रकृतं प्रस्तुमः। ननु माभूत् सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासः, अस्तु च बीजत्वमेव प्रयोजकं, भवतु च सहकारिसमवधाने सति कर्तृस्वभावत्वं भावस्य, तथा च तदसन्निधानेऽकरणमप्युपपद्यतां, तथापि तज्जातीयमात्र एवेयं व्यवस्था, न त्वेकस्यां व्यक्तौ,करणाकरणलक्षणविरुद्धधर्मसंसर्गस्य प्रत्यक्षसिद्धतया तत्र दुर्वारत्वादिति चेत्। न। निमित्तभेदेन विरोधपरिहारस्य सुशकत्वादित्याह—

एकत्र नापि करणाकरणे विरुद्धे, भिन्नं निमित्तमधिकृत्य विरोधभङ्गात् ॥
एकान्तदान्तहृदयास्तु यथाप्रतिज्ञं, किञ्चिद्वदन्त्यसुपरीक्षितमत्वदीयाः ॥ १३ ॥

नाप्येकत्र एकव्यक्तौ, करणाकरणे विरुद्धे, भिन्नं निमित्तमधिकृत्य निमित्तभेदमाश्रित्य, विरोधभङ्गाद्विरोधपरिहारात्। तथाहि–यस्तावदेकस्यां व्यक्तौ करणाकरणलक्षणविरुद्धधर्मसंसर्गाद्भेदमापादयति विरोधस्वरूपमपि तेन न बुद्धमिति बुद्ध्यामहे ॥

अतएवेति, समुट्ठाणवायणालद्धिओ य इति अत्र "उत्पन्नानुप्पण्णो इत्थ नया णेगमस्सणुप्पण्णो। सेसाणं उप्पण्णो जइकत्तो तिविहसामित्ता" ॥ ३४० ॥ इति चत्वारिंशदुत्तरत्रिशततममिता विशेष्यावश्यकनिर्युक्तौ गाथा, तदनन्तरं "समुट्ठाण–वायणा–लद्धिओ य पढमे नयत्तिए तिविहं। उज्जुसुय–पढमवज्जं सेसनया लद्धिमिच्छंति" इतीयं गाथा ३४१, तयोश्च तत्रेत्थं व्याख्या–"उत्पन्नश्चासावनुत्पन्नश्चेत्युत्पन्नानुत्पन्नो मन्तव्यः। आह–कथं स एवोत्पन्नोऽनुत्पन्नश्च भवति, विरोधात् ? इत्याह–'इत्थेत्यादि' अत्र नयाः प्रवर्तन्ते। तेच नैगमादयः सप्त। नैगमो द्विविधः–सर्वसङ्ग्राही, देशसङ्ग्राही च। तत्रादिनैगमस्य सामान्यमात्रावलम्बित्वात्, तस्य चोत्पादव्ययरहितत्वाद् नमस्कारस्यापि तदन्तर्गतत्वादनुत्पन्नः। सेसाणं उप्पण्णोत्ति' शेषा विशेषग्राहिणस्तेषां शेषाणां विशेषग्राहित्वात्, तस्य चोत्पादव्ययवत्त्वात्, उत्पादव्ययशून्यस्य वान्ध्येयादिवदऽवस्तुत्वात्, नमस्कारस्य तु वस्तुत्वादुत्पन्न इति। जइकत्तोति यद्युत्पन्नः, कुतः,इत्याह तिविहसामित्ता,त्रिविधं तत् स्वामित्वं चेति समासः तस्मात्त्रिविधस्वामित्वात्

त्रिविधस्वामिभावात् त्रिविधकारणादित्यर्थः । तदेव त्रिविधस्वामित्वं दर्शयति 'समुट्ठाणेत्यादि' समुत्थानतः, वाचनातः, लब्धितश्च
'नमस्कार उत्पद्यते' इतिवाक्यशेषः । तत्र सम्यक् सङ्गतंवोत्तिष्ठतेऽस्मादिति समुत्थानं निमित्तमित्यर्थः । किं पुनस्तदिह ? इति,
उच्यते, अन्यस्याऽश्रुतत्वात् तदाधारतया प्रत्यासन्नत्वाद् देहोत्र नमस्कारकारणम्, तद्भावभावित्वात्, बीजवदङ्कुरस्य, इत्येवं देहल-
क्षणात्समुत्थानाद् नमस्कारो जायते । तथा लब्धिस्तदावरणक्षयोपशमलक्षणा तस्याश्चायमुपजायते । इत्येतत्त्रिविधं कारणं प्रथमे नै-
गमसङ्ग्रहव्यवहारलक्षणे त्रिके नैगमादिनयत्रयमतेनावगन्तव्यमित्यर्थः । तथा, ऋजुसूत्रस्य प्रथमवर्जं वाचना—लब्धिद्वयं नमस्कार-
स्य कारणम्, तच्छून्यस्य जन्तोर्देहमात्रसद्भावेऽपि नमस्काराख्यकार्योत्पत्तिव्यभिचारात्, शेषनयास्तु शब्दादयो लब्धिमेकां नम-
स्कारकारणत्वेनेच्छन्ति, वाचनाया अपि लब्धिशून्येष्वभव्यादिषु नमस्काराऽजनकत्वात्, लब्धियुक्तेषु तु प्रत्येकबुद्धादिषु तदभा-
वेऽपि तत्सद्भावतो व्यभिचारित्वात् इति। तवसंजमो अणुमओ इत्यादिनेति अत्र "तवसंजमो अणुमओ नेग्गंथं पवयणं च व-
वहारो । सदुज्जुसुयाणं पुण निव्वाणं संजमो चेव" इति सप्तसप्तत्युत्तरद्विशततमभिता विशेष्यावश्यकनिर्युक्तौ गाथा । तस्याश्चेत्थं
तत्र व्याख्या । तापयतीति तपस्तत्प्रधानः संयमस्तपःसंयमश्चारित्रसामायिकमित्यर्थः । तथा, निर्ग्रन्थानामिदं नैर्ग्रन्थ्यमार्हतमिति
भावना, प्रवचनं, श्रुतसामायिकमित्यर्थः । चशब्दोऽनुक्तसम्यक्त्वसामायिकपरिग्रहार्थः । एतानि त्रीण्यपि सामायिकानि मोक्ष-
मार्गत्वेन ममानुमतानीति ब्रूते व्यवहारनयः । एतद्ग्रहणे चाधोवर्त्तिनौ नैगमसङ्ग्रहावपि गृहीतौ द्रष्टव्यौ । ततश्चेदमुक्तं भवति।
नैगमसङ्ग्रहव्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते । शब्दर्जुसूत्रयोः पुनर्निर्वाणं निर्वाणमार्गोऽभिमतः संयम
एव चारित्रसामायिकमेवेत्यर्थः । नेतरे द्वे, सर्वसंवररूपचारित्रानन्तरमेव मोक्षप्राप्तेरिति। निष्कम्पप्रवृत्तावितिप्रमाणजन्यप्रवृत्ता-

वित्यर्थः । **सर्वनयसमूहेति,** अत्र पञ्चशतजनेषु सर्वजनव्यवहारवत्पञ्चजनेष्वपि सर्वव्यवहारात्समुदायैकदेशेपि सर्वशब्दोपचारो भवतीति न्यायात्त्रिचतुरादिनयजन्येष्टसाधनत्वग्रहोपि सकलनयजन्यत्वात्प्रमाणजन्यस्स्यादिति तन्निवृत्तये समूहेति पदम्, तथाचात्राऽपरिशेषनयसङ्ग्राहकस्य समूहेत्यधिकपदस्य प्रवेशेपि न पूर्वोक्तेन सह विरोधः । **अंशे तद्विसंवादेपीति,** तत्तद्धर्मरूपेण तत्तत्कारणे कारणत्वं तस्य किम्वाऽन्यधर्मेणेत्येवं विवादेपि तत्तत्कारणकूटे हेतुत्वग्रहे विवादाभावादित्यर्थः । **तं सव्वनयविसुद्धं** इति, सव्वेसिं पि नयाणं वहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू" ॥ इत्यष्टाधिकचतुश्शततममिता विशेष्यावश्यकनिर्युक्तौ गाथा । तस्याश्च तत्रेत्थं व्याख्या,न केवलमनन्तरोक्तनयद्वयस्य, किंतर्हि ? सर्वेषामपि स्वतन्त्रसामान्यविशेषवादिनां नामस्थापनादिवादिनां वा नयानां वक्तव्यतां परस्परविरोधिनीं प्रोक्तां निशम्य श्रुत्वा तदिह सर्वनयविशुद्धं सर्वनयसंमतं सर्वरूपतया ग्राह्यं यत् किम् ? इत्याह यच्चरणगुणस्थितः साधुः, चरणं चारित्रक्रिया,गुणोऽत्र ज्ञानम् तयोस्स्थितश्चरणगुणस्थितः, ज्ञानक्रियाभ्यां द्वाभ्यामपि युक्त एव साधुर्मुक्तिसाधकः, न पुनरेकेन केनचिदिति भावः " इति, सर्वनयसमूहत्वस्याऽसर्वज्ञदुर्ज्ञेयत्वेनास्मदादीनामिष्टोपायत्वग्रहे तद्रूपेण कारणत्वग्रहाऽसम्भवाल्लाघवाच्च कल्पान्तरमाह—**यद्वेति,** निश्चयो हि न पराभिलपितस्तदभावाऽप्रकारकतत्प्रकारकज्ञानरूपः, किन्तु तद्विलक्षण एव, सकलनय विषयताव्यापकविषयताकज्ञानरूपः, नातस्तत्तन्नयजन्येष्टोपायत्वज्ञानस्य निष्कम्पप्रवृत्तिजनकत्वं किन्तूक्तनिश्चयलक्षणं प्रमाणरूपतामादायैव पर्यवस्यतीति प्रमाणजन्येष्टसाधनत्वज्ञानस्यैवेत्याह—**निश्चयस्य चेति** । ननु परीक्षकीयनिष्कम्पप्रवृत्तिं प्रति निश्चयजन्येष्टोपायत्वग्रह एवं हेतुरित्यभ्युपगमे तं विणिच्छयविसुद्धमित्येव वक्तव्यं स्यात, नतु तं सव्वनयविसुद्धमिति,तथाचोक्तग्रन्थोऽसङ्गतस्स्यादित्यत आह—**अदूरेति,** निश्चयस्य सकलनयमतत्वात्त-

त्प्रवेशे तस्यापि प्रवेशआगत एवेति नोक्तग्रन्थोऽसङ्गत इति भावः। निश्चयस्य सकलनयमतत्वं नापसिद्धान्तितमित्याह—यद्वाच्य-मिति, "अहवेगणयमयं चिय ववहारो जं न सव्वहा सव्वं। सव्वनयसमूहमयं विणिच्छओ जं जहाभूयं" इतीयं चतुरशीत्यधिकैकत्रिंशच्छततममिता विशेष्यावश्यकभाष्यगाथा निर्युक्तिगाथासहिताच नवत्यधिकपञ्चत्रिंशच्छततममिता, तस्यास्तत्रेत्थं विवृतिः, अथवा, यत् किमप्येकैकस्यैव नयस्य मतं तद् व्यवहारः प्रतिपद्यते, नान्यत्, कुतः इत्याह—जमित्यादि, यस्मात् सर्वथा सर्वैरपि प्रकारैर्विशिष्टं सर्वनयमतसमूहमयं वस्त्वसौ प्रतिपत्तुं न शक्नोतीतिशेषः स्थूलदर्शित्वादिति। विनिश्चयस्तु निश्चयनयो यद्यथाभूतं परमार्थतो वस्तु तत्तथैव प्रतिपद्यत इति, ॥ सव्वणयमयत्तं पुण सव्वेसिं इत्याद्याध्यात्ममतपरीक्षापाठस्त्वतिविस्तृतत्वान्नात्र लिख्यते विस्तरार्थिना न्यायप्रभातोवसेय इति॥ त्रयोदशश्लोकमवतारयितुं बौद्धाशङ्कामुपनिबध्नाति नन्वित्यादिना। माभूदिति कुशूलस्थबीजस्यापि बीजत्वेन सामर्थ्यस्यैव साधनादिति भावः। अस्त्विति तथाच कुर्वद्रूपत्वाकुर्वद्रूपत्वलक्षणविरुद्धधर्मसंसर्गोपि नात्रेति-भावः। ननु सहकारिसमवधानप्रयोज्यकरणस्वभावत्वस्य सहकार्यसमवधानप्रयोज्याकरणस्वभावत्वस्य चैकस्यां व्यक्तावभ्युपगमे स्थिरत्वसिद्धौ नस्सिद्धंसमीहितं यश्च तयोर्भवता विरोधोऽभ्युपगतस्सोपि भग्न इत्यत आह-तथापीत्ति, तज्जातीयमात्र एवेति, बीजजातीययोर्विभिन्नव्यक्तयोरेवेत्यर्थः। इयं व्यवस्थेति, सहकारिलाभालाभतन्त्रयोः करणाकरणयोर्व्यवस्थेत्यर्थः। तथा च न स्थिरत्वसिद्धिर्नवा विरोधहानिरिति भावः। एकस्यां व्यक्ताविति, इयं व्यवस्थेत्यनुपज्यते। तत्रहेतुमाह—करणेति, एकस्यां वीजव्यक्तौ कुशूलस्थतादशावच्छेदेनाङ्कुरं प्रत्यकरणं क्षेत्रस्थतादशावच्छेदेन च करणमित्येतल्लक्षणविरुद्धधर्म्मसंसर्गस्य प्रत्यक्षसिद्धतया सहकारिसमवधानाऽसमवधानकालावच्छिन्नकरणाकरणक्त्तदुभयव्यक्तिभेदस्य दुर्वारत्वादित्यर्थः, बौद्धैरेकस्यामेव वीजव्यक्तौ विरुद्धतया-

पादिते करणाकरणे नापि विरुद्धे इत्याह–एकत्र नापि करणाकरणे विरुद्धे इति, तत्र हेतुमाह–विरोधभङ्गादिति विरोधपरिहारादित्यर्थः। विरोधभङ्गोऽपि न स्वरूपतः, किन्तु निमित्तभेदमाश्रित्येत्याह–भिन्नं निमित्तमधिकृत्येति। बौद्ध इव नैयायिकोऽपि न यथार्थभापीति ख्यापनायाह-एकान्तदान्तेति, अत्वदीया इति कर्तृपदं, तच्च विशिनष्टि एकान्तदान्तहृददग्रा इति, तुः पुनरर्थे, अत्वदीयाः किं स्वसमयमतिक्रम्यानतिक्रम्य वा वदन्तीत्याकाङ्क्षायामाह–यथाप्रतिज्ञमिति स्वाभ्युपगमानतिक्रमेणेत्यर्थः। किं वदन्तीत्यत आह–असुपरीक्षितमिति, अत एवोक्तं किञ्चिदिति, अनिर्धारितमित्यर्थः। इति श्लोकसङ्क्षेपार्थः।

स खलु धर्मयोः परस्पराभावरूपत्वं वा स्यान्नित्यत्वानित्यत्ववत्, धर्मिणि परस्परविरहस्य तद्व्याप्यतयापादकत्वं वा शीतोष्णत्ववत्, परस्परभेदवत्ता वा दण्डिकुण्डलित्ववत्। नाद्यः। निर्विशेषणस्य कार्यविशेषानियन्त्रितस्याकरणस्य वस्तुनि क्षणभङ्गवादिनोऽसिद्धेस्तन्निरूपितविरोधस्य दूरापास्तत्वात्। सविशेषणस्यापि तस्य तदभावस्य च परस्परविरहरूपत्वेऽपि स्वरूपतो न विरोधः, एकस्मिन् कालेऽङ्कुरकरणाकरणयोः समर्थबीजक्षणशिलाशकलात्मकदेशभेदेनैवैकस्मिन् धर्मिणि कालभेदेन वृत्तेरनुभवसिद्धतया दुरपसरत्वात्, किं त्वेककालावच्छेदेन, न चैककालावच्छिन्नं तदुभयमेकत्राभ्युपगच्छाम इति परिह्रियत एव कालरूपनिमित्तभेदेनात्र विरोधः, यदा हि यत्र यत्कार्याकरणं तदा तत्र तत्कार्यकरणासिद्धेः॥

स विरोधः। धर्मयोः करणाकरणयोः, धर्मिणि परस्परविरहस्य तद्व्याप्यतयाऽऽपादकत्वमिति एकस्मिन्नेव धर्मिणि परस्परविरहनिष्ठापाद्यतानिरूपितं तद्व्याप्यत्वेनापादकत्वमित्यर्थः। परस्परभेदवत्तेति, एकस्मिन्नपरभेद इत्यर्थः।

किं करणतदभावयोर्निर्विशेषणयोर्विरोधः किंवा सविशेषणयोः, आद्ये करणसामान्यकरणसामान्याऽभावयोर्विरोध इति पर्यवसितम्, द्वितीये कार्यविशेषविशेषितकरणतदभावयोरङ्कुरकरणाङ्कुराऽकरणरूपयोर्विरोध इति पर्यवसितम्, तत्राद्यं दूषयति,–**निर्विशेषणस्येति**, अस्यैव विवरणमाह–**कार्यविशेषाऽनियन्त्रितस्येति** अङ्कुरादिकार्याविशेषितप्रतियोगिकस्येत्यर्थः । **अकरणस्य** करणसामान्याभावस्य, अवस्तुन्यकरणं सिद्धमेव बौद्धानामित्यत आह–**वस्तुनि**, वस्तुमात्रे, **असिद्धेरिति** यावत्सत्त्वं किञ्चित्करणाभ्युपगमादिति भावः । **तन्निरूपितविरोधस्य दूरापास्तत्वादिति**, बौद्धमते करणस्य यत्किमपि करोति तदेव सदिति नियमसिद्धस्य वस्तुमात्रे सत्त्वात्तद्विरोधिनस्सामान्यतोऽकरणस्य कुत्रापि वस्तुन्यसिद्धेस्तत्प्रतियोगिकस्य विरोधस्यासंभवादित्यर्थः । उक्तनियमानभ्युपगन्तॄणामस्माकं मते तु स्थिरे वस्तुन्यऽकरणसिद्धावपि सहकारिलाभालाभरूपकालभेदेन करणाकरणयोस्सत्त्वे बाधकप्रमाणाभावादेव न विरोध इति भावः । विरोधो हि द्विप्रकारः एक एकाधिकरणाऽवृत्तित्वलक्षणात्मा द्वितीयश्चैकावच्छेदेनैकाधिकरणावृत्तित्वलक्षणात्मकः, तत्राद्यपक्षमाश्रित्य द्वितीयपक्षं दूषयति–**सविशेषणस्यापीति**, अङ्कुरादितत्तत्कार्यविशेषितकरणाकरणयोरेकस्मिन् बीजे एकस्मिन् काले इदं बीजमिदानीमेतद्देशेऽङ्कुरकार्यकारि नान्यदेश इति प्रतीत्या स्वेतरदेशभेदावच्छेदेनैकस्मिन् देशे इदमिदानीमेतद्देशे तत्कार्यकारि नान्यदेतिप्रतीत्या पूर्वोत्तरकालाऽवच्छेदेनानुभूयमानयोर्विरोधानवकाश एव, दृष्टान्तोऽयं बौद्धैरप्यभ्युपगन्तव्य एव, अन्यथा तद्बीजक्षणकार्यस्य सर्वदेशव्यापकत्वं प्रसज्येत, नहि प्रमीयमाणे विरोध इति वक्तुं शक्यं, तथापि तत्त्वे त्वविरोधकथैवोच्छिद्येतेति भावः । **स्वरूपत इति**, अवच्छेदकविनिर्मोकेणेत्यर्थः, द्वितीयपक्षमङ्गीकृत्याह–**किन्त्वेककालावच्छेदेनेति**, तादृशविरोधस्य भिन्नकालावच्छेदेनैकत्र करणाकरणयोरुपगमेऽपि नापहतिरित्याह–**न चैकका-**

लावच्छिन्नमिति। परस्पराभावव्याप्यत्वपर्यवसितस्य परस्पराभावनिष्ठापाद्यतानिरूपितापादकत्वलक्षणविरोधस्य निषेधे हेतुमाह—

न द्वितीयः। भावाभावव्यतिरिक्तयोः करणाकरणयोरसिद्ध्याऽभेदे आपाद्यापादकभावायोगात्। व्यापारापरपर्यायसहकारिभावाभावौ करणाकरणे कार्यभावाभावौ वेति अतिरेकसिद्धावपि स्वकाल एव स्वाभावप्रतिक्षेपवदकरणाभावमाक्षिपेत् करणं, न त्वन्यदा, नहि यो यदा नास्ति स तदा स्वाभावं प्रतिक्षेप्तुमर्हति, प्रतिक्षेप्तुं प्रतिक्षेपमाचरितुं भवितुमिति यावत्। अभावाभावस्य प्रतियोगिरूपत्वात्, विरोधिनोऽभावं वाऽऽक्षेप्तुमर्हति, स्वासत्त्वकालेऽपि स्वाभावप्रतिक्षेपे तदाऽपि तदभावानवकाशे स्वसत्त्वसाम्राज्यात्, स्वासत्त्वकालेऽपि स्वविरोधिनोऽभावाक्षेपे तदानीमपि तद्विरोध्यनवकाशात्, 'नासतो विद्यते भावो नाभावो विद्यते सत' इति सत्कार्यवादस्य प्रसङ्गात्॥

भावाभावव्यतिरिक्तयोरिति-उक्तलक्षणविरोधो हि परस्पराभावविभिन्नयोः परस्पराभावव्याप्यीभूतयोरेव, यथा शीतत्वोष्णत्वयोः, न च तथा प्रकृते, तथाहि यद्यत्र शीतत्वं स्यात्तर्ह्युष्णत्वाभावस्स्यात् एवमत्रोष्णत्वं यदि स्यात्तर्हि शीतत्वाभावस्स्यादित्यादौ यथाऽऽपादकीभूताच्छीतत्वादापाद्यस्योष्णत्वाभावस्यैवमुष्णत्वाच्छीतत्वाभावस्य विभिन्नत्वमत एव तद्व्यापकत्वमिति विरोधस्तथा यदि कारि स्यान्न स्यादकारि यद्यकारि स्यान्न स्यात्कारीत्यत्रापादकत्वेनाभ्युपगतात्करणादापाद्यस्याकरणाभावस्याकरणाच्च करणाभावस्य विभिन्नत्वमत एव तद्व्यापकत्वमिति स्यात्तदा स्याद्विरोधः, नचैवं, आद्ये करणेन सहाकरणाभावस्य भावरूपत्वेन द्वितीये चाकरणेन सह करणनिषेधस्याभावरूपत्वेनाभेदाद्व्याप्यव्यापकभावाभावात्, अत एवोक्तप्रसङ्गस्य तद्विपर्ययस्य चाप्रवृत्तिरिति भावः।

आपाद्यापादकयोर्भेदाश्रयणतोपि न बौद्धानामभिलषितसिद्धिरित्याह–व्यापारापरपर्यायेति, व्यापारश्चरमो व्यापारोऽपरपर्यायो नामान्तरं यस्य तादृशसहकारीत्यर्थः, तद्भावाभावौ तत्प्राप्त्यप्राप्ती तत्समवधानाऽसमवधाने इति यावत्, कार्यभावाभावौ फलोपधानानुपधाने इत्यर्थः । सहकारिसमवधानरूपमेकं करणमपरं फलोपधानरूपं,सहकार्यसमवधानरूपमकरणमेकमपरं फलानुपधानरूपं, तथा चापादकं यदा सहकारिसमवधानरूपं करणं तदापाद्यः फलानुपधानरूपस्याकरणस्याभावः,यदा तु फलोपधानरूपं करणमापादकं तदा सहकार्यसमवधानरूपस्याऽकरणस्याऽभाव आपाद्यः, एवं यदा सहकार्यसमवधानरूपमकरणमापादकं तदापाद्यः फलोपधानरूपस्य करणस्याभावः यदा च फलानुपधानरूपमकरणमापादकं तदापाद्यस्सहकारिसमवधानरूपस्य करणस्याभाव इत्येवमापाद्यापादकयोर्भेदसिद्धावपीति भावः । व्यापारापरव्यपदेशसहकारिभावाभावौ हि करणाकरणे कार्यभावाभावौ वा इत्यपि पाठः, अस्य च करणाकरणयोर्भावाभावरूपतास्फुटीकरणाय पूर्वेण सहान्वयः, व्यापारेत्यादेश्चरमव्यापारलाभालाभ एव पर्यवसानात्तौ कार्यभावाभावौ वा परस्परविरहरूपावेव करणाकरणे अतःकारणाद्भावाभावव्यतिरिक्तयोस्तयोरसिद्धिरित्यर्थः । करणाभावातिरिक्ताऽकरणाभ्युपगमेऽपि दोषमाह अतिरेकसिद्धावपीतीति व्याख्यानं बोध्यम् । स्वकालएवेत्यादि करणं यथा स्वकाल एव स्वाभावरूपाकरणस्य प्रतिक्षेपरूपं तथा स्वाभावातिरिक्तस्याप्यकरणस्य योऽभावस्तस्यापि स्वकाल एवाक्षेपकं नतु स्वानधिकरणकाले इत्यर्थः, तथा च करणकालातिरिक्तकाले करणधर्मिण्यऽकरणं न विरुद्धमिति भावः । एतदेव द्रढयति–नहीति,स्वाभावं प्रतिक्षेप्तुमर्हती–त्यस्य स्वाभावप्रतिक्षेपं संपादयितुमर्हतीति यथाश्रुतार्थपरित्यागे हेतुमाह-अभावाभावस्येति,स्वाभावाभावस्येत्यर्थः, प्रतियोगिरूपत्वादिति स्वाभिन्नत्वादित्यर्थः, तथा चाभेदे न संपाद्यसंपादकभाव इति भावः । विरोधिनोऽभावं वेति, विरोधिनः स्वाभाव-

भिन्नतया दर्शितस्वरूपस्याकरणस्याभावं वेत्यर्थः। नहि यो यदा नास्ति स तदेत्यस्यात्रानुषङ्गः। तथानभ्युपगमे स्वाभावप्रतिक्षेपपक्षे दण्डमाह—स्वासत्त्वकालेऽपीति। तदापीति, स्वानधिकरणकालेपीत्यर्थः। स्वविरोध्यभावाक्षेपकत्वपक्षे दोषमाह—स्वासत्त्वकालेपि स्वविरोधिन इति। तदानीमपीति, स्वसत्त्वकाले स्वविरोधिनोऽसत्त्ववत् स्वासत्त्वकालेऽपि स्वविरोधिनोऽनवकाशादसत्त्वं स्यादिति स्वविरोधिनस्सर्वदाऽसत्त्वं स्यादिति भावः। स्वसत्त्वसाम्राज्यादित्यनेन तद्विरोध्यनवकाशादित्यनेन च सदातनत्वापत्तौ बौद्धानां यदनिष्टं स्यात्तदाह नासत इति। परस्परभेदवत्ता वेति तृतीयविकल्पं निराकरोति—

नापि तृतीयः। एवं सति भिन्नधर्मसमावेशेन वैधर्म्यसिद्धावपि भेदासिद्धेः। अस्तु वा दण्डित्वावच्छिन्ने कुण्डलित्वावच्छिन्नभेदवदकरणावच्छिन्ने करणावच्छिन्नभेदोऽपि, तदव्याप्यवृत्तित्वस्य प्रतीत्यनुरोधेन दीधितिकृतापि स्वीकृतत्वान्नैतावतास्माकं प्रतिज्ञाक्षतिः, पराभ्युपगतस्वरूपभेदखण्डनेनैव स्याद्वादसिद्धेः, बुद्धिविशेषविषयत्वेनानुगतानां यावतामेकान्तवादीष्टप्रकाराणां खण्डन एव तद्वयापाराभ्युपगमात्। एतेनैवं सति परिमाणभेदोऽपि कालभेदेन न विरुद्ध्येत, तत्राप्येवं वक्तुं सुकरत्वादिति नास्मान् प्रति दूषणमिति मन्तव्यम्। रूपादिभेद इव परिमाणभेदेऽपि प्रत्यभिज्ञाबलसिद्धोर्ध्वतासामान्यैक्ये स्वरूपभेदाभावात्, कालभेदेनैवोभयसमावेशोपपत्तेः ॥

नापि तृतीय इति, एवं सतीति करणाकरणयोः परस्परभेदवत्त्वरूपविरोधे सतीत्यर्थः। भेदासिद्धेरिति, अन्यथा रूपरसादीनामपि परस्परभेदवतां विरोधापत्त्या तदध्यासादेकक्षणस्थितानामपि घटादीनां स्वस्माद्भेदसिद्धिस्स्यादिति भावः। आ-

र्हतसिद्धान्ते विभिन्नधर्मसमावेशाद्धर्मिणोऽपि भेदोऽभ्युपगत एव, अत एव धर्मरूपाणां पर्यायाणां सङ्ख्येयाऽसङ्ख्येयानन्ताना- मालिङ्गनेन धर्मिणोपि तथात्वं सङ्गच्छते,सङ्गच्छते च शुद्धव्यक्त्यात्मनाऽभिन्नस्वरूपस्यापि विशिष्टात्मना भेदाद् भेदस्य स्वाभाववति वृ- त्तेरव्याप्यवृत्तित्वमित्याकयन् लग्रन्थकारः भेदाभेदसंवलनतः क्षणिकाक्षणिकानेकात्मकतां सूचयन् बौद्धनैयायिकौ शिक्षयति-अस्तु- वेति । नन्वेवं भेदो व्याप्यवृत्तिरेवेतिनैयायिकसिद्धान्तो विलीयेतेत्यत आह-तदव्याप्यवृत्तित्वस्येति,अनुयोग्युपस्थापकपदसमानवि- भक्तिकपदसमभिव्याहृतस्य नञो भेदप्रत्यायकत्वेन शाखायां महीरुहः कपिसंयोगी न मूले इति प्रतीतिबलाद् दीधितिकृताप्यऽव्या- प्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदेऽव्याप्यवृत्तित्वस्याभ्युपगमादिति भावः । नन्वेवं सत्यकरणावच्छिन्ने कुशूलस्थबीजे करणावच्छि- न्नक्षेत्रस्थबीजभेदसिद्ध्या सुतरां क्षणिकत्वमेव सिद्धमिति विशिष्य प्रतिज्ञातस्य वस्तुनि स्थिरत्वस्य परित्यागात्प्रतिज्ञाहानिरूपनिग्रहस्था- नापत्तिस्स्यादित्यत आह-नैतावतेति, एतावता विशेषणभेदाद्विशिष्टयोर्भेदाभ्युपगमेन, अस्माकं, वस्तुत्वव्यापकं क्षणिकाक्षणि- कोभयरूपत्वमित्यर्हद्वचोवासितचेतसाम्,तथा च भवतु नैयायिकानामेकान्तस्थिरत्वाभ्युपगन्तॄणां विशिष्टयोर्भेदाभ्युपगमे क्षणिकत्वा- पत्त्या प्रतिज्ञाहानिः, न च स्याद्वादामृतपानासक्तानामस्माकं, क्षणिकत्वस्याप्यंशतस्स्वमतत्वेनांशतः प्रतिज्ञातस्यैव तस्य सिद्धेरिति भावः । तत्रैव बीजमाह-पराभ्युपगतेति, कुशूलस्थबीजधरणिस्थबीजयोस्स्वरूपतो भेदो ननु विशेषणभेदाद्भेद इत्यस्य बौद्धाभ्यु- पगतस्य खण्डनेनैवेत्यर्थः । स्याद्वादसिद्धिर्न स्वरूपभेदखण्डनमात्रेण किन्तु तद्विरोधिप्रकारमात्रखण्डनेनैवेति तेषां सर्वेषां सर्वेप्येका- न्तप्रकाराः खण्डनीयास्स्याद्वादपक्षश्च स्थाप्योऽस्माभिरित्यभिप्रायवतां स्याद्वादिनां बुद्धिस्थत्वेन रूपेण सङ्गृहीतानामेकान्तवादी- ष्टप्रकाराणां खण्डने स्याद्वादव्यापाराभ्युपगमान्नाप्रस्तुतदोषापत्तिरित्याह-बुद्धिविशेषविषयत्वेनेति, यद्यपि बुद्धिविशेषोऽनेका-

न्तत्वविरुद्धत्वप्रकारकं ज्ञानं तस्य च विषयत्वमनेकान्तत्वेऽप्यस्तीति तस्यापि खण्डनीयकोटौ प्रवेशः स्यात्, विशेष्यत्वाख्यविषयताया निवेशेऽपि कस्यचित्पुंसो भेदाभेदादिसम्बलनस्वरूपेऽप्यनेकान्तत्वविरुद्धत्वप्रकारकं भ्रमात्मकं ज्ञानं सम्भवत्येवेति प्रमात्मकत्वमपि तत्र निवेश्यम्, एवमपि न परीहारो भ्रमस्याऽप्यंशे प्रमात्वात्, सर्वांशे प्रमात्वं तु धर्मितयाऽसत एकान्तप्रकारानवगाहमानस्य प्रकृतज्ञानस्याप्यसम्भवेन विवक्षितुमशक्यम्, किञ्चानेकान्तत्वविरुद्धत्वप्रकारकत्वेन ज्ञानं निवेश्य तद्विषयत्वेनैकान्तवादीष्टप्रकाराणामनुगमनं शिरोवेष्टनेन नासिकास्पर्शमेवानुकरोति, यतोऽनेकान्तत्वविरुद्धत्वेनैव तेषामनुगमनं न्याय्यम्, एतेनैकान्तवादीष्टप्रकारत्वप्रकारकज्ञानविषयत्वेनानुगमनमपि व्याख्यातम्, तथाप्युक्तज्ञानमत्र न तादृशज्ञानत्वप्रमात्वादिनाऽनुगमकशरीरे प्रविष्टं, किन्तु तद्व्यक्तित्वेनैव तन्निरूपितविशेष्यत्वाख्यविषयत्वं तद्व्यक्तिरेव वा विशेष्यत्वाख्यविषयतासम्बन्धेनानुगमिकेत्यावेदयितुं बुद्धिविशेषेत्युक्तम् । एतेनेति, पूर्वोक्तयुक्त्या वक्ष्यमाणयुक्त्या चेत्यर्थः । एवं सतीति एकस्मिन्नेव धर्मिणि विभिन्नकालावच्छेदेन करणाकरणयोस्सत्त्वाभ्युपगमे सतीत्यर्थः । एवं वक्तुं सुकरत्वादिति एककालावच्छिन्नयोरेव परिमाणयोर्विरोध इति वक्तुं सुशक्यत्वादित्यर्थः । नास्मान् प्रतीत्युक्त्या नैयायिकादीन् प्रत्येतदपि दूषणं भवत्येवेत्यभिव्यज्यते, रूपादिभेद इव परिमाणभेदेऽपीति, पाकस्थले पीठरपाकवादिनां मते एकस्मिन्नेव घटाद्यवयविनि पीलुपाकवादिनां मते तु परमाणावग्निसंयोगाद्यथापूर्वरूपविनाशस्योत्तररूपोत्पादस्य चाभ्युपगमात्कालभेदेन नानारूपवदस्मन्मते अवस्थितद्रव्य एव संयोगिद्रव्योपचयेनाधिकाकाशप्रदेशावगाहनापरिणामविशेषोत्पत्तिद्वारा पूर्वपरिमाणनाश उत्तरपरिमाणोत्पत्तिश्च भविष्यतीत्येवं कालभेदेन नानापरिमाणेऽपीत्यर्थः । ननु पाकजस्थले स एवायं घट इति प्रत्यभिज्ञैव घटस्य तादवस्थ्ये प्रमाणं, नचात्र किमपि प्र-

माणमित्यत आह–प्रत्यभिज्ञाबलेति । प्रतिक्षणमवयवोपचयापचयाभ्यां परिमाणभेदेन भिन्नभिन्नशरीरादिव्यक्तौ सत्यामपि तदेवेदं शरीरं बाल्युवादिभेदेन तद्विशिष्टात्मनो भेदेपि स एव पुरुषः स एवात्मा एवं मृत्पिण्डशरावोदञ्चनादिषु तदेव मृद्‌द्रव्यमित्यादिरूपा या जाग्रत्प्रभावा प्रत्यभिज्ञा तद्रूपप्रमाणबलात्पूर्वापरव्यक्त्यनुगतस्योर्ध्वतासामान्याख्यद्रव्यस्य सिद्धौ सत्यां पूर्वोत्तरपरिमाणरूपविशेषण-भेदेन तद्विशिष्टयोर्भेदेऽपि शुद्धव्यक्त्यात्मना भेदस्याभावात्तस्मिन् द्रव्ये पूर्वोत्तरकालावच्छेदेन पूर्वोत्तरपरिमाणयोस्समावेशोऽविरुद्ध एवेति भावः । नचोक्तप्रत्यभिज्ञा लूनपुनर्जातकेशनखादिप्रत्यभिज्ञेव प्रमाणभावं नावतरतीति वाच्यं, तत्र दलितपुनरुदितनखशिख-रादावन्तरालेऽदर्शननिमित्तकस्य बाधकप्रत्ययोदयस्य सद्भावात्, अत्र च तदभावात्, न च तथापि सा सजातीयाऽभेदमेवावलम्बत इति तत्रैव प्रमाणं न व्यक्त्यभेद इति वाच्यं, प्रकृते साजात्यस्योर्ध्वतासामान्याख्यद्रव्यात्मकत्वेन तद्भाने तदभिन्नव्यक्तिभानस्याप्य-वश्यंभावात् । किञ्च यदि बाल्युवादिभेदेनैकान्ततः शरीरस्य तद्विशिष्टात्मनश्च भेद एव, तर्हि बालावस्थायामनुभूतदुराचरणः पुमान् पूर्वमहमस्पृश्यगोचरसंस्पर्शादिव्यवहारमनुष्ठितवानिति स्मरणतः तरुणावस्थायां लज्जां पुरुषान्तरवन्न प्राप्नुयात्, एतत्तत्त्वं व्यासतो-ऽस्मदुपज्ञस्याद्वादबिन्दौ प्रपञ्चितं,तत एवावसेयम्,भोजनादावाहृते यत्र शरीरादावुत्कृष्टपरिमाणान्तरमुपलभ्यते तत्राहारादिद्रव्यसं-योगेन तत्परमाणौ क्रिया ततोविभागस्तदनन्तरमारम्भकतत्संयोगनाशस्तेन द्व्यणुकनाशस्तस्मात्समवायिकरणनाशात्तत्परिमाणनाशः ततो द्व्यणुकनाशेन त्रसरेणुविनाशः पश्चात्तन्नाशात्तत्परिमाणनाशश्चेत्येवं पूर्वपूर्वाऽवयवनाशेन तत्समवेतावयविपरिमाणयोर्नाशक्रमे-णाऽऽन्त्यावयविनस्तत्परिमाणस्य च नाशः, तदनन्तरमदृष्टवदात्मसंयोगात्स्वतन्त्रेषु परमाणुषु क्रियादिक्रमेण नानाद्व्यणुकोत्पत्तिः द्व्यणुकत्रयादिसंयोगात्त्रसरेण्वाद्युत्पत्तिक्रमेणोत्पन्ने वपुष्यवयवगतबहुत्वादिविशेषादुत्कृष्टपरिमाणान्तरोत्पत्तिः, अथवा त्रितन्तुकप-

टनाशादवस्थितावयवेभ्य एवावयवान्तरसंयुक्तेभ्यश्चतुस्तन्तुकपटोत्पत्ताविव पूर्वशरीरनाशादवस्थितावयवेभ्य एव भुक्तान्नपरिपाकपरिणतावयवान्तरसंयुक्तेभ्यश्शरीरान्तरोत्पत्तौ तत्र साक्षादवयवमात्रगतबहुत्वविशेषात्परिमाणान्तरोत्पत्तिः, न तु तस्मिन्नेवावस्थितशरीरद्रव्यधर्मिणि पूर्वपरिमाणनाशेन परिमाणान्तरोत्पत्तिः, परिमाणस्याश्रयनाशैकनाश्यत्वनियमात्, न वा पूर्वतनपरिमाणवच्छरीरसत्त्वकाल एव तेषामवयवानां जाठराग्न्यादिनाऽवयवरूपतामापन्नैर्भुक्तद्रव्यारम्भकपरमाणुसंहतिविशेषैस्सहाऽऽरंभकसंयोगेभ्यस्तत्र शरीरान्तरोत्पादद्वारेण तदवयवबहुत्वसंख्ययोत्कृष्टपरिमाणान्तरोत्पत्तिः, तथा सति तत्कालवर्त्तिपूर्वोत्पन्नशरीरावयवेषु पूर्वशरीरमिव शरीरान्तरमपि संयुक्तभुक्तद्रव्यावयवेष्विव समवेतं स्यात्, तच्च न युक्तं, मूर्त्तानां समानदेशत्वविरोधनियमादित्याशयवतां नैयायिकानां मतमाह—

नैयायिकास्तु बाधकबलेन कालभेदस्य तत्राविवक्षितत्वान्नैतद्वक्तुं सुकरं, तथाहि—नारब्धद्रव्यैरेवावयवैर्द्रव्यान्तरमारभ्यते, एककालावच्छेदेन मूर्त्तान्तरेण समं मूर्त्तस्यैकधर्मिसमवेतत्वविरोधात्, न चैकतन्तुकपटस्थलेंऽशुसंयोगानामेव पटासमवायिकारणत्वात् तन्तुपटयोरेकत्र समावेशात् नैवं, कार्यैकार्थसमवेतस्यैव संयोगस्य द्रव्यासमवायिकारणत्वादंशूनां पटसमवायिकारणत्वायोगात्, वेमाभिघातेन महातन्तुविनाश एव खण्डतन्तुभ्यः पटोत्पादाभ्युपगमात्। अन्यथा तु पटसंस्थानसारूप्याद् भ्रान्त एव पटप्रत्ययः॥

नैयायिकास्त्विति अस्याग्रिमेणाहुरित्यनेनान्वयः। कालभेदस्य तत्राविवक्षितत्वादिति कालभेदेनाविरोधस्य परिमाणयोर्वक्तुमशक्यत्वादित्यर्थः। बाधकमाह—तथाहीति, आरब्धद्रव्यैरिति आरब्धद्रव्यवद्भिः समवायसम्बन्धेन द्रव्यान्तर-

विशिष्टैरिति यावत् । **मूर्त्तान्तरेणेति** एतच्च नामूर्त्तस्य द्रव्यस्य व्यवच्छेदार्थं, तस्य च कुत्राप्यऽसमवेतत्वेन तेन समं समवेतत्वस्यैवाऽप्राप्तेः, किन्त्वमूर्त्तानां रूपादीनामिति बोध्यम् । यत्रैकेन बृहत्तन्तुनाऽऽतानवितानभावेन पटोत्पत्तिस्तत्र तन्त्वन्तराऽभावेन तत्संयोगस्यासमवायिकारणत्वासंभवात् तन्तुतदंशरूपावयवावयविनोरपि संयोगाऽसंभवात् तत्तत्तन्त्वारम्भकांशूनामेव मिथः संयोगा असमवायिकारणानि वाच्याः तादृशसंयोगाश्च यत्रैव समवेतास्तत्रैव समवायेन कार्योत्पादका इति नियमात् स्वसमवायिषु तन्तुमत्स्वंशुषु समवायेन पटोत्पत्तिस्स्वीकार्येति तन्तुना पटस्यैकदा समानदेशत्वादुक्तनियमे व्यभिचार इत्याशङ्क्य प्रतिक्षिपति—**नचेति**, अस्य नैवमित्युत्तरत्र सम्बन्धः, निषेधे हेतुमाह—**कार्यैकार्थसमवेतस्यैवेति** । ननु पटो यदोक्तासमवायिकारणबलादंशुष्वप्युत्पद्यते इत्यभ्युपगम्यते तदांशूनामपि पटाधिकरणत्वेन तत्संयोगे कार्यैकार्थसमवेतत्वमक्षतमित्यत आह—**अंशूनामिति**, द्वितन्तुकादिपटस्थले तन्तुष्वेव पटोत्पत्तेरवधारणेन समवायेन पटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन कारणत्वस्य सामान्यत एव निश्चिततयांऽशूनां पटसमवायिकारणत्वाभावेन तद्गतसंयोगस्य कार्यैकार्थसमवेतत्वं न संभवत्येवेति भावः । अत्र "नचैकतन्तुकपटेऽंशुसंयोगानामेवासमवायिकारणत्वात्कार्यैकार्थसमवेतस्यैव संयोगस्य द्रव्यासमवायिकारणत्वात्पटस्याप्यंशुदेशत्वमिति वाच्यं तन्तुत्वेन पटसमवायिकारणत्वादंशूनां तथात्वायोगादित्यपि पाठः" अत्र पटस्यांशुदेशत्वे हेतुः **कार्यैकार्थेति, तथात्वायोगादिति** अंशूनां पटसमवायिकारणत्वाऽयोगादित्यर्थः । अथैवं सति कथं तत्र पटप्रत्यय इत्यत आह—**वेमाभिघातेनेति**. वेमाद्यभिघातेनेत्यपि पाठः । **खण्डतन्तुभ्य इति**, एतेन खण्डत्वेनोत्पन्नतन्तूनां समवायिकारणत्वं तत्संयोगानाञ्चाऽसमवायिकारणत्वं सूचितम् । यत्र वेमाद्यभिघातेन न महातन्तुविनाशस्तत्र नोत्पद्यत एव पटः, पटप्रतीतिस्तु तन्तौ पटाकारसारूप्याद् भ्रान्तैवेत्याह—**अन्यथेति**, तत्रांशुतन्तुसंयोग एवासमवायिका-

रणं तस्य चांशौ सत्त्वेपि न तत्र पटोत्पत्तिः, किन्तु तस्मिन्नेवैकस्मिन् तन्तौ,पटं प्रति तन्तुत्वेनैव समवायिकारणत्वात्,नचाऽसमवायिकारणस्य स्वाश्रये यावत्येव कार्यजनकत्वमिति नियमः, किन्तु स्वाश्रये, नचावयवावयविसंयोगो न प्रमाणविषय इति वाच्यं, शिरसि शरीरसंयुक्तः पाणिरिति प्रत्ययादवयवद्वयसंयोगजन्यावयवावयविसंयोगस्यावश्यमभ्युपगन्तव्यत्वादित्येकदेशिनामेकतन्तुकं पटमङ्गीकृत्य तन्तुत्वेन कारणताया अपि संरक्षकानां मतमाशंक्य निराकरोति—

अवयवान्तरावच्छेदेनावयविसंयोगोऽवयवे न विरुध्यते, शिरसि शरीरसंयुक्तः पाणिरिति प्रत्ययात्, तथा चांश्वन्तरावच्छेदेन तन्तुसंयोगोऽसमवायी समवायी तु तन्तुरेव पटस्येत्यपि केचित्, नैतद् युक्तं, समवायिकारणातिरिक्तवृत्तेरपि संयोगस्य द्रव्यासमवायिकारणत्वे आकाशतन्तुसंयोगादेरपि तत्त्वापत्तेः, पटजनकविलक्षणसंयोगत्वावच्छिन्नं प्रत्यपि तन्तुत्वेन हेतुत्वाच्चेत्यपरे। तथा चारम्भपक्षे पूर्वद्रव्यनिवृत्तिः, अनिवृत्तावनारम्भः, पूर्वद्रव्यसत्त्व एव द्रव्यान्तरोत्पत्तौ युगपत्तादृशद्रव्यद्वयोपलम्भापत्तेः,सौसादृश्येन तिरस्कारात् तदभावस्य मूर्त्तयोः समानदेशत्वविरोधव्याप्त्यभावस्य चाभ्युपगमे उत्तरद्रव्य एव परिमाणान्तरोत्पत्तौ क्वचैकधर्मिसमवायः, पूर्वद्रव्य एव परिमाणान्तरोत्पत्तौ द्रव्यान्तरोत्पादाभ्युपगमवैयर्थ्यम्। एतेनारभ्यारम्भकवादानुसरणमपि निरस्तम् ॥

अवयवान्तरावच्छेदेनेति, तत्त्वापत्तेः द्रव्यासमवायिकारणत्वापत्तेः। तन्तुत्वेन हेतुत्वाच्चेति, तथा च तादात्म्यसम्बन्धेन कारणस्य तन्तोरंशावभावेन न तत्र पटजनकविलक्षणसंयोगोत्पत्तिः, उत्पन्नश्चांश्वन्तरावच्छेदेनांशौ तन्तुसंयोगो नासमवा-

यिकारणमिति भावः । आरब्धद्रव्यैरवयवैर्द्रव्यान्तरं नारभ्यत इति नियमलभ्यमर्थमुपसंहरति–तथाचेति, पूर्वद्रव्यनिवृत्तिरिति, तथा च पूर्वद्रव्यस्याश्रयस्य विनाशात्तद्गतपरिमाणस्यापि विनाशः परिमाणान्तरं च द्रव्यान्तर एवोत्पद्यत इति न पूर्वोत्तरपरिमाणयोरेकत्र समवाय इति भावः । पूर्वद्रव्यानिवृत्तावपि तत्र द्रव्यान्तरोत्पादाभ्युपगमे बाधकमाह–पूर्वद्रव्यसत्त्व एवेति, तदभावस्य युगपत्तादृशद्रव्यद्वयोपलम्भाभावस्य, अस्याभ्युपगमे इत्यनेन सम्बन्धः । द्रव्ययोर्युगपदवस्थानेऽपि किमुत्तरद्रव्ये परिमाणान्तरमुत्पद्यते पूर्वद्रव्ये वेति विकल्पद्वयम्, तत्र प्रथमपक्षे न परस्येष्टसिद्धिरित्याह–उत्तरद्रव्य एवेति, क्वैकधर्मिसमवाय इति पूर्वोत्तरपरिमाणयोरिति शेषः । द्वितीयविकल्पेऽपि विकल्पद्वयं पूर्वद्रव्ये परिमाणान्तरोत्पत्तौ द्रव्यान्तरोत्पादोऽभ्युपगम्यते नवेति, तत्र नाद्य इत्याह–पूर्वद्रव्य एवेति, अल्पावयवारभ्येऽपीत्यादिः, परिमाणान्तरोत्पत्ताविति, अनारम्भकादपि द्रव्यान्तर संयोगात्प्रकृष्टपरिमाणोत्पत्तिस्वीकारे इत्यर्थः । एतेन द्रव्यान्तरविशिष्टे द्रव्यान्तरोत्पादासम्भवेनेत्यर्थः , येष्ववयवेषु यदा द्रव्यान्तरसमवायस्तदानीं तेषु द्रव्यान्तरोत्पादासम्भवेनेति भावः । आरभ्यारम्भकवादानुसरणमिति, अवयविद्रव्याणां स्वावयवावयवपरंपरास्वपि समवाय इति वादानुसरणमित्यर्थः, परमाणुद्व्यणुकादिभिर्द्व्यणुकत्रसरेण्वादिकमारभ्य स्वस्वान्तिमावयविद्रव्यमारभ्यत इति मुख्यावयवानामिव परंपराऽवयवानामप्यवयविद्रव्योत्पादे व्याप्रियमाणत्वात्स्वावयवावयवपरंपरास्वप्यवयविद्रव्याणां समवाय इति भावः । न चांशौ पटः कपालिकायां च घट उत्पन्न इति प्रत्ययाभावान्नोक्तं युक्तमिति वाच्यं, यतो यत्रैककालावच्छेदेनैव घटाद्यारम्भकसर्वद्व्यणुकानां विनाशस्तत्र तन्नाशेन त्रसरेणुनाशस्तेन च चतुरणुनाश इत्यादिक्रमेण घटादिपर्यन्तनाशाभ्युपगमेऽन्तरानन्तक्षणव्यवधानेन तावत्कालमवस्थानं घटस्योररीकर्त्तव्यमिति तत्रानन्तसंयोगविभागाद्युत्पत्तिकल्पनागौरवं स्यात्, आरम्भवादिपक्षे यदेव प्रति-

योगितासम्बन्धेन समवेतकार्यद्रव्यनाशं प्रत्यभ्युपगतं स्वप्रतियोगिसमवेतत्वसम्बन्धेन समवायिकारणनाशस्य कारणत्वं तदेवारभ्यारम्भकवादात्मकेऽस्मन्मतेऽपीति द्व्यणुकरूपसमवायिकारणनाशस्योक्तसम्बन्धेन त्रसरेण्वादिघटपर्यन्ते सद्भावाद् युगपदेव त्रसरेण्वादिघटपर्यन्तस्य विनाशादेककालावच्छेदेन प्रतियोगितासम्बन्धेन विनाशा भविष्यन्त्येवेति न तावत्क्षणं घटावस्थानमिति मतं, प्रत्युक्तमित्यर्थः । न च मूर्तद्वयस्य समानदेशत्वविरोध इति नियमो महावयव्यात्मकमूर्तद्वयस्यैकस्मिन् देशे युगपद्वृत्तित्वाननुभवादेव तस्यैव न समानदेशत्वमित्येतावन्मात्रपरः, नत्ववयवावयविनोरपि, तत्र तदुपगमे क्षत्यभावादिति वाच्यं, येन कपालद्वयेन घट उत्पादितस्तेनैव घटवता घटान्तरं नोत्पाद्यत इति समवायेन द्रव्योत्पादं प्रति समवायेन द्रव्यं प्रतिबन्धकमिति प्रतिबध्यप्रतिबन्धकभावस्यावश्यकतया घटाद्यवयवस्य कपालादेः कपालिकादिस्वावयवापेक्षयावयविरूपस्य प्रतिबन्धकस्य कपालिकादौ सत्त्वेन तत्र घटादेरुत्पत्त्यसम्भवात्, समवायतादात्म्यसम्बन्धाभ्यां घटत्वेन कपालत्वेन घटकपालयोः पटत्वेन तन्तुत्वेन च पटतन्त्वोः कार्यकारणभावात्कपालिकादिषु घटस्यांश्वादिषु च पटस्योत्पत्त्यसम्भवाच्चेत्यलं पल्लवितेन । द्वितीयविकल्पे अल्पावयवारभ्येपि पूर्वद्रव्येऽनारम्भकादपि द्रव्यान्तरसंयोगात्प्रकृष्टपरिमाणोत्पत्तिस्वीकारे द्रव्यान्तरोत्पादो नाभ्युपगम्यत एवेत्याकारकं द्वितीयविकल्पमाशङ्क्य निराकरोति—

न चावस्थितद्रव्य एव संयोगिद्रव्योपचयात् पूर्वपरिमाणनाशः परिमाणान्तरोत्पादश्च स्यादिति वाच्यम्, परिमाणस्याश्रयनाशैकनाश्यत्वात्, अवयवमात्रसंयोगबहुत्वादेरेवावयविपरिमाणोत्पादकत्वाच्च, अन्यथा धरण्यादिपतितमृत्पिण्डादेरवयवान्तरसंयुक्तावयवस्य च पूर्वपरिमाणनाशः प्रकृष्टतरपरिमाणान्तरोत्पादश्च स्यादित्याहुः । तच्चिन्त्यम् ॥

न चावस्थितद्रव्य एवेति । परिमाणस्येति, प्रतियोगितासम्बन्धेन परिमाणध्वंसं प्रति स्वप्रतियोगिसमवेतपरिमाणत्वसम्बन्धेनाश्रयनाशस्य कारणस्याभावेन नावस्थितद्रव्य एव पूर्वपरिमाणनाश इति भावः । आश्रयनाशैकनाश्यत्वादित्यनेन रूपादेर्यथा क्वचिदाश्रयनाशान्नाशः क्वचिच्च पाकान्नाश इति व्यभिचारपरिहारायाश्रयनाशजन्यरूपनाशं प्रत्याश्रयनाशत्वेन कारणत्वं तथा यदि परिमाणस्याप्यन्यतो नाशः स्यात्तदा आश्रयनाशजन्यपरिमाणनाशम्प्रत्येवाश्रयनाशस्य कारणत्वमिति संयोगिद्रव्योपजनितपरिमाणनाशस्य कार्यतावच्छेदकानाक्रान्तत्वान्न तत्राश्रयनाशापेक्षेत्यवस्थित एव द्रव्ये पूर्वपरिमाणनाशः परिमाणान्तरोत्पत्तिश्चेति वक्तुं शक्येत, नचैवमित्यर्थ उपक्षिप्तः । समवायसम्बन्धेन परिमाणम्प्रति स्वनिष्ठसमवायसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणतासमनियताधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन सङ्ख्यासंयोगादीनां कारणत्वमिति अवयवानवयवसाधारणसंयोगबहुत्वादेरुक्तसम्बन्धेन स्वाऽनाश्रये द्रव्ये परिमाणोत्पादनाऽसम्भवादित्याह—अवयवमात्रेति, स्वावयवस्य स्वावयवभिन्नेन सह संयोगोऽपि स्वावयवसंयोग एवेति तन्निवृत्त्यर्थं मात्रपदम्, संयोगश्चात्र प्रचयाख्यः, तस्यैव परिमाणविशेषप्रयोजकत्वात्, मात्रपदं बहुत्वविशेषार्थकेन बहुत्वपदेन सहाप्यन्वेति, तेन नाऽवयवानवयवसाधारणबहुत्वतः परिमाणोत्कर्षप्रसङ्गः, नचैकस्यैवावयविनोऽवयवेषु पुरुषभेदात्कालभेदाच्चापेक्षाबुद्धिभेदात्प्रभूतबहुत्वोत्पत्तौ नानापरिमाणोत्पत्तिप्रसङ्ग इति वाच्यम्, अनेकेषां तन्तुरूपाणामेकपटरूपासमवायिकारणत्वस्य दर्शनेनासमवायिकारणनानात्वस्य कार्यनानात्वाप्रयोजकत्वादन्यकालीनानां बहुत्वानामव्यवहितपूर्ववर्त्तित्वाभावेनाकारणत्वाच्च, न च यदवयवेष्ववयविपरिमाणोत्पत्तेः प्राक्कस्यापि पुंसोऽपेक्षाबुद्धिर्न जाता तत्राल्पावयवद्रव्यतोऽवयविनि परिमाणोत्कर्षो न स्यात्तत्कारणस्यावयवबहुत्वस्य तत्राभावादिति वाच्यं तत्रापि योगिनोऽपेक्षाबु-

द्धितो बहुत्वोत्पत्तिसम्भवात्, आदिना परिमाणं परिग्राह्यम्, मात्रपदप्रयोजनमाह–अन्यथेति, धरण्यादिपतितमृत्पिण्डादेरिति, धरण्यादिना मृत्पिण्डादेस्संयोगेनेत्यर्थः, स्वावयवस्य येन केनापि संयोगेनेति भावः। संयोगपदस्य प्रचयाख्यसंयोगविशेषपरत्वफलमाह–अवयवान्तरसंयुक्तावयवस्येति, शिरोहस्तसंयोगेऽपि न परिमाणान्तरोत्पत्तिरिति संयोगविशेष एव परिमाणजनक इत्याशयः। चिन्ताबीजमुपदर्शयति—

अवस्थितद्रव्य एव संयोगिद्रव्योपचयेनावगाहनापरिणामविशेषजननद्वारा पूर्वपरिमाणनाशपरिमाणान्तरोत्पादाभ्युपगमे दोषाभावात्, रूपादेरिव परिमाणस्याश्रयनाशैकनाश्यत्वे मानाभावात्, परिमाणनाशत्वावच्छिन्ने आश्रयनाशत्वेन हेतुत्वकल्पने गौरवात्। न चावयवबहुत्वमात्रं नावयविपरिमाणोत्पादकं, सर्वेषामेवावयवेषु परार्द्धपर्यन्तसङ्ख्यायाः सम्भवेन तदुत्कर्षात् परिमाणोत्कर्षासिद्धेः, किन्त्ववयवमात्रबहुत्वमिति संयोगिद्रव्योपचयात् परिमाणान्तरानुत्पाद इत्यपि साम्प्रतम्, उक्तद्वारसम्पत्तौ तस्याप्रयोजकत्वात्, दृश्यते चाहारादिसंयोगिद्रव्योपचयादेवावस्थितशरीरस्य परिमाणान्तरोत्पादः, तस्याप्येकान्तेनानवस्थितत्वोपगमे च प्रतिक्षणं वृद्ध्यनुरोधेन प्रतिक्षणं नाशः स्यात्, तथोपगमे च तद्दृष्टान्तेनैव सर्वत्र क्षणिकत्वं साधयन् बौद्ध एव विजयेत॥

अवस्थितद्रव्य एवेति, अवगाहनापरिणामविशेषेति, अत्र विशेषपदोपादानाद् धरण्यादिपतितमृत्पिण्डादिस्थले न व्यभिचार इति प्रदर्शितम्, आश्रयनाशमात्रस्य परिमाणनाशहेतुतां निराकरोति–रूपादेरिवेति, गौरवादिति, परि-

माणस्य सङ्ख्यादित्रयादुत्पत्तेस्तत्कार्यकारणभावत्रयं कल्प्यं स्यादित्यप्यत्र गौरवं दृश्यम्, अस्माकन्तु सर्वत्रैवावगाहनापरिणामविशेषत्वेनैव परिमाणनाशं प्रति परिमाणोत्पादं प्रति च कारणत्वमिति लाघवम्, नैयायिकहृदयमाकृष्य निषेधति, न चेति, सांप्रतमित्युत्तरेणान्वयः । उक्तद्वारसम्पत्ताविति, संयोगिद्रव्योपचयेनावगाहनापरिणामविशेषजननद्वारसम्पत्तावित्यर्थः । तस्य अवयवमात्रबहुत्वस्य । एतदेव दृष्टान्तोद्भावनेन भावयति—दृश्यते चेति:, यस्यैव पुरुषस्य वाल्यावस्थायामल्पपरिमाणं शरीरं दृष्टं तस्यैव वृद्धावस्थायां महत्परिमाणं तत्परिदृश्यते, न च तदानीमेव स्वभावात्तन्महदुपजातं, किन्तु तनोस्सच्छिद्रत्वेनात्मस्वाभाव्याच्च प्रतिक्षणमनाभोगिकाहारद्रव्योपचयात् सान्तरमाभोगिककवलाहारादिद्रव्योपचयाच्चावस्थितमेव तत्र प्रतिक्षणभाविपरिमाणपरावृत्त्या, तदन्यथानुपपत्त्या शरीरस्याप्येकान्तेन प्रतिक्षणं परावृत्त्यभ्युपगमे तद्दृष्टान्तेन वस्तुत्वव्याप्कं क्षणिकत्वं साधयतो बौद्धस्यैव साम्राज्यं स्यादिति भावः । ननु नाहारादिसंयोगिद्रव्योपचयमात्राच्छरीरस्य विनाशः येन क्षणिकत्वापत्तिस्स्यात्, किन्तु क्रियाविभागारम्भकसंयोगनाशादिक्रमेणेति यदि ब्रूयात्तदा दूषणान्तरमाह-

**किञ्चावयवमात्रबहुत्वादिकमपि महापरिमाणोत्पादे वज्रादौ व्यभिचारि, बहुत्वविशेषस्तु संयोगिद्रव्यसाधारण एव, दृष्टं च पीतोद्गीर्णबहुप्रमाणदुग्धकर्षमितपारदद्रव्यदृष्टान्तेन बह्ववयवकस्यापि क्षेत्रप्रत्यासत्तिकृतसङ्कोचविशेषादल्पपरिमाणत्वमित्युक्तद्वारसम्पादकतयैवावयवसंयोगबहुत्वाद्याश्रयणं युक्तं, नान्यथा, परिणमतां वाऽवस्थित एव द्रव्येऽवस्थितमेव परिमाणं संयोगिद्रव्यापचयादिना परिमाणान्तरेण, श्वेतनीलादि श्वेततरश्वेततमादिना परेषामवयविनि नानाविधचित्ररूपवदस्माकमवयवगतैकगुणकालकाद्येकगुण-**

ह्रस्वादिषड्गुणहानिवृद्धिशालिनानाविधगुणेनावयविगतगुणानामपि तादृशपरिणामोपपत्तेरनुभवस्यापि तत्तद्देशस्कन्धादिप्रत्यासत्त्या विचित्रस्यैव सार्वजनीनत्वात् ॥

किञ्चेति, अल्पपरिमाणवति वज्रादाववयवमात्रगतबहुत्वादिकं वर्त्तते न च तथापि महापरिमाणोत्पत्तिरित्यन्वयव्यभिचारान्न तत्कारणमिति भावः । पीतोद्गीर्णबहुप्रमाणेति, अस्य दृष्टान्तेनेत्यनेनान्वयः, तथा च पूर्वमल्पं दुग्धं पीतं तदेव पश्चाद्बहुप्रमाणमुद्गीर्णमिति दृष्टान्तेनानुभवसिद्धेनेत्यर्थः । कर्षमितपारदेति, संवादितश्चायं दृष्टान्तो भगवत्यां त्रयोदशशतकचतुर्थोद्देशकवृत्तौ भगवताऽभयदेवसूरिणा, तथा च तत्पाठः, "तथौषधिविशेषापादितपरिणामादेकत्र पारदकर्षे सुवर्णकर्षशतं प्रविशति पारदकर्षीभूतं च सदौषधिसामर्थ्यात्पुनः पारदस्य कर्षः सुवर्णस्य च कर्षशतं भवति विचित्रत्वात्पुद्गलपरिणामस्येति, अयमेव चार्थो द्रव्यलोकप्रकाशे द्वितीयसर्गे श्रीमद्विनयविजयोपाध्यायैरुट्टङ्कितः, तथा च तत्पाठः । "परमाण्वादिना द्रव्येणैकेनापि प्रपूर्यते ॥ खप्रदेशस्तथा द्वाभ्यामपि ताभ्यां तथा त्रिभिः ॥४३॥ अपि द्रव्यशतं मायात् तत्रैवैकप्रदेशके ॥ मायात्कोटिशतं मायादपि कोटिसहस्रकम् ।४४॥ अवगाहस्वभावत्वा–दन्तरिक्षस्य तत्समम् ॥ चित्रत्वाच्च पुद्गलानां परिणामस्य युक्तिमत् ॥४५॥ द्वयोरपि क्रमादृष्टान्तौ–दीपदीपप्रकाशेन यथाऽपवरकोदरं ॥ एकेनापि पूर्यते त–च्छतमप्यत्र माति च ॥ ४६ ॥ तथा–विशत्यौपधसामर्थ्या–त्पारदस्यैककर्षके ॥ सुवर्णस्य कर्षशतं–तौल्ये कर्षाधिकं न तत् ॥ ४७ ॥ पुनरौषधसामर्थ्यात्–तद्द्वयं जायते पृथक् ॥ सुवर्णस्य कर्षशतं पारदस्यैककर्षकः ॥ ४८ ॥ इति, अयं भावः, पूर्वमल्पं दुग्धं पीतं तदेव पश्चाद् बहुप्रमाणमुद्गीर्णमित्यनुभवसिद्धेन दृष्टान्तेनाल्पावयवकस्यापि प्रदीपादेर्विकोचभावेनावगाहनापरिणामविशेषान्महापरिमाणोत्पत्तिरिति व्यतिरेकव्यभिचा-

रात् कर्षमितपारदद्रव्यदृष्टान्तेन बह्वचयवकस्यापि वज्रादेरनन्तानन्तप्रादेशिकतैजसकार्मणस्कन्धादेश्च क्षेत्रप्रत्यासत्तिकृतसङ्कोचविशेषादल्पपरिमाणोत्पत्तिरित्यन्वयव्यभिचाराच्च नावयवमात्रगतबहुत्वस्य परिमाणविशेषजनकत्वं, किन्त्ववगाहनाविशेषस्यैव, अन्वयव्यतिरेकशालित्वात्, बहुत्वविशेषादिस्तु तत्संपादकतयैवाश्रयितव्य इति न पूर्वपरिमाणनाशेऽपि सर्वथा शरीरनाश इति । परिणामवादमाश्रित्य पक्षान्तरमाह–परिणमतां वेति। उक्तमर्थं दृष्टान्तेन द्रढयति–श्वेतनीलादीति, श्वेतः श्वेततरतमरूपेण, नीलश्च नीलतरतमरूपेण, एवं पीतादिरपि । परेषाम् नव्यनैयायिकानाम् । नानाविधचित्ररूपवदिति, एकस्मिन्नेवावयविनि नीलपीतादिनानाविधावयवगुणेन तत्तदवयवावच्छेदेनोपजायमाननीलपीतादिनानारूपात्मकचित्ररूपवदित्यर्थः। नन्ववस्थितद्रव्याभ्युपगमे तस्य स्वस्वरूपेण तत्तत्परिमाणवत्त्वेन च परिणामपक्षे परिमाणस्य स्वस्वरूपेण तत्तत्परिमाणत्वेन च भेदाभेदौ स्याताम्, न च तौ विरोधाद् युक्तावित्यत आह––

एकानेकत्वं तु सर्वत्र चित्रदृष्टान्तेनैवाविरुद्धमिति किंवृत्तचिदर्थान्तर्भावेणैव बाधकविरोधभेदोपन्यासः श्रेयान्नैकान्तत इति युक्तं पश्यामः । न चानेकान्तेऽप्येकान्तसिद्ध्यसिद्धिभ्यां व्याघातः, अभावप्रत्यक्षे प्रतियोग्यारोपहेतुतानयेऽनेकान्तानुभवे एकान्तारोपस्य हेतुत्वेऽपि ततो वस्त्वसिद्धेरिति दिग् ॥ तदेवमेकान्तवादिनं बौद्धं निरस्यन्नपि स्वमतैकान्ते निविशमानो नैयायिको न यथास्थितार्थभाषीति कटाक्षेणाह–एकान्तेनानेकान्तप्रतिक्षेपप्रकारेण दान्तं वशीकृतं हृदयं येषां ते तथा । तु पुनः, यथाप्रतिज्ञं स्वाभ्युपगमानतिक्रमेण, किम्, असुपरीक्षितम्, अत एव किञ्चिदनिर्द्धारितम्, अत्वदीयास्त्वदाज्ञाबाह्या वदन्ति,

तत् तु विमृश्यैव यावत्स्वसमयं नातिक्रामति तावच्चेतसि निधेयम्, न तु सर्वमिति त्वदुपदेश एव नः शरणमिति भावः ॥ १३ ॥

एकानेकत्वं त्विति । चित्रदृष्टान्तेनेति, एकस्मिन्नेव चित्ररूपे नव्यनैयायिकमतेन तत्तदवयवावच्छेदेन नीलत्वपीतत्वादिना चित्रत्वेन च भेदाभेदौ न विरुद्धौ, यद्वा योगाचारमतेनाकाराकारिणोरभेदान्नीलपीतादिसमूहालम्बनज्ञाने नीलपीतादितत्तदाकारभेदेन स्वरूपेण च भेदाभेदौ न विरुद्धौ तद्वदित्यर्थः । नन्वनेकान्तस्यैकान्तप्रतियोगिकभेदवत्त्वेन तत्र प्रतियोगिभूतस्यैकान्तस्य सिद्धिरस्ति नवा, सिद्धौ कथं तन्निषेधः, सिद्धेः प्रमाणाधीनत्वात् प्रमाणाक्रान्तस्य च निषेधाऽयोगात्, असिद्धौ कथं वस्तु नैकान्तात्मकमित्याकारकव्यवहारात्मा तन्निषेधः, तादृशव्यवहारात्मनि निषेधे व्यवहर्त्तव्यैकान्तभेदज्ञानस्य कारणत्वात्, तज्ज्ञाने प्रतियोग्यारोपस्य कारणत्वात्, तस्य चात्राभावात् प्रतियोगिनोऽप्रमितत्वात्, अप्रमितस्य चारोपायोगात्, तथा चोभयत्रानेकान्तवादासिद्धिरूप एव व्याघात इत्यभिप्रायेण शङ्कते—नचेति, शाब्दादिबुद्धौ व्यभिचारेणाऽभावज्ञानमात्रे प्रतियोग्यारोपस्य हेतुत्वे मानाभावादाह—अभावप्रत्यक्ष इति, अभावलौकिकप्रत्यक्ष इत्यर्थः, तत्रापि प्रतियोग्यारोपस्य हेतुत्वं विवादापन्नमित्यत आह—प्रतियोग्यारोपहेतुतानय इति, वस्त्वसिद्धेरिति, प्रतियोग्यारोपस्य भ्रमात्मकत्वात्. तत्र च प्रमाया अनपेक्षणादिति भावः । नह्यप्रमितमारोप्यत इति न्यायाद् यत्र कुत्रापि प्रमितस्यैवारोप इति प्रतियोग्यारोपात्पूर्वमपेक्षणीयायाः प्रतियोगिप्रमाया एकान्तत्वसिद्धिसद्भावात् स्यादेव स्वमतव्याघात इत्यत आह—दिगिति । अनेकान्तस्यापि स्यात्पदलाञ्छितत्वेन नयापेक्षया कथञ्चिदेकान्तः प्रमाणापेक्षया कथञ्चिदनेकान्त इत्येवं रूपत्वेन तत्रैवैकान्तत्वं प्रमितामति तदारोपस्स्यादेव । न चापसिद्धान्तः, यत

उक्तं सम्मतौ–"भयणा वि हु भइयव्वा, जह भयणा भयइ सव्वदव्वाइं। एवं भयणानियमो अ (वि) होइ समयाविरोहेणं ॥ इति ॥ नन्वनेकान्ते यदेकान्तत्वं प्रमितं तदप्यनेकान्तत्वसमानाधिकरणमेव,न च तादृशं शरीरादिवस्तुनि तन्निषिध्यते यादृशं च तद-समानाधिकरणं निषिध्यते न तादृशं क्वचिदपि प्रमितमिति कथमारोप इति चेत् ,मैवं, यादृशस्यैवारोपस्तादृशस्यैव प्रमितेरावश्यकत्वे प्रमितिर्हि तत्काले धर्मिणि सद्भूतस्यैव आरोपस्तु तत्काले तत्राऽसद्भूतस्यैव, तदभाववत्तया निश्चिते धर्मिणि तत्प्रकारकज्ञान-मारोप इति लक्षणादित्यारोपप्रमित्योः प्रकारांशेऽन्यादृशत्वात्कस्यापि क्वचिदपि निषेधो न स्यात्, तस्माद्यथा कथञ्चित्प्रमितत्वं यथा कथञ्चिचारोपितत्वमित्येवाश्रयणीयम्, तच्च प्रकृतेऽप्यस्तीत्यर्थिका दिगिति भावः। उत्तरार्द्धमवतारयति–तदेवमिति। तथेति एकान्तदान्तहृदया इत्यर्थः ॥ १३ ॥ अग्रिमश्लोकमवतारयितुं बौद्धाशङ्कात्मिकामवतरणिकामाह—

**ननु यथा नैयायिकानां परिमाणभेदे बाधकबलादविवक्षितकालभेदस्यैव विरोधस्य सिद्धिस्तथास्माक-मप्युक्तप्रसङ्गविपर्ययबलादकारिणः कार्यकारिभेदसिद्धिपर्यवसानेऽर्थतः करणाकरणयोः स्वरूपेणैव विरोधसि-द्धिः स्यात्। न च ताभ्यामेव भेदसिद्धौ कृतममुना विरोधेन तदुपजीविनेति दीधितिकारोक्तं युक्तं, व्यवहारान्तर्भावेणैव साध्यसिद्धेरधिकृतत्वात्, अन्यथा तादात्म्येन विरोधस्थले परस्याप्यगतेरिति बौ-द्धाशङ्कायामाह—**

**नन्विति,** परिमाणभेदे परिमाणद्वये, अविवक्षितकालभेदस्यैवेति, यदा तदा विनिर्मोकेण स्वरूपेणेवेत्यर्थः।ए-ककालावच्छेद्यत्वाघटितस्यैवेति यावत्, तथा च यदीदं द्रव्यं दीर्घं स्यात् ह्रस्वं न स्यात्, यदि च ह्रस्वं स्यात्, दीर्घं न स्यादि-

त्येवं यदा तदा विनिर्मोकेण प्रसङ्गः, अस्ति च ह्रस्वं तस्मान्न दीर्घम् अस्ति वा दीर्घं तस्मान्न ह्रस्वमिति विपर्ययः, अत्र परिमाणद्वयं स्वरूपेणैव विरुद्धं भिन्नकालावच्छेदेनैकत्र बाध्यमानवृत्तिकत्वे सति विरुद्धत्वात् यदेवं तदेवं यथा पृथिवीत्वजलत्वे यन्नैवं तन्नैवं यथा भिन्नकालावच्छेदेनैकत्रोत्पद्यमानं रूपद्वयमित्यनुमानं परिमाणद्वयविरोधसाधकमुन्नेयम्, उक्तप्रसङ्गविपर्ययबलादिति, यदि बीजं कारि स्यादकारि न स्यात् अकारि चैतत् तस्मान्न कारीति प्रसङ्गतद्विपर्ययबलादित्यर्थः। अत्रापि करणाकरणे स्वरूपेणैव विरुद्धे प्रसङ्गविपर्ययाभ्यां बाध्यमानविभिन्नकालवृत्त्येकधर्मिकत्वे सति विरुद्धत्वादित्यनुमानं करणाकरणयोः स्वरूपतो विरोधसाधकमुद्दङ्कनीयम्। ताभ्यां प्रसङ्गविपर्ययाभ्यां, भेदसिद्धौ कार्यकारिणोर्भेदसिद्धौ, विरोधेन करणाकरणयोस्स्वरूपतो विरोधोपन्यासेन, तदुपजीविनेति, कार्यकारिभेदसिद्ध्यपेक्षकेनेत्यर्थः, विरोधसिद्धेः प्रागेव भेदसिद्धेरिति भावः। अर्थतस्सिद्धिर्न प्रतिवादिनं प्रत्युपयुक्ता, किन्तु परार्थानुमानद्वारेणैव, तत्र च विरुद्धधर्माध्यासहेतुर्भेदसाधकतयाऽवश्यमुपन्यसनीयः, यथा घटपटयोः प्रत्यक्षतो भेदस्य सिद्धावपि तत्र विप्रतिपन्नं प्रति कथायां विरुद्धधर्माध्यासहेतोरेव तत्साधनं कुर्वन्ति व्यवहारिणस्तथाऽत्रापि प्रसङ्गविपर्ययाभ्यां भेदसिद्धिर्यद्यपि पर्यवसिता तथाऽपि सा प्रतिवादिनं प्रति नोपयुक्तेति तं प्रति कथाव्यवहारे विरुद्धधर्माध्यासहेतुकानुमानादेव तत्साधनं युक्तियुक्तमित्याशयेन दीधितिकाराक्षेपं निराकरोति–व्यवहारान्तर्भावेणैवेति, उक्तप्रकारानभ्युपगमे दण्डमाह–अन्यथेति, विरोधस्थल इति, निरुपाधिकभेदापन्नयोर्घटपटाद्योरित्यादिः। परस्यापि नैयायिकस्यापि। घटपटयोस्सर्वप्रमाणबलवत्तरप्रत्यक्षप्रमाणादेव भेदसिद्धावपि विप्रतिपन्नं जिज्ञासुं च प्रति तत्साधनार्थं नैयायिकस्य विरुद्धधर्माध्यासपर्यन्तानुधावनं विना नान्या गतिरिति भावः।

काले च दिश्यपि यदि स्वगुणैर्विरोधो, बाह्यो न कोऽपि हि तदा व्यवतिष्ठतेऽर्थः ॥
सौत्रान्तिको व्यवहरेत् कथमित्थमुच्चै–र्न त्वन्मतद्रुहमहो वृणुते जयश्रीः ॥ १४ ॥

काले च दिश्यपि यदि स्वगुणैरित्यादिश्लोकष्टीकाकारैरेव सुस्पष्टं विवृत इति न विव्रियते, ददतत्कालावच्छिन्नतदतद्देशावच्छिन्नकरणाकरणयोर्विरोधमात्रेण कथं बाह्यार्थमात्रोच्छेदापत्तिस्स्यात्, एकक्षणवर्त्तिनस्तस्य सत्त्वादित्यत आह–

काले च दिश्यपि देशेऽपि च, यदि स्वगुणैः करणाकरणपर्यायैर्विरोधः तदा न कोऽपि बाह्योऽर्थो व्यवतिष्ठेत, एकक्षणवृत्तेरपि तद्देशातद्देशाभ्यां स्वरूपतो भिदुरत्वात्, इत्थं च बाह्यार्थमात्रविलोपप्रसङ्गे सौत्रान्तिकः कथमुच्चैर्बाह्यार्थवादेन व्यवहरेत्, भग्नव्यवहारकथश्च यथा यथार्थाश्चित्यन्त इत्यादि पूत्कृत्य योगाचारनयं शरणीकुर्वन् कथं न प्रतिज्ञासन्न्यासनिग्रहस्थानमाप्नुयात् ॥

एकक्षणवृत्तेरपीति, एकक्षणस्थमपि कुर्वद्रूपात्मकं बीजादिकं स्वदेशावच्छेदेनैव नान्यदेशावच्छेदेनाङ्कुरादितत्कार्यकरणशीलमिति करणाकरणविरुद्धधर्मारोहणादेकक्षणवृत्तेरपि तस्य भिन्नत्वं स्यात्, तत्रापि प्रत्येकं तथैव भेदापत्त्यान्ततश्शून्यत्वपर्यवसानमेव स्यादिति भावः । व्यक्तीभविष्यति चैतत् पुरस्तात् । इत्यादीति, आदिपदेन " विशीर्यन्ते तथा तथा " इत्यादेः परिग्रहः । कथन्नेति, स्वोक्ते वस्तुत्वव्यापकं क्षणिकत्वमिति पक्षे परेण दूषिते तत्परित्यागेन ज्ञानत्वसमनियतं क्षणिकत्वमिति बौद्धशाखीययोगाचारसिद्धान्तमवलम्बमानस्स्वीकृतार्थपरित्यागरूपप्रतिज्ञासन्न्यासनिग्रहस्थानमाप्नुयादेवेति भावः ॥

एतत् सर्वं भवन्मताशातनाफलम्, यतस्त्वन्मतद्रुहं सूक्ष्मप्रेक्षाशालिनमपि, अहो इत्याश्चर्ये, जयश्रीर्न वृणुते, सा हि गुणरागिणी गुणतारतम्याभिज्ञा च नापातरमणीयप्रेक्षागुणमात्रस्पृहयालुः; किन्तु सकलनयहितावहशान्तोदान्तस्वभावस्य स्याद्वादव्यवहारिण एव कण्ठे वरणस्रजं निधत्त इति भावः ॥ अत्र यत् तावदुक्तं प्रसङ्गविपर्ययबलेन करणाकरणयोः स्वरूपतो विरोधः साधयितुं शक्य इति, तदयुक्तं, सामर्थ्यस्य करणत्वस्वरूपत्वे साध्याविशेषस्योक्तत्वात् ॥

सकलनयहितेति, परस्परसापेक्षैस्सकलनयैस्स्वात्मानं परं च यो हितमावहति करोति तस्यैव क्रोधाद्युपशमिनो गम्भीराशयवतस्स्याद्वादनीत्यनतिक्रमेण तत्त्वं प्रतिपादयतः कथायां जयः फलं, नैकान्तवादिनः, स्याद्वादिनोऽपि न क्रोधादिमूर्त्तेरनुदात्तस्वभावस्य चेति भावः । उक्तत्वादिति, यत्समर्थं तत्करोत्येवेत्यत्र सामर्थ्यं यदि फलोपधानरूपं तदा करणमपि तद्रूपमेवेति तर्के आपाद्यापादकयोरनुमितौ साध्यहेत्वोरविशेषप्रसङ्गस्स्यादित्याद्यर्थकेन " सामर्थ्यमत्र यदि नाम फलोपधान-मापाद्यसाध्यविभिदाविरहस्तदानीम् " इत्यादि श्लोकेनोक्तत्वादित्यर्थः ॥ ननु योग्यतावच्छेदकरूपमेव सामर्थ्यमभिधित्सितं तत्र च न साध्यावैशिष्ट्यादेर्दोषस्यावकाशं पश्याम इत्यत आह—

योग्यतावच्छेदकरूपस्यैव सामर्थ्यस्याभिधित्सितत्वे च तथाव्याप्तौ कालभेदानुप्रवेशमन्तरेणोपसंहर्तुमशक्यत्वात्, कुशूलस्थे सामर्थ्येन करणप्रसञ्जने इष्टापत्तेः, उत्तरकालं तत्रैव करणाभ्युपगमात्, विपर्यये च हेत्वसिद्धेः, व्यापकविरोधिन एवाभावस्य व्याप्याभावसाधकत्वात्, अन्यथातिप्रसङ्गात् । करणस्य च

सर्वथैवाकरणं विरुद्धम्, अन्यथा तवापि सामग्रीनिवेशिनो बीजस्य देशान्तरेऽकरणादसामर्थ्यापत्तेः ॥

योग्यतावच्छेदकरूपस्यैवेति, तथाव्याप्ताविति, यत् योग्यतावच्छेदकरूपसामर्थ्यवत् तत्करोत्येवेति व्याप्तावित्यर्थः, कालभेदानुप्रवेशमन्तरेणेति, यदा तदेत्युपेक्ष्य उभयोरेककालत्वं तिरस्कृत्येति यावत् । उपसंहर्तुमशक्यत्वादिति, नियतकालविशेषविवक्षामन्तरेण कृतस्य यदि समर्थं स्यात्तर्हि कुर्यादेवेति प्रसङ्गस्येष्टापत्तिरूपत्वेन तदाभासत्वान्नोपसंहारः कर्तुं शक्य इति भावः । तदेव स्फुटयति, कुशूलस्थ इति, इष्टापत्तौ हेतुमाह-उत्तरकालमिति, हेत्वसिद्धेरिति, हेतोस्सर्वथैवाकरणस्याऽसिद्धेरित्यर्थः । ननु न सर्वथैवाकरणं विपर्यये हेतुः, किन्तु कुशूलस्थताकालावच्छेद्याऽकरणमेव, तस्य चोभयमतसिद्धत्वान्न हेत्वसिद्धिरिति चेत्, न यतस्तत्सिद्धमपि प्रसङ्गमूलभूतव्याप्तिनिरूपितव्यापकतास्पदं यत् तद्विरोधिनस्तदभावस्यैव व्याप्याभावसाध्यकविपर्यये हेतुत्वमिति नियमसिद्धां हेतुतां नार्हति, कारित्वसामर्थ्ययोर्यदा तदा चिनिर्मोकेण व्याप्तौ कालानवच्छिन्नमेव कारित्वं कालानवच्छिन्नसामर्थ्यव्यापकतया गृहीतम्, न तु कालावच्छिन्नं, तं प्रति कुशूलस्थताकालावच्छिन्नकारित्वाभावस्याविरोधित्वात्, तद्धर्मावच्छिन्नवत्त्वबुद्धिं प्रति तद्धर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावनिश्चयस्यैव प्रतिबन्धकत्वादित्याह-व्यापकविरोधिन एवेति, उक्तनियमानभ्युपगमे दण्डमाह-अन्यथेति, अतिप्रसङ्गादिति, यदि धूमस्स्यात्तर्हि वह्निरपि स्यादिति प्रसङ्गे नास्ति च महानसीयवह्निस्तस्माद्धूमोपि नास्तीति विपर्ययोऽपि प्रमाणभूतस्स्यादित्यर्थः । सर्वथैवाकरणमिति प्रतिनियतकालाद्यनवच्छिन्नकरणाभाव इत्यर्थः । अन्यथेति प्रतिनियतकालावच्छेद्याऽकरणस्य करणविरुद्धत्वे व्यापकाविरोधिनोऽपि वा तस्य सामर्थ्याभावसाधकत्वे इत्यर्थः । तवापीति, यत्कुर्वद्रूपात्मकं भवदभ्युपगतं क्षणिकं बीजं तदपि

स्वदेशावच्छेदेनाङ्कुरं करोति, नान्यदेशावच्छेदेनेत्यन्यदेशावच्छिन्नकरणाभावेन तत्र सामर्थ्याभावस्याऽपि सिद्ध्यापत्त्या सामर्थ्यासामर्थ्याभ्यां स्वरूपभेदस्स्यात्, तत्रापि च प्रत्येकस्य तथात्वापत्तावनवस्थया शून्यत्वे पर्यवसानं स्यात्। ननु यथाऽन्यकालावच्छिन्नाकरणं विरुद्धं तथाऽन्यदेशावच्छिन्नाकरणमपीति न तत्स्वदेशावच्छिन्नकरणावच्छिन्ने बीजे इति नाऽसामर्थ्यापत्तिर्दोष इति चेत्, तर्हि स्वदेश इवान्यदेशेऽपि स्वकार्यवत्त्वं स्यात्। ननु नायं दोषः, स्वदेशावच्छिन्नकरणस्यैवान्यदेशावच्छिन्नाकरणरूपत्वादिति चेत् तर्ह्यन्यदेशवत्स्वदेशेऽपि स्वकार्यानुत्पत्तिस्स्यात्, अन्यथैकत्वाऽयोगादिति भावः। न च सर्वथैवाऽकरणं करणस्य विरुद्धं तत्रैव धर्मिणि सिद्धं, येन सामर्थ्याभावस्सिद्धस्स्यादित्याह—

**न चेह तथा, तस्यैव सहकारिसमवधाने करणस्य प्रत्यक्षसिद्धत्वात्, तत्प्रामाण्यसन्देहेऽपि तेन विषयसन्देहाधानाद्धेतोः सर्वथाऽकरणस्य सन्दिग्धासिद्धत्वात्, देशानवच्छिन्नाकरणस्य हेतुकरणेऽप्यभेदप्रत्यभिज्ञानादिव्याघाताद्व्याप्त्यभावेन मूलशैथिल्याच्च ॥**

न चेहेति, इह कुशूलस्थबीजे, तथा, सर्वथैवाकरणम्, सिद्धमिति शेषः, तत्रैव हेतुमाह—तस्यैवेति, तस्य कुशूलस्थबीजस्य, प्रत्यक्षसिद्धत्वादिति तदेवेदं बीजमङ्कुरं करोतीति प्रत्यभिज्ञात्मकप्रत्यक्षप्रमाणसिद्धत्वादित्यर्थः। तत्प्रामाण्यसंदेहेऽपीति, प्रत्यभिज्ञानात्मकप्रत्यक्षे प्रमाणभूतेऽप्रमाणभूते च विद्यमानस्य प्रत्यभिज्ञानप्रत्यक्षत्वस्य साधारणधर्मस्य तदेवेदं बीजमङ्कुरं करोतीति प्रत्यभिज्ञानप्रत्यक्षे दर्शनात्तत्र प्रामाण्यसंदेहेऽपीत्यर्थः। तेन प्रामाण्यसंदेहेन, विषयसंदेहाधानादिति करणसन्देहोत्पादादित्यर्थः। सन्देहस्योभयकोटिकत्वात् यत्र प्रतियोगिनस्संदेहस्तत्र तदभावस्यापि संदेहादाह—हेतोरिति, संदिग्धासिद्धत्वादि-

त्ति, साध्यसंन्देहो यथा साध्यसन्देहः पक्षतेति प्राचां मते स्वत एव पक्षतारूपत्वाच्छिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति नव्यमते पक्षतासंपादकत्वादनुमित्यङ्गं, न तथा हेतुसंदेहः, यतस्तस्मिन् सति निश्चयात्मकपरामर्शरूपकारणस्याभावेन न विपर्ययानुमानं च प्रवर्त्तितुमुत्सहत इति भावः । ननु कालावच्छिन्नाकरणं करणविरुद्धमिति तेन हेतुना सामर्थ्याभावसिद्ध्या स्थिरस्य स्वरूपतो भेदस्सिद्ध्यत्येव' न च तथा देशावच्छिन्नाकरणं करणविरुद्धं येन तस्याऽपि हेतुत्वापत्त्या तेन हेतुनैकक्षणवर्त्तिनस्समर्थबीजस्यापि सामर्थ्याभावसिद्ध्या स्वरूपतो भेदापत्तिस्स्यात् तत्राप्येकैकस्य तथात्वापत्तावनवस्थया शून्यत्वं च स्यात्, किन्तु देशानवच्छिन्नाऽकरणमेवेति तदेव हेतूक्रियत इति चेत्, न यतो न देशावच्छिन्नेति विशेषणमिदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ गुणकर्मान्यत्वविशेषणमिव व्यभिचारवारकं नवा शब्दोऽनित्यः सामान्यवत्त्वे सति विशेषगुणान्तराऽसमानाधिकरणैकमात्रवृत्तिगुणत्वादित्यादौ शब्देतरपर्यवसानकान्तरविशेषणमिव स्वरूपासिद्धिवारकमिति तस्य व्यर्थत्वेन तद्विशिष्टहेतोर्नीलधूमस्येव व्यर्थविशेषणघटितत्वाद्व्याप्यत्वासिद्धिरूपं मूलशैथिल्यं स्यात्, तथा च विवादाध्यासितं बीजमसमर्थं देशानवच्छिन्नाऽकारित्वादित्यत्र देशानवच्छिन्नाकारित्वम् हेतुरित्याशयेनाह—देशानवच्छिन्नाकरणस्येति, अभेदप्रत्यभिज्ञानादीति कुशूलस्थताक्षेत्रस्थतादशापन्नबीजयोरैक्यगतिसन्धानादीत्यर्थः । यदा तदेत्युपेक्ष्य यत्समर्थं तत्करोत्येवेति प्रसङ्गः क्रियते, नच पूर्ववदिष्टापत्त्योपसंहारोऽशक्यः, एवकारान्तर्भावेण सामर्थ्यकारित्वयोर्व्याप्त्यादरणादिष्टापत्त्यादेरभावादित्याशयेनाशङ्क्य निराकरोति—

**यत् समर्थं तत् करोत्येवेति वक्तुं शक्यमिति चेत्, करोत्येवेत्यत्र यावत्सत्त्वमिति विवक्षितं, न वा, नाद्यः, व्याप्त्यसिद्धेः, अङ्कुरकारिणोऽपि बीजस्य पूर्वं तदकरणस्य प्रत्यक्षसिद्धत्वात् । एतेनान्ययोगव्य-**

वच्छेदेन नियमोऽपि निरस्तः । न द्वितीयो, यतः कालनियमाविवक्षायां यत् समर्थं तत् करोत्येव कदाचिदिति स्यात्, तथा च सम्भवविधेरत्यन्तायोगो विरुद्धो न त्वयोगो नीलं सरोजं भवत्येवेतिवदिति । ननु यदसमर्थं प्रथममासीत् तस्य पश्चादपि सामर्थ्यं कुत आगतं, प्रथमं समर्थस्य वा पश्चात् कुत्र गतम् । नैतदेवम् ॥ तत्सहकारिमतस्तत्कारकत्वं हि तत्तत्सामर्थ्यम्, अतद्वतस्तदकर्तृत्वमसामर्थ्यम्, इदं चौत्पत्तिकमस्य रूपम्, ते च सहकारिणः स्वोपसर्पणकारणवशाद्भिन्नकाला इत्यर्थात् कार्याणामपि भिन्नकालतेत्यदोषात्, सहकारिसाकल्यविशिष्टजनकतावच्छेदकरूपवत्त्वस्य करणप्रयोजकत्वात्, न यावत्सत्त्वमकरणस्य करणस्य वा प्राप्तिरिति निष्कर्षः ।

यत्समर्थं तदिति, स्वातन्त्र्येण कालभेदो न प्रवेशनीयः तत्प्रवेशकार्यं तु एवकार एव करिष्यति तस्य तदर्थकत्वादित्याशङ्कितुरभिप्रायः । व्याप्त्यसिद्धेरिति, व्यभिचारादिति शेषः, व्यभिचारमेव प्रदर्शयति—अङ्कुरकारिणोऽपीति, अङ्कुरकारिण इति सहकारिसमवधानकालावच्छेदेनाङ्कुरकारिणो बीजस्येत्यर्थः । पूर्वमिति, कुशूलस्थतादशावच्छेदेनेत्यर्थः । तदिति अङ्कुरेत्यर्थः । एवकारो विशेष्यसङ्गतो विशेष्यभिन्नतादात्म्यव्यवच्छेदे विशेष्यतावच्छेदकविशेषणयोर्वा सामनैयत्ये पर्यवसायिनोऽन्ययोगव्यवच्छेदस्य विशेषणसङ्गतो विशेष्यतावच्छेदकव्यापकत्वे विशेषणस्य पर्यवसायिनोऽयोगव्यवच्छेदस्य क्रियासङ्गतश्च विशेष्यतावच्छेदकव्यापकाभावाऽप्रतियोगित्वे विशेषणस्य पर्यवसानकस्यात्यन्तायोगव्यवच्छेदस्य बोधकः, यथा यथाक्रमं पार्थ एव धनुर्धरः शङ्खः पाण्डुर एव नीलं सरोजं भवत्येवेति, आद्ये पार्थान्यतादात्म्याभाववद्धनुर्धराऽभिन्नः पार्थ इति बोधः, पार्थत्वव्याप्यत्वे सति तद्व्या-

पक्षधनुर्धरत्वप्रकारकपार्थविशेष्यको वा बोधः, द्वितीये च शङ्खत्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगिपाण्डुरत्वप्रकारकशङ्खविशेष्यकबोधः, । तृतीये च सरोजत्वव्यापकीभूताभावाऽप्रतियोगिनीलत्वप्रकारकसरोजविशेष्यकबोधः, एवकारस्योक्तप्रकारत्रयातिरिक्तप्रकाराभावेन यत्समर्थं तत् करोत्येवेत्यत्राप्येवकारस्य विशेष्यसङ्गतत्वमवलम्ब्याऽन्ययोगव्यवच्छेदार्थकत्वेन यावत्सत्त्वं कारित्वे सामर्थ्यसमव्याप्तत्वनियमं कश्चिद्व्याख्यानयति, तन्मतखण्डनायाह—एतेनेति, एतेन उक्तयुक्त्या, कारिण्येव कदाचिदकारित्वानुभवेन व्यभिचारान्मूलशैथिल्यप्रदर्शनेन सर्वदाकरणापादनपक्षं निरस्य कदाचित्करणापादनपक्षं सिद्धसाधनदोषप्रदर्शनेन निरस्यति—नद्वितीय इति, कालनियमः सार्वदिकत्वं तदविवक्षायां क्रियासङ्गतत्वमेवैवकारस्य स्यादित्यतस्तेनात्यन्तायोगव्यवच्छेदो लभ्यते, स च समर्थस्य करणं सम्भवतीत्येवं सम्भवविधिरूपत्वादत्यन्तायोगेन सर्वदा करणाऽसम्भवलक्षणेन विरुद्ध्यते, नतु कदाचित्करणासम्भवेन, तथा चोत्तरकालावच्छेदेन करणवतः पूर्वकालावच्छेदेनाकारित्वेऽपि न क्षतिरिति भावः । कुत्रगतमिति सामर्थ्यमित्यनुपज्यते तथा च तस्योपगमापगमविरहाद्यावत्सत्त्वमकरणं करणं वा प्राप्तमिति भावः । तत्सहकारिमतस्तत्कारकत्वं हीत्यादि, अत्र तत्तत्सहकारिमतस्तत्तत्कारकत्वं हि सामर्थ्यं, अतद्वतस्तदन्यवतो वा तदकर्तृत्वमऽसामर्थ्यमिति पाठान्तरम्, अतद्वत इति, तत्सहकारिविनाकृतस्येत्यर्थः । तदन्यवतो वेति एककार्यसहकारिसत्त्वेऽपि बलवत्कार्यान्तरसहकारिमतः, यथा समानविषयेऽनुमितिसामग्रीतः प्रत्यक्षसामग्री बलवतीत्यर्थः। औत्पत्तिकमिति, एतत्स्वभाव एव भावो जायत इत्यर्थः । नन्वेवं तर्ह्युत्तरकालावच्छेदेन तेन जायमानान्यपि कार्याणि स आद्यकार्योत्पत्तिकालावच्छेदेनैव कुर्यात् सामर्थ्याऽविशेषात् तत्सहकारिणामपि तत्स्वरूप एवान्तर्भावादित्यत आह-ते चेति, सहकारिणो भावस्वरूपान्तर्भूता यदि स्युस्तदा स्यादेवोक्ताक्षेपो युक्तः, न चैवं, स्वस्वका-

रणाधीनानियतकालीनसन्निधिकत्वात्तेषामिति कार्याणामपि कालानियम इति भावः। स्वाभिप्रायमाविष्करोति—सहकारिसाकल्यविशिष्टेति। यथा भूतलादिस्वस्वदेशे विद्यमानो घटादिविषयेन्द्रियादिर्भाव आत्मरूपदेशान्तरेऽविद्यमानोऽपि ज्ञानसुखादिकं जनयति यथा वा मृदङ्गादिः स्वानवच्छिन्नेऽप्याकाशे शब्दं जनयति तथा क्षणिकोऽपि भावः स्वानवच्छिन्नेऽप्युत्तरकाले कार्याणि जनयतु, न च तदानीं तदव्यवहितपूर्वकाले वा तदवस्थानं तन्त्रं येन क्षणिकत्वं तस्य न स्यात्, अन्यथा न्यायमतेऽपि यागस्य क्रियाविशेषरूपत्वेन मनुष्यभव एव विनष्टत्वात्सुखविशेषरूपस्वर्गं प्रति अनुभवस्य च योग्यात्मविशेषगुणत्वेन स्वोत्पत्तितृतीयक्षण एव विनष्टत्वात्कालान्तरीयस्मरणं प्रति जनकत्वं न स्यादित्यभिप्रायेणाशङ्कते—

स्यादेतत् अस्तु सहकारिसम्पत्तिः कार्योत्पत्तिनियामिका, तथापि यथैकदेशस्थो विषयादिर्देशान्तरे सहकारिसम्पत्तौ ज्ञानादिकं जनयति, तथैककालस्थो भावः स्वनाशोत्तरकाले तत्तत्सहकारिसम्पत्तौ तत् तत् कार्यं जनयेत् ॥

अवश्यं चैतन्नैयायिकेनाप्यभ्युपगन्तव्यम्, कथमन्यथा चिरध्वस्तस्य यागानुभवादेः स्वर्गस्मरणादिजनकत्वमिति। मैवम्। एककालस्थ इत्यस्यार्थविवेचने दोषाभावात्, तथाहि—किमेककालस्थत्वं किं स्वाधिकरणकालस्थत्वमुत यावत्कार्यानुगुणतत्तत्सहकारिसाकल्याधिकरणकालस्थत्वम्, आद्ये न परेष्टसिद्धिः, स्वकालस्थस्यैव सहकारिसाकल्ये कार्यजनकताया अस्माभिरभ्युपगमात्, नित्यानामप्येवंरूपत्वाद्वर्त्तमानैकस्वभावत्वाद्भावानाम्,तदेव तु क्वचित् सावधि, कार्योत्पद्यमानतापूर्वकालमात्रावधित्वात्, क्वचिन्निरवधि,

कार्योत्पद्यमानताकालस्थायित्वात्, व्यापारस्य फलप्रकर्षापकर्षाभ्यां फलानुगुणसहकारिलाभालाभाभ्यां कार्योत्पादानुत्पादरूपविशेषोपपत्तेश्च न कार्याव्यवहितप्राक्कालेऽसतोऽपि यागादेः कार्यजनकत्वे कार्यकालानियमः ॥

स्यादेतदिति, काश्मीरस्थेन कालान्तरीयेण वा कुङ्कुमेन काशीस्थस्य कालान्तरीयस्य वा पटस्य रञ्जनमसक्त्या व्यधिकरणयोः कार्यकारणभावविरहात् स्वावच्छिन्न एव देशे काले वा कारणं सहकारिसंपत्त्या कार्यमुत्पादयतीति नियमः, तत्र देशगर्भे नियमे समवायसंसर्गेण कारणीभूतस्य घटपटादिविषयस्य शरीरस्य चात्मरूपदेशान्तरे वृत्तित्वाभावेपि तत्र समवायसम्बन्धेन ज्ञानोत्पादकत्वाद्यो व्यभिचारः प्रदर्शितः स नास्त्येव, विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन संसर्गेण विषयस्य अवच्छेदकतासम्बन्धेन ज्ञानं प्रति तादात्म्यसंसर्गेण शरीरस्य च कारणत्वाभ्युपगमेनोक्तसंसर्गेण विषयादेस्स्वावच्छिन्ने स्वस्मिन्नेव देशे ज्ञानोत्पादकत्वात्, यच्चात्मदेशे ज्ञानमुत्पद्यते तत्त्पादानविधया तस्य कारणत्वादिति विद्धि, कालगर्भेऽपि नियमे न चोक्तव्यभिचारस्थानं युक्तं, यतो यागानुभवादेस्स्वर्गस्मरणादिकं प्रति साक्षात्कारणत्वं नाभ्युपगतम्, अभ्युपगतं च व्यापारद्वारेति तदानीं तस्य साक्षादभावेऽपि व्यापारद्वारा विद्यमानत्वेन नोक्तव्यभिचारः, तथा च स्थिरत्वपक्षे स्वजन्यव्यापारवत्त्वसम्बन्धेन स्वावच्छिन्न एव काले सहकारिसंपत्त्या कारणस्य कार्योत्पादकत्वं संभवत्येव, क्षणिकत्वपक्षे तु तस्य भावस्य निरन्वयध्वस्तत्वात् साक्षात् व्यापारद्वारा वा स्वस्यैव विद्यमानत्वाभावेन कालान्तरे न सहकारिसंपत्तिरिति तन्न सम्भवतीत्युक्तदृष्टान्तवैषम्यान्न तद्बलादुक्तदार्ष्टान्तिकसाधनं युक्तियुक्तमित्येवं वस्तुस्थितिमनभिजानानं बौद्धमेककालस्थ इत्यस्यार्थविवेचनेन शिक्षयति–मैवमिति, बौद्धाभ्युपगतक्षणभङ्गाऽसिद्धौ

हेतुमाह—स्वकालस्थस्यैवेति, एवं रूपत्वादिति, स्वकालस्थानामेव सहकारिसाकल्ये कार्योत्पादकत्वस्वभावत्वादित्यर्थः । नन्वेवं स्वभावत्वेनैव कारणानां जनकत्वं यदि तदा किञ्चित्कारणं कार्यव्यवहितपूर्वकाल एव विद्यमानं सत् किञ्चित्तु कार्योत्पत्तिक्षणावच्छेदेनापि विद्यमानं सत् कार्योत्पादकमित्यत्र किंकृतो विशेष इत्याशङ्कायामाह—तदेव त्विति, तथा च सावधिनिरवधिभेदेनोक्तस्वभावस्य द्वैविध्यादुक्तविशेषोपपत्तिरिति भावः । तदेव स्वाधिकरणकालस्थत्वलक्षणं वर्त्तमानत्वमेव, कार्योत्पद्यमानतापूर्वकालमात्रावधित्वादिति, कार्योत्पद्यमानता कार्याव्यवहितपूर्वकालः, तत्पूर्वकालमात्रावधित्वादित्यर्थः । ननु स्वर्गस्मरणादिकार्याव्यवहितपूर्वक्षणेऽसतो पि यागानुभवादेः कार्यजनकत्वे कदाचिदेव कार्यं जायते नान्यदेत्यत्र किं नियामकमत आह—व्यापारस्येति, सावधित्वेऽपीत्यादिः, फलप्रकर्षापकर्षाभ्यामित्यस्यैव विवरणं फलानुगुणसहकारिलाभालाभाभ्यामिति, । अयं भावः यागानुभवादिकं स्वर्गस्मरणादेस्स्वयमेव साक्षान्नोत्पादकं, येनासत्त्वाऽविशेषात्कालान्तरेऽपि तदुत्पादकं स्यादित्याशङ्का सङ्गता स्यात्, किन्तु व्यापारद्वारैव, व्यापारोऽपि सहकार्यन्तरसहकृत एव कार्यक्षमः, सहकारिसमागमश्च नान्यदेति न तदानीं कार्योत्पत्तिप्रसङ्ग इति. । ननु व्यापारद्वारैव जनकत्वे यागादिवत् बीजाद्यपि तद्द्वारा स्वासत्त्वकालेऽङ्कुराद्युत्पादकं स्यात्, साक्षाज्जनकत्वे यागादिकमपि बीजादिवत् अव्यवहितोत्तरक्षणे स्वर्गाद्युत्पादकं स्यात् इति चेत्, मैवम्, अव्यवहितोत्तरक्षण एव कार्योत्पादानुभवात्साक्षादेव बीजादिकं जनकं, तत्रैव च सहकारिसाकल्यं तन्त्रं, यागादिकं तु व्यवहितकालेऽनुभूयमानकार्योत्पादान्यथानुपपत्त्या कल्प्यमानापूर्वादिव्यापारद्वारैव जनकम्, उक्तव्यापार एव च सहकारिसाकल्यं तन्त्रमित्यभ्युपगमे दोषाभावादित्याह—

साक्षाज्जनकत्वे स्वस्य व्यापारद्वारा जनकत्वे च व्यापारस्य सहकारिसाकल्यं तन्त्रम्, न चेदं निरन्वयध्वस्तस्य सम्भवतीति दीधितिकृतः। नारायणाचार्यस्तु एककालस्थ इत्यत्र कालस्य तावदवान्तरैकत्वं विवक्षितं, तच्चोपाध्येकत्वेन वक्तव्यम्, उपाधिश्च कारणस्वरूपं सहकारिसन्निधिर्वेति विकल्प्य प्रथमपक्षे एककालत्वं स्थिरवादिनोऽपीष्टं, वर्त्तमानैकस्वभावत्वाद्भावानाम्, तच्च क्वचिदनित्येषु सावधिकम्, नित्येषु निरवधिकम्, व्यापारप्रवाहफलप्रवाहप्रकर्षाप्रकर्षाभ्यामुपाधिभूताभ्यां कालस्यापि प्रकर्षाप्रकर्षलक्षणो विशेष इति व्याचष्टे। अत्र स्वस्वव्यापारान्यतरोपाध्येकत्वेन कालैकत्वविवक्षायां निरवधिकवर्त्तमानत्वस्य नित्येऽभावात् तद्दृष्टान्ताभिधानं चिन्त्यम्। द्वितीयस्तु पक्षः स्यादपि, यदि सहकारिणां यौगपद्यं भवेत्, क्रमिणस्तु सहकारिण इत्युक्तं बहुशः ॥

साक्षाज्जनकत्व इति, साक्षाज्जनकत्वपक्षे कार्याव्यवहितप्राक्क्षणे स्वस्यैवाऽभावेन तत्र, व्यापारद्वारा जनकत्वपक्षे फलोत्पादसमर्थव्यापारानुत्पादनेन विनाशित्वाद् व्यापारस्यैवासत्त्वेन तत्र च प्रयोजकीभूतस्य सहकारिसाकल्यस्याभावेन न च बौद्धपक्षे तदुभयपक्षाश्रयणं युक्तियुक्तमित्याह–न चेदमिति, निरन्वयेति–निर्व्यापारेत्यर्थः। एककालस्थो भाव इत्यादिना स्वरूपयोग्यभावैकोपाधिविशिष्टकालवृत्तेर्भावस्य जनकत्वमापाद्यते किंवा तत्तत्कार्यानुगुणतत्तत्सहकारिसाकल्याधिकरणकालस्थस्य भावस्येति विकल्प्य दूषयति नारायणाचार्य इत्याह–नारायणाचार्यस्त्विति, अस्य व्याचष्टे इत्युत्तरेण सम्बन्धः। अवान्तरैकत्वमिति, कालगतस्य निरुपाधिकैकत्वस्य नित्यत्वेनाव्यावर्त्तकत्वादिति भावः। उपाधिर्नैकविध इति यादृशः प्रकृतोपयोगी

तादृशं तमाह–उपाधिश्चेति, कारणस्वरूपमिति, तथा च एककालस्थ इत्यस्य स्वरूपयोग्यकारणात्मकोपाधिविशिष्टकालस्थ इत्यर्थः । सहकारिसन्निधिर्वेति, तथा च एककालस्थ इत्यस्य तत्तत्कार्यानुगुणतत्तत्सहकारिसाकल्याधिकरणकालस्थ इत्यर्थः, भावानां स्वावच्छिन्न एव काले विद्यमानानां जनकत्वमापाद्यमानं नैयायिकैरप्यभ्युपगतमितीष्टापत्त्या न प्रसङ्गप्रवृत्तिरित्याह— प्रथमपक्ष इति, तत्र हेतुमाह–वर्त्तमानैकस्वभावत्वाद्भावानामिति, सर्वेषां भावानां स्वावच्छिन्नकालसम्बन्धस्य वर्त्तमानल- क्षणत्वेन स्वसम्बन्धिकालवृत्तित्वस्वभावत्वादित्यर्थः। नन्वेवं स्वभावत्वे सर्वेषां नित्यत्वापत्तिरित्यत आह–तच्चेति, वर्त्तमानत्वमित्यर्थः। नन्वनित्यानां भावानां स्वावधिपर्यन्तं नित्यानां च निरवधिकं वर्त्तमानत्वं कालेऽविशिष्टमेव यदि तर्हि कस्यचित्कालस्य फलाधिकर- णत्वं कस्यचिच्च नेति विशेषः किंनिबन्धन इत्याशङ्कायामाह–व्यापारप्रवाहेति, व्यापारप्रवाहस्य स्वस्वसहकारिसमवधानलक्षण- प्रकर्षतदसमवधानलक्षणाऽपकर्षतः फलप्रवाहोत्पत्त्यनुत्पत्तिलक्षणप्रकर्षापकर्षतः तदाश्रयकालस्याप्युक्तविशेष इत्यर्थः । ननु नित्ये न स्वात्मकोपाध्येकत्वेन वर्त्तमानैकस्वभावत्वं कार्यानुगुणं, तथा सति स्वात्मकोपाधेस्सदातनत्वेन तत्प्रयुक्तस्य तस्य स्वभावस्य सर्वदा सत्त्वा- ऽविशेषादच्छिन्नमूलः कार्यप्रवाहस्स्यात्, किन्तु स्वव्यापारात्मकोपाध्येकत्वेन, स्वव्यापारश्च कादाचित्कत्वेन विनाशीति स्वव्यापाराधि- करणकालवृत्तित्वलक्षणस्य तस्य सर्वदाऽभावान्नित्येऽपि सावधिकत्वं स्यादित्यस्वारस्येन नारायणाचार्यव्याख्यानस्य चिन्त्यत्वं ग्रन्थ- कृदाह–अत्रेति, स्वस्वव्यापारान्यतरोपाध्येकत्वेनेति, साक्षाज्जनकत्वे स्वात्मकोपाध्येकत्वेन व्यापारद्वारा जनकत्वे व्यापा- रात्मकोपाध्येकत्वेनेत्यर्थः । यावत्कार्यानुगुणतत्तत्सकारिसाकल्याधिकरणकालस्थत्वेन कारणत्वं क्षणिकस्य तदा स्याद्यदि युगपदेव सहकारिणो भवेयुः, न चैवम्, अतस्स्थिर एव क्रमिकसहकारिसाकल्यसमवधानाधिकरणकालवृत्तित्वेन कारणत्वं घटत इत्याशयेन

तत्तत्कार्यानुगुणतत्तत्सहकारिसाकल्याविकरणकालस्थत्वमेककालस्थत्वमिति द्वितीयपक्षं निरस्यति-द्वितीयस्तु पक्ष इति, बौद्धमुपहसति.

स्वतो व्यापारतो वा सहकारिसहितस्वभावो न करोतीति वक्तरि तु जातनष्ट एव करोतीत्युत्तरप्रसङ्गो निरर्गलशैशवस्येत्यलमनेन । तस्मात् कार्यस्य स एव सहकारिसमवधानोत्तरः कालः, कारणस्य तु स चासश्चेति, सम्बन्धिनोः कार्यतत्प्रागभावयोर्यौ कालौ तदपेक्षया तद्वृत्तित्वप्रतिसन्धाने कार्यकारणयोः पौर्वापर्यव्यवहार इति वदन्ति ॥

स्वतो व्यापारतो वेति, जातनष्ट इति निर्व्यापारध्वस्त इत्यर्थः । कार्यकारणयोरेककालत्वेऽपि पूर्वापरभावव्यवहारमुपपादयति-तस्मादिति, स चासश्चेति, यदा सहकारिणांसमवधानं स कालः यदाचाऽसमवधानं स कालश्चेत्यर्थः । ननु यदि कारणस्य कार्यकालोऽपि कालस्तर्हि कार्यकारणयोः पौर्वापर्यव्यवहारो न स्यादित्याशङ्कायामाह-सम्बन्धिनोरिति, कार्यप्रागभावावच्छिन्नः कालः कारणकालः स च कार्योत्पत्तिपूर्वमेवास्तीति कारणे तत्कालवृत्तित्वप्रतिसन्धाने तत्कालापेक्षया तत्र पूर्वकालत्वव्यवहारः, कार्यावच्छिन्नः कालः कार्यकाल इति कार्ये तत्कालवृत्तित्वप्रतिसंधाने तत्कालापेक्षया तत्रापरकालत्वव्यवहार इत्यर्थः । वदन्तीत्यनेनास्वरसस्सूचितः स चातिरिक्तमेककालमभ्युपगम्य तत्रौपाधिके पौर्वापर्ये आरोप्य तद्वृत्तित्वात्कार्यकारणयोः पौर्वापर्योपपादनापेक्षया वरं नवपुराणभावलक्षणमनेकान्तवाद्यभ्युपगतं कालमभ्युपेत्य तन्नीत्या पौर्वापर्योपपादनमित्यादिरूपः । " दिश्यपि यदि स्वगुणैर्विरोध " इत्येतच्छ्लोकघटकवाक्यार्थाभिप्रायं विवृणोति-

अपि च यदा तदेति स्थाने यत्र तत्रेति प्रक्षिप्य तयोरेव प्रसङ्गविपर्ययोः क्रियमाणयोः को दोषः, न कश्चिदिति चेत्, तर्हि देशाद्वैतं वा कारणभेदो वापद्येत,' बीजादेरेकदेश इव देशान्तरेऽप्यङ्कुरादिसामर्थ्ये तत्राप्यङ्कुरादिजननात् सर्वेषां देशानां सर्वकार्यवत्स्वरूपमद्वैतमापद्येत, तथा च कार्याणां भिन्नकालाशेषदेशवृत्तित्वेऽनाद्यनन्तत्वमेव पर्यवस्येदिति साध्वी क्षणिकत्वसिद्धिः, असामर्थ्ये चासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद्बीजादिव्यक्तेर्भेद आपद्येत, तथा च तस्या अपि पूर्ववदेव पुनर्भेदापत्तौ बीजादिशून्यत्वमेवापद्येत, तथा च बाह्यमात्रशून्यत्वापत्तौ व्यवहारविलोपः स्यादिति फलितम् ॥ १४ ॥

अपि चेति, देशान्तरे सामर्थ्याभ्युपगमे देशाद्वैतम्, असामर्थ्याभ्युपगमे तु कारणभेदः प्रसज्येतेत्याह–तर्हीति, देशाद्वैतं वेति यो दोष आपादितस्तमुपपादयति–बीजादेरेकदेश इवेति, बीजं यद्देशेऽङ्कुरं जनयति तदन्यनिखिलदेशान्तरेऽपि सामर्थ्ये तत्राप्यङ्कुरं जनयेदिति सर्वदेशानामङ्कुरवत्त्वं, एवं बीजदेशानां तत्तदङ्कुरापेक्षया स्वदेशत्ववन्निखिलकार्यान्तरापेक्षया देशान्तरत्वात्तदवच्छेदेनाङ्कुरजननसामर्थ्यवत्कार्यान्तरजननसामर्थ्यस्याप्यभ्युपगमनीयत्वेन तत्राङ्कुरोत्पत्तिरिव कार्यान्तरोत्पत्तिरपि स्यादिति बीजदेशानां यथा सर्वकार्यवत्त्वप्रसङ्गस्तथा घटपटकुटादिनिखिलकार्यान्तरदेशानामपि तथात्वस्वभावात् तथात्वप्रसङ्ग इत्येवं सर्वकार्यवत्त्वं सर्वेषां देशानामिति भावः । ननु भवतु नाम वर्त्तमानसर्वदेशानां सर्वकार्यवत्त्वप्रसङ्गः, तेन का नो हानिः क्षणिकत्वस्याऽक्षतेरित्यत आह–तथा चेति, वर्त्तमानकालीनदेशान्तराणामिवातीतानागतकालीननिखिलदेशान्तराणामपि देशत्वाऽविशेषात् तत्रापि सामर्थ्यात्कार्योत्पत्त्या तद्देशवृत्तित्वे कार्याणामनाद्यनन्तत्वसिद्धिरिति क्षणिकत्वं साधयन् स्थैर्यं साधि-

तवानिति श्लाघनीयप्रज्ञो भवानिति भावः । यः कारणभेदो वेति दोष आपादितस्तमुपपादयति–असामर्थ्ये चेति, देशान्तर इति प्रकृतम् । असामर्थ्यलक्षणेति, सामर्थ्यस्य चाभ्युपगमप्राप्तत्वादनुपन्यासः, तथा च सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गादित्यर्थः, ग्रन्थान्तरे तु सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गादित्येवं पाठः । बीजादिव्यक्तेरिति, अङ्कुरकारिबीजादिव्यक्तेरित्यर्थः । १४ पञ्चदशश्लोकमवतारयितुं बाह्यशून्यत्वे कृतनिर्भरस्य बौद्धस्याशङ्कामाह–

नन्वापद्यतां प्रागुक्तं तदादाय बाह्यव्यवहारभङ्गभयाभाजनं योगाचारनयनगरं प्रवेक्ष्याम इति चेत् । न । हेतुफलवादवैरिणमनपोह्य तत्र प्रवेष्टुमशक्यत्वात् । तदपवादे वा सत्त्वाख्यसाधनशस्त्रसंन्यासिनस्तव बहिर्वादसङ्ग्रामभूमावपि कुतो भयमिति सौत्रान्तिकानुशासनावतारगर्भां भगवतः स्तुतिमाह—

तस्य त्वदागमऋते शुचियोग योगा–चारागमं प्रविशतोऽपि न साध्यसिद्धिः ॥
तत्रापि हेतुफलभावमते प्रसङ्गा–भङ्गात्तदिष्टिविरहे स्थिरबाह्यसिद्धेः ॥ १५ ॥

हे शुचियोग सकलजगज्जन्तुवैरोपशामकपवित्रयोगपात्र भगवन् ? त्वदागमऋते त्वदुपज्ञस्याद्वादाश्रयणं विना, तस्य सौत्रान्तिकस्य नैयायिकादियुक्तिसङ्ग्रामाङ्गीतस्य, नगरतुल्यं योगाचारागमं प्रविशतोऽपि, न स्वाभिमतसाध्यसिद्धिः, तत्रापि योगाचारमतेऽपि, हेतुफलभावमते तदङ्गीकारे, प्रसङ्गाभङ्गादुक्तापत्त्यनुद्धाररूपदोषतादवस्थ्यात्, तदिष्टिविरहे हेतुफलभावाभ्युपगमाभावे च, तन्मूलकबाधकप्रसङ्गविपर्ययानभ्युगमेऽनु-

भवादेव स्थिरबाह्यार्थसिद्धरव्याघातादित्यक्षरार्थः । भावार्थस्त्वय–योगाचारनयानुसरणं हि सौत्रान्तिकस्य हेतुफलभावमभ्युपेत्य अपोह्य वा, आद्ये एकस्मिन् ज्ञानात्मनि देशे काले वा विज्ञानस्य ज्ञानजननसामर्थ्ये ज्ञानात्मकेषु देशान्तरेषु कालान्तरेषु च तज्ज्ञानोत्पत्तिप्रसङ्गः ॥

नन्वापाद्यतामिति, प्रागुक्तमिति, बाह्यमात्रशून्यत्वमित्यर्थः । तदादाय बाह्यमात्रशून्यत्वमादाय, अस्य प्रवेक्ष्याम इति क्रिययान्वयः । ननु कथं बाह्यमात्रशून्यत्वाङ्गीकृतिर्युक्ता व्यवहारविलोपभयस्य जागरूकत्वादिति चेत्, मैवं, योगाचारनयनगरे बाह्यस्यैवाभावेन तद्व्यवहाराभ्युपगमाभावात्कुतस्तद्व्यवहारविलोपभयप्रसङ्ग इत्यावेदयितुं योगाचारनयनगरं विशिनष्टि–बाह्यव्यवहारेति, योगाचारनयनगरमिति, ग्राह्यग्राहकभावविधुरं स्वप्रकाशं ज्ञानमात्रं क्षणस्थायि न बाह्यं किञ्चिदस्तीति योगाचारनयस्तद्रूपं नगरमित्यर्थः । योगाचारनयानुसरणं हि हेतुफलभावमुपेत्य अपोह्य वेति कक्षाद्वयी, आद्यकक्षायामाह–हेतुफलवादेति, द्वितीयकक्षायां त्वाह–तदपवादे वेति, सत्त्वं ह्यर्थक्रियाकारित्वलक्षणं तच्च तदैवोपपन्नं स्याद्यदि कार्यकारणभावोऽभ्युपगतस्स्यादिति कार्यकारणभावोपजीविनस्सत्त्वाख्यसाधनशस्त्रस्य कार्यकारणभावानभ्युपगमेन संन्यासं त्यागं कुर्वतस्तव स्थिरबाह्यस्वीकारेऽपि न भयमिति कृतं योगाचारनयनगरप्रवेशेनेत्यर्थः । तथा च साधनं विना न क्षणभङ्गसिद्धिरिति भावः । तस्या त्वदागमेति–अयं श्लोको ग्रन्थकर्त्रा सुस्पष्टं व्याख्यात इति न व्याख्यायते, उक्तापत्त्यनुद्धारेति, ज्ञानरूपभिन्नदेशावच्छेदेन ज्ञानरूपस्वकार्यसामर्थ्ये ज्ञानरूपदेशाद्वैतस्यान्ततो नित्यत्वस्य च प्रसङ्गे याऽऽपत्तिः असामर्थ्ये च भिन्नत्वापत्त्याऽनवस्थया शून्यत्वस्य विपर्यये याऽऽपत्तिस्तदुभयानुद्धारेत्यर्थः । तन्मूलकबाधकप्रसङ्गविपर्ययानभ्युपगमे हेतुफलभावमूलकौ स्थिरत्वबाधकौ

र्यौ प्रसङ्गविपर्ययौ तयोरनभ्युपगम इत्यर्थः । योगाचारमते हि देशकालादिकं सर्वं ज्ञानात्मकमिति देशं कालं च विशिनष्टि— ज्ञानात्मनीति, एतेन योगाचारमते देशकालादीनां बाह्यरूपतयाऽभावेऽपि ज्ञानात्मकतया सत्त्वान्न देशकालादिघटितप्रसङ्गविपर्ययाऽप्रवृत्तिरिति ख्यापितम् । विज्ञानस्य ज्ञानजननसामर्थ्ये इति एकस्मिन् ज्ञानात्मनि देशे काले च विज्ञानस्य ज्ञानजननसामर्थ्यवत् ज्ञानात्मकेषु देशान्तरेषु कालान्तरेषु च ज्ञानजननसामर्थ्ये इत्यर्थः । "आद्ये एकस्मिन् ज्ञानात्मनि काले देशे वा ज्ञानजननसमर्थस्य विज्ञानस्य ज्ञानात्मकेषु देशान्तरेषु कालान्तरेषु च तत्सामर्थ्ये तेषु सर्वेषु तज्ज्ञानोत्पत्तिप्रसङ्ग इति" पाठोऽन्यत्र । तज्ज्ञानोत्पत्तिप्रसङ्ग इति, तथा च पूर्वोक्तरीत्या ज्ञानात्मकदेशाद्वैतप्रसङ्गस्स्यादिति भावः ।

असामर्थ्ये तु विरुद्धधर्मसंसर्गेणैकस्यापि भेदापत्तौ पूर्वोक्तन्यायेन शून्यत्वमेव स्यादिति क्व विज्ञानवादः, भेदाभेदादिनिखिलधर्मशून्यज्ञानमात्रवादिनो माध्यमिकस्यैवेत्थं मतसाम्राज्यापत्तेः । द्वितीये तु सामर्थ्यासामर्थ्ययोर्विरुद्धयोरसिद्ध्या भेदासिद्धावसिद्धव्याप्तिकतयाऽर्थक्रियाकारित्वरूपस्य प्रामाणिकत्वरूपस्य वा सत्त्वस्य क्षणिकत्वसाधकस्य परित्यागे बाह्यस्थिराभ्युपगमेऽप्यविरोधाद्व्यर्थं तन्नयानुसरणम् । केचित्तु विज्ञानवादिनये सर्वेषामेव कार्याणां ज्ञानाभिन्नदेशत्वं देशानां च ज्ञानत्वेनाभिन्नत्वमिष्यत एवेति देशाद्वैतेष्टापत्तावपि तन्नये परेण परस्यावेदनात् एकेन कार्यकारणाभिमतज्ञानद्वयाग्रहणान्न कार्यकारणभावसिद्धिरिति दूषणमित्याहुः, तच्चिन्त्यम्, सौत्रान्तिकमतेऽपि केनापि क्षणिककार्यकारणोभयव्यक्त्यग्रहात्, अन्यतरधर्मिग्रहे तन्निष्ठकार्यत्वकारणत्वान्यतरशक्तिग्रहात् तत्पृष्ठभाविविकल्पेन विविच्य

ग्रहाभ्युपगमस्य चोभयत्र तुल्यत्वात् ॥

विरुद्धधर्मसंसर्गेणेति, तदतद्देशसामर्थ्यासामर्थ्यरूपविरुद्धधर्मसंसर्गेणेत्यर्थः । एकस्यापीति, क्षणिकत्वेनाभिमतविज्ञानस्याप्येकस्येत्यर्थः । भेदाभेदादिनिखिलधर्मत्याग्युक्तिश्चिन्त्या, माध्यमिकमते ज्ञानस्याप्यन्ततः शून्यतायामेव पर्यवसानादिति । द्वितीये त्विति, हेतुफलभावमपोह्य योगाचारनयानुसरणमिति पक्षे त्वित्यर्थः । सामर्थ्यासामर्थ्ययोर्विरुद्धयोरसिद्ध्येति कार्यकारणभावाभ्युपगमे सत्येव सामर्थ्यासामर्थ्ययोर्विरुद्धयोस्सिद्धिः तदभावाभ्युपगमे तु तदसिद्ध्येत्यर्थः । अर्थक्रियाकारित्वरूपस्य सत्त्वस्य हेतुत्वाभिप्रायेणाह–अर्थक्रियाकारित्वरूपस्येति, प्रामाणिकत्वरूपसत्त्वस्य हेतुत्वपक्षे त्वाह–प्रामाणिकत्वरूपस्य वेति, विज्ञानवादिनये अभिन्नकार्यवत्त्वरूपं देशाद्वैतं परस्पराऽभेदो वा उभयमपीष्यत एवेति न तद्दूषणं, किन्तु कार्यकारणभावग्रहणं ह्युभयग्रहण एव, उभयग्रहणं तु तन्मते नैकेन ज्ञानेन, तेन स्वभिन्नाग्रहणादिति कार्यकारणभावग्रहणाऽसम्भव एव दूषणमित्यभिप्रायवतां केषांचिन्मतमुपन्यस्य दूषयति–केचित्त्वित्यादिना; तच्चिन्त्यमिति । तत्र चिन्ताबीजमेवोपदर्शयति–सौत्रान्तिकमतेऽपीति, केनापि क्षणिककार्यकारणोभयव्यक्त्यग्रहादिति, कार्यकारणोभयव्यक्त्योः पूर्वोत्तरक्षणवर्तित्वेन नैकक्षणे समवधानमिति तयोस्सम्बन्धिनोः क्षणिकसत्स्वलक्षणग्राहिणा केनापि निर्विकल्पप्रत्यक्षप्रमाणेनोपलम्भाभावेन कार्यकारणभावसम्बन्धप्रतिपत्त्यभावात् सम्बन्धग्रहणं सम्बन्धिग्रहणनान्तरीयकमिति नियमाद्व्यापकीभूतकार्यकारणोभयसम्बन्धिग्रहाभावेन व्याप्यीभूतकार्यकारणभावसम्बन्धग्रहाभावादिति भावः । ननु माभून्निर्विकल्पेन कार्यकारणभावग्रहणम्, निर्विकल्पेन कार्यात्मकस्वलक्षणधर्मिग्रहणे तद्गतकार्यत्वात्मकशक्तिग्रहणं एवं कारणात्मकस्वलक्षणधर्मिग्रहणे तद्गतकारणत्वात्मकशक्तिग्रहणं ततस्तत्पृष्ठभाविना

सविकल्पेन तु स्यादेवेत्याशङ्कायामाह—अन्यतरधर्मिग्रह इति, विविच्य ग्रहाभ्युपगमस्येति, इदमस्य कारणमिदञ्चास्य कार्यमिति विवेकेन कार्यकारणभावग्रहाभ्युपगमस्येत्यर्थः उभयत्र तुल्यत्वादिति सौत्रान्तिकमत इव योगाचारमतेऽपि समानत्वादित्यर्थः । ग्रन्थकारस्स्वाभिप्रायमाह—

दीर्घप्रत्यक्षानुपलम्भव्यापारस्य दीर्घतर्कप्रमाणोपयोगं विनानुपपत्तिः, क्षणिकज्ञानानां मेलकाभावात् तत्तद्व्यवधानसम्बन्धस्य चैच्छिकत्वाद्व्यासङ्गे च तस्याप्रयोजकत्वादुपयोगदैर्घ्येणैव तदन्यथासिद्धेरिति सूक्ष्मेक्षिकायां तु जैनेश्वरमेव शासनं विजयते ॥ १९ ॥

दीर्घप्रत्यक्षेति, प्रत्यक्षानुपलम्भयोरन्वयव्यतिरेकग्रहसंज्ञकयोर्यः कार्यकारणभावनिर्णयानुकूलतत्तत्पदावापोद्वापशक्तिग्रहादिलक्षणदीर्घव्यापारस्तस्यानुगतरूपेण सकलकार्यव्यक्तिसकलकारणव्यक्त्यवगाहिनं तर्कप्रमाणाख्यं दीर्घोपयोगं विनानुपपत्तिरित्यर्थः । तर्कप्रमाणोपयोगस्य दीर्घत्वाभ्युपगमे हेतूनाह—क्षणिकज्ञानानामित्यादिना; कारणस्यात न कार्यज्ञानस्य च पूर्वोत्तरक्षणवर्त्तिन एककालवृत्तित्वाभावादित्यर्थः; तथा च कार्यकारणोभयकालाऽवर्त्तिभ्यां ताभ्यां तदुभयकालवर्त्तिकार्यकारणभावसम्बन्धस्य ग्रहीतुमशक्यतयोपयोगस्य दैर्घ्यमावश्यकमिति भावः । ननु तत्तत्कार्यकारणज्ञानयोर्मास्तु कार्यकारणभावसम्बन्धनिर्णायकत्वं, भिन्नकालवृत्तित्वात्, किन्तु तयोर्यः पूर्वापरीभावसम्बन्धस्तस्य तथाभ्युपगमे को दोष इत्याशङ्कायामाह-तत्तद्व्यवधानसम्बन्धस्येति, पूर्वापरीभावसम्बन्धस्य काल्पनिकत्वेन कार्यकारणभावानिर्णायकत्वात्, तथापि तथात्वे पूर्वापरीभूतयोर्घटपटयोरपि कार्यकारणभावप्रसङ्गादिति भावः । हेत्वन्तरमाह—व्यासङ्गे चेति यत्र कारणज्ञानानन्तरं विलम्बेन कार्यज्ञानं

तत्र कार्यकारणभावग्रहे पूर्वापरीभावसम्बन्धस्याऽभावतो नियामकत्वाऽसंभवादित्यर्थः, अन्यथासिद्धिमप्याह–उपयोगदैर्घ्येणैवेति, कार्यकारणावगाहिज्ञानद्वयकाले दीर्घतर्कोपयोगव्यापारेण पूर्वापरीभावसम्बन्धस्यान्यथासिद्धेरित्यर्थः । ऊहाख्यतर्केण कार्यकारणभावसिद्धेस्तत्सिद्धौ पूर्वापरीभावसम्बन्धस्यानुपयोगित्वादिति भावः ॥ १५ ॥ षोडशश्लोकावतरणिकामाह–

देशभेदेन यथा न विरोधः तथा कालभेदेनेत्येतदेव नयप्रमाणाभ्यां व्यवस्थापयन्नाह—

देशे स्वभावनियमाद्यदि नापराधः, कालेऽपि मास्तु स निमित्तभिदानुचिन्त्या ॥
तैस्तैर्नयैर्व्यवहृतिर्यदनन्तधर्म–क्रोडीकृतार्थविषया भवतो विचित्रा ॥ १६ ॥

तदुपादानदेश एव तत् तत् कार्यं करोतीत्यस्य स्वभावस्यापर्यनुयोज्यस्याभ्युपगमे यदि नापराधो वक्तुः, अन्यदेशाकरणेन स्वभावानन्तर्भूष्णुना विरोधोद्भावनायोगात्, तदा तत् तत्सहकारिकाल एव करोतीत्यत्रापि स्वभावेऽभ्युपगम्यमाने मास्तु कश्चिदपराधः, परं तत्र नयान्तरेण स्वभावान्तरावतारे तन्निर्वाहायौदासीन्येऽपि सुनयत्वापादनाय निमित्तभिदानुचिन्त्या विचारणीया, नयप्रमाणाभ्यामिति शेषः । नैकस्वभावाभ्युपगममात्रेण सन्तोष्टव्यम्, पारमेश्वरे प्रवचनेऽनन्तस्वभावत्वात् वस्तुनः ॥

देशभेदेन यथेति, देशे स्वभावनियमाद्यदि नापराध इति, यद्युपादानदेशावच्छिन्नकरणस्य स्वभावत्ववत् तदन्यदेशावच्छिन्नाकरणस्यापि स्वभावत्वं स्यात्तदा तयोर्विरोधोद्भावनस्य शक्यत्वेन तदभ्यासिनोऽप्येकत्वाभ्युपगमेऽपराधस्स्या, नचैवमित्यर्थः, तर्हि-

तत्तत्सहकारिकालावच्छिन्नकरणस्यैव स्वभावत्वं नासहकारिकालावच्छिन्नाऽकरणस्येत्यपि वक्तुं शक्यत्वेनैकस्यैवोक्तस्वभावस्याभ्युपगमे मास्तु कश्चिदपराध इत्याह—कालेऽपि मास्तु स इति, यदि च प्रतिपुरुषविचारभेदेन नयानामनेकविधत्वात्तत्तन्नयेन स्वभावान्तरावतारः कर्तव्यस्स्यात्तदा तदुपपादको निमित्तभेदो नयप्रमाणाभ्यामनुसर्तव्य इत्याह—निमित्तभिदानुचिन्त्येति। न च निमित्तभेदचिन्ता नोपयोगिनीति वाच्यं, व्यवहृतिवैचित्र्यदर्शनान्यथानुपपत्तेः, अत एव सर्वेषामुपजीव्या, सा च नयार्पणयाव्यस्तैः प्रमाणार्पणया समस्तैस्तैस्तैर्नैगमाद्यैर्नयैरनन्तधर्मक्रोडीकृतार्थविषया व्यवहृतिर्नानाविधोल्लेखित्वाद्विचित्रा भगवद्बाह्यानां तत्तद्वादिनां तत्तन्नयनायकत्वान्न तन्मतेनोपपादयितुं शक्या, किन्तु सर्वनयनायकत्वाद्भगवन्मतेनैवेति स एव जगत्पिता सुधियां व्यवहर्तॄणामाश्रयणीय इति प्रतिपत्त्यर्थमाह—तैस्तैर्नयैरिति, इति श्लोकसङ्क्षेपार्थः। विरुद्धधर्माध्यासाद्भेदसद्भावेऽप्यऽभेदाभ्युपगमेऽपराधस्स्यात्, नचैवं, प्रकृते विरोधिस्वभावान्तरस्यैवाभावादित्याह—अन्यदेशाऽकरणेनेति, मास्तु कश्चिदपराध इति, तथा च सहकारिकालावच्छेदेन करणस्वभावस्यैव सद्भावेन तद्विरोधिनः कुशूलस्थताकालावच्छेदेनाकरणस्वभावस्याभावान्न वीजव्यक्तेर्भेद इति भावः। निमित्तभेदानुचिन्त्येति मूलावतरणिकामाह—परं तत्रेति, तत्र, भावभूतस्वभावशालिनि वस्तुनि, स्वभावान्तरावतारे अभावभूततद्विरोधिस्वभावप्रदर्शने, तन्निर्वाहाय विरोधिस्वभावान्तरस्य प्रामाणिकत्वनिष्टङ्कनाय, औदासीन्येऽपि सुनयत्वापादनायेति भगवद्वाचां नयान्तराभ्युपगतस्वभावान्तरखण्डनमण्डनव्यापाराभावेऽपि स्वभावान्तरावतारिनये सुनयत्वापादनायेत्यर्थः। निमित्तभेदानुचिन्त्येति तत्तन्नयेन सहकारिसंवलनकालरूपनिमित्तापेक्षया करणस्वभावः सहकारिविरहकालरूपनिमित्तापेक्षया चाकरणस्वभाव इत्येवं प्रत्येकस्वभावः तदुभयनिमित्ता-

पेक्षयोभयस्वभाव इत्येवं निमित्तभेदपर्यालोचनं कर्तव्यमित्यर्थः । अथ निमित्तभेदचिन्ता तदा फलवती स्याद्यदि स्वभावान्तराभ्युपगमस्स्यादित्याशङ्कायामाह—न चेति,

तद्देशकरणस्वभाव एवान्यदेशाकरणस्वभावो नातिरिक्त इत्येकान्ततो वक्तुमशक्यम्, विपर्ययस्यापि सुवचत्वात्, तद्देशावच्छिन्नविशेषणतासम्बन्धेन प्रतिनियमात् । किञ्च करणाकरणयोः स्वरूपतो न विरोध इति कार्यकारिणोः स्वरूपतो न भेद इति यथा शुद्धं स्वरूपमविरोधाऽभेदनिमित्तमिष्यते, तथा कालादिविशिष्टं विरोधभेदनिमित्तमपि प्रतीत्यनुरोधेनैष्टव्यम्, द्रव्यक्षेत्रकालभावानामन्यतर(म)स्य स्वरूपसत्ताघटकत्वे तदितरेषां तदभावघटकत्वस्याप्यविरोधात् । न चैवं शाखावच्छिन्नसंयोगविशिष्टतदभावविशिष्टस्वरूपाभ्यां वृक्षादेरपि भेदापत्तिः, पुद्गलानां चतुर्भेदत्वाभ्युपगमेनेष्टत्वात् ॥

विपर्ययस्यापि सुवचत्वादिति, तथा चान्यदेशाकरणस्वभावस्य प्राधान्यविवक्षणे तस्याभावरूपत्वेन तुच्छरूपत्वात् क्षेत्रस्थदेशावच्छेदेनापि बीजमङ्कुरकार्यार्जनाय नालं स्यादिति भावः । ननु तद्देशकरणस्वभावः प्रतिनियतवस्तुन्येव वर्तत इत्यसाधारणधर्मत्वात्तस्य स्वभावत्वाभ्युपगमो युक्तः, नचैवमन्यदेशाऽकरणस्वभावस्य, तस्य वस्तुमात्रवृत्तित्वेन साधारणधर्मत्वादित्याशङ्कायामाह—तद्देशावच्छिन्नेति, तद्देशावच्छिन्नानुयोगिकस्वरूपसम्बन्धेनान्यदेशाकरणस्य तद्देशावच्छिन्नवस्तुन्येव वृत्तित्वेनासाधारणधर्मत्वात्तस्य स्वभावत्वाभ्युपगमो नाऽयुक्त इति भावः । तद्देशकरणैकस्वभावावतारिबौद्धनयस्येव शुद्धस्वरूपावच्छेदेन करणाकरणयोरविरोधः अत एव कार्यकारिणोरभेदश्चेत्येकान्तस्वभावावतारिन्यायनयस्यापि निमित्तभेदावलम्बनेन स्वभावान्तरावतारेण सुनयत्वमापादनी-

यमेवेत्यतः भक्त्या तु प्रसङ्गायातोऽन्योऽपीति कृतप्रतिज्ञानिर्वाहाय चाह—किञ्च करणाकरणयोरिति । तथा कालादिविशिष्टमिति स्वरूपमित्यनुवर्त्तते तथा च कुशूलस्थकालावच्छिन्नाकरणस्वभावं वीजस्वरूपं क्षेत्रस्थकालावच्छिन्नकरणस्वभावं वीजस्वरूपं च तादात्म्येन संसर्गेण विरोधस्य भेदस्य च निमित्तमभ्युररीकर्तव्यमित्यर्थः, तत्र प्रमाणमाह—प्रतीत्यनुरोधेनेति, अनुभवानुरोधेनेत्यर्थः । एतेन "प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः" इत्याद्यपि मत्यादिष्टं मन्तव्यम् । अथ स्वस्वरूपेणाऽभिन्नस्यापि विशिष्टस्वभावभेदेन भेदाभ्युपगमेद्रव्यक्षेत्रकालभावेष्वेकस्य नयवैचित्र्यात्तत्तन्नयेन प्राधान्यविवक्षया सत्त्वमत एव तद्विशिष्टस्वभावस्य निजरूपत्वं तदितरेषां गौणविवक्षयाऽसत्त्वमत एव तद्विशिष्टस्वभावस्य पररूपत्वमित्युररीकृत्य विवक्षितनिजस्वभावेन सत्त्वं विवक्षितपरस्वभावेनासत्त्वं क्रमिकतदुभयस्वभावेनोभयस्वभावं युगपत्तदुभयस्वभावेनावक्तव्यमित्यादिसप्तभङ्गाक्रान्तं वस्तुमात्रं स्यात्, अथवा स्वस्वरूपतोऽभिन्नस्यबीजस्य द्रव्यविशिष्टक्षेत्रविशिष्टस्वभावाभ्यां भेदवत् निजस्वभावतया कल्पितेन द्रव्यविशिष्टस्वभावेनाभिन्नस्य बीजस्य क्षेत्रविशिष्टकालविशिष्टस्वभावाभ्यां कल्पिताभ्यां भेदस्स्यात्, एवं क्षेत्रादिविशिष्टस्वभावस्य निजस्वभावत्वकल्पनया तेन स्वभावेनाभिन्नस्य बीजस्य द्रव्यविशिष्टादिकालविशिष्टादिपरस्वभावाभ्यां कल्पिताभ्यां भेदस्स्यादित्याशङ्कामभ्युपगमेन परिहरन्नाह—द्रव्यक्षेत्रकालभावानामिति, शुद्धनिजस्वरूपेणाऽभिन्नस्यापि विशिष्टविशिष्टस्वरूपभेदाद्भेदाभ्युपगमे वाधकमाशङ्कते—न चैवमिति । वृक्षादेरपीति वृक्षत्वादिस्वरूपतोऽभिन्नस्यापि वृक्षादेरित्यर्थः । अभ्युपगमेन परिहारमाह—पुद्गलानां चतुर्भेदत्वाभ्युपगमेनेष्टत्वादिति, उक्तश्चागमे—" कइविहेणं भन्ते भावपरमाणू पन्नत्ते, गोयमा, चउव्विहे भावपरमाणू पन्नत्ते, तं जहा—वण्णमंते रसमंते गंधमंते फासमंते " इति अत्र नित्यानामपि परमाणूनां वर्णादिचतुर्भेदत्वेन चतुर्विधत्वमुक्तं तर्हि तत्कार्यभूतानां द्व्यणुकादिनिखि-

लपुद्गलानां चतुर्विधत्वे किमु वक्तव्यम्, कारणगुणपूर्वकत्वात् कार्यगुणानाम्,उक्तञ्च तत्त्वार्थेऽपि-"स्पर्शरसगन्धवर्णवन्तः पुद्गला" इति । ननु शाखावच्छिन्नसंयोगविशिष्टवृक्षस्वरूपमूलावच्छिन्नसंयोगाभावविशिष्टवृक्षस्वरूपयोर्न तादात्म्यसंसर्गेण विरोधः, परस्परविरहपरस्पराभावव्याप्यादिरूपत्वाभावात् विशिष्टशुद्धयोरनतिरिक्तत्वेन विशिष्टोभयस्याप्यनतिरिक्तत्वात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्, अत एव न भेदनिमित्तत्वं, गुणकर्मान्यत्वविशिष्टसत्ताशुद्धसत्तयोरनतिरिक्तत्ववत्प्रकृतेऽपि विशिष्टशुद्धयोरनतिरिक्तत्वात्, न चैवं तर्हि विशेषणानधिकरणे विशेष्यवति विशिष्टप्रतीतिस्स्यादिति वाच्यम्. विशिष्टप्रतीतेर्विशिष्टाधिकरणताविषयकत्वस्य प्रत्येकाधिकरणताद्वयविषयकत्वस्य वाऽभ्युपगमेन शुद्धाद्विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्टधर्मावच्छिन्नाधिकरणताया अतिरिक्ततया तस्याः प्रत्येकाधिकरणताद्वयस्य वा शुद्धविशेष्यवत्यभावेनापादयितुमशक्यत्वात्, किन्तु शाखावच्छिन्नसमवायमूलावच्छिन्नस्वरूपसम्बन्धाभ्यां संयोगतदभावयोरेव परस्परविरहरूपत्वेन विरोधो धर्मिभेदनिमित्तत्वं च वाच्यम्, एतच्च न स्याद्वादमतसाम्राज्याधायकम्, नैयायिकैरपि नव्यैश्शाखायां महीरुहो विहङ्गमसंयोगी न तु मूले इति प्रतीत्या भेदस्याव्याप्यवृत्तित्वमभ्युपगच्छद्भिरभ्युपगतत्वादित्याशयेन शङ्कते—

विशिष्टस्वरूपं तत्र न विरोधभेदनिमित्तम्, विशिष्टस्यानतिरिक्तत्वात्, किं त्ववच्छेदकस्य सम्बन्धमध्ये निवेशेन संयोगतदभावयोरविशिष्टयोरेव विरोधभेदनिमित्तत्वं नवीनैरपि स्वीक्रियत इति चेत् । न । एतस्य शिरोवेष्टनान्तरेण नासिकास्पर्शन्यायानुसारित्वात्, एवं सति संयोगतदभावयोरपि सम्बन्धमध्ये प्रवेशस्य सुशकत्वेन सम्बन्धनिमित्तभेदापेक्षया स्वरूप एव भेदाभेदपर्यवसानापत्तेः, वृक्षो न वृक्ष इति प्रती-

त्यापत्तेश्च, नव्यमते कपिसंयोगी न कपिसंयोगीतिवदवच्छेदकौदासीन्येनेष्टत्वात् ॥

विशिष्टस्वरूपमिति, विरोधभेदनिमित्तत्वमिति, ननु शाखायां वृक्षे कपिसंयोगो नतु मूले इति प्रतीतिसिद्धयोः कपिसंयोगतदभावयोरेकस्मिन्नेव वृक्षे भिन्नावच्छेदेन वृत्तित्वाभ्युपगमेऽप्येकावच्छेदेनैकाधिकरणावृत्तित्वलक्षणविरोधस्य तत्राऽक्षतेर्नाश्रयभेदनिमित्तत्वमभ्युपगन्तुं युक्तमिति चेत्, सत्यं, तथाऽप्येतदवच्छेदकविनिर्मुक्तैकाधिकरणावृत्तित्वरूपं लक्षणं विरोधस्याभ्युपेत्योक्तम्, तल्लक्षणात्मा विरोध आश्रयभेदमृते न निर्वहतीति तयोराश्रयभेदनिमित्तत्वमभ्युपगन्तव्यमित्यूह्यम् । समाधत्ते-नेति, अवच्छेदकस्य सम्बन्धमध्ये निवेशेन संयोगतदभावयोरेव विरोधभेदनिमित्तत्वं, नतु विशिष्टयोस्तत्त्वमित्यभ्युपगमे शाखावच्छिन्नसंयोगवत्त्वमूलावच्छिन्नतदभाववत्त्वरूपसम्बन्धयोर्विरोधभेदनियामकत्वकल्पनाप्रसरेणोक्तसम्बन्धघटिततत्तद्विशिष्टस्वस्वरूपेण द्विरूपस्यैकरूपत्वान्यथानुपपत्तिप्रमाणबलेन वृक्षेण वृक्षस्य विरोधो भेदश्च तदघटितशुद्धस्वस्वरूपेण चाविरोधोऽभेदश्च प्रसज्येतेत्याशयेनाह-एवं सतीति, तथाभ्युपगमे को दोष इत्याशङ्कयामाह-वृक्षो न वृक्ष इति प्रतीत्यापत्तेश्चेति । ननु भवताऽपि मते शुद्धस्वरूपेणाभिन्नस्यापि तत्तदवच्छेदकघटिततत्तद्विशिष्टस्वरूपेण भेदाभ्युपगमेन वृक्षो न वृक्ष इति प्रतीतिः कथं नेत्यारेकायामाह-नव्यमत इति, अवच्छेदकौदासीन्येनेति, एकावच्छेदकावच्छिन्नत्वस्याऽविवक्षयेत्यर्थः, तेन नव्यमते मूलशाखाद्यात्मकाऽवच्छेदकविवक्षयैव कपिसंयोगी न कपिसंयोगीति प्रतीतिर्नत्ववच्छेदकाऽविवक्षयेत्यवच्छेदकाऽविवक्षयेत्यर्थकस्यावच्छेदकौदासीन्येनेत्यस्य दृष्टान्तेऽसत्त्वेऽपि न क्षतिः । अत्र भिन्नावच्छेदकविवक्षायां वेत्यपि बोध्यम्, इष्टत्वादिति, एतत्पूर्वं वृक्षो न वृक्ष इति प्रतीत्यापत्तेरित्यनुषञ्जनीयम् । प्रात्यक्षिकप्रत्ययमनियन्त्रितविषयकमुपपाद्य नियन्त्रितविषयकमपि शाब्दिकप्रत्ययमुपपादयि-

तुमाह—

तथा शाब्दबोधस्यापि नयभेदेन व्युत्पत्तिसङ्कोचादुपपत्तेः, योग्यताज्ञानस्यापि सम्बन्धविशेषनियन्त्रितस्य सम्भवात्। तदर्थं सामान्यरूपेण विशेषाभाव एव प्रसक्तः स च प्रतियोगितावच्छेदकावच्छिन्नसत्त्वस्याभावविरोधित्वादनुपपन्न इति चेत्। न। विरोधस्य सम्बन्धविशेषनियन्त्रितत्वेनोक्तोत्तरत्वात्, तदर्थं निमित्तभेदाद्विशेषप्रतियोगिकत्वेन सामान्यरूपेण विशेषाभावो वोच्यतां सामान्यरूपेण प्रतियोग्युल्लेखाद्विशिष्टसम्बन्धेन सामान्याभावो वेति स्याद्वादिनां न किमपि दुर्वचम्। अनेनैवाभिप्रायेणाह-गन्धहस्ती सम्मतौ 'गइपरिणयं गई चेव, केइ णियमेण दवियमिच्छन्ति॥ तं पि य उद्धगईअं तहागई अण्णहा अगइ' त्ति॥ १॥ कुतोऽपि निमित्तात् यद् यदेकान्तेन परैः स्वीक्रियते निमित्तभेदावतारेण तत्तन्निराकृत्य स्याद्वादविषयसमुच्चयमर्यादायां नेयम्, गतिमत्त्वादेरिव गुणवत्त्वादेरप्येकान्तद्रव्यलक्षणत्वायोगादिति एतत्तात्पर्यम्॥

तथा शाब्दबोधस्यापीति, नन्वभेदान्वयबोधश्च :विरूपोपस्थितयोरेवेति व्युत्पत्तिनिर्वाहको विशेष्यतावच्छेदकतासम्बन्धेन तद्धर्मावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावोऽभ्युपगतः, घटो घट इत्यादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारकशाब्दबोधकारणीभूतस्य घटत्वभेदस्य घटत्वेऽसत्त्वाद् यथोक्तशाब्दबोधो घटत्वे न भवति, तथा घटो न घट इत्यादितोऽपि घटत्वे घटभेदप्रकारकशाब्दबोधो न भवति, नञोऽसत्त्वे येन सम्बन्धेन येन रूपेणयद्वत्ता

यद्धर्मिणि यादृशसमभिव्याहारात्प्रतीयते तादृशसमभिव्याहारेण नञ्घटितेन तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताका-
भाव एव तत्र प्रतीयत इत्यर्थिकायाः प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति व्युत्पत्तेर्जागरूकत्वात्, तथा च प्रकृते वृक्षत्वे विशेष्य-
तावच्छेदकतासम्बन्धेन वृक्षत्वावच्छिन्नप्रकारकशाब्दबोधे कारणीभूतस्य वृक्षत्वभेदस्याऽसत्त्वेन वृक्षो वृक्ष इति समभिव्याहाराद्वृक्षो
वृक्ष इति प्रतीतिर्न भवति तर्हि वृक्षो न वृक्ष इति समभिव्याहारादपि कथं वृक्षो न वृक्ष इति प्रतीतिस्स्यादित्याकाङ्क्षायामाह—
व्युत्पत्तिसङ्कोचादुपपत्तेरिति, संपन्नो व्रीहिरित्यादौ पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेत्यादिव्युत्पत्तेरिवोक्तव्युत्पत्तिद्वय-
स्यापि सङ्कोचकरणाद्वृक्षो न वृक्ष इत्यापि प्रतीत्युपपत्तेरित्यर्थः । एतेन वृक्षो वृक्ष इत्यपि प्रतीतिर्व्याख्याता । ननु तथापि वृक्षे
वृक्षभेदवत्त्वरूपयोग्यताया अभावेन तत्प्रमात्मकज्ञानाभावात्कथं वृक्षो न वृक्ष इति प्रमात्मकशाब्दबोधोपपत्तिरित्याकाङ्क्षां निरा-
करोति—योग्यताज्ञानस्यापीति, स्वप्रतियोगिवृत्तिमूलावच्छिन्नसंयोगाभाववत्त्वसम्बन्धावच्छिन्नवृक्षभेदत्वावच्छिन्नप्रकारतानिरू-
पितवृक्षत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानस्यैव प्रकृते उक्तशाब्दबोधं प्रति कारणत्वेन तस्यापि प्रमात्मकस्योक्तसम्बन्धेन वृक्षे वृक्ष-
भेदस्य सत्त्वेन सम्भवादित्यर्थः । नन्वेवं तर्हि वृक्षो न वृक्ष इति प्रमायां भासमाने वृक्षभेदे वृक्षत्वेन रूपेण वृक्षात्मकस्य प्रतियोगिनो भासमा-
नत्वाद्वृक्षत्वावच्छिन्नप्रतियोगिताकशाखावच्छिन्नसंयोगविशिष्टवृक्षभेदात्मैव वृक्षत्वावच्छिन्नप्रतियोगिताकमूलावच्छिन्नसंयोगाभाव-
विशिष्टवृक्षभेदः,त्मैव वा वृक्षभेदः प्रसक्तः,एवञ्च भेदस्य प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकेन समं प्रतियोगि-
तावच्छेदकेन तादात्म्येन सम्बन्धेनप्रतियोगितावच्छेदकावच्छिन्नेन समं वा विरोधित्वेन समवायेन वृक्षत्वस्य तादात्म्येन वृक्षत्वावच्छिन्न-
स्य वा वृक्षे सत्त्वेन तत्र वृक्षत्वावच्छिन्नप्रतियोगिताकविशिष्टवृक्षभेदस्य सत्त्वाऽसम्भवान्नोपपन्ना वृक्षो न वृक्ष इति प्रतीतिः प्रमात्मिके-

त्याशयेनाशङ्कते—तदयमिति, उक्तोत्तरत्वादिति, योग्यताज्ञानस्यापि सम्बन्धविशेषनियन्त्रितस्य संभवादित्यनेनोक्तप्रतिविधानत्वादित्यर्थः, तादात्म्येन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नेन सह भेदस्य स्वरूपेणैव विरोधित्वं, नतु स्वप्रतियोगिवृत्तिमूलावच्छिन्नसंयोगाभाववत्त्वसम्बन्धेनेति भावः। अथवा विरोधस्य सम्बन्धविशेषनियन्त्रितत्वेन प्रकृते स्ववृत्तिशाखावच्छिन्नसंयोगवत्त्वस्यैव शाखावच्छिन्नसंयोगवत्तादात्म्यसम्बन्धस्य वा वृक्षसम्बन्धतयाभ्युपगमेन तस्य मूलावच्छिन्नवृक्षेऽभावेन तत्सम्बन्धावच्छिन्नवृक्षत्वावच्छिन्नाधिकरणताया अपि तत्राऽभावेन तत्सम्बन्धावच्छिन्नवृक्षत्वावच्छिन्नप्रतियोगिताकशाखावच्छिन्नसंयोगविशिष्टवृक्षभेदस्य स्वरूपेण मूलावच्छिन्नवृक्षे सत्त्वे बाधकाभाव एव, एवं स्ववृत्तिमूलावच्छिन्नसंयोगाभाववत्त्वसम्बन्धेन स्ववृत्तिमूलावच्छिन्नसंयोगाभावविशिष्टप्रतियोगिकतादात्म्यसम्बन्धेन वा वृक्षत्वावच्छिन्नाधिकरणताया मूलावच्छिन्नवृक्ष एव सत्त्वेन वृक्षत्वावच्छिन्नमूलावच्छिन्नसंयोगाभावविशिष्टवृक्षभेदस्य स्वरूपेण शाखावच्छिन्नवृक्षे सत्त्वे विरोधाऽयोगोऽभ्यूह्य इति भावः। पर्यवसितमर्थमुपसंहरति—तदयमिति, **सामान्यरूपेण विशेषाभावो वेति**, वृक्षत्वसामान्यधर्मावच्छिन्ना या मूलावच्छिन्नसंयोगाभावविशिष्टवृक्षनिष्ठप्रतियोगिता तन्निरूपकाभावः वृक्षत्वावच्छिन्ना या शाखावच्छिन्नसंयोगविशिष्टवृक्षनिष्ठप्रतियोगिता तन्निरूपकाभावो वेत्यर्थः। **विशिष्टसम्बन्धेन सामान्याभावो वेति**, स्वप्रतियोगिवृत्तिमूलावच्छिन्नसंयोगाभाववत्त्वसम्बन्धेन वृक्षत्वावच्छिन्नवृक्षनिष्ठप्रतियोगिताकभेद इत्यर्थः। नन्वत्र तृतीयाया अविच्छिन्नत्वमर्थः तस्य भेदनिष्ठनिरूपकतायामन्वयः, स चायुक्तः, विशिष्टसम्बन्धस्य प्रतियोगितावच्छेदकत्वस्यैवाभ्युपगमादिति चेत्, तर्हि स्ववृत्तिशाखावच्छिन्नसंयोगवत्तादात्म्यसम्बन्धावच्छिन्ना स्ववृत्तिमूलावच्छिन्नसंयोगाभाववत्तादात्म्यसम्बन्धावच्छिन्ना वा या वृक्षत्वावच्छिन्ना वृक्षनिष्ठा प्रतियोगिता तन्निरूपकभेदरूपोऽर्थो

बोध्य इति । **स्याद्वादिनां न किमपि दुर्वचमिति,** तथा च स्थितमेतत्तदतत्स्वभावात्मकमेव वस्तुमात्रमिति भावः ॥ अत्र तातपादानां श्रीसिद्धसेनदिवाकरभगवतां सम्मतितर्कगाथया सम्वादमाह–**गइपरिणयं गई चेवण्ति,** तस्या अयमर्थः,गतिक्रियापरिणतं द्रव्यं नियमेन गतिमदेवेति केचिदिच्छन्ति,तदपि गतिक्रियापरिणतं जीवादिद्रव्यं सर्वदेशावच्छेदेन गमनाऽयोगात् प्रतिनियतोर्ध्वादिदिग्गतिकं तैरङ्गीकर्त्तव्यम्, ऊर्ध्वादिदिगपेक्षया गतिमदेव अन्यदिगपेक्षयाऽगतिमदपि, अन्यथाऽभिमतदेशगमनवदनभिमतदेशेऽपि गमनत एककालावच्छेदेन विरुद्धोभयदेशप्राप्तिस्स्यात्, अभीष्टदेशगतिरेवानभिमेतदेशागतिरिति विध्यैकस्वरूपत्वान्नात्रानेकान्तोऽवकाशं भजत इति चेत्, तर्हि यद्यस्य विरोधि तत्तदभावसत्त्व एव स्वरूपतां बिभर्त्तीति विरोधिन्या अनभिमतदेशगतेरभावाभावेऽभीष्टदेशगतिकमेव द्रव्यं न स्यात्,तथा च स्वस्वरूपतोऽभिन्नस्याप्यूर्ध्वादिदिग्गतिविशिष्टाधआदितदितरदिग्गतिविशिष्टस्वभावाभ्यां भेद इति । अथ विशेषणभेदादेव विशिष्टयोर्भेदो नतु मुख्यवृत्त्येति चेत्, न, विशेषणविशेष्यभावस्य हि कथञ्चिदभेद एव घटमानत्वेन विशेषणभेदे तदभिन्नतद्वतोरपि भेदो मुख्यवृत्त्यैवाश्रयितव्यः, नहि निमित्तभेदाश्रयणे मुख्यवृत्तिर्हीयते, येन विशेषणभेदाद्विशिष्टभेदाभ्युपगमे स न स्यात्, अन्यथा घटपटादीनामपि मुख्यवृत्त्या भेदो न स्यात्, सत्त्वद्रव्यत्वादिनाऽभेदभाजां तेषामप्यसाधारणधर्मरूपनिमित्तभेदेनैव भेदादिति । एवं यदन्यदप्येकान्तरूपं परैरभ्युपगतं स्यात्तत्रापि सर्वत्राऽपेक्षाभेदेन तदतत्स्वभावं प्रदर्श्य स्याद्वादस्यैव साम्राज्यं प्रकाशनीयमित्याह–**कुतोऽपि निमित्तादिति,** एतत्तात्पर्यमिति, गइपरिणयं गई चेवत्ति गाथातात्पर्यमित्यर्थः ।

**निमित्तभेदेन विशिष्टाविशिष्टस्वरूपभेदश्च परैरकामेनाप्यभ्युपगन्तव्य एव, अन्यथा द्रव्यत्वगुणत्व-**

विशिष्टसत्तयोर्विरोधस्य सत्तैक्यस्य चोपपादयितुमशक्यत्वात्, विशेषणभेदात् तद्भेदो न स्वरूपत इत्येतच्चास्मदनुकूलमेव, विशेषणनिमित्तभेदादेव तस्या अनन्तधर्मिकत्वाऽवान्तरजातितारतम्यरूपत्वानन्तपर्यायत्वोत्पादस्थितिभङ्गात्मकत्वसप्रतिपक्षत्वशबलैकत्वशालिन्याः सिद्धेः, तदाहुः साम्प्रदायिकाः " सत्ता सप्रतिपक्षा, सविश्वरूपा ह्यनन्तपर्याया । उत्पादस्थितिभङ्गा, सप्रतिपक्षा भवत्येका " ॥ १ ॥ इति ॥

द्रव्यत्वगुणत्वविशिष्टसत्तयोरिति, वैशिष्ट्यञ्च सामानाधिकरण्येन, द्रव्यवृत्तित्वविशिष्टसत्तागुणवृत्तित्वविशिष्टसत्तयोरित्यर्थः । अनन्तधर्मिकत्वेति, तद्वृत्तित्वविशिष्टस्य तत्रैव सत्त्वमिति नियमाद्घटवृत्तित्वविशिष्टायास्सत्ताया घट एव पटवृत्तित्वविशिष्टायास्तस्याः पट एव सत्त्वमेवं तत्तद्वस्तुवृत्तित्वविशिष्टायास्तस्यास्तत्तद्वस्तुन्येव सत्त्वमित्येवमनन्तविशेषणरूपनिमित्तभेदेनानन्तभेदभिन्नायास्सत्ताया अनन्तधर्मिकत्वेत्यर्थः, अवान्तरजातितारतम्यरूपत्वेति, घटवृत्तित्वविशिष्टसत्ता घटमात्र एव पटवृत्तित्वविशिष्टसत्ता च पटमात्र एव वर्त्तत इत्यल्पदेशवृत्तित्वात्सा व्याप्या, तस्या व्यापिका पृथिवीवृत्तित्वविशिष्टसत्ता, घटपटादिपृथिवीमात्रे वृत्तित्वेनाधिकदेशवृत्तित्वात्, तस्या अपि व्यापिका द्रव्यवृत्तित्वविशिष्टसत्ता, जलादिरूपाधिकदेशवृत्तित्वात्, तस्याश्च व्यापिका शुद्धसत्ता एवमन्यत्रापीत्येवं व्याप्यव्यापकभावरूपत्वेत्यर्थः, अनन्तपर्यायत्वेति, अनुगतसत्ताया द्रव्यवृत्तित्वविशिष्टसत्तागुणवृत्तित्वविशिष्टसत्तापृथिव्यादिघटादितत्तद्द्रव्यवृत्तित्वविशिष्टसत्तारूपादितत्तद्गुणवृत्तित्वविशिष्टसत्तानीलादितत्तत्पर्यायवृत्तित्वविशिष्टसत्तेत्यादयो यावन्तो भेदास्तावन्तस्तस्याः पर्यायाः, वस्तूनामानन्त्येन तत्तद्वस्तुवृत्तित्वविशिष्टसत्ताया आनन्त्याद् भेदाश्चानन्ता इति तस्या अनन्तपर्यायत्वेत्यर्थः, उत्पादस्थितिभङ्गात्मकत्वेति, शिखाविलये तद्विशिष्टपुरुषविलयवद् द्रव्यादीनां

विशेषणीभूतानां विलये तद्वृत्तित्वविशिष्टसत्ताया विलयात्तदभिन्नशुद्धसत्ताया अपि विशिष्टस्वरूपेण विलयः, द्रव्यादीनामुत्पादे तद्वृत्तित्वविशिष्टसत्तोत्पादे तद्रूपेण सत्ताया अप्युत्पादः, निर्विशेषितस्वस्वरूपेणाविचलितरूपत्वं तस्या इत्येवं विशिष्टाविशिष्टस्वस्वरूपाभ्यामुत्पादादित्रयात्मकत्वेत्यर्थः। सप्रतिपक्षत्वेति,अत्र सप्रतिपक्षत्वं द्रव्यवृत्तित्वविशिष्टगुणवृत्तित्वविशिष्टतत्तद्द्रव्यवृत्तित्वविशिष्टरूपादितत्तद्गुणवृत्तित्वविशिष्टनीलादितत्तत्पर्यायवृत्तित्वविशिष्टसत्त्वानां परस्परविरोधरूपं ज्ञेयमिति, अथवा सत्ता न केवलं स्वस्वरूपेण सत्त्वैकरूपत्वान्निष्प्रतिपक्षा किन्तु पररूपेण नास्तित्वसमादेशादसत्तारूपप्रतिपक्षसहितापीत्यर्थः। शबलैकत्वशालिन्या इति एतत्सर्वविशिष्टैकत्वशालिन्या इत्यर्थः। अत्रार्थे प्राचां वचनं प्रमाणयति–तदाहुः साम्प्रदायिका इति, सत्तेत्यादिश्लोके प्रथमं सप्रतिपक्षेति पदम् अनन्तधर्मिकेत्यर्थकम्, द्वितीयश्च प्रदर्शितार्थकमेव, तेन न पुनरुक्तत्वम्, सविश्वरूपेत्यस्य विश्वरूपैर्नानाप्रकारैस्सहितेत्यर्थः,अवान्तरजातितारतम्यरूपेति भावः। सत्ताया न भेदः किन्त्वसत्ताया एवेति कस्यचिन्मतमुपन्यस्य निषेधति—

**सत्तैकेव, असत्ता तु निमित्तभेदाद्भिद्यत इति युक्तिरिक्तं पक्षपातमात्रमित्यस्मदुपज्ञाष्टसहस्र्यां, तत् सुष्ठूक्तं निमित्तभिदानुचिन्त्येति, एतच्चिन्ता च व्यवहारवैचित्र्यदर्शनेन सर्वेषामुपजीव्या, तदाह–यद्** यस्मात् कारणात्, **भवतः** सर्वनयनायकस्य तव, **अनन्तधर्मक्रोडीकृतार्थविषया व्यवहृतिस्तैस्तैर्नैगमाद्यैर्नयैर्नयार्पणया प्रमाणार्पणया च व्यस्तैः समस्तैश्च विचित्रा** नानाविधोल्लेखा **दृश्यत** इति, न च दृष्टेऽनुपपन्नं नाम, व्यवहारानुरोधेन च कल्पना न तु कल्पनानुरोधेन व्यवहार इति यथास्थितनिखिलव्यवहारोपपादकवस्तुव्यवस्थापका-

गमोपदेष्टृत्वेन भवानेव सुधीयामाश्रयणीय इत्यभिव्यज्यते । उदयनस्य त्वत्र बौद्धाक्षेपसमाधानगतिरियम् । ननु यावन्त्योऽर्थक्रिया भिन्नदेशास्तावद्भेदं कारणमस्तु को विरोध इति चेत्, न ।

सत्तैकैवेति, घटस्सन् पटस्सन्नित्येवं सर्वत्रानुगतप्रतीतिविषयत्वान्महासामान्यरूपा सत्तैकैवेत्यर्थः । असत्ता तु निमित्तभेदाद्भिद्यत इति, नास्तीति प्रतीतिविषयीभूताऽभावरूपाऽसत्ता सत्तावन्नैकरूपा, किन्तु प्रतियोगिभेदेनाभावभेदाद्भिन्नरूपैवेत्यर्थः, अस्मदुपज्ञाष्टसहस्र्यामिति, अत्र मूलतद्वित्वयोरष्टसहस्र्योः पाठो न्यायप्रभातोऽवसेयः । उक्तार्थस्याप्रासङ्गिकत्वव्यवच्छित्तये आह–तत्सुष्ठूक्तं निमित्तभेदानुचिन्त्येति । उत्तरार्द्धमवतारयितुमाह–एतच्चिन्त्येति, निमित्तभेदचिन्तेत्यर्थः । नयार्पणयेति, नयार्पणया व्यस्तैः प्रमाणार्पणया च समस्तैरिति योगः । श्रीजिनवरेन्द्रो भगवानेव सुधियां व्यवहर्तॄणामाश्रयणीयः यथावस्थितवस्तुस्वरूपप्ररूपकत्वात् उभयसम्मतपुरुषवत् विपर्यये मत्तपुरुषवदित्यन्वयव्यतिरेकानुमानेन प्रमाणभूतनिखिलव्यवहारमूलभूतयथास्थितनिखिलवस्तुस्वरूपप्ररूपणाकर्तृत्वात् यन्नैवं तन्नैवं यथा मत्तपुरुषः इति व्यतिरेकानुमानेन च भगवतामाश्रयणीयत्वं प्रतिपाद्य प्रस्तुतं न्यायनयेन बौद्धनयखण्डनं प्रतिपादयितुमाह–उदयनस्येति, इयमिति, अनन्तरमुपदर्श्यमानेत्यर्थः । ननु यद्यत्र यज्जननसमर्थं तत्तत्र तज्जनयेदिति प्रसङ्गस्यादुष्टत्वे स्वदेशे स्वोपादेयकार्यं प्रति शक्तो भावः तत्रैव स्वदेशे सहकार्यं ज्ञानसुखाद्यपि प्रति समर्थश्चेत्तत्रापि तं जनयेत् तथा चोपादेयसहकार्ययोर्देशाद्वैतमभिन्नदेशता स्यात्, विपर्ययस्यादुष्टत्वे कारणभेदः क्षणिकस्यापि भावस्य तदतत्तद्देशसामर्थ्याऽसामर्थ्यरूपविरुद्धधर्मसंसर्गाद्भेदो नानात्वं स्यात्, न चैतावन्मात्रेण बाह्यार्थशून्यत्वमित्याशयं मन्यमानो भ्रान्तो बौद्ध आशङ्कते–नन्विति, आशयं प्रकाशयति—

तेषामपि प्रत्येकं तत्प्रसङ्गस्य तदवस्थत्वात्, एवमेकस्य जगति वस्तुतत्त्वस्यालाभे साध्वी क्षणभङ्गपरिशुद्धिः, भिन्नदेशकार्यद्वयजनकस्यैककार्यदेशे कार्यान्तरसामर्थ्ये तत्रापि तत्कार्यजननम्, असामर्थ्ये च कारणभेद आपद्येतेत्याशयानभिज्ञस्यात्राशङ्केयं,पूर्वोक्ताशयप्रकाशनेन चोत्तरमिति ध्येयम् । अस्तु तर्हि दोष एव कश्चिदनयोर्देशगर्भप्रसङ्गविपर्यययोरिति चेत्, स पुनः कस्मिन् साध्ये, किं सामर्थ्यासामर्थ्ययोः, यदि कश्चित्कारिणोऽपि सामर्थ्यं नोपेयात् तं प्रति तदपि साध्यमिति द्वयोपादानम्,यद्वा तद्विरुद्धधर्माध्यासेन भेदे, तस्यापि परम्परया प्रसङ्गादिसाध्यत्वात् ।

तेषामपीति, उपादेयसहकार्यकार्यभेदेन भिन्नतयाऽभ्युपगतानां कारणानामपीत्यर्थः । ननु कारणभेदपक्षस्य पूर्वमेव दूषितत्वाच्छङ्कायाः पुनरुत्थानं न घटत इत्यत आशयावोधनिबन्धनं तदुत्थानमाह–भिन्नदेशेति; रूपं रूपात्मककार्ये उपादानविधया कारणं रसगन्धादौ च ज्ञानसुखादौ च निमित्तविधया कारणं बौद्धैरभ्युपगतमित्येकस्मिन्नेव क्षणे रूपलक्षणोपादानदेशे रूपात्मकमुपादेयकार्यं रसादिसहकारिदेशरूपदेशान्तरे च रसाद्यात्मकं सहकार्यकार्यं रूपं जनयति–एवं रसादावपि ज्ञेयम्, तत्रैवं पृच्छ्यते: स्वदेशदेशान्तरावच्छेदेनोपादेयसहकार्यकार्यद्वयजनकस्य रूपादिस्वलक्षणस्योपादानदेशे सहकार्यकार्यानुकूलसामर्थ्यमेवं सहकारिदेशे उपादानकार्यानुकूलसामर्थ्यमस्ति नवा,यद्यस्ति तर्हि तत्रोपादेयदेशे सहकार्यमपि सहकार्यदेशे उपादेयमपि स्यात,यदि नास्ति तर्हि उपादेयदेशे उपादेयकार्यानुकूलसामर्थ्यसहकार्यकार्यानुकूलाऽसामर्थ्याभ्यामेवं सहकारिदेशरूपदेशान्तरे सहकार्यकार्यानुकूलसामर्थ्योपादेयकार्यानुकूलाऽसामर्थ्याभ्यामेकस्यापि रूपादिकारणस्य द्वैविध्यं स्यात्, तत्रापि प्रत्येकस्य तथैव भेदप्रसङ्गेनानवस्थया शून्यत्वमेव स्या-

दित्याकारको यो नैयायिकस्याशयस्तदनभिज्ञस्य बौद्धस्येयमाशङ्केति भावः । ननु यदि प्रसङ्गविपर्ययौ निर्दुष्टौ स्याताम् तदा ताभ्यां स्याच्छून्यत्वपर्यवसानं, नचैवं, तयोर्दुष्टत्वादित्याशङ्कते–अस्तु तर्हीति, सः दोषः । सामर्थ्याऽसामर्थ्ययोरिति साध्ययोरिति विपरिणतेनान्वयः, तथा च सामर्थ्ये असामर्थ्ये च साध्य इत्यर्थः । ननु प्रसङ्गे सामर्थ्येनापादकेन कारित्वमापाद्य विपर्यये चाकारित्वेन हेतुनाऽसामर्थ्यं साध्यं सामर्थ्यं तु न कुत्रापि साध्यमिति किमित्यत्र सामर्थ्योपादानं कृतमित्याशङ्कायामाह–यदि कश्चित्कारिणोऽपीति, तद्देशसामर्थ्यदेशान्तराऽसामर्थ्यरूपविरुद्धधर्मसंसर्गाद् भेदापत्तिभयेन यदि कश्चिदेकदेशकार्यकारिणोऽपि कार्यं प्रति सामर्थ्यं नाभ्युपगच्छेत्तदा तं वादिनं प्रति तत्सामर्थ्यमपि कारित्वेन हेतुना साध्यमिति भावः । द्वितीयपक्षमाह–यद्वेति, ननु भेदस्य प्रकृतप्रसङ्गविपर्ययाभ्यामसाध्यत्वात्तत्र दोषेऽपि तयोर्न दुष्टत्वमित्याकाङ्क्षायामाह–तस्यापीति, प्रसङ्गविपर्ययाभ्यां सामर्थ्येऽसामर्थ्ये च सिद्धे तद्रूपविरुद्धधर्माध्यासाद् भेदस्यापि साध्यत्वादित्यर्थः । अत्र तत्क्षणवर्त्तिरूपं भिन्नं रूपदेशावच्छिन्नरूपानुकूलसामर्थ्यरूपदेशावच्छिन्नरसगन्धादिज्ञानसुखाद्यनुकूलाऽसामर्थ्यलक्षणविरुद्धधर्माध्यासात् रसादिज्ञानादिदेशावच्छिन्नरसादिज्ञानादिकार्यानुकूलसामर्थ्यरसादिज्ञानादिदेशावच्छिन्नरूपकार्यानुकूलाऽसामर्थ्यलक्षणविरुद्धधर्माध्यासाद्वा यो यो विरुद्धधर्माध्यासवान् स स भिन्नः यथा घटः पटश्चेति सामान्यव्याप्तिमूलमनुमानं भेदसाधने बोध्यमिति । तृतीयपक्षमाह—

यद्वा भेदसिद्ध्यनुगुणे प्रमाणान्तरसाध्ये शक्त्यशक्त्योर्विरोधे । नाद्यः सर्वत्र सामर्थ्ये प्रसह्यकरणात्, सर्वत्राशक्तौ क्वचिदप्यकरणात्, एवं च सर्वदेशानां सर्वकार्यवत्त्वसर्वकार्यशून्यत्वरूपाद्वैतापातात् । क्वचिदेव कारित्वाकारित्वाभ्युपगमे चोक्तवत् कारणभेदापत्तेरिति । सर्वदेशसमानस्वभावत्वेऽपि स्वोपादानदेश एव

तत् तत् कार्यं करोतीत्ययमस्य स्वभावः स्वकारणादायातो न नियोगपर्यनुयोगावर्हतीति चेत्। तर्हि सर्वकालसमानस्वभावत्वेऽपि तत्तत्सहकारिकाल एव करोतीत्ययमस्य स्वभावः स्वकारणादायात इति किं न रोचयेः। अत्र स्वोपादानेति, एवं कार्यं, प्रतिनियतदेशोपलक्षकं, क्षणिकत्वेन कारणस्य कार्याधिकरणत्वायोगादिति दीधितिकारः।

यद्वेति, ननु विरोधः किमर्थं साधनीय इत्याशङ्कायां स्वरूपकीर्तनविशेषणमाह-भेदसिद्ध्यनुगुण इति. तथा च प्रकृतोपयुक्ततया तस्य साध्यत्वमावश्यकमिति भावः। प्रमाणान्तरेति, सामर्थ्याऽसामर्थ्ये विरुद्धे विरोधलक्षणयोगित्वात् यथा घटत्वपटत्वे इत्याद्यनुमानेत्यर्थः, शक्त्यशक्त्योः सामर्थ्याऽसामर्थ्ययोः। सामर्थ्यासामर्थ्ययोः साध्यत्वे यदि देशगर्भप्रसङ्गतद्विपर्ययौ दुष्टौ स्याताम्, तदा सर्वत्र सामर्थ्यमेव स्यात् असामर्थ्यमेव वा, आद्यपक्षे आह-सर्वत्र सामर्थ्यं इति, द्वितीये आह-सर्वत्राशक्ताविति, तेन को दोष इत्यत आह-एवञ्चेति, कारित्वाकारित्वाभ्युपगमे इति तदतद्देशावच्छेदेन सामर्थ्यासामर्थ्याभ्युपगम इत्यर्थः। बौद्धस्य गूढाभिप्रायमाशङ्क्य प्रतिबन्द्या निराकरोति-सर्वदेशसमानस्वभावत्वेऽपीति, आशङ्काघटकस्वोपादानदेश इत्यत्र कार्यं स्वपदग्राह्यमुपदर्श्य स्वोपादानपदस्य समुदितमर्थमाह-प्रतिनियतदेशोपलक्षकमिति, येन यस्मिन् देशे कार्यं जन्यते स देशस्स्वोपादानदेशः नतु समवायेन कार्याधिकरणीभूतो देश इत्यर्थः, तत्र हेतुमाह-क्षणिकत्वेनेति, भिन्नकालीनयोर्नाधाराधेयभाव इति नियममनुसृत्योक्तमिदम्।

स एव क इति पृच्छायां मूलनयानभिज्ञस्य तूष्णीम्भाव एव शरणम्। वयं तु ब्रूमः। ऋजुसूत्रनयादे-

शेन कार्यकालोत्पत्तिक आकाशदेशः, तन्नये सर्वेषामाकाशाश्रयत्वात्, शब्दनयादेशेन च स्वात्मैव, तन्नये सर्वेषां स्वप्रतिष्ठितत्वात्, एतन्मते एकस्यैव देशकालोपाधित्वेन लाघवमिति । न द्वितीयः, विरुद्धधर्माध्यासेप्यभेदे भेदव्यवहारस्य निर्विषयत्वप्रसङ्गात्, भेदप्रसिद्धावनैकान्तिकश्च ॥

स एवेति, प्रतिनियतदेश एवेत्यर्थः, मूलनयाऽनभिज्ञस्येति, "जं काविलं दरिसणं एयं दव्वट्ठियस्स वत्तव्वं । सुद्धोअणतणयस्स उ परिसुद्धो पज्जवविगप्पो ॥१॥" इति सम्मतितर्कोक्तेर्बौद्धमतस्य मूलनयः पर्यायार्थिकः तदनभिज्ञस्य शिरोमणिनामधेयदीधितिकारस्येत्यर्थः, पर्यायार्थिकनयस्याप्यृजुसूत्राऽऽदिभेदभिन्नत्वादृजुसूत्रादिनयेन स्वाभिप्रायेण प्रतिनियतदेशो यदात्मा तत्स्वरूपमाख्यातुमाह ग्रन्थकारः–वयं तु ब्रूमः, इति । यद्वा नयानां मूलभेदा नैगमादयस्सप्त प्रतिभेदास्तु सप्तशतानि, एकैकस्य नैगमादेर्नयस्य शतविधत्वात्, 'एक्केको वि सयविहो' इत्याद्यागमप्रामाण्यात्, प्रकृते मूलनय ऋजुसूत्रादिः, तत एव बौद्धदर्शनस्योत्थानात् तदनभिज्ञस्येत्यर्थः । ऋजुसूत्राद्यभिप्रायेण प्रतिनियतदेशस्वरूपमाख्यातुमाह–वयन्त्विति, आकाशदेशस्यापि क्षणिकत्वप्रतिपत्त्यर्थं तं विशिनष्टि-कार्यकालोत्पत्तिक इति, तन्नये ऋजुसूत्रनये सर्वेषामाकाशाश्रयत्वादिति, उक्तश्चानुयोगद्वारसूत्रे वसतिदृष्टान्ते 'उज्जुसुअस्स जेसु आगासपएसेसु ओगाढो तेसु वसइ' इति, तट्टीकायामप्युक्तं, येष्वाकाशप्रदेशेष्ववगाढस्तेष्वेव वसतीत्युच्यते, न संस्तारके, सर्वस्यापि वस्तुवृत्त्या नभस्येवावगाहनादिति । तत्त्वार्थप्रथमाध्यायपञ्चत्रिंशत्सूत्रटीकायां नयप्रकरणे सांप्रतसमभिरूढैवम्भूतान्यतमत्वमेव शब्दत्वमिति लक्षणस्य शब्दनयस्यैतद्ग्रन्थकारेणैवोक्तत्वात्सांप्रतसमभिरूढैवम्भूतलक्षणभेदत्रयसङ्ग्राहकशब्दनयादेशेन प्रतिनियतदेशस्वरूपमाह–शब्दनयादेशेनेति, स्वात्मैवेति, उक्तश्च वसतिदृष्टान्ते 'तिण्हं सद्दनयाणं आयभावे वसइ' इति

तिण्हं सद्दनयाणमित्यादि, शब्दप्रधाना नयाः शब्दनया शब्दसमभिरूढैवम्भूताः, शब्देऽन्यथास्थितेऽर्थमन्यथा नेच्छन्त्यमी, किन्तु यथैव शब्दो व्यवस्थितस्तथैव शब्देनार्थं गमयन्तीत्यतः शब्दनया उच्यन्ते इत्यादि, विशेषार्थिना तत एवावसेयम्, तन्नये शब्दनये, ऋजुसूत्रापेक्षया शब्दनये लाघवतर्कमाह–एतन्मत इति, यद्यपि कालः ऋजुसूत्रनयेऽपि नास्त्यतिरिक्तः, तथापि देशस्य स्वातिरिक्तस्याभ्युपगमाद् गौरवमिति भावः । भेदव्यवहारस्य निर्विषयत्वप्रसङ्गादिति,सामर्थ्याऽसामर्थ्ये विरुद्धे अप्येकत्र विद्यमाने अपि न धर्मिणं भिन्दाते तर्हि क्वचिदपि भेदस्यासिद्धत्वाद् भेदव्यवहारस्यासद्विषयकत्वप्रसङ्गादित्यर्थः, अथवा क्वचिदपि भेदस्यासिद्धौ कस्मिंश्चिदपि धर्मिणि भेदानुमितिर्न स्यादित्यर्थः, न च व्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वादिदमयुक्तमिति वाच्यम्, भेदत्वज्ञानमन्तरेण भेदविषयिकाया अप्यनुमितेरसम्भवात् तज्ज्ञानस्य च क्वचिदपि भेदप्रसिद्ध्यभावे दुरुपपादत्वमित्यत्रैव ग्रन्थतात्पर्यात् । केचित्त्वप्रसिद्धसाध्यकव्यतिरेकिणमनभ्युपगम्यैवेदमुक्तमित्याहुः, किञ्च भेदः क्वचित्प्रसिद्धो नवेति पक्षद्वये आद्यपक्षमधिकृत्याह–भेदप्रसिद्धावनैकान्तिकश्चेति, यत्र देशभेदेन विरुद्धधर्माध्यासस्तत्र क्वचिद्भेदो वर्तते क्वचिच्च नेति यत्र न भेदसिद्धिस्तत्र साध्याभाववति हेतोस्सत्त्वादनैकान्तिकत्वमित्यर्थः । नन्वेकक्षणस्थाया एकस्या वीजादिव्यक्तेर्देशभेदेन सामर्थ्याऽसामर्थ्यसद्भावेऽपि ताभ्यां विरुद्धाभ्यां भेदाऽसिद्धावपि क्षणिकत्वसिद्धौ न काऽपि क्षतिः कालभेदेन विरुद्धाभ्यां ताभ्यां कुशूलस्थक्षेत्रस्थवीजव्यक्तेर्भेदसिद्ध्या क्षणिकत्वसिद्धेरक्षतत्वादित्यत आह–

इत्थं हेतुः कालतोऽपि न भेदं साधयेत्, तदप्रसिद्धौ च व्याप्यत्वासिद्ध इति । न तृतीयः, विरोधलक्षणयोगे बाधकसहस्रेणापि विरोधित्वस्यापनेतुमशक्यत्वात्, अयोगे वा तदेव चिन्त्यमिति । यद्विधाने

यस्य निषेधो यन्निषेधे च यस्य विधानं तयोरेकत्र धर्मिणि परस्परपरिहारस्थिततया विरोधः, भावाभावविरोधविवेचने यद्विधानं यन्निषेधो यन्निषेधो यद्विधानमिति फलितार्थः। विधाननिषेधौ ज्ञानाज्ञाने, तथा च यज्ज्ञाने, यदज्ञानं यदज्ञान एव यज्ज्ञानमित्यर्थं तु गोत्वाश्वत्वादिसाधारण्यमिति ध्येयम्, स चेह नास्ति, तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धं तद्विधौ तस्यैव नियमेन निषेधात्, न पुनर्देशान्तरे तत्कार्याकारित्वेन, तस्यानिषेधात्,

इत्थमिति, तथा च देशभेदगर्भितस्येव कालभेदगर्भितस्यापि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासहेतोरनैकान्तिकत्वाविशेषात्तेन भेदाऽसिद्ध्या क्षणिकत्वसिद्धिरपि न स्यादित्यर्थः। भेदः क्वचिदपि न प्रसिद्ध इति द्वितीयपक्षमभिप्रेत्याह–तदप्रसिद्धौ चेति, व्याप्यत्वासिद्ध इति, क्वचिद् भेदाप्रसिद्धौ तद्रूपसाध्याप्रसिद्ध्योक्तसाध्यहेत्वोर्व्याप्त्यसिद्ध्या भेदासिद्धेः क्षणिकत्वासिद्धिस्तदवस्थैवेति भावः। विरोधलक्षणयोगे इति, परस्परविरहात्मनोः परस्परविरहव्याप्ययोर्वा विरोधलक्षणध्रौव्ये इत्यर्थः, नन्वेकदेशावच्छेदेन कारित्वाकारित्वे विरोधलक्षणाऽऽक्रान्ते नतु देशभेदेनापीत्याह–अयोगे वेति, विरोधलक्षणस्यायोगे वेत्यर्थः। तदेव विरोधलक्षणमेव, यद्विधाने यस्य निषेधो यन्निषेधे च यस्य विधानमिति यद्विधाने क्रियमाणे यस्य निषेधः सिद्ध्यति यन्निषेधे च क्रियमाणे यस्य विधानं सिद्ध्यतीत्यर्थः, नेदं विरोधसामान्यलक्षणं गोत्वाश्वत्वविरोधाव्यापकत्वादस्य लक्षणस्य, किन्तु भावाभावमात्रविरोधलक्षणमिदमित्याह–भावाभावविरोधविवेचने, इति भावाभावविरोधविवेचने लक्षणमेतदित्यर्थः, भावाभावविरोधविवेचनमित्यप्यन्यत्र पाठः, फलितलक्षणं लाघवादाह–यद्विधानं यन्निषेध इत्यादि।

अस्मद्गुरुचरणास्तु सिद्ध्यतीत्यादिक्रियापूरणेन योजनां नाहुः, किन्तु यथाश्रुतार्थमेव, भावाभावविवेचने इत्यस्य चावतरणिकामेवमाहुः, ननु घटविधानमेव घटाभावनिषेधो घटनिषेध एव च घटाभावविधानमिति विधाननिषेधयोर्भेदापेक्षमुक्तलक्षणं भावाभावविरोधाऽसङ्ग्राहकत्वादलक्षणमेवेति चेल्लक्ष्यभेदे लक्षणस्य भिन्नत्वेन तत्रान्यादृशमेव विरोधलक्षणमित्याह–**भावाभावविरोधविवेचन** इति, अत्र तातपादानामभिप्रायेण भावाभावविवेचने इत्यस्य यद्विधानं यन्निषेध इत्यत्रान्वयः, नतु पूर्वत्रान्वय इति सूचितम्, विधाननिषेधपदयोर्ज्ञानाज्ञानरूपार्थकरणेन गोत्वाश्वत्वादिभावयोर्विरोधस्यापि यद्विधाने यस्य निषेधो यन्निषेधे च यस्य विधानमित्युक्तविरोधलक्षणसङ्ग्राह्यत्वमाह–**विधाननिषेधौ ज्ञानाज्ञाने** इति। त्विति,अत्र तु पदमात्रपक्षो हि न गोत्वाश्वत्वादिभावविरोधसाधारण इति विशेषयति। उक्तविरोधलक्षणस्याऽयोगं तद्देशकार्यकारित्वान्यदेशकार्याऽकारित्वयोः प्रतिपादयति बौद्धः–**सचेह नास्तीत्यादिना,** तद्देशकार्यकारित्वमिति, यद्देशे करोति तत्रैव न कुर्यात्तदा विरोधस्स्यादित्यर्थः। तत्र हेतुमाह–**तद्विधाविति, न पुनर्देशान्तरे तत्कार्याकारित्वेनेति,** तद्देशकार्यकारित्वं विरुद्धमित्यनुषङ्गः, तत्र हेतुमाह–**तस्याऽनिषेधादिति,** तद्विधावित्यनुषञ्जनीयम्, एतदेव विरोधाऽविरोधस्वरूपं स्पष्टयति—

**नह्यन्यत्र तदकरणमतत्करणं वा तत्र तत्करणस्याभाव इति व्यवह्रियते, अपि तु तत्र तदकरणमिति चेत्, हन्त–एवंभूतविरोधलक्षणव्यावृत्तिर्भिन्नकालशक्त्यशक्त्योरपीत्युक्तप्रायं तत्प्रतिसन्दधीथाः। तस्मात् प्रसङ्गतद्विपर्ययस्थितावप्यसिद्धो विरुद्धधर्माध्यासः, देशभेदेनेव कालभेदेनापि सामर्थ्यासामर्थ्ययोः करणाकरणयोश्चाभ्युपगमे विरोधायोगात् ॥**

नहीति, अतत्करणम् कार्यान्तरकरणम्, अस्यच प्रकृतेऽनुपयोगाद्दृष्टान्तविषयैवोपयोगो ज्ञेयः। व्यवह्रियते इति, येन विरोधस्स्यादिति शेषः, अपि तु तत्र तदकरणमिति, अपि तु तत्रैव देशे तदानीमेव तदकरणं तत्करणस्याभाव इति व्यवह्रियते अतस्तयोर्विरोध इत्यर्थः। साम्यमापादयति- हन्तेति, तत्कालावच्छिन्नं तत्कार्यकरणं तत्कालावच्छिन्नतत्कार्याकरणेनैव विरोधि,सहानवस्थानात्, नत्वन्यकालावच्छिन्नतत्कार्याकरणेनापीत्युक्तमित्यर्थः,तथा च कालगर्भप्रसङ्गविपर्ययाभ्यामपि न भेदसिद्धिरिति भावः। पूर्वं प्रसङ्गविपर्ययावेवाऽसिद्धावित्युक्तमधुना तावभ्युपेत्य विरोधाभावमुपसंहरति-तस्मादिति। ननु प्रसङ्गविपर्यययोस्स्थितौ कथं विरुद्धधर्माध्यासोऽसिद्धः,तयोरेव तत्साधकत्वादत आह-देशभेदेनेति, ननु स्थिरवादिनां कालान्तरस्थबीजादिव्यक्तेरधिकरणं कालान्तरमभ्युपगतमिति तस्य सामर्थ्याभावावच्छेदकत्वं सम्भवतीति शक्यते वक्तुं कुशूलकालावच्छिन्नसामर्थ्यवत्यां बीजादिव्यक्तौ क्षेत्रस्थकालावच्छेदेनाऽसामर्थ्यमिति तथा च कालगर्भसामर्थ्याऽसामर्थ्याभ्यां स्यादेव भेदः, बौद्धमते त्वेकदेशस्थबीजादिव्यक्तेर्देशान्तरे सत्त्वानभ्युपगमेन तस्याधिकरणत्वाभावात्तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति नियमात्तत्रावच्छेदकत्वाभावान्न च वक्तुं शक्यमेकदेशावच्छिन्नसामर्थ्यवतस्तत्क्षणस्थबीजादिपदार्थस्य देशान्तरावच्छेदेनाऽसामर्थ्यमिति येन तद्विरुद्धधर्माध्यासात् तत्क्षणस्थस्यापि बीजादिपदार्थस्यभेदस्स्यादिति गूढाशयवान् बौद्धश्शङ्कते—

नन्वेकदेशे समर्थस्य देशान्तरे किमिदमसामर्थ्यं यद्विरुध्यते, किं सामर्थ्याभावविशिष्टस्य देशान्तरे समर्थत्वं, देशान्तरावच्छेदेन तस्य सामर्थ्याभाववैशिष्ट्यं वा, किं वा सामर्थ्यविशेषितस्य तस्य तन्निष्ठसामर्थ्यस्य वा देशान्तरेऽभावो, नाद्यद्वयम्, अनभ्युपगमात्, क्षणिकपदार्थस्य देशान्तरवृत्तित्वासम्भवात्, तद-

सम्बन्धिदेशस्य तन्निष्ठाभावाधारतावच्छेदकत्वासम्भवाच्च । नेतरत्, अविरोधात्, एतेनाकरणं व्याख्यातम् । न चैकदेशकालसतो देशान्तरे कालान्तरे च कथमसत्त्वमिति वाच्यं, तत्रासत्वं हि तद्वृत्तित्वाभावस्तन्निष्ठाभावप्रतियोगित्वं वा, न चेदमन्यत्र सत्त्वेन विरुध्यते, परस्पराभावरूपत्वाभावात्, अतदाक्षेपकत्वाच्चेति ॥

नन्वेकदेश इति, देशान्तरे समर्थत्वमिति, अत्र देशान्तरे तत्कार्याऽकारित्वस्याऽनिषेधात्सत्त्वमित्यन्यत्र पाठः, देशान्तरावच्छेदेनेति, अस्य सामर्थ्याभाववैशिष्ट्यमित्यनेनान्वयः, तस्य समर्थस्य, आद्यविकल्पनिषेधे हेतुमाह–क्षणिकपदार्थस्येति, द्वितीयविकल्पनिषेधे हेतुमाह–तदसम्बन्धिदेशस्येति, समर्थक्षणिकवीजादिव्यक्त्यनधिकरणदेशस्येत्यर्थः । तन्निष्ठाभावेति, समर्थक्षणिकवीजादिव्यक्तिनिष्ठसामर्थ्याभावेत्यर्थः । तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति नियमादिति भावः । तृतीयपक्षं निराकरोति–नेतरदिति, एवमेकदेशे कारिणोऽन्यत्राकारित्वमित्यत्रापि वक्तव्यमेकदेशकारकस्य किमिदं देशान्तरेऽकरणमित्यादिरूपमर्थमतिदेशेन गतार्थयति–एतेनाकरणं व्याख्यातमिति । इदानीं सत्त्वासत्त्वरूपविरुद्धधर्माध्यासमाशङ्क्य निषेधति–नचेति, एकेति कालेऽप्यन्वयि, अतदाक्षेपकत्वाच्चेति, परस्पराभावव्याप्यत्वाभावाच्चेत्यर्थः । देशान्तरस्योक्तनीत्याऽवच्छेदकत्वाऽसम्भवेन तदतद्देशावच्छिन्नसामर्थ्याऽसामर्थ्याभ्यां भेदासम्भवेऽपि रूपात्मकोपादेयकार्यजनकदेशस्य रूपनिष्ठरूपात्मकोपादेयकार्यानुकूलसामर्थ्यावच्छेदकत्वान्यथानुपपत्त्या रूपात्मकोपादानकारणसम्बन्धित्वेनाभ्युपगमात्तत्र रूपात्मकोपादेयकार्यानुकूलसामर्थ्यस्येव रूपनिष्ठस्यैव ज्ञानसुखादिनैमित्तिककार्यानुकूलाऽसामर्थ्यस्याप्यऽवच्छेदकत्वसम्भवेन ताभ्यामेकदेशावच्छिन्नसामर्थ्यासामर्थ्याभ्यां रूपादेर्भेदापत्तिस्स्यादेवेत्याशयेन निषेधति—

मैवम्, एवमपि नैमित्तिकसुखादिसमर्थस्य रूपादेरुपादेयकार्यदेशसुखादिकारित्वं स्याद् सामर्थ्याविशेषात्; असामर्थ्ये च विरुद्धधर्माध्यासाद्भेदापत्तिः। यदि च सामर्थ्याविशेषेऽपि स्वभावादेव प्रतिनियतदेशकार्यकारित्वं, तदा तथैव प्रतिनियतकालकार्यकारित्वमस्त्वित्युक्तत्वात्। न च तत्कालावच्छेदेन कारित्वाभावेनैव समं कालान्तरावच्छेदेन कारित्वस्य विरोधोऽस्त्विति शङ्कनीयम्, देशभेदावच्छेदेनैकस्य कालस्येव कालभेदावच्छेदेनैकस्यापि देशस्य करणाकरणादिमत्त्वमविरुद्धमित्यस्याभिहितत्वादिति विपर्ययस्थितावपीत्यपिना सूचितमिति दीधितिकारः। तच्चिन्त्यम् ॥

मैवमिति, नैमित्तिकसुखादिसमर्थस्य रूपादेरिति, यन्नैमित्तिकं सुखमादिना ज्ञानादिकं तत्कार्यं प्रति समर्थस्य रूपादेस्स्वाधिकरणीभूतरूपाद्यात्मकोपादेयकार्यजनकदेशावच्छेदेनैव रूपोत्पादनसामर्थ्यमिव नैमित्तिकसुखज्ञानादिकार्योत्पादनसामर्थ्यमस्ति नवा,यद्यस्ति, तर्हि तत्रापि सुखादिकारित्वं स्यात्,तथा च नैमित्तिककार्यस्याप्युपादेयकार्यत्वापत्त्यैकविधमेव कार्यं स्यात्, यदि च नास्ति, तर्ह्येकदेशावच्छिन्नसामर्थ्याऽसामर्थ्याभ्यामेकस्यापि क्षणिकरूपादेर्भेदस्स्यात् तत्राप्येकैकस्यैवं भेदप्रसङ्गेनानवस्थया सर्वशून्यत्वं पर्यवस्येदिति भावः। यद्यप्युपादेयकार्यानुकूलसामर्थ्यसत्त्वमिवोपादेयकार्यदेशावच्छेदेन नैमित्तिककार्यानुकूलसामर्थ्यसत्त्वमप्यविशिष्टमेव तथापि कारणस्यैव तथाविधस्स्वभावः यद्बलात्प्रतिनियत एव देशे कार्यकारित्वं, न च स्वभावः पर्यनुयुज्यत इति चेत्,तर्हि स्थिरभूतेऽपि कारणे कालान्तरकार्यानुकूलसामर्थ्यस्य वर्त्तमानकाले सत्त्वाऽविशेषेऽपि स्वभावबलादेव न तदानीं कार्यकारित्वं, किन्तु विवक्षितकालान्तर एवेत्यभ्युपगमे का क्षतिः देवानुप्रियाणां भवतामित्याह—यदि च सामर्थ्याऽविशेषेऽपीति,

एकस्य कालस्येवेति, एकक्षणवर्त्तिनः कारणस्येवेत्यर्थः। एकस्यापि देशस्येति, स्थिरभूतस्यैकदेशस्थकारणस्यापीत्यर्थः। विपर्ययस्थितवापीत्यपिनेति, तस्मात् प्रसङ्गविपर्ययस्थितावपीत्यत्रापिनेत्यर्थः। तदसम्वन्धिदेशस्य तन्निष्ठाभावाधारतावच्छेदकत्वाऽसम्भवादिति दीधितिकारेण वौद्धमतमुपन्यस्तं न चैतत्खण्डितं किन्त्वनिषिद्धमनुमतमिति न्यायात्स्वीकृतमेव, यच्च यदि स्वभावादेव प्रतिनियतदेशकार्यकारित्वं तदा तथैव प्रतिनियतकालकार्यकारित्वमस्त्विति प्रतिवन्द्या स्वभावावलम्वनं कृतं तदुभयस्मिन्नस्वारस्यसूचनायाह- तच्चिन्त्यमिति। चिन्तावीजं ग्रन्थकारः स्वयमेवाह—

इदमेतद्देशे समर्थं नान्यत्रेति सामर्थ्यासामर्थ्योभयप्रकारकैकमुख्यविशेष्यकप्रतीत्यनुरोधेनान्ततो वैज्ञानिकसम्बन्धेन स्वसम्बद्धस्यान्यदेशस्य स्ववृत्तिसामर्थ्याभावावच्छेदकत्वस्वीकारात्कार्यनिष्ठस्वाचित्कत्वस्य च कारणभेदनियम्यत्वेन केवलस्वभावादनुपपत्तेः, अन्यथा स्वभाववादिमतसाम्राज्यप्रसङ्गात्, तद्देशावच्छिन्नकार्यं तद्देशस्य हेतुत्वेऽपि रूपरसादिक्षणानां रूपरसाद्युपादानत्वानुपादानत्वविरोधावधारणात्, तत्कार्यापेक्षया तद्वारणे च यावत्सम्बन्धि वस्तुस्वभावभेदापातात्।

इदमेतद्देश इति, इदमेतद्देशे समर्थं नान्यत्रेत्याकारकप्रतीतावेतद्देशे इत्यत्र सप्तम्या अवच्छेदकत्वार्थकत्वादेतद्देशस्य सामर्थ्यावच्छेदकत्वमन्यत्रेत्यत्रापि चान्यपदोत्तरविधीयमानत्रल्प्रत्ययस्यावच्छेदकत्वार्थकत्वादन्यपदवाच्यदेशान्तरस्य समर्थपदार्थेनान्वितस्य नञ्पदवाच्यस्याभावस्यावच्छेदकत्वं, इदमित्यस्य विशेष्यपदत्वादिदन्त्वावच्छिन्नविशेष्यता समर्थमित्यस्य आवृत्त्या गृह्यमाणसमर्थपदसमभिव्याहृतस्य नञश्च विशेषणपदत्वात्सामर्थ्यत्वावच्छिन्नप्रकारता सामर्थ्याभावत्वावच्छिन्नप्रकारता च

लभ्यते, तथा चैतद्देशावच्छिन्नसामर्थ्यत्वावच्छिन्नसामर्थ्यनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यत्वाऽभिन्नविशेष्यतानिरूपितान्यदेशावच्छिन्नसामर्थ्याभावत्वावच्छिन्नसामर्थ्याभावनिष्ठप्रकारतानिरूपको बोध इत्यर्थः, **सामर्थ्यासामर्थ्योभयप्रकारैकमुख्यविशेष्यकेति**, अनेन प्रथमतृतीयविकल्पौ पूर्वोक्तौ नाङ्गीकर्त्तव्यौ, किन्तु द्वितीय एव विकल्प इति सूचितम्, अन्यत्र सामर्थ्यासामर्थ्योभयप्रकारकत्वस्यैकमुख्यविशेष्यकत्वस्य चाऽभावात्। ननु कथमेतत्सङ्गच्छते देशान्तरस्योक्तनीत्या सामर्थ्याभावानवच्छेदकत्वादित्यत आह—**अन्ततो वैज्ञानिकसम्बन्धेनेति**, **अन्तत इति**, सम्बन्धान्तराऽभावेऽपीत्यर्थः, **वैज्ञानिकसम्बन्धेनेति**, एकज्ञानविषयत्वसम्बन्धेनेत्यर्थः, एकज्ञानं प्रकृते इदमर्थान्यदेशयोस्समूहालम्बनं ग्राह्यम्, तथा चान्यदेशस्यापि सम्बन्धित्वादवच्छेदकत्वं सम्भवत्येवेति भावः। यदि च सामर्थ्याविशेषेऽपीत्यादिना स्वभावावलम्बनं यत्कृतं तन्निरासायाह—**कार्यनिष्ठक्वाचित्कत्वस्येति**, स्वभावमात्रमेव कार्यनिष्ठक्वाचित्कत्वप्रयोजकमित्यभ्युपगमेऽतिप्रसङ्गमाह—**अन्यथेति**, **स्वभाववादिमतसाम्राज्यप्रसङ्गादिति**. नन्वेकेनैव कार्ये सिद्धे किं कल्पनाद्वयेनेति न्यायात्स्वभावमात्रेण कार्ये सिद्धे कारणान्तराकल्पनेन लाघवतर्कस्य सद्भावात्स्वभावमतावलम्बने न किमपि दूषणमिति चेत्, तर्हि तदपि शृणु, उद्यमादीनां नैरर्थक्यप्रसङ्गेन जगतो निरीहत्वं स्यात्, स्वभावस्याऽविशिष्टत्वाद्युगपत्कार्यप्रसङ्गश्च स्यात्, स्वभावस्य क्रमवत्कार्यजनकत्वमपि स्वभावादेवेति नानुपपत्तिरिति चेत्, न, स्वभावस्यैव पूर्वोत्तरकार्यजनकत्वे पूर्वोत्तरकालयोरुत्तरपूर्वकार्यप्रसङ्गेन क्रमस्यैव व्याहतेः, एकस्यैव स्वभावस्य नानाजातिनियामकत्वे सर्वस्य सर्वजातीयत्वस्यैकजातीयत्वस्य वा प्रसङ्गस्स्यादित्यादि। अथ कारणस्य सामान्यतः कारित्वस्वभाव एव, न चैवं तर्हि किमिति न देशान्तरे कार्यमुत्पद्यत इति वाच्यम्, अवच्छेदकतासम्बन्धेन तत्तत्कार्यं प्रति तादात्म्यसम्बन्धेन तत्तद्देशस्य

हेतुत्वादित्याशयेनाह—तद्देशावच्छिन्नकार्यं तद्देशस्य हेतुत्वेऽपीति, यस्मादेव रूपस्वलक्षणादुपादेयभूतं रूपमुत्पद्यते तस्मादेव सहकार्यभूतं रसादिकार्यमपि, एवं रसस्वलक्षणादुपादेयभूतं रसकार्यं रूपगन्धाद्यात्मकं सहकार्यकार्यमित्येवं बौद्धैरभ्युपगतं, तथा चैकस्यापि रूपस्य रूपकार्यापेक्षयोपादानकारणत्वं रसकार्यापेक्षया चानुपादानकारणत्वमस्तीति तद्रूपविरुद्धधर्माध्यासाद्भेदापत्तिस्स्यात् एवं रसादीनामपि ज्ञेयमित्याह—रूपरसादिक्षणानामिति, तत्तत्कार्यापेक्षया तत्कारणे इति, रूपे रूपात्मकोपादेयकार्यापेक्षयोपादानत्वं रसात्मकसहकार्यकार्यापेक्षया चानुपादानत्वं, न च ते विरुद्धे, एककार्यापेक्षयैव तयोर्विरोधादित्येवं प्रकृते विरोधवारणे इत्यर्थः, यावत्सम्बन्धि वस्तुस्वभावभेदापातादिति, कार्यताभेदेन तन्निरूपितकारणतास्वभावस्य कारणताभेदेन तन्निरूपितकार्यतास्वभावस्य च भेदावश्यकत्वेन स्वभावस्वभाववतोरभेदेन स्वभाववतोऽपि यावन्तः स्वभावभेदास्तावद्भेदापत्त्यैकस्याप्यनेकात्मकत्वं स्यादित्यनेकान्तवादप्रवेशापत्तिस्स्यात्, अन्यथैकस्यानेकसहकारित्वाऽयोगेन विविक्तव्यवहारोच्छेदस्स्यादिति भावः ।

एकस्वभावप्रयोज्यत्वे सर्वकार्यादिव्यक्तीनामभेदापत्तेः, देशे कालस्येव काले देशस्य तत्तदभावावच्छेदकत्वाभ्युपगमे च स्वद्रव्यपरद्रव्यादिचतुष्टयाभ्यां सत्त्वासत्त्वव्यवस्थितिरित्यस्मन्मताभ्युपगमस्यैव युक्तत्वात्, इदानीं गोष्ठे गौर्न तु वाजिशालायामितिवदिदानीं श्यामत्वेन घटो न रक्तत्वेनेत्यादिप्रतीतेरपि सार्वजनीनत्वात्, सत्ताघटकत्वरूपस्यावच्छेदकत्वस्योभयत्राविशेषात्, स्वरूपसम्बन्धविशेषरूपस्यापि तस्य यथाप्रतीतिकल्पनाऽविरोधात्, अवच्छेदकावच्छेद्यसङ्कोचविकासयोरपि नयचिन्ताधीनयोरनन्तधर्मात्मकवस्तुन्यनुप-

पत्त्यभावात् ॥

एकस्वभावप्रयोज्यत्वे इति, उक्तदोषनिवृत्तये रूपरसादिसुखादिकार्यभेदानां रूपस्वलक्षणात्मककारणगतोपादेयसहकार्यात्मकानेककार्यानुकूलैकस्वभावप्रयोज्यत्वाभ्युपगम इत्यर्थः । अभेदापत्तेरिति, भेदप्रयोजकस्य स्वभावभेदस्याभावादिति भावः । अत्र यदि कारणगतस्वभावभेदाभावेऽपि कार्यभेदोऽभ्युपगतस्स्यात्तदा नानाकार्यानुकूलैकस्वभावमेकमेव कारणमविशिष्टं जगति स्यादित्यपि दोषो बोध्यः । सिद्धान्तलक्षणे प्रतियोगिमतोरपि कालदेशयोर्देशकालभेदावच्छेदेन तदभाव इति नव्यसूत्रणसूत्रधारं शिरोमणिं शिक्षयितुमाह-देशो कालस्यैव काले देशस्य तत्तदभावावच्छेदकत्वाऽभ्युपगमे इति,घटवत्यपि कपाले घटनाशदशायामिदानीमिह कपाले न घट इत्यनुभवात् कपालवृत्तिघटसामान्याऽभावावच्छेदकत्वं घटनाशकालस्यैव घटवत्यपि काले इदानीं तन्तौ न घट इत्यनुभवाद् घटवत्कालवृत्तिघटात्यन्ताभावावच्छेदकत्वं तन्तुदेशस्येत्यभ्युपगम इत्यर्थः । देशकालयोस्तत्तदभावे कालदेशनिरूपितवृत्तितायामवच्छेदकत्वमुक्तप्रतीतिबलादेवाभ्युपगम्यते, नान्यथा,प्रतीतिश्च स्वद्रव्यपरद्रव्यचतुष्टयानामपि सत्त्वाऽसत्त्वयोरवच्छेदकत्वं विषयीकरोतीति स्वद्रव्याद्यवच्छेदेन सत्त्वं परद्रव्याद्यवच्छेदेनासत्त्वं गवादावङ्गीकार्यमिति स्याद्वादमतस्यैवेत्थं साम्राज्यमित्याह–स्वद्रव्येति । ननु द्रव्यस्य समवायेन क्षेत्रस्य संयोगेन कालस्य च कालिकेन सम्बन्धित्वादवच्छेदकतया तदवगाहिप्रतीतेस्सत्त्वात्तद्बलादवच्छेदकत्वसम्भवेऽपि भावस्य धर्मत्वेन देशविधया कालविधया वाऽवच्छेदकत्वाऽसम्भवात्तदवगाहिप्रतीत्यभावेनकथमवच्छेदकत्वमित्यत आह-इदानीं गोष्ठइ ति,तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति नियमो वाजिशालाया देशरूपत्वेन दैशिकविशेषणतया कालाधिकरणत्वतः कालवृत्तिगवाभावावच्छेदकत्वमाश्रित्योपपद्यमानोऽपीदानीं गौर्नात्मनीत्यत्र वृत्तिनियामकसम्बन्धसामा-

न्येनैव कालानधिकरणस्याप्यात्मनः कालवृत्तिगवाभावावच्छेदकत्वतो नोपपद्यते, अतस्तदनधिकरणस्य तदभावावच्छेदकत्वमिति नियमान्तरमभ्युपेत्यगवानधिकरणस्याश्वशालादेर्गवाभावावच्छेदकत्वमास्थेयम्, इत्थञ्च तद्वृत्तिधर्मस्य तदवच्छेदकत्वं तद्गतधर्मान्तरावच्छेदकत्व वा नदवृत्तिधर्मस्य तदभावावच्छेदकत्वं तद्वृत्तिनिषेधात्मकधर्मावच्छेदकत्वं वेत्यादिनियमा एव तत्तदवच्छेदकत्ववैचित्र्यमतीत्यन्यथानुपपत्त्याऽभ्युपगन्तव्याः, अधिकरणत्वस्थाने सम्बन्धित्वं निवेश्य परकीयावच्छेदकत्वनियमोऽपि स्वद्रव्यपरद्रव्यादिचतुष्टयेष्ववच्छेदकत्वानुकूलतामेवाश्वति, साक्षात्परंपरया सर्वस्य सर्वसम्बन्धित्वोपपत्तेरिति गूढाभिसन्धिः । सत्ताघटकत्वरूपस्यावच्छेदकत्वस्येत्यादि, सत्तेत्युपलक्षणम्, तेन सत्त्ववदसत्त्वस्यापि धर्मान्तरत्वेन तदवच्छेदकत्वस्य सत्ताघटकत्वरूपत्वासम्भवेऽपि न क्षतिः, अयमाशयः, गोष्ठनिरूपितवृत्तित्वरूपं सत्त्वं यद्दवि तन्नियमतः किञ्चिद्धर्मावच्छिन्नमिति नावच्छेदकविनिर्मुक्तं तत्स्वरूपमिति सत्तास्वरूपप्रविष्टत्वमेवावच्छेदकत्वं भावे गोत्वे यथा भवतोपेक्ष्यते तथा देशकालादावपि तदेव, वृत्तित्वस्य सखण्डत्वाद्धर्मावच्छिन्नत्वनियमः, तथा तस्याव्याप्यवृत्तित्वसनिरूपकत्वाभ्यां देशकालावच्छिन्नत्वनियमोऽपि, देशाद्यवच्छिन्नत्वं च देशादिघटितत्वादेवाभ्युपगन्तव्यमिति देशकालादावपि सत्तादिघटकत्वमेवावच्छेदकत्वमित्यत्रापि दीयतां दृष्टिरिति, स्वरूपसम्बन्धविशेषरूपस्यापीति, अयमभिसन्धिः, सप्तम्याद्यर्थतया यद्वृत्तित्वादिरूपं सत्त्वादिकं प्रतीयते तद्बहिर्भूततयैव सप्तम्यन्तस्ववाचकपदेनावच्छेदकतया देशकालादिः प्रतीयत इति न देशकालादीनां सत्तादिघटकत्वरूपमवच्छेदकत्वं, किन्तु तद्विलक्षणं स्वरूपसम्बन्धविशेषरूपमेवेति यदि भवताम्मतिः, तदा घटत्वेन घटः सन् पटत्वेन घटोऽसन्नित्यादौ घटत्वादिकमपि सत्त्वादिबहिर्भूततयैव तृतीयान्तस्ववाचकपदेनावच्छेदकतया प्रतीयते इति भावस्यापि सत्तादिघटकत्वविलक्षणमेव स्वरूपसम्बन्धविशेषरूपमवच्छेदकत्वं प्रतीतिशरणैरास्थेयं, विनि-

गमकाभावादिति ॥ अवच्छेदकावच्छेद्यसंकोचविकासयोरपीत्यादि, इदमत्रैदम्पर्यम्, एकान्तवादिनाम्मते तदनधिकरणस्य तदभावावच्छेदकत्वं प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वमित्येकान्तनियमे, इदानीं न गोष्ठे गौः किन्तु गोष्ठकोणे इति प्रतीतिर्न्न स्यात्, गवाधिकरणत्वस्यैव गोष्ठकोण इव गोष्ठेऽपि भावेन गवावच्छेदकत्वस्यैव भावः स्यात्, तत्रैव व्रजस्य गवाधिकरणत्वमवलम्ब्येदानीं न गोष्ठे गौः किन्तु व्रजे इत्यपि प्रतीतिर्न नाम न समस्ति, तेन न्यूनाधिकव्यापिदेशयोरवच्छेदकत्वप्राप्तौ न्यूनव्यापिदेशस्यैवावच्छेदकत्वमित्यपि न कल्पयितुं शक्यम्, अनन्तधर्मात्मकवस्तुवादिनां स्याद्वादिनां च सर्वेषु नयेष्वपक्षपातित्वेन स्वविवक्षानुसारेण तत्तन्नयविनियोगस्योररीक्रियमाणत्वेन "लोके च तिर्यग्लोके च जम्बूद्वीपे च भारते। क्षेत्रे तद्दक्षिणार्द्ध च पाटलीपुत्रपत्तने ॥ १ ॥ गृहे च वसतिः कोणे नैगमव्यवहारयोः ॥ अतिशुद्धौ तु निवसन् वसतीत्याहतुःस्म तौ ॥२॥" इत्यादिनयाभ्युपगमविशेषावलम्बनेनाधिकरणविकाससङ्कोचबलतोऽवच्छेदकविकाससंकोचयोर्नीतिविशेषप्राप्तत्वेनान्त्यविशेषाभ्युपगन्तृशुद्ध – व्यवहारतो गोष्ठकोणस्य गवाधिकरणत्वतो गवावच्छेदकत्वं गोष्ठस्य त्वन्त्यविशेषत्वाभावेन गवाधिकरणत्वाभावतो गवाभावावच्छेदकत्वमिति इदानीं न गोष्ठे गौः किन्तु गोष्ठकोणे इत्यस्य भवत्युपपत्तिः, अशुद्धस्य व्यवहारस्य नैगमस्य वा मतेन गोष्ठव्यापकव्रजस्यैव गवाधिकरणत्वमित्यभ्युपगमविशेषावलम्बने व्रजस्यैव गवावच्छेदकत्वमित्यवच्छेदकविकासतः इदानीं न गोष्ठे गौः किन्तु व्रजे इत्यस्याप्युपपत्तिरिति ॥ उक्तार्थोपोद्वलनायाह–

अत एवेदानीं न गोष्ठे गौः, किन्तु गोष्ठकोणे, व्रजे वा, इदानीं गोष्ठे गोद्रव्यं, नतु गोपर्याय इत्यादिकं सङ्गच्छते । सामान्यविशेषविषयप्रमाणानां नयविचाराधीनान्यतरबाधसान्निध्ये नियतविशेषसा-

मान्यविषयत्वपर्यवसानात् । एतच्च वसतिदृष्टान्तविवेचनप्रस्तावे नयोपदेश–नयामृततरङ्गिणी–नयरहस्यादौ समर्थितमस्माभिरिति तत एवैतत्तत्त्वमवसेयम् ॥१६॥ प्रसङ्गविपर्ययसामान्यासम्भवमसहमानस्यान्तरा प्रसङ्गविपर्ययान्तराशङ्कामुत्थाप्य निराचिकीर्षुराह—

यत् कारणं जनयतीह यदेकदा यत्, तत् सर्वदैव जनयेन्न किमेवमादि ॥
प्राक्पक्षयोः कलितदोषगणेन जाति–व्यक्त्योर्निरस्यमखिलं भवतो नयेन ॥ १७ ॥

यदेकदा यज्जनयति तत् सर्वदैव तज्जनयेदित्यादिकमपि प्रसङ्गविपर्ययजालमखिलं जातिव्यक्तिपक्षयोः कलितदोषगणेन दत्तदोषसमूहेन भवतो नयेन त्वदुक्तनैगमादिमूलनयप्रसूतेन न्यायादिनयेन द्रागेव निरसनीयम्, काशकर्त्तने कुठारस्येव स्याद्वादप्रमाणराजस्यात्रार्थे क इव व्यापार इति भावः ॥

अत एवेत्यादि, अवच्छेदकसंकोचप्रतिपत्तये इदानीं न गोष्ठे गौः किन्तु गोष्ठकोण इति, अवच्छेदकविकासाधिगतये व्रजे वेति, इदानीं गोष्ठे गोद्रव्यं नतु गोपर्याय इत्यादिकमिति, एतच्चावच्छेद्यसंकोचविकासाविर्भावनायोपन्यस्तम्, अत्रादिपदादिदानीं गोष्ठे सौरभेयी नतु गोद्रव्यमित्यादेरुपग्रहः । सामान्यविशेषोभयात्मकवस्त्वगाहिप्रमाणाभ्युपगन्तृस्याद्वादिमते कथमेषा प्रक्रियोपपन्नेत्यपेक्षायामाह–सामान्यविशेषविषयप्रमाणानामिति, प्रत्यक्षादिव्यक्तिभेदमुररीकृत्य वहुवचनोक्तिः, नयोपदेशेत्यादि, एतद्ग्रन्थपाठो न्यायप्रभायामस्मद्गुरुप्रवरैः सर्वदर्शननिष्णातैरुपनिवद्धोऽस्ति विशेषार्थिभिरवलोक्या सेति ॥१६॥ प्रसङ्गविपर्ययेति, असहमानस्येत्यनन्तरं बौद्धस्येति शेषः, प्रसङ्गविपर्ययान्तरेति, यत्कारणमित्यादिना प्रसङ्गस्वरूपं व्यक्तमेव,

विपर्ययस्तु यत्कारणं यत्कार्यं सर्वदा न जनयति तत्कारणं तत्कार्यमेकदाऽपि न जनयतीत्यादिरूपः । यत्कारणं जनयतीहेत्यादिश्लोको ग्रन्थकृतैव सुस्पष्टं विवृत इति नेह व्याख्यायते ।

ननु यदेकदा यत् करोति तद् यावत्सत्त्वं तत् करोत्येव, यथा कश्चित् शब्दः शब्दान्तरमिति प्रसङ्गोऽस्तु, दृष्टान्ते शब्दान्तरमिति स्वमते, अन्त्यशब्दक्षणिकतावादिनैयायिकमते तु यथान्त्यशब्दः स्वनाशमिति द्रष्टव्यम् । यावत्सत्त्वमित्यत्र कार्यप्रागभावावच्छिन्नत्वेन सत्त्वं विशेषणीयमित्यपि कश्चित् । यत्तु कश्चिदित्यनेनाविनश्यदवस्थः स्थायी बोध्य इति, तदसत्, स्वतोऽसिद्धेः, यत्किञ्चिद्रूपविशिष्टस्य यावत्सत्त्वं करणेनैव साध्यसत्त्वे च सहकारिविशिष्टस्य तथात्वादिष्टापत्तेश्च । विपर्ययस्तु यदेकदा यत् न करोति तत् सर्वदैव तन्न करोति यथा शिलाशकलमङ्कुरम्, न करोति चैकदा कुशूलस्थबीजमङ्कुरं, कदाचिदकरणसावैदिकाकरणे यावत्सत्त्वकरणकदाचित्करणव्यतिरेकावितिन विपर्ययासङ्गतिरिति चेत् । अत्र यज्जातीयमेकदा यत् करोति तज्जातीयं किञ्चित् यावत्सत्त्वं तत् करोति, यज्जातीयं किञ्चिदपि यावत्सत्त्वं यत् न करोति तज्जातीयं किमपि न कदाचिदपि करोतीति यदि जातिपक्षाश्रयेण विवक्षितम्, तदाद्ये कस्यचिद्बीजस्य यावत्सत्त्वमङ्कुरकारित्वापत्तावपीतरेषामेकदाङ्कुरकारिणां कालान्तरे तदकरणमविरुद्धम्, द्वितीये च स्वतो हेत्वसिद्धिः, समर्थबीजक्षणस्य यावत्सत्त्वमङ्कुरकारित्वात्(त्वोपगमात्)बाधश्च, बीजजातीयस्यैव सहकारिसम्पन्नस्याङ्कुरकारित्वानुभवात् ॥

कश्चिदिति, अनन्त्य इत्यर्थः, अन्त्यशब्देन शब्दान्तराऽकरणात्तस्य दृष्टान्तत्वासम्भवादिति भावः । नन्वनन्त्यशब्दोऽपि न न्यायादिनये यावत्सत्त्वं शब्दान्तरं करोति विनश्यदवस्थकालेऽपराऽजननात्, तथा च यावत्सत्त्वं करणानुपपत्तेस्साध्यवैकल्यमित्यत आह–दृष्टान्त इति, स्वमते बौद्धमते, तन्मते सर्वस्य क्षणिकत्वाद्यावत्सत्त्वमनन्त्यशब्दः शब्दान्तरं करोत्येवेति न साध्यवैकल्यमिति भावः । प्रतिवादिसम्मतं दृष्टान्तमाह–अन्त्यशब्देति, अथवा ननु प्रसङ्गो ह्युभयवादिसिद्धदृष्टान्तदृष्टव्याप्तिक इति तदलाभे स न प्रवर्त्ततेत्यत आह–अन्त्यशब्देति, तुः पुनरर्थे, तथा च सुन्दोपसुन्दन्यायेनान्त्यशब्देनोपान्त्यशब्दस्येवोपान्त्यशब्देनान्त्यशब्दस्यापि नाशात्तस्य नोपान्त्यशब्दस्येव द्विक्षणावच्छिन्नाऽवस्थितिः, किन्त्वेकक्षणावच्छिन्नैवेति क्षणिकत्वमित्यभ्युपगन्तारं नैयायिकैकदेशिनमादायान्त्यशब्दे उभयवादिसिद्धसाध्यकत्वमिति भावः । अनन्त्यशब्दे कार्यप्रागभावावच्छिन्नत्वेन विशिष्टे नैयायिकमतेऽपि साध्यमस्तीति वादिनो मतमाह–यावत्सत्त्वमित्यत्रेति । यथा कश्चिच्छब्दः शब्दान्तरमिति दृष्टान्ते कश्चिदित्यस्याऽविनश्यदवस्थ उत्पत्तिक्षणावच्छिन्न इत्यर्थः, अन्यथा द्वितीयक्षणेऽकरणे यावत्सत्त्वं करणानुपपत्तेः, तथा च शब्दमात्रस्य स्वजन्यशब्दकालावच्छेदेन विनश्यदवस्थत्वेन शब्दान्तराजनकत्वेऽपि स्वोत्पत्तिक्षणावच्छेदेन यावत्सत्त्वं शब्दान्तरजनकत्वादुपपद्यत एव तस्य दृष्टान्तत्वमित्यभ्युपगच्छतां मतं प्रदर्श्य निराकरोति–यच्चिति, स्वत इति बौद्धमत इत्यर्थः, तन्मते सर्वस्य विनश्यदवस्थत्वादिति भावः । उभयमते दोषमाह–यत्किञ्चिदिति, कार्यप्रागभावावच्छिन्नत्वेत्यादिस्वाभिमतविशेषणोपादानेन भवता यदि दृष्टान्ते साध्यसत्त्वोपपादनं क्रियते तदा मयाऽप्यत्रैव प्रसङ्गे यदेकदा यत्करोति तत् सहकारिविशिष्टं यावत्सत्त्वं करोति यथा दण्डः, इति सहकारीत्यादियत्किञ्चिद्विशेषणदानेन साध्यरक्षणं करिष्यते, तथा च सहकारिविशिष्टत्वेन विशेषितस्य यावत्सत्त्वं

दण्डादेः करणाभ्युपगमेन सिद्धसाधनदोषप्रसक्त्या तस्य प्रसङ्गस्य विपर्ययपर्यवसायित्वं न स्यादिति भावः। व्यापकसामान्याभावादेव व्याप्यसामान्याभावस्य सिद्धिरिति नियमेन सर्वदाकारित्वाभावेन कदाचित्कारित्वाभावस्यैव साधनं युक्तं, तथाहि-प्रसङ्गे यो व्यापकस्तत्सामान्याभावस्य विपर्यये व्याप्यत्वं यश्च व्याप्यस्तत्सामान्याभावस्य व्यापकत्वं तथा चोक्तप्रसङ्गस्य यद् यावत्सत्त्वं यन्न करोति तदेकदापि तन्न करोति यथा शिलाशकलं, न करोति च कुशूलस्थं बीजं यावत्सत्त्वमङ्कुरम्, अत एकदाऽपि न तत् कुर्यादिति विपर्ययप्रदर्शनं युक्तं नतु व्यत्यासेनेत्यादिभ्रान्ताशङ्कापनोदनार्थमाह-कदाचिदकरणेति, यावत्सत्त्वकरणस्य विरोधित्वात्कदाचिदकरणं भवत्येव निषेधः, कदाचित्करणस्य तु कदाचिदकरणं न निषेधोऽविरोधात्, किन्तु सार्वदिकाकरणमेवेति नास्त्युक्तविपर्ययोपदर्शनं व्यत्यासेनेति तथावगतिः कस्यचिद्भ्रान्तिरेवेति भावः॥ उक्तप्रसङ्गो विपर्ययश्च जात्यभिप्रायेण वा स्यात् व्यक्त्यभिप्रायेण वा, तत्राद्यपक्षमाश्रित्याह-अत्रेत्यादि, किञ्चिदित्यनेन पदेनैकव्यक्तिलाभः, व्यापकाभावाद्व्याप्याभावसिद्धिरिति यथाश्रुताभिप्रायेण जातिघटितं विपर्ययं प्रदर्शयति—यज्जातीयमिति, किञ्चिदपीत्यनेनैकव्यक्तिलाभः, किमपीत्यनेन सर्वव्यक्तिलाभः। प्रसङ्गे कस्याश्चिदेकव्यक्तेरेव यावत्सत्त्वं करणमापादितं, न सर्वव्यक्तेः, तथा चाङ्कुरकारिण्याः कस्याश्चिद्बीजव्यक्तेः क्षणिकत्वाभ्युपगमेन यावत्सत्त्वं करणं भवतु न च तथाऽपि तदन्यासां बीजव्यक्तीनामङ्कुरकर्त्रीणां पूर्वकाले तदकरणं विरुद्धं, बीजजातीय एव सहकारिसाहित्यासाहित्ययोरङ्कुरकरणाकरणदर्शनादिति तत्रैव हेतोर्व्यभिचारदोषदुष्टत्वान्न प्रसङ्गसाधनं युक्तमित्याह-तदाद्य इत्यादि, आद्ये उक्तप्रसङ्गे, स्वरूपासिद्धिवाधरूपदूषणद्वयेनोक्तविपर्ययपक्षं दूषयति-द्वितीये चेति। स्वतः स्वस्य बौद्धस्येत्यर्थः। हेत्वसिद्धौ बीजमाह-समर्थबीजक्षणस्येति, बाधदोषोपपादनायाह-बीजजातीयस्यैवेति,

द्वितीयपक्षञ्चाश्रित्याह—

अथ यज्जातीयमेकदा यत् करोति तज्जातीयं सर्वं यावत्सत्त्वं तत्करोति, यज्जातीयं किञ्चिद् यावत्-सत्त्वं यत् न करोति तज्जातीयं किमपि कदापि तत् न करोतीति व्यक्तिपक्षमाश्रित्योच्यते, तदा द्वयमपि प्रसङ्गविपर्ययसाधनमन्यथासिद्धम्, व्याप्यत्वासिद्धमित्यर्थः, अङ्कुरकारिणामङ्कुराकारिणां च बीजजातीयानां परेणाप्यङ्गीकारात्। यावत्सत्त्वमकरणस्य सहकारिसहितेऽपि शिलाशकलादौ स्वरूपायोग्यत्वप्रयुक्तत्वात्, स्वरूपयोग्यस्य बीजादेः कदाचिदकरणस्य सहकारिवैकल्यप्रयुक्तत्वात्, तदान्त्यन्तिकत्वकादाचित्कत्वाभ्यामकरणस्याप्यात्यन्तिकत्वकादाचित्कत्वोपपत्तेरिति बोध्यम् ॥

अथेत्यादि, एकस्य सहकारिसमवहितस्य बीजजातीयस्य क्षेत्रस्थबीजादेः क्षेत्रस्थकालावच्छेदेनाङ्कुरादिकार्यकारित्वेऽपि बीजजातीयस्य सर्वस्य कुशूलस्थबीजादेर्यावत्सत्त्वमङ्कुरादिकार्यकारित्वाभावेनापाद्यापादकयोर्व्याप्त्यसिद्ध्या प्रसङ्गसाधनं व्याप्यत्वासिद्धमित्याह—अङ्कुरकारिणामिति, विपर्यये तां साधयति—यावत्सत्त्वमकरणस्येति, शिलाशकलादौ सहकार्यसमवधानकालावच्छेदेनाकारित्वे सति सहकारिसमवधानकालावच्छेदेनाऽप्यकरणमित्येवं यद् यावत्सत्त्वमङ्कुराकरणं तत्राङ्कुरजनकतावच्छेदकधर्मवत्त्वलक्षणस्वरूपयोग्यत्वस्याभाव एव प्रयोजकः, स्वरूपयोग्ये च बीजादौ यत्कदाचिदकरणं तत्र सहकारिविरह एव प्रयोजकः, स च सार्वकालिको यदि तदा सार्वकालिकमकरणं यदि च कादाचित्कस्तदा कादाचित्कमकरणमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्न शिलाशकलदृष्टान्तेन बीजादौ यावत्सत्त्वमकरणसाधनं युक्तियुक्तमिति भावः। तदात्यन्तिकत्वकादाचित्कत्वाभ्या-

मिति, सहकारिवैकल्यात्यन्तिकत्वकादाचित्कत्वाभ्यामित्यर्थः । सत्त्वक्षणिकत्वव्याप्तिग्रहानुकूलमेव प्रसङ्गविपर्ययान्तरमाशङ्क्य निराकरोति—

एतेन यद् यत् करोति तदुत्पन्नमात्रम्, यथाकर्मविभागम्, यदुत्पन्नमात्रं यत् न करोति तन्न कदाचिदपि, यथा शिलाशकलमङ्कुरमित्यपि निरस्तम्, अत्रापि पूर्ववदनेकान्तान्यथासिद्धिदोषोपनिपातादिति ॥ १७ ॥ अस्तु तर्हि तस्यैव तेनैव सहकारिणा सह सम्बन्धोऽसम्बन्धश्चेति विरोध इत्याशङ्कायामाह—

एतेनेति; पूर्ववदिति, जात्यभिप्रायेणाऽनेकान्तः, व्यक्त्यभिप्रायेण चान्यथासिद्धिदोष इत्यर्थः ॥१७॥ अष्टादशश्लोकमवतारयति—अस्तु तर्हीति, तस्यैव तेनैवेति, यस्यैव सहकारिसमवधानासमवधानाधीने करणाकरणे इति यत्समाहितं तस्यैव कारणस्यतेनैव सहकारिणेत्यर्थः ।

तस्यैव तेन हि समं सहकारिणा च, सम्बन्धतद्विरहसंघटनाविरोधः ॥
ध्वस्तस्तवैव जिनराज नयप्रमाणै–र्न स्यात् प्रभुः कथमपि क्षणिकत्वसिद्ध्यै ॥१८॥

तस्यैव तेनैव सहकारिणा समं सम्बन्धतद्विरहयोः सङ्घटना एकवृत्तित्वं तद्विरोधस्तदभावः, परस्परपरिहारस्थितिरूपो विरोध इत्यर्थः । हे जिनराज ! तवैव नयप्रमाणैर्ध्वस्तः सन् कथमपि क्षणिकत्वसिद्ध्यै न प्रभुः स्यात् ॥

तस्यैवेति, अयमपि श्लोकः सुस्पष्टं ग्रन्थकृता विवृत इति न विवरणान्तरमपेक्षते, नयप्रमाणैरित्यत्र पश्चादुक्तस्यापि प्रमाणस्य कृत्यं सूचीकटाहन्यायेन प्रथममाह—

तत्र प्रमाणार्पणया कथंचिद्विरोधः कथंचिदेव भेदं साधयन्नेकान्तमतवचनमेव समूलमुन्मूलयति कैव कथा बौद्धपद्धतिलतायाः। नयार्पणायां तु प्रकृतं प्रस्तूयते-तस्य तेनैव सम्बन्धासम्बन्धविरोध इत्यस्य कोऽर्थः, वारिबीजादीनां सम्बन्धस्य संयोगस्य निरन्तरोत्पन्नक्षणिकद्वयेनैव मिथः संयुक्तप्रत्ययसम्भवादतिरिक्ते मानाभावात्, सम्बन्धिरूपत्वात्, अभावस्यापि चाधिकरणस्वरूपत्वात्, संयोगः स्वाभावस्वाभाव्यं विरुन्ध्यादिति, १ अभावप्रतियोगित्वं वा, २ तदैवेति सहितं वा, ३ तत्रैवेति सहितं वा, ४ उभयसहितं वा, ५ तथैवेति सहितं वा, ६ तदा स्वकाले, तत्र स्वदेशे, उभयेति स्वकाल एव स्वदेश एवेति, तथैव स्वकाले स्वदेशे स्वावच्छेदकावच्छेदेनेत्यर्थः ॥

तत्रेति, संयोगस्येत्यस्य सम्बन्धिरूपत्वादित्यनेनान्वयः, कथं संयोगः प्रतियोग्यनुयोग्युभयसम्बन्धिरूप इत्याशङ्कायामन्तराहेतुमाह-अतिरिक्ते मानाभावादिति,इमौ संयुक्ताविति प्रत्यय एवातिरिक्ते संयोगे प्रमाणमिति यदि ब्रूयात्तदा तस्यान्यथोपपादनार्थमाह—निरंतरोत्पन्नक्षणिकद्वयेनैवेति,निरंतरोत्पन्नेति, अव्यवहितदेशैककालावच्छिन्नोत्पत्तिमत्क्षणिकद्वयेनैवेत्यर्थः। ननु संयोगस्सम्बन्धिरूपत्वात्पारमार्थिकः तदभावस्तु बौद्धमते तुच्छरूपत्वादपारमार्थिक इति विषमरूपत्वात् संयोगः कथं तदभावं विरुन्ध्यादित्यत आह-अभावस्यापीति, संयोगाभावस्यापीत्यर्थः। अधिकरणस्वरूपत्वादिति,तथा चैकस्मिन्नेव दण्डे कदाचि-

चक्रसम्बन्धः कदाचित्तदभाव इत्येवं तदुभयोपगमे चक्रसम्बन्धात्मकस्य दण्डस्य चक्रसम्बन्धाभावात्मकत्वं स्यात् चक्रसम्बन्धाभावस्य दण्डरूपत्वात्, नच स्वं स्वस्याभावो भवितुमर्हति, एतदेवाह—संयोगः स्वाभावस्वाभाव्यं विरुन्ध्यादिति, सम्बन्ध्यन्तर इति शेषः। संयोगस्य सम्बन्धिरूपत्वात्तस्य स्वकीयाभावतादात्म्यं सम्बन्ध्यन्तरे विरुद्ध्यते, एकत्र सम्बन्धासम्बन्धयोस्सत्त्वाभ्युपगमे सम्बन्धस्य स्वाभावतादात्म्यमेवाभ्युपेतं स्यात्, तथाच भावस्य स्वाभावप्रतिक्षेपस्वभावत्वं विरुद्धं स्यादित्यर्थः। अभावप्रतियोगित्वमिति, विरुन्ध्यादित्यनेनास्य सम्बन्धः, नाभावो विद्यते सत इति न्यायादिति भावः। सामान्यतो विरोधं विशेषतो विकल्पयति—तदैवेतीति, सहितमित्यत्र सर्वत्र विरुन्ध्यादितिपदानुसम्बद्धमभावप्रतियोगित्वमनुषज्यते, भावकाल एवाभावप्रतियोगित्वं विरुन्ध्यादित्यर्थः। भवतु वा भावसमानकालीनोऽप्यभावः तथापि प्रतियोगिभावदेशावच्छेदेन तदभावः कथं स्यात् विरोधादित्याह—तत्रैवेति, भिन्नकालावच्छेदेन भावाभावयोरेकदेशवृत्तित्वसम्भवेऽपि यत्कालावच्छेदेन यद्देशे यस्य सत्त्वं तत्कालावच्छेदेनैव तद्देश एव तदभावो विरुद्ध इत्याह—उभयसहितं वेति, येनावच्छेदेन प्रतियोगी तेनैवावच्छेदेन तदैव तत्रैव तदभावो न सम्भवतीत्याह—तथैवेति,

नाद्योऽनभ्युपगमात्, निरन्तरोत्पन्नक्षणिकद्वयासिद्ध्या संयोगस्य धर्मिवृत्तित्वानुगतप्रतीत्या चाभावस्यातिरिक्तस्य सिद्धेः। न द्वितीयः, सत्कार्यवादप्रसङ्गात्। प्रागसत एव कार्यस्योत्पत्तेः प्रामाणिकतया तस्य च त्वयाऽपि निषेधात्। न तृतीयः, संयोगस्य प्रागभावप्रध्वंसयोः कालभेदेनैव वृत्त्यभ्युपगमात्, अत्यन्ताभावस्य चावच्छेदकभेदेन वृत्तौ विरोधाभावात्। न तुरीयः, सम्बन्धिनोरेकतरसत्त्वकाले नैरन्तर्येणापरस्यावश्यं

सत्त्वमिति नियमसाध्यस्योक्तविरोधस्य तदसिद्धावसिद्धेः, इत एव विरोधादुक्तनियमसिद्धौ चान्योऽन्याश्रयात्, नियमसिद्धौ विरोधसिद्धिस्ततसिद्धौ भेदसिद्धिस्तत्सिद्धौ च नियमसिद्धिरिति चक्रकेऽपि परस्पराश्रयत्वाव्याघातात् । प्रथमं सम्बद्धस्यासम्बद्धस्य वा पश्चात् कथमसम्बद्धत्वं सम्बद्धत्वं वेति चेत् । अनियतापसर्पणोपसर्पणकारणसन्निधिप्रयुक्तत्वात् तयोरिति गृहाण । न च विनाशस्य प्रतियोग्युत्तरभाविहेत्वनपेक्षत्वेनाहेतुकत्वादुत्पत्त्यनन्तरमेव भावानां नाशादेकस्य कालभेदेनापि सम्बन्धासम्बन्धवत्त्वायोगात् तत्सिद्धिः, नाशाहेतुकत्वस्यैवासिद्धेर्ध्रुवभावित्वे तु वक्ष्यामः। नापि पञ्चमः, नहि तदैव तत्रैव स एव सहकारी अस्ति नास्ति चेत्यभ्युपगच्छामः । नापि षष्ठः, प्रतिबन्धैव तन्निरासात्, तथाहि—ननु समवधानं नाम सहकारिणां धर्मः संयोगो भवद्भिरिष्यते स च तेभ्योऽतिरिक्तोऽव्याप्यवृत्तिश्चेति स एव तदैव तत्रैवास्ति नास्ति चेति स्यात्, अनतिरेके स्थिरवादिनो व्यस्तान्यपि बीजवारिधरणिधामानि तान्येवेति तेभ्योऽपि कार्योत्पादप्रसङ्गात्, व्याप्यवृत्तित्वे च सर्वत्र रक्तादिविभ्रमशब्दादिकार्योत्पत्तिप्रसङ्गात्,तन्नियामकानां महारजनभेर्यादिसंयोगानां सकलावयवदिगुद्देशाद्यवच्छेदेन वृत्तेः, तस्मादसंयुक्तेभ्योऽन्य एव संयुक्तस्वभावाः परमाणवो जाता इत्येव ज्याय इति बौद्धे वक्तरि तं प्रत्यपि क्षणिकपरमाणावुक्तदोषापादनं सुकरम्, यतः पूर्वदिगवस्थितः परमाणुर्यथा परदिगवस्थितेन परमाणुना परदिगवच्छेदेनावृत उत्पन्नस्तथैव किं पूर्वदिगवच्छेदेनापि, न वा, उभयथा वा ।

अनभ्युपगादिति, स्वाभावस्वाभाव्यस्येति शेषः । एतदेवोपपादयति—निरंतरेति, संयोगस्यातिरिक्तत्वे हेतुर्निरंत-

रोत्पन्नक्षणिकद्वयासिद्ध्येति, यदि निरंतरोत्पन्नक्षणिकद्वयं सिद्धं स्यात् तदा तेनैवेमौ घटपटौ संयुक्ताविति प्रतीतिव्यवहारनिर्वाहेऽतिरिक्तसंयोगो न सिद्ध्येत, नचैवमित्यत इत्यर्थः । अभावस्याऽतिरिक्तत्वे हेतुर्धर्मिवृत्तित्वानुगतप्रतीत्स्येति, भूतले पर्वते चेमौ संयुक्तौ न स्तः इति प्रतीत्येत्यर्थः । नचाधिकरणीभूतेषु भूतलपर्वतादिष्वभावप्रतीतिविषयत्वकल्पनेनैव प्रतीत्युपपत्तेरतिरिक्ताभावकल्पने मानाभाव इति वाच्यम्, अनन्ताधिकरणेष्वभावप्रतीतिविषयत्वकल्पनापेक्षयाऽतिरिक्ताभावे तत्कल्पने लाघवादतिरिक्तस्यैवाभावस्याभ्युपगमनीयत्वादिति भावः सत्कार्यवादप्रसङ्गादिति, कार्यं स्वोत्पत्तेः प्रागपि चेत्सत् तर्हि कारणव्यापारवैफल्यम्, अथ पूर्वं कार्यमुपादानकारणात्मना सत् न कार्यात्मनेति तदर्थं तत्साफल्यमिति चेत्,तर्हसत्कार्यवादप्रसङ्गः, यदर्थं कारणव्यापारस्तस्य कारणव्यापारप्रयोज्यस्य प्रागसत्त्वात्, एतेन कार्यं न सर्वात्मना कारणे सदभ्युपगतं साङ्ख्यैः येनोक्तदोषस्स्यात्,किन्तु शक्तिरूपेण, नाभिव्यक्त्यापि, येन यस्याभिव्यक्तिर्जायते तत्तस्य कार्यमित्यपि निरस्तम्, तथासत्यनायासेनासत्कार्यवादसिद्धेः, पूर्वमसद्रूपाया अप्यऽभिव्यक्तेरुत्पादाभ्युपगमादित्यादियुक्तिप्रकरेण सत्कार्यवादस्य बौद्धेनापि निषेधात्तदभ्युपगमेऽपसिद्धान्तप्रसङ्गः, क्षणिकत्वसाधनविरोधश्चेति भावः । एतदेवोपपादयतिः–प्रागसत एवेति, संयोगस्येति, चक्रसंयोगो दण्डे तदैव चक्रसंयोगाभावं विरुन्ध्यात्,अत्राभावो यदि प्रागभावो ध्वंसो वा विवक्षितस्तदेष्टापत्तिरेव,प्रागभावस्य पूर्वकालावच्छेदेनैव ध्वंसस्य चोत्तरकालावच्छेदेनैव सत्त्वाभ्युपगमात्, यदि त्वत्यन्ताभावस्तदा तस्याव्याप्यवृत्तितया विरोधाभावादसामञ्जस्यमेवेति भावः । एकतरसत्त्वेति; एकतरसम्बन्धिसत्त्वेत्यर्थः । अपरस्येति, सम्बन्धिन इति शेषः । नैरंतर्येणेति, संयुक्तत्वेनेत्यर्थः । तदसिद्धौ उक्तनियमासिद्धौ । असिद्धेरिति, यदि सहकारिणा सहकार्यन्तरस्य स्थितियौगपद्यनियमो भवेत् तदैकसहका-

खाद्यं- ॥४८॥

रिदेशे सहकार्यन्तराभावो न भवेत् स च नास्तीति तत्प्रयुक्तो विरोधोऽपि नास्तीति भावः । **इत एव विरोधादिति**, प्रतियोगितदभावयोस्समानदेशत्वविरोधादित्यर्थः । विरोधसिद्धौ नियमसिद्धिरित्येतावन्मात्रोक्तौ कथमाशङ्कायां तन्निवृत्तये अन्तरा भेदसिद्धिस्तत्सिद्धावित्युक्तम्, **तत्सिद्धाविति**, सम्बन्धासम्बन्धलक्षणविरुद्धधर्माध्यासाद्धर्मिभेदे सिद्धे क्षणभङ्गसिद्धावित्यर्थः । **चक्रकेऽपीति**, परस्पराश्रयत्वस्य चक्रकत्वव्यापकत्वादिति भावः । सम्बद्धत्वं संयोगाधीनमसम्बद्धत्वञ्च विभागाधीनं, संयोगो विभागश्चात्र क्रियाधीनः, क्रिया चान्यतरक्रियारूपोभयक्रियारूपा च, साऽपि न नियता, वेगाद्यनियतकारणकत्वादिति विभागजनकापसरणक्रियायास्संयोगजनकोपसर्पणक्रियाया अनियतत्वात्तज्जन्यसंयोगविभागयोरप्यनियतत्वेन तदधीने सम्बन्धत्वाऽसम्बद्धत्वे अपि क्वाचित्के इत्याह-**अनियतापसर्पणोपसर्पणेति**, **तयोरिति**, सम्बद्धत्वाऽसम्बद्धत्वयोरित्यर्थः । विनाशो निर्हेतुकः स्वप्रतियोग्युत्पत्त्यनन्तरमेव भवति निर्हेतुकत्वादित्यनुमानेन निर्हेतुकत्वे सिद्धे विनाशः स्वप्रतियोग्युत्पत्त्यनन्तरमेव भवति निर्हेतुकत्वादित्यनुमानेन भावानामुत्पत्त्यनन्तरमेव नाशसिद्धावेकस्य भावस्य क्षणिकतया विभिन्नकालेऽवृत्तौ कालभेदेनापि सम्बन्धासम्बन्धयोरेकत्राऽसम्भवात् सहानवस्थानरूपविरोधसिद्धौ **तत्रैवेति** सहितमभावप्रतियोगित्वं विरुन्ध्यादित्यस्य सिद्धिरित्याशङ्क्य निराकरोति-**नच विनाशस्येति**। ननु भावस्य विनाशः स्वोत्पत्त्यनन्तरमेव जायते ध्रुवभावित्वात्, यद्यस्य ध्रुवभावि तत्तदुत्पत्त्यनन्तरमेव जायते, यथाऽस्माकं समर्थस्य कार्यं, भवतां च द्रव्यादेः परिमाणं, ध्रुवभावी च भावस्य विनाशः, तथा च कुतो हेत्वन्तरापेक्षेति नाशाहेतुकत्वस्यैवासिद्धेरित्यसिद्धमित्यत आह-**ध्रुवभावित्वे तु वक्ष्याम इति** । तथैवेति सहितं वेति षष्ठं पक्षं परमतिवन्दिमुखेन समाधित्सुराह-**प्रतिबन्धैव तन्निरासादिति**, प्रतिवन्दिनमुत्थापयितुं पीठं रचयति-**नन्विति**, **नास्ति चेति स्यादिति**,

तथा च विरोध इति भावः, अनतिरेक इति, संयोगस्य सहकारिभ्योऽभेदे इत्यर्थः। व्यस्तान्यपीति विशकलितान्यपि विभिन्नदेशस्थान्यपीति यावत्, तान्येवेति, संयोगाभिन्नबीजादिरूपाण्येवेत्यर्थः। संयोगो यदि व्याप्यवृत्तिस्स्यात्तर्ह्येकदेशे पटस्य रक्तद्रव्यसंयोगेऽपि तस्य सम्पूर्णपटे सत्त्वात्, सर्वदेशावच्छेदेन रक्तत्वभावादेकदेशे रक्तत्वेऽपि सर्वदेशे पटो रक्त इति विभ्रमस्स्यात्, किञ्च भेर्याकाशसंयोगश्शब्दं प्रत्यसमवायिकारणं तस्य च व्याप्यवृत्तित्वे गृहकोणाद्यवच्छेदेन सञ्जातस्यापि संपूर्णाकाशे वर्त्तनादन्यदेशावच्छेदेनापि शब्दोत्पत्तिप्रसङ्गस्स्यात् विभुकार्याणाम् यावद्देशेऽसमवायिकारणं तावद्देशे कार्यावश्यम्भावादित्याशयेनाह-व्याप्यवृत्तित्वे चेति। आदिपदेन सुखदुखादिसङ्ग्रहः। तत्र को हेतुरित्याकाङ्क्षायां हेतुमाह—तन्नियामकानामिति, तत्तत्कार्योत्पत्तिनियामकानामित्यर्थः। स्वसिद्धान्तानुसारेणोपसंहरति वौद्धः—तस्मादिति, यद्वा तस्मादिति, अतिरिक्तसंयोगपक्षे उक्ताद्विरोधादित्यर्थः। परमाणवो जाता इति परमाणवः क्षणिकपरमाणुपुञ्जरूपा वारिबीजादयः कार्यविशेषसमर्था जाता इत्यर्थः।

**आद्य उभयतोऽप्यनुपलब्धिप्रसङ्गः। द्वितीये तूभयतोऽप्युपलम्भापत्तिः। तृतीये पुनः स एव दुरात्मा विरोधः, स एव तदैव तेनैवावृतोऽनावृतश्चेति। प्रकारभेदमुपादायाविरोध इति चेत्। कः पुनरसौ, दिगन्तरावच्छेदः, यदि हि यद्दिगवच्छेदेन संयुक्तस्तद्दिगवच्छेदेनैवासंयुक्तोऽपि स्यात् ततो विरोधः स्यात् इह तु नैवमिति चेत्। हन्त संयोगसंयोगिनोर्भेदपक्षेऽपि यद्ययं वृत्तान्तः स्यात् तदा कीदृशो दोष इति ॥१८॥**

अन्वयानुमाने परेषां दोषमुद्भावितं व्यतिरेकानुमानेऽपि सप्रपञ्चमवतारयन्नाह—

आद्य इति,उभयदिगवच्छेदेनावृतरूप इति पक्ष इत्यर्थः, द्वितीय इति,उभयदिगवच्छेदेनानावृतरूप इति पक्ष इत्यर्थः तृतीय इति, परदिगवच्छेदे नावृतरूपः पूर्वदिगवच्छेदेनानावृतरूप उत्पन्न इति पक्ष इत्यर्थः। विरोधमेवोपपादयति–स एवेति, स एव पूर्वदिगवस्थितः परमाणुरेव, तेनैव परदिगवस्थितेन परमाणुनैव, बौद्धस्स्वमते विरोधाभावं शङ्कते–प्रकारभेदमिति, पृच्छति–कः पुनरिति, उत्तरयति–दिगन्तरेति, अविरोधमेवोपपादयति–यदि हीति, यदि यद्देशावच्छेदेन संयोगस्तद्देशावच्छेदेनैवाऽसंयोगोऽपि स्यात्तदा स्याद्विरोधः यदा तु यद्देशावच्छेदेन संयोगस्तदन्यदेशावच्छेदेन तदभाव इत्यभ्युपगमस्तदा को विरोधः, तथा चाञ्चलावच्छेदेन महारजनसंयोगेऽपि दशावच्छेदेन तदभावान्न सर्वत्र रक्तत्वविभ्रमप्रसङ्ग इत्याशयेन समाधत्ते नैयायिकः–हन्तेति ॥ १८ ॥ एकोनविंशतितमश्लोकमवतारयति–अन्वयानुमान इति,

व्याप्त्यप्रदर्शनमिद व्यतिरेकसिद्धा–वप्युच्चकैः क्षतिकरं त्वदनाश्रवस्य ॥
श्वासादिकं ज्वर इवात्र च पक्षहेतु–दृष्टान्तसिद्धिविरहादधिकोऽपि दोषः ॥ १९ ॥

अस्य च श्लोकस्य टीकाकृतैव सार्थोऽन्वयः कृत इति स नेह विव्रीयत इति—

हे एः कामादुचक कामातिक्रान्तातिशयितानन्तसुखभाजन भगवन्, त्वदनाश्रवस्य त्वद्वचनास्थितस्य शाक्यस्य, इदं प्रत्यक्षं,व्याप्त्यप्रदर्शनं यत्सत्तत्क्षणिकमिति व्याप्तिसमर्थनाशक्तत्वम्, व्यतिरेकसिद्धावपि क्षतिकरम्, व्याप्त्यभावादन्वयस्येव व्यतिरेकस्यापि प्रदर्शयितुमशक्यत्वात् ॥

उच्चकैरिति मूलस्थपदद्वयं एरुच्चकेत्येवं पूर्वापरीभाववैपरीत्येनान्वयीकृत्यामन्त्रणपरतया व्याख्यानयति–हे एरिति, व्याप्त्य-

प्रदर्शनमिदमित्युभयपदार्थमाह–इदमित्यादिना, तत्र इदंशब्दस्य प्रत्यक्षवाचित्वात्तद्रूपमर्थमाह–प्रत्यक्षमिति, प्रत्यक्षविषयीभूतमित्यर्थः। व्याप्त्यप्रदर्शनमित्यस्यार्थमाह–यत्सदिति, श्लोकार्द्धाभिप्रायं स्पष्टयति—

तथा च यत् क्रमयौगपद्यरहितं तदसत् यथा शशविषाणं क्रमयौगपद्यरहितश्च स्थिरो भाव इति स्थिराणां सत्त्वव्यतिरेकसाधनाभिप्रायो बौद्धानां बुद्धिशून्यतामेव व्यञ्जयति। अपि च ज्वरे श्वासादिकमिव श्वासमूर्च्छाप्रलापादिकमिव, अत्र व्यतिरेकसाधने, पक्षादिसिद्धिविरहादधिकोऽपि दोष उपतिष्ठते। तथाहि-पक्षो हेत्वाश्रयत्वेनाभिमतः स्थिरो भावस्तस्यासिद्धिः, तत्स्वरूपस्य परेण प्रामाणिकत्वानभ्युपगमात्, तद्विशेषणस्यासत्त्वलक्षणस्य साध्यस्याप्रसिद्ध्या च। हेत्वसिद्धिः, हेतोः क्रमादिविरहस्याप्रसिद्धिः,सति परेण तदनुपगमात्, असतश्च प्रमाणागोचरत्वात्। पक्षस्य हेतोश्चाप्रसिद्ध्या पक्षधर्मत्वासिद्धिश्च। दृष्टान्तासिद्धिः, दृष्टान्तस्यालीकस्याप्रसिद्धिः। साध्यसाधनयोश्चाप्रसिद्ध्या तत्र तदुभयवत्त्वाप्रतीतिश्च। अथालीकत्वात् नास्त्येवासति पक्षादौ प्रमाणम्, अनुमानं पुनरसत्ख्यात्यैव प्रवर्त्तते व्यवहारात्॥

तथा चेति, उत्तरार्द्धमन्वयादिना सङ्गमयति–अपि चेति, सर्वं वाक्यं क्रियापदेनैव संपूर्णं भवतीति मूले तदभावादखण्डबोधो न स्यादित्याशङ्क्य तदध्याहृत्य परिहरति–उपतिष्ठत इति संदिग्धसाध्यधर्मिणः पक्षस्यात्रोभयथाऽसिद्धिः विशेष्यासिद्धेः साध्यरूपविशेषणासिद्धेश्च, तत्राद्यपक्षे हेतुमाह–तत्स्वरूपस्येति, नैयायिकमते स्थिरभावरूपपक्षस्य सिद्धत्वादाह–परेणेति, बौद्धेनेत्यर्थः। द्वितीये हेतुमाह–तद्विशेषणस्येति, अप्रसिद्ध्येत्यस्य तस्याऽसिद्धिरित्यनेनान्वयः। दृष्टान्तीभूतस्य शशविषाणा-

द्यलीकस्य प्रमाणगणगम्यत्वाभावेन स्वस्वरूपासिद्ध्या असत्त्वात्मकसाध्यक्रमयौगपद्यविरहात्मकसाधनोभयाप्रसिद्ध्या तत्र व्याप्तिग्रहाभावेन च द्विधा दृष्टान्तासिद्धिमाह—दृष्टान्तासिद्धिरिति। तत्र दृष्टान्तत्वेनाभिमते, तदुभयेति, साध्यसाधनोभयेत्यर्थः, प्रमाणं सद्विषयकमेव नत्वसद्विषयकं, प्रकृते पक्षसाध्यहेतुदृष्टान्तास्त्वसद्रूपा एवेति तत्र प्रमाणाभावाद् वस्तुगत्या तत्सिद्धिर्नास्त्येवेति तदसिद्धिरस्माभिरप्यभ्युपगम्यत एवेति देवानांप्रियेण भवताऽस्मन्मतानुकूलमेवाचरितमित्यभिप्रायेण शङ्कते बौद्धः-अथालीकत्वादिति, पक्षादाविति, आदिपदेन साध्यहेतुदृष्टान्तपरिग्रहः। ननु यदि पक्षाद्यप्रसिद्धिस्तर्हि कथमनुमानं यतो नहि पक्षसाध्यहेत्वादिसिद्धिमृते कोऽपि सचेता अनुमानं कर्तुमुत्सहत इत्यत आह—अनुमानं पुनरिति, असत्ख्यात्यैवेति, असत्पक्षादिविषयकविकल्पज्ञानात्मकसिद्ध्यैवेत्यर्थः। तथा च पक्षसाध्यहेत्वादिसिद्धिरित्यत्र सिद्धिपदं न प्रमासिद्धिपरं, तथा सति भ्रान्तानुमानस्यैवाप्रवृत्तिप्रसङ्गस्स्यात्, किन्तु प्रमाऽप्रमोभयत्वसमानाधिकरणनिश्चयत्वावच्छिन्नपरं, तथा च प्रकृते पक्षादीनामसद्रूपत्वेऽपि तद्विषयकनिश्चयात्मकसिद्धिसद्भावेन न पक्षसाध्यहेतुदृष्टान्तासिद्धीनामन्यतमस्याऽप्यवकाश इति भावः। अनुमानप्रवृत्तौ हेतुमाह—व्यवहारादिति, असत्स्वर्थक्रियाकारित्वं नास्तीत्यादिव्यवहारस्यान्यथानुपपत्तेरित्यर्थः। आत्मतत्त्वविवेकदीधितौ—व्यवहारवदिति पाठः यथाऽलीके व्यवहारः प्रवर्त्तते तद्वदनुमानमपि भविष्यतीति भावः। ज्ञानमात्रं व्यवहाराङ्गम्, नतु प्रमैव, तथा च व्यवहारं प्रति ज्ञानत्वेन कारणत्वमभ्युपगन्तव्यं, नतु प्रमाणत्वेन, अन्यथा ऽसत्याश्रयादौ प्रमाणाभाव इति वदतस्तव स्ववचनविरोधस्स्यात् अप्रमाणभूतस्यास्यैव व्यवहारस्याभ्युपगमादित्याशयेन बौद्धो नैयायिकस्य व्यवहारोऽपि प्रमाणाधीन एवेत्याशङ्कां निराकरोति—

न च व्यवहारोऽपि प्रमाणाधीन एव, असत्याश्रयादौ प्रमाणाभाव इति वचनस्य व्यवहारत्वेन स्ववचनविरोधप्रसङ्गादिति चेत्। तत् किं स्ववचनविरोधेन तेषु प्रमाणमुपदर्शितं भवेत्, व्यवहारनिषेधव्यवहारोऽपि वा खण्डितः स्यात्, अप्रामाणिको व्यवहारोऽवश्याभ्युपगन्तव्य इति वा भवेत् ॥

असत्याश्रयादाविति, नैयायिकस्समाधत्ते–तत्किमिति, तेषु असदाश्रयादिषु, व्यवहारनिषेधेति अवस्तुविषयकस्य व्यवहारस्य यो निषेधरूपो व्यवहारः सोऽपि खण्डितः, तथा च व्यवहारनिषेधोऽपि तत्र न कर्तव्य इत्यर्थः। स्थिरो भावः असन् क्रमयौगपद्यरहितत्वात् शशशृङ्गवदित्यनुमाने पक्षसाध्यहेतुदृष्टान्तेषु प्रमाणदर्शनाशक्यतामाह—

न तावत्प्रथमः, नहि विरोधसहस्रेणापि स्थिरे तस्य क्रमादिविरहे वा शशशृङ्गे वा प्रत्यक्षमनुमानं वा दर्शयितुं शक्यम्, तथात्वे वा कृतं भौतकलहेन, प्रमाणप्रवृत्तावसत्त्वानुपपत्तेः। द्वितीयस्त्विष्यत एव प्रामाणिकैः। अवचनमेव तर्हि प्राप्तं, तथा चाप्रतिभाख्यं निग्रहस्थानमिति चेत्। न। उत्तराहें उत्तराप्रतिपत्तिरप्रतिभेति तल्लक्षणात्, अत्र च परोऽप्युत्तराशक्त इति सर्वथा वचनानुपपत्तावत्रावचनमेव श्रेय इति। परिभावनीयश्चेदं निष्प्रमाणकेऽर्थे मूकवावदूकयोः कतरः प्रामाणिक इति। एवं विदुषाऽपि भवता न मूकीभूय स्थितम्; अपि तु व्यवहारः प्रतिषिद्ध एवासतीति चेत्। सत्यम् ॥

नहीति, स्थिर इति पक्ष इति शेषः, तस्य स्थिरस्य, क्रमादिविरह इति, हेताविति शेषम्, आदिपदेन यौगपद्यपरिग्रहः, असत्त्वे च साध्ये इति तु न दर्शितं, तत्र पक्षे साध्यप्रसिद्धिरनुमाने नाङ्गमित्येव कारणम्, शशशृङ्गे वेति, दृष्टान्त इति

शेषः, तस्मिन् क्रमादिविरहे असत्त्वे चेत्यपि द्रष्टव्यम्, इन्द्रियसन्निकर्षाभावात्प्रत्यक्षानुपपत्तिः, व्याप्तिग्रहाभावाच्चाऽनुमानानुपपत्तिरिति भावः। तथात्व इति, प्रमाणोपदर्शन इत्यर्थः, तर्हीति, द्वितीयपक्षाभ्युपगम इत्यर्थः। यद्वादिना साधनं किञ्चिदुक्तं तदुत्तरार्हं बुद्ध्वापि समाधानाऽपरिस्फूर्त्तौ प्रतिवादिनोऽप्रतिभा निग्रहस्थानं स्यात्, अप्रमाणिकेऽर्थे व्यवहारो भवति नवेति पर्यनुयोगे त्वयापि न किञ्चित्साधनमुक्तं यत्रोत्तरास्फूर्त्याऽप्रतिभा स्यादित्यत्र सचेतनानां मूकतैव शरणमिति नाप्रतिभानिग्रहस्थानमस्माकं, प्रत्युत भवतामेव, निग्रहस्थानानवसरे तन्निग्रहस्थानाभिधानात्तल्लक्षणनिरनुयोज्यानुयोगनिग्रहस्थानावाप्तिस्स्यादित्याशयेन समाधत्ते—उत्तरार्हे इति, कतरः प्रामाणिक इति वचनस्य मूलभूतप्रमाणसापेक्षत्वात् तस्य च प्रमाणस्यात्राभावान्मूक एव प्रामाणिक इति भावः। बौद्धः शङ्कते-एवं विदुषापीति अप्रामाणिकेऽर्थेऽत्र मूकतैव शरणमिति जानतापीत्यर्थः। नैयायिकः समाधत्ते-सत्यमिति, सामान्यत उक्तमेव विशेषतो विवेचयति—

परापराधनिमित्तकोऽयमस्माकमपराधः, यथा प्रमाणाविषयः पक्षाद्यभावेऽप्यसत्ख्यात्यैवानुमानं प्रवर्त्तेत इति स्ववचनविरुद्धोऽसति व्यवहारनिषेधरूपोऽर्थो मा प्रसाङ्क्षीदिति मन्यमानैः प्रमाणामूलकः प्रमाणाविषयात्मको वा व्यवहारोऽसति शशशृङ्गादौ क्रमादिविरहासत्त्वाद्याकारः स्वीकृतस्तथास्माभिरप्यसदादौ किं प्रमाणमिति चिन्तायां प्रामाणिको व्यवहारो मा प्रसाङ्क्षीदिति मन्यमानैरप्रामाणिक एव स्ववचनविरोधः स्वीक्रियते, प्रकृते विरोधस्यासद्घटितत्वादसति प्रमाणाभावादिति। केचित्तु स्वोपदर्शितसत्त्वक्षणिकत्वव्याप्तिविरोधिनोऽक्षणिकसत्त्वस्य निराकरणाय क्षणिकत्वव्यावृत्त्या सत्त्वव्यावृत्तिरप्रामाणिकी

यथा त्वया व्यवह्रियते,तथाऽस्माभिरपि क्षणिकत्वे प्रामाणिकत्वचिन्तायां त्वदुपदर्शितस्य शशशृङ्गादौ व्यतिरेकव्यवहारस्य निराकरणाय शिष्यादय एवं बोध्यन्त इत्यर्थं इत्याहुः । परे तु यत्र व्यवहारनिषेधे स्ववचनविरोधः स्यात् सोऽप्रामाणिकोऽर्थो मा प्रसाङ्क्षीदस्तीति भ्रमविषयो माभूदित्येतदर्थं यथा तत्रासत्त्वानुमित्यर्थमप्रामाणिको व्यवहारस्त्वया स्वीकृतस्तथा प्रमितादेव लिङ्गात् सत्यानुमितिर्भवतीति शिष्यबोधनायास्माभिरपि स्ववचनविरोधोऽङ्गीकृत इत्याहुः । प्रामाणिकतात्पर्यार्थमङ्गीकृत्य यथाश्रुतार्थप्रामाण्येऽप्यसदसतोपमीयते इत्यादेः किशलयपाण्डुपत्राद्युल्लापस्य च समयसमुद्रप्रसिद्धस्यानुसारेणालङ्कारकाव्यादिवच्च प्रकृतवचसो नाप्रामाण्यम्, परन्तु तात्पर्यशुद्धिरेव मृग्येत्यनेकान्तोपनिबद्धेदिनो वयम् । यदि त्वसति व्यवहारनिषेध इवासतो दृष्टान्तत्वादिकमपि न सम्भवति प्रमाणविरहादिति प्रतिसन्धाय भवानुक्तानुमानं न प्रयुङ्क्ते, तदास्माभिरपि न किञ्चिदुच्यते । तृतीये त्वप्रामाणिकश्चावश्याभ्युपगन्तव्यश्चेति कस्येयमाज्ञेति भवानेव प्रष्टव्यः । व्यवहारस्य सुदृढनिरूढत्वादिति चेत्, अप्रामाणिकश्च सुदृढनिरूढश्चेति व्याघातः ॥

यथेत्यादिना, अत्र यथा पक्षाद्यभावेऽप्यसत्ख्यात्यैवानुमानं प्रवर्त्तते इत्याकारकं दीधितौ असति पक्षदृष्टान्तादौ प्रमाणाभावेऽप्यसत्ख्यात्यैवानुमानं प्रवर्त्तत इति पाठात्तादृशाकारकं वा बौद्धस्य यद्वचनं तस्य विरुद्धः प्रमाणाविषयोऽसति व्यवहारनिषेधरूपः व्यवहारविषयत्वस्य प्रमाविषयत्वव्याप्यत्वनियमादसत्याश्रयादौ प्रमाणाभावाद्व्यवहाराभाव इत्याकारको नैयायिकाभ्युपगतोऽर्थो मा प्रसाङ्क्षीदिति मन्यमानैर्बौद्धैरसति शशशृङ्गादौ क्रमादिविरहस्याऽसत्त्वादेश्चव्यवहारः प्रमाणामूलकः प्रमाणाविष-

यात्मको वा स्वीकृतः अन्यथा व्यवहारनिषेधरूपस्यार्थस्याऽप्रसक्तत्वं न स्यात्, तथाऽसदादौ किं प्रमाणमिति चिन्तायामसति शशशृङ्गादौ क्रमादिविरहादिव्यवहारः प्रामाणिको माप्रसाङ्क्षीदिति मन्यमानैर्नैयायिकैरप्रामाणिक एव स्ववचनविरोधस्स्वीक्रियते, तथा च व्यवहारनिषेधव्यवहारप्रसक्तिभयेन भवताऽप्रामाणिकोऽप्यसति शशशृङ्गादौ क्रमादिविरहादिव्यवहारः स्वीकृतः मया तद्व्यवहारस्यैव प्रामाण्यप्रसक्तिभयेन स्ववचनविरोधस्स्वीकृत इति भावः । स्ववचनविरोधस्याप्रामाणिकत्वोपपादनायाह—प्रकृत इति, तथा चोक्तप्रयोजननिष्पत्तयेऽर्थशून्य एव शब्दो मया प्रयुज्यत इति पर्यवसितमिति भाव इति गुणानन्दः । असद्घटितत्वादिति असदात्मकाधिकरणघटितत्वादित्यर्थः । क्षणिकत्वसत्त्वयोर्व्यतिरेकव्याप्तेर्व्याख्यातॄणां मतमाह—केचित्त्विति, स्वोपदर्शिते-त्यादि, स्ववचनविरुद्ध इत्यस्यार्थकथनम्, शृङ्गादौ व्यतिरेकव्यवहारस्येति यत्क्रमयौगपद्यरहितं तदसत् यदा शशविषाणमि-त्येवं व्यतिरेकग्रहव्यवहारस्य बौद्धस्वीकृतस्येत्यर्थः । निराकरणाय अप्रामाण्यज्ञापनाय, एवम् असति प्रमाणाभावाद्व्यवहारो न भवतीत्येवम्, अत्रैव मतान्तरमुपदर्शयति—परेत्विति, यत्र शशशृङ्गादावलीके, व्यवहारनिषेधे स्ववचनविरोधस्स्यादिति, अलीके व्यवहाराभावस्त्वयाऽपि स्वीक्रियते इति कृत्वा तत्र त्वयापि व्यवहारनिषेधे कृते सति स्ववचनस्य व्यवहाररूपस्य विरोधस्स्या-दित्यर्थः, स शशशृङ्गाद्यलीकः, माप्रसाङ्क्षीदित्यस्यार्थमाह—अस्तीति भ्रमविषयो माभूदिति, निषेधव्यवहाराकरणे इति शेषः । तत्र असति । अप्रामाणिको व्यवहार इति, असति शशशृङ्गादौ क्रमादिविरहनियतासत्त्वविषयकव्यवहारोऽप्रामा-णिक इत्यर्थः । प्रमितादेव लिङ्गात् सत्यानुमितिर्भवतीति शिष्यबोधनार्थेति, प्रमाभूतायामनुमितौ प्रमारूपमेव लिङ्ग-परामर्शः करणमिति शिष्यशिक्षार्थमित्यर्थः, तथा च प्रकृतेऽसत्त्वसाध्येन सह क्रमादिविरहहेतोः परामर्शो न प्रमारूपः, आश्रया-

सिद्ध्यादिदोषसंवलितत्वादुक्तहेतोरिति न तेन स्थिरे पक्षेऽसत्त्वानुमितिः प्रमाभूतेति न तया स्थिरेऽसत्त्वं सिद्ध्यतीति भावः । मतान्तरमुपदर्श्य स्वाभिप्रायाविष्करणार्थमत्र ग्रन्थकार आह-प्रामाणिकतात्पर्यार्थमङ्गीकृत्य यथाश्रुतार्थाऽप्रामाण्येऽपीति, अस्य प्रकृतवचसो नाप्रामाण्यमित्यनेन सम्बन्धः । अमुमर्थमुपपादयितुं दृष्टान्तमाह-असदसतोपमीयत इत्यादेरिति,त्व-द्वचनं वन्ध्यासुतवचनेनोपमीयत इत्यादेरित्यर्थः,किसलयपाण्डुपत्राद्युल्लापस्येति नव्यपर्णजीर्णपर्णयोः परस्परं वार्त्तालापस्ये-त्यर्थः,अत्रादिपदेन मुद्गशैलघनाद्युल्लापपरिग्रहः कार्यः, अस्याभ्युपगमे दार्ढ्योत्पादनार्थं तं विशिनष्टि-समयसमुद्रप्रसिद्धस्येति, तदुक्तं निर्युक्तिकृता भगवता भद्रबाहुस्वामिना श्रीमदुत्तराध्ययनदशमाध्ययननिर्युक्तौ " परियट्टियलावण्णं चलंतसंधिं मुयंत-बिंटागं । पत्तं च वसणपत्तं कालप्पत्तं भणइ गाहं ॥ ३०७ ॥ जह तुब्भे तह अम्हे, तुब्भेवि अ होहिहा जहा अम्हे । अप्पाहेइ पडंतं, पंडुरपत्तं किसलयाणं ॥३०८॥ ननु किमेवं पाण्डुपत्रकिसलयानामुल्लापस्संभवति येनेदमुच्यते इत्याशङ्कायामाह-नवि अत्थि नवि अ होही, उल्लावो किसलपंडुपत्ताणं । उपमा खलु एस कया, भवियजणविबोहणट्ठाए ॥ ३०९ ॥ इति, न चास्य काल्पनिकत्वाद् दृष्टान्तत्वमनुपपन्नमिति वाच्यम्, भगवद्भिरागमविद्भिः प्रोक्तायां "चरियं च कप्पियं वा आहरणं दुविहमेव पन्नत्तं । अत्थस्स साहणट्ठा इंधणमिव ओयणट्ठाए ॥१॥ इति गाथायां काल्पनिकदृष्टान्तस्याप्यभ्युपगन्तव्यत्वेन प्रतिपादितत्वात्। अस्याश्चा-यमर्थः-उदाहरणं द्विविधं प्रज्ञप्तम्,एकं चरितं पारमार्थिकं यथा महारम्भो ब्रह्मदत्तादिवद्दुःखं भजते इति, द्वितीयं कल्पितं स्वबुद्धि-कल्पनाशिल्पनिर्मितं यथाऽनित्यतायां जहतुम्हे तहेत्यादिना पिप्पधपत्रोपमानम्, इदं च कल्पितोपमानं स्वतो नादरणीयं किं त्वि-ष्टार्थसाधकतया, अत एवाह-अत्थस्स साहणट्ठेत्यादि । चरितोपमानं तु स्वतोऽप्यादरणीयमिति ध्येयम्, अनयैव दिशा प्रयोगेऽपि

खरविषाणादिदृष्टान्तसप्रयोजनता यथा कथञ्चित्परिभावनीया बहुश्रुतैः । एतेन कल्पितं न प्रयोज्यं बाधितार्थत्वादित्यारेकापि निरस्ता, यतः कल्पितमपि रूपकमिव भावाबाधेन न निरर्थम्, उक्तञ्च—"कप्पियमवि रूवयमिव, भावाबाहेण न णिरत्थं" इति । अलङ्कारकाव्यादिवच्चेति, स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने । चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥१॥ इति चन्द्रालोकादिग्रन्थोक्तासदलङ्कारदृष्टान्तस्येवेत्यर्थः, तात्पर्यशुद्धिरेव मृग्येति, यत्र तात्पर्यार्थः प्रमाणभूतस्तत्रैव प्रामाण्यं न सर्वत्रेति भावः । परापराधाभावे तु स्वापराधोऽपि नेति सूचयितुमाह—यदि त्वसतीति । अभ्युपगमस्य प्रमाणमूलकत्वस्थितेरप्रामाणिको व्यवहारो नाभ्युपगमार्ह इत्याशयेन तृतीयपक्षं निराकरोति—तृतीये त्विति, नन्वभ्युपगमे केवलं न प्रमामूलत्वं तन्त्रम्, किन्तु तद्वत् सुदृढनिरूढत्वमपि, तच्च शशशृङ्गमसदित्याकारके शशशृङ्गादावसद्व्यवहारेऽपि वर्त्तत एवेति सोऽभ्युपगन्तव्य एवेत्यभिप्रायेणाशङ्कते—बौद्धःव्यवहारस्येति, प्रामाणिकत्वव्याप्तमेव सुदृढनिरूढत्वमिति तदभावे तदपि न सम्भवत्येवेत्याशयेन समाधत्ते—अप्रामाणिकश्चेति, प्रामाणिकत्वनियतमेव सुदृढनिरूढत्वमित्यत्र बीजमाह—

इदमित्थंभूतमेवेति प्रमाविषयत्वस्यैव तदर्थत्वात्, तस्य च स्वरूपतो जवगडदशादिवदुपपत्तावपि शशविषाणादिशब्देषु विषयतो व्याहतत्वात्, जवगडदशादिषु नामपरत्वान्नामसत्यत्वं, शशविषाणादिशब्देषु तु मृषाभाषावर्गणाप्रसूतत्वात् स्वरूपतोऽपि न तत्त्वमिति पुनरार्हताः । कथंचिदपि व्यवस्थितत्वादिति चेत्, न । अप्रामाणिकस्य संपृत्ति(ति)सहस्रेणापि वास्तवीकरणायोगात् । प्रामाणिकश्चेत्, तदेवोच्यतां प्रमाणमिति वादव्यवस्था, स्ववचनविरोधेऽप्यसिद्धेन हेतुना निर्णयाजननात्, तं विना च तदपर्यवसानात् । जल्पवितण्ड-

योस्तु पक्षादिषु प्रमाणप्रश्नमात्रप्रवृत्तस्य न स्ववचनविरोधः । शशशृङ्गादिशब्दा हि पदविधया नार्थबोधका असामयिकत्वात्, वाक्यविधया तथात्वे च शृङ्गादौ शशादिसंसर्गं बोधयेरन् , तथा च नित्यः शब्द इत्यत्र शब्दे नित्यत्व इव शृङ्गादौ शशादिसंसर्गे प्रमाणप्रश्नाव्याहतेः, तत्र प्रमाणेनोत्तरमनिष्टम्, प्रकृतपक्षादेः प्रामाणिकत्वानभ्युपगमात्,अशक्यं च, शृङ्गादौ शशादिसंसर्गसाधकप्रमाणाभावात्। प्रमाणत्वाभिमतेनाप्रमाणेन तूत्तरे स्ववचनेनैव भङ्गः, मदुक्तेषु पक्षादिषु प्रमाणं नास्तीति स्वयमेव स्वीकारात्, अनुत्तरे त्वप्रतिभैवेति ॥ किं च व्यवहाराभाजनत्वेन स्वयमभ्युपगतेऽलीके क्रमाद्यभावं व्यवहरता त्वयापि स्ववचनविरोधः स्वहरितत एव ।

इदमिति, तदर्थत्वात् सुदृढनिरूढत्वपदार्थत्वात् । तस्य चेत्यादि,जवगडदशादिशब्दादिवत् स्वरूपतश्शशशृङ्गादिशब्दाः प्रत्यक्षसिद्धा अभ्युपगम्यन्त इति तद्विषयकशब्दप्रयोगरूपव्यवहारस्य स्वरूपतो दृश्यविषयकत्वाच्छब्दात्मके तद्विषये इदमित्थंभूतमेवेति प्रमाविषयत्वस्य सम्भवेऽपि अर्थात्मके विषयांशे तस्य सम्भवाभावात्, शशशृङ्गकूर्मरोमादिशब्देन तद्वाच्यस्य कस्यचिच्छशशृङ्गाद्यखण्डार्थस्याभावेन तत्स्वरूपमादायेदमित्थम्भूतमेवेत्याकारकतद्विषयकशाब्दबोधानुपपत्तेरिति भावः । न्यायनयमतमुपदर्श्यार्हित्सिद्धान्ताभ्युपगमोपदर्शनार्थमाह—जवगडदशादिष्विति, स्वरूपतोपि न तत्त्वमितीति, यथाऽर्थतो न प्रमाविषयत्वं तथा शब्दतोऽपीति जवगडदशादिशब्दतुल्यतापि शशविषाणादिशब्दानां नास्तीति भावः । ननु शशशृङ्गादौ क्रमादिविरहासत्त्वादिव्यवहारोऽभ्युपगन्तव्यः संवृतिसिद्धत्वादित्याशयेनाशङ्कते-कथञ्चिदपीति, संवृतिसिद्धत्वादित्यर्थः ॥ स व्यवहारः

किं प्रामाणिकः किं वाऽप्रामाणिक इति विकल्पद्वयं, तत्र द्वितीयविकल्पमपेक्ष्याह—अप्रामाणिकस्येत्यादि, आद्यं चापेक्ष्याह—प्रामाणिकश्चेदिति, अथवा ननु संवृतिः प्रमारूपा किंवाऽप्रमारूपेति विकल्पद्वयम्, संवृतिरप्रमारूपैव चेत्, तदा तन्मूलोऽपि व्यवहारः कथं प्रमाणकोटिमुपढौकते,प्रमारूपैव चेत्,तदा तन्मूलं प्रमाणमेवोच्यताम्, तच्च नास्तीत्याशयेन समाधत्ते—अप्रामाणिकस्येत्यादिना, वादव्यवस्थेति तत्त्वनिर्णिनीषयाऽऽरब्धे तत्त्वबुभुत्सोः कथात्मके वादे प्रमाणैरेव व्यवहर्तव्यमित्यादिसमयबन्धमूलभूते प्रमाणमेव वक्तव्यमिति नियमः, तथा च तत्र कथमप्रमाणेन व्यवहरिष्यसीति भावः। नैयायिकैश्शशशृङ्गाद्यसद्व्यवहारनिषेधे क्रियमाणे तेषां स्ववचनविरोधस्स्यादिति बौद्धैस्स्ववचनविरोधे दत्तेऽपि न तेषां शशशृङ्गदृष्टान्तेन स्वरूपासिद्धेन हेतुना क्रमयौगपद्यविरहात्मकेन स्थिरोऽसन्नित्याकारकानुमित्यात्मकतत्त्वनिर्णयस्सम्भवति, न च प्रमितहेतुन्म यावन्नानुमित्यात्मकतत्त्वनिर्णयस्तावद्वादकथापरिसमाप्तिरित्याशयेनाह—स्ववचनविरोधेऽपीति ननु त्वया साकं तत्त्वनिर्णिनीषया वादकथा नारभ्यते, किन्तु विजयेच्छया जल्पकथा वितण्डाकथा च,तत्र च स्ववचनविरोधेनाऽप्रतिभया वा निगृहीत एवासीत्यत आह—जल्पेति,पक्षादिष्विति, आदिपदात् साध्यहेतुदृष्टान्तानामुपग्रहः, प्रमाणप्रश्नमात्रप्रवृत्तस्येत्यनन्तरं प्रतिवादिनो नैयायिकस्येति शेषः। ननु शशशृङ्गाद्यखण्डार्थस्याप्रसिद्धत्वेन भवतस्तद्विषयकज्ञानासंभवेन शशशृङ्गादिशब्देन प्रतिपादनासम्भवात्कथं तत्र प्रमाणप्रश्नप्रवृत्तिर्नासति व्यवहार इत्यभिमन्यमानस्य नैयायिकस्य,प्रवृत्तौ वा कथं न स्ववचनविरोधः,शशशृङ्गे किं प्रमाणमिति प्रश्नात्मकव्यवहारक्रोडीकृतत्वादसतोऽपि शशशृङ्गस्येत्यत आह—शशशृङ्गादिशब्दा हीति। पदविधयेति शशशृङ्गात्मकाखण्डपदविधयेत्यर्थः। नार्थबोधकाः नाखण्डशशशृङ्गात्मकार्थबोधकाः, असामायिकत्वात् शशशृङ्गात्मकेऽखण्डार्थेऽसङ्केतितत्वात्। तथात्वे चेति, अर्थबोध-

कत्वे चेत्यर्थः । प्रमाणप्रश्नेति नैयायिकस्येति शेषः,उत्तरमिति, बौद्धस्येति शेषः, हेत्वाकाङ्क्षायामुभयत्र हेतू पूरयति, प्रकृतेति, अशक्यं चेति, अत्र प्रमाणेनोत्तरमित्यनुषञ्जनीयम्, पक्षादिषु प्रमाणमवश्यं प्रष्टव्यस्य बौद्धस्य प्रमाणत्वाभिमतेनाप्रमाणेनोत्तरानुत्तरदाने निग्राह्यतामाह–प्रमाणत्वाभिमतेनेति । ननु यदि सकलविधिनिषेधव्यवहाराऽभाजनमलीकमित्येवमलीकशब्दार्थतामभ्युपगच्छेम वयं, तदा तत्र निषेधव्यवहारे स्वीकृतेऽस्माकमपि. परस्परव्याहतं वचनं स्यात्, न चैवं, सकलविधिव्यवहाराभाजनमलीकमित्येवमर्थतास्वीकारादित्याशङ्कते बौद्धः–

विधिव्यवहारमात्राभिप्रायेणाभाजनत्ववादे कुतो विरोध इति चेत्, हन्त सकलविधिनिषेधव्यवहाराभाजनत्वेन व्यवह्रियते किञ्चित्, न वा, उभयथापि स्ववचनविरोधः, उभयथाप्यवस्तुनैव च तेन भवितव्यम्, वस्तुनः सर्वव्यवहारविरहानुपपत्तेः । नेति पक्षे सकलव्यवहारशून्यत्वं यत्र प्रतीतं तत्रैव तद्व्यवहारात् कथं सर्वत्र तद्व्यवहारनिषेधो, व्याघातात्, अथ न क्वापि तत् प्रतीतम्, तदा तद्व्यवहारस्याप्यप्रत्ययात् कथं तन्निषेधः । व्यवह्रियत इति पक्षे विषयस्वरूपपर्यालोचनयैव विरोधः सर्वव्यवहाराविषयश्च व्यवह्रियते चेति । यदि चावस्तुनो निषेधव्यवहारगोचरत्वं, विधिव्यवहारगोचरत्वमपि किं न स्यात्, प्रमाणाभावस्योभयत्रापि तुल्यत्वात्, तेनोक्तप्रश्नस्योभयसाम्येऽपि न क्षतिः ।

विधिव्यवहारमात्राभिप्रायेणेति, उभयथापीति, व्यवहारपक्षेऽव्यवहारपक्षे चेत्यर्थः, सकलविधिनिषेधव्यवहाराभाजनत्वव्यवहारपक्षे स यस्मिन् धर्मिणि तदवस्तु कथं न स्यात्, तादृशव्यवहाराभावपक्षेऽपि तादृशव्यवहारस्य क्वचिदप्यप्रसिद्धत्वेन

तस्यासद्रूपतया तत्प्रतियोगिकाभावोऽप्यसद्रूप एवेति कृत्वा यस्मिन् स तदप्यवस्तु कथं न स्यादित्याशयेनाह–उभयथाऽप्यवस्तु–नैवेति, सकलविधिनिषेधव्यवहाराभाजनत्वप्रतीतिः कस्मिंश्चिद्विषये जायते नवा, यदि जायते, तर्हि तस्या एव प्रतीतेर्व्यवहाररूपत्वात्कथं सर्वत्र सकलविधिनिषेधव्यवहाराभाजनत्वव्यवहारनिषेधः, व्याघातात्, अथ न जायते, तर्हि तद्वदेव सकलविधिनिषेधव्यवहाराभाजनत्वविषयकव्यवहारस्याप्यप्रतीतौ कथं तन्निषेधः, अप्रतीतस्य निषेद्धुमशक्यत्वादित्याशयेन द्वितीयं निषेधपक्षं निराकरोति–नेति पक्ष इति, विरोधमेव व्युत्पादयति–सर्वव्यवहाराऽविषयश्चेति, सकलविधिनिषेधव्यवहाराऽभाजनत्वेन व्यवह्रियत इत्यस्य तादृशव्यवहाराभाववत्त्वेन व्यवह्रियत इत्यर्थकत्वेन सकलव्यवहाराऽभाजनस्यतादृशव्यवहाराभावव्यवहाराभ्युपगमेन विरोधादित्यर्थः । उभयत्रापीति, अलीके निषेधव्यवहारे विधिव्यवहारे चेत्यर्थः । अलीके निषेधव्यवहारे प्रमाणमाशङ्कते–बौद्धः–

**अथ वन्ध्यासुतस्यावक्तृत्वेऽचेतनत्वमेव प्रमाणं, वक्तृत्वे तु न किञ्चिदिति चेत् । न । तत्रापि सुतत्वस्य विद्यमानत्वात् । नहि वन्ध्यायाः सुतो न सुतस्तथा सति स्ववचनविरोधात् । मूके व्यभिचारे तु मूकेतरत्वमपि विशेष्यताम् । वचनमात्रमेतत् न तु परमार्थतः सुत एवासाविति चेत् । न । अचैतन्यस्याप्येवंरूपत्वात्, चेतनादन्यत् स्वभावान्तरमेव ह्यचेतनमुच्यत इति ।**

अथेति, यद्यप्यत्राश्रयासिद्धिः स्वरूपासिद्धिश्च पक्षहेत्वोर्द्वयोरपि प्रमाणाविषयत्वात् तथापि परपरिहासाय सत्प्रतिपक्षतामाह–तत्रापीति, वक्तृत्वेऽपीत्यर्थः । सुतत्वहेतोस्स्वरूपासिद्धिं निरस्यति–नहीति, तथासतीति; वन्ध्यायास्सुतो न सुत इत्युक्तावित्यर्थः, वचनमात्रमेतदिति, वन्ध्यायास्सुतः सुत इति वचनमर्थशून्यमित्यर्थः, एतदेवाह–नत्विति, तथा च वन्ध्या-

सुते सुतत्वाभावाद्धेतोस्स्वरूपासिद्धिरितिभावः । नञः पर्युदासप्रसज्यनिषेधभेदेन द्विविधत्वात्पर्युदासनञमाश्रित्याह—अचैतन्यस्याप्येवं रूपत्वादिति, वन्ध्यासुतोऽचेतन इत्यस्यापि वचनमात्ररूपत्वेनार्थशून्यत्वादित्यर्थः । पर्युदासमेव विवृणोति—चेतनादिति, तथा च चैतन्यभिन्नधर्मरूपस्याऽचैतन्यस्य हेतोर्वन्ध्यासुतरूपे पक्षेऽभावात्तत्रापि स्वरूपासिद्धिरेवेति भावः । प्रसज्यप्रनिषेधमाश्रित्याशङ्कते - बौद्धः—

अथ चैतन्यनिवृत्तिमात्रमेव विवक्षितम्, असुताच्च निवृत्तिमात्रस्य स्वरूपेण कृतिज्ञप्त्योरसामर्थ्ये समर्थमर्थान्तरमवसेयमनन्तर्भाव्य कुतो हेतुत्वमवसेयमिति । अवसायपदस्य प्रकृतेऽवसायजनकनिर्विकल्पकपरत्वात् तद्विषयं स्वलक्षणं परिचेयमित्यर्थः । स्वलक्षणमपि सविकल्पविषय इति मतेनेदमित्यपि कश्चित् । मवम् । अचैतन्येऽप्यस्य न्यायस्य समानत्वात् । तुच्छत्वेनासमर्थतया ज्ञप्तिजनकत्वविरहस्य तत्रापि प्रतीतत्वात् । अथ सैव व्यावृतिस्तद्धर्मावलीढस्य धर्मं साधयति या तद्धर्मशून्यत्वावच्छिन्नाद्व्यावृत्ते तद्धर्मावच्छिन्नाद्व्यावृत्ते वर्त्तते, यथा शिंशपात्वमशिंशपानात्मनि वर्त्तमानं शिंशपाधर्मं वृक्षत्वम्, वन्ध्यासुतस्तु सुतासुतोभयव्यावृत्तोऽतो न तद्वृत्तिरसुतत्वनिवृत्तिः सुतधर्मस्य साधिका, न च यैवासुतमात्रव्यावृत्तमैत्रादिवृत्तिरसुतत्वनिवृत्तिः सैव वन्ध्यासुतेऽपीति वाच्यम्, सदसतोरेकधर्मवत्त्वायोगादिति चेत् । नन्वचैतन्यमप्यस्यैवंरूपमेव, न हि वन्ध्यासुतश्चेतनादिव देवदत्तादेरचेतनादपि काष्ठादेर्न व्यावर्त्तते । वक्तृत्वं यस्त्वेकनियतो धर्मः स कथमवस्तुनि साध्येत, विरोधादिति चेत्, स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः, अवस्तुनि नियमेन

वक्तृत्वाभावोपलम्भादवस्तुनि वक्तृत्वस्यानुपलम्भमात्राद्वा, नाद्यः ।

अथेति, तथा चाभावरूपस्याचैतन्यस्य तुच्छरूपत्वात् तुच्छरूपे वन्ध्यासुते सत्त्वान्न स्वरूपासिद्धिरिति भावः । नन्वेवमस्मत्प्रयोगेऽपि सुतत्वहेतोरसुतनिवृत्तिमात्ररूपतया विवक्षितत्वान्न स्वरूपासिद्धिरित्याशङ्कां निराकरोति—असुताच्च निवृत्तिमात्रस्येति, वन्ध्यासुतो वक्तेत्यत्र वक्तृत्वं वचनानुकूलकृतिमत्त्वं साध्यं, वचनानुकूलकृतिं प्रति च नासुतनिवृत्तिमात्रं समर्थं नवा ज्ञायमानं सत् वक्तृत्वज्ञप्तिं प्रत्यपि तथा, निवृत्तेस्तुच्छरूपत्वेन निस्स्वभावत्वात्, अन्यथाऽर्थक्रियाकारित्वातुच्छस्वरूपमेव जह्यादित्यसुतनिवृत्तेः कृतिज्ञप्तिसमर्थेन स्वलक्षणेन सहैकज्ञानविषयत्वमाश्रित्य परंपरया स्वलक्षणसम्बन्धाद्धेतुत्वं स्यात्, नत्वसुतनिवृत्तिमात्रस्य, कृतिज्ञप्तिसमर्थं च न वन्ध्यासुतात्मकं स्वलक्षणं,अलीकत्वादिति तद्भिन्नेन स्वलक्षणेन घटितस्योक्तहेतोर्वन्ध्यासुतेऽभावात्स्वरूपासिद्धिस्स्यादेवेति भावः । निषेधे हेतुमाह—अचैतन्येऽपीति, व्यावृत्तिरूपतया द्वयोरपि हेत्वोरविशेष इत्यर्थः । न्यायसमानत्वमेव विवृणोति—तुच्छत्वेनेति, असमर्थतयेति, स्वविषयकज्ञानजनने अवक्तृत्वानुमितिजनने च सामर्थ्याभावेनेत्यर्थः, ज्ञप्तिजनकत्वविरहस्येति, अचैतन्यात्मकहेतुविषयकज्ञप्तिजनकत्वाभावस्यावक्तृत्वानुमित्यात्मकज्ञप्तिजनकत्वाभावस्य चेत्यर्थः । तत्रापि, परंपरया स्वलक्षणसम्बन्धविरहितेऽचैतन्येपि। या निवृत्तिर्यद्धर्मरूपा तद्धर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववद्भिन्ने तद्धर्मविशिष्टाच्चाभिन्ने वर्त्तते सैव निवृत्तिस्तद्धर्माश्रयविशेष्यकतद्धर्मसमानाधिकरणधर्मान्तरप्रकारकानुमित्युत्पादिका यथाऽशिंशपा निवृत्तिर्शिंशपात्वरूपा शिंशपात्वधर्मशून्यत्वविशिष्टादाम्रघटादितो भिन्ने शिंशपात्वविशिष्टाच्चाभिन्ने शिंशपात्मके वृक्षे वर्त्तत इति सा निवृत्तिः शिंशपात्वाश्रयविशेष्यकवृक्षत्वप्रकारकानुमितिं जनयति,वन्ध्यासुतवृत्तिरसुतनिवृत्तिस्तु न सुतधर्मस्य वक्तृत्वस्य साधिका, तस्यासुत-

त्वाभाववद्घटादिभिन्नस्य वन्ध्यासुतस्य सुतत्वविशिष्टदेवदत्तादपि भिन्नरूपत्वेन सुतासुतोभयव्यावृत्ते तत्र वृत्तेरित्यभिप्रायेण बौद्धश्शङ्कते—अथ सैवेति, ननु मैत्रे वन्ध्यासुते चाऽसुतत्वनिवृत्तिस्सुतत्वरूपैकैव, तथा च य एवाऽसुतव्यावृत्तो देवदत्तस्स एव सुताऽव्यावृत्त इति तत्र विद्यमानायास्तस्या वन्ध्यासुतेऽपि विद्यमानत्वाद् वक्तृत्वसाधकत्वं स्यादेवेत्याशयवतस्तटस्थस्यान्तराऽऽशङ्कां निराकरोति—न चेति, निषेधे हेतुमाह—सदसतोरिति, देवदत्तवन्ध्यासुतयोरित्यर्थः । बौद्धोक्तेऽप्यचैतन्यहेतौ वन्ध्यासुते वक्तृत्वाभावसाधके दोषमिममतिदिशति—नन्वचैतन्येति, एवं रूपमेवेति, नहि काष्ठादौ वस्तुनि यदेवाचैतन्यं वर्त्तते तदेव वन्ध्यासुतेऽपीति भावः । तदेव स्पष्टयति—नहीति, चेतनादिव देवदत्तादेरिति, अचैतन्यशून्यत्वावच्छिन्नाद्देवदत्तादिवेत्यर्थः। अचेतनादपीति, अचैतन्यावच्छिन्नादपीत्यर्थः । वाधमाशङ्क्य साम्यापादानेन निराकरोति—वक्तृत्वमिति । अवस्तुनि वन्ध्यासुते, साध्येत विरोधादिति, अत्र साध्यः विरोधादिति पाठान्तरम्, अयं विरोध इति वक्तृत्वस्याऽवस्तुत्वेन समं विरोध इत्यर्थः, तत्र विकल्पद्वयमाह—अवस्तुनीति, यत्र वक्तृत्वं तत्रावस्तुत्वाभावो वस्तुत्वमित्येवमवस्तुत्वाभावव्याप्यत्वलक्षणो वक्तृत्वस्यावस्तुत्वेन समं विरोधो, यत्र यत्रावस्तुत्वं तत्र तत्र वक्तृत्वाभाव इत्युपलम्भात्मकप्रमाणात् किं वा यदवस्तु तद्वक्तृतया नोपलभ्यत इत्यनुपलम्भप्रमाणमात्राद्वाऽवधार्यत इत्यर्थः ।

**अवस्तुनि नियमगर्भप्रमाणाप्रवृत्तेस्ततो वक्तृत्वेऽवस्तुत्वाभाव(रूप)वस्तुत्वव्याप्यत्वरूपतद्विरोधासिद्धेः । न द्वितीयः । यथाऽवस्तुनि वक्तृत्वस्यानुपलम्भेन वस्तुत्वव्याप्यत्वं स्यात् तथाऽवक्तृत्वमपि विरोधात् न सिद्ध्येदिति । माभूदवस्तुनि वक्तृत्वाभावस्य प्रमाजन्मा निर्णयो विकल्पमात्रं तु स्यात् । न । वक्तृत्वविवि-**

क्तावस्तुविकल्पनवत् तत्संसृष्टावस्तुविकल्पनस्यापि दुर्वारत्वात् । ननु वक्तृत्वं वचनं प्रति कर्तृत्वं तत् कथमवस्तुनि, तस्य सर्वसामर्थ्यविरहलक्षणत्वादिति चेत्, अवक्तृत्वमपि कथं तत्र, तस्य वचनेतरकर्तृत्वलक्षणत्वात् ।

अवस्तुनि नियमगर्भप्रमाणाप्रवृत्तेरिति, न तावदवस्तु केनापि प्रमाणेनोपलम्भगोचरः, तथात्वे वा नावस्त्वित्यवस्तुनि नियमघटितोक्तोपलम्भात्मकप्रमाणाऽप्रवृत्तेरित्यर्थः । तथाऽवक्तृत्वमपि विरोधात न सिद्ध्येदितीति तद्वदवक्तृत्वस्याप्यवस्तुन्यनुपलम्भेन वस्तुत्वव्याप्यत्वं स्यात्, तथा चाऽवक्तृत्वमप्यवस्तुत्वेन सह विरोधादवस्तुनि न सिद्ध्येदित्यर्थः । प्रमात्वस्य सद्विषयकत्वव्याप्यत्वनियमेनावस्तुन्यवक्तृत्वस्य प्रमात्मकनिर्णयो माभूत्, विकल्पस्तु स्यादेव; असद्विषयकत्वात्तस्येति बौद्धः शङ्कते–माभूदिति, प्रमाजन्मेति,अत्र प्रमाणजन्मेति प्रमाणजननादिति च पाठः,प्रतिबन्द्या निराकरोति–नेति,तत्संसृष्टेति, वक्तृत्वसंसृष्टेत्यर्थः, तथा च विपक्षवृत्तित्वग्रहान्न व्याप्तिबुद्धिरित्यर्थः, वक्तृत्वं वचनं प्रति कर्तृत्वं कर्तृत्वं हि कारित्वविशेषो वा सामर्थ्यविशेषो वा, द्वयमपि सर्वसामर्थ्यविरहिण्यवस्तुनि न सम्भवतीत्याशङ्कते बौद्धः–नन्विति, तस्य अवस्तुनः, अवक्तृत्वमित्यत्र पर्युदासनञमाश्रित्य धात्वर्थेन प्रसज्यप्रतिषेधमाश्रित्य तद्धितार्थेन वाऽन्वयः नञर्थस्य, तत्राद्यमाश्रित्याह–अवक्तृत्वमपीति । तत्र अवस्तुनि, तस्य अवक्तृत्वस्य, अवक्तृत्वपदेन वक्तृत्वाभाव एव बोध्यते वचनेतरकर्तृत्वं तु कुत इत्यत आह—

नञर्थस्य धात्वर्थेनान्वये निषेधविधौ प्राभाकराणां क्रियाविरहवत्, अप्रमाणमित्यत्र प्रमाभिन्नज्ञानवच्च प्रकृते वचनाभावस्य वचनभिन्नस्य वाऽर्थत्वादुभयथापि वचनेतरकार्यकर्तृत्वपर्यवसानात् । तद्धितार्थे

नञर्थान्वये वचनसामर्थ्यविरह एवायक्तृत्वार्थः स च सर्वसामर्थ्यविरहाविरुद्ध इति चेत् । अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः सिद्धः । अवस्तुत्वादेवेति चेत्, नन्वेतदपि कुतः सिद्धम् । सर्वसामर्थ्यविरहादेवेति चेत् । सोऽयं केवलैर्वचनैरितस्ततो निर्धनाधमर्णक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि न पश्यति । क्रमयौगपद्यविरहादेवेति चेत् । न, तद्विरहसिद्धावपि प्रमाणानुयोगस्यानुवृत्तेः ।

नञर्थस्येति, नञो धात्वर्थान्वयस्थले धात्वर्थाभावस्य धात्वर्थभेदस्य च वाचकत्वं क्व दृष्टमित्यतो यथासङ्ख्येन दर्शयति–निषेधविधौ प्राभाकराणां क्रियाविरहवदिति, न कलञ्जं भक्षयेदित्यादौ कलञ्जकर्मकभक्षणाभावविषयकमपूर्वं कार्यमिति बोधाभ्युपगन्तॄणां प्राभाकराणां मते भक्षणाभाववदित्यर्थः । सर्ववादिसम्मतं पर्युदासात्मकभेदार्थकनञ्पदघटितं दृष्टान्तान्तरमाह–अप्रमाणमित्यत्रेति, उभयथापीति. धात्वर्थाभावपक्षे धात्वर्थभेदपक्षेऽपि चाभावस्य पर्युदासरूपत्वेन वचनाभावस्य वचनभेदस्य च वचनेतरत्वादेव वचनेतरकार्यकर्तृत्वं पर्यवस्यतीति भावः । वक्तुर्भावो वक्तृत्वं न वक्तृत्वमवक्तृत्वमिति तद्धितवृत्तिघटितसमासवृत्तिविवक्षया तद्धितवृत्तिघटकत्वप्रत्ययार्थस्य सामर्थ्यस्यैव समासघटकनञर्थेऽभावे प्रसज्यप्रतिषेधरूपेऽन्वये वचनसामर्थ्यविरहः पर्यवस्यति, स च सर्वसामर्थ्यविरहवत्यवस्तुनि न विरुद्ध इत्याकारकं द्वितीयपक्षमाश्रित्याशङ्कते बौद्धः–तद्धितार्थ इति ॥ अवस्तुत्वादिति, काल्पनिकत्वात् अर्थक्रियाकारित्वशून्यत्वाद्वेत्यर्थः । एतदपि अवस्तुत्वमपि, सोऽयं बौद्धः, केवलैः अर्थशून्यैः । क्रमयौगपद्यविरहलिङ्गेन वन्ध्यासुतेऽवस्तुत्वस्य तेन च तत्र सर्वसामर्थ्यविरहस्य तेनापि च वचनसामर्थ्यविरहरूपावक्तृत्वस्य सिद्ध्यभ्युपगमे क्वान्योऽन्याश्रय इत्याशयेनाशङ्कते–क्रमयौगपद्येति, प्रमाणानुयोगस्यानुवृत्तेरिति, किं प्रमाणमिति प्रश्नस्य साव-

काशत्वादित्यर्थः । तथा चावस्तुनि क्रमयौगपद्यविरहसिद्धावन्यो हेतुस्तत्राप्यन्य इत्येवमुत्तरोत्तरापेक्षाऽविश्रान्ता चेत्, अनवस्था लताऽऽकाशतलावलम्बिनी, विश्रान्ता चेत्, तर्हि तत्र परस्परापेक्षायां चक्रकमिति भावः । देवदत्तादौ सिद्धव्याप्तिकेन सुतत्वेनैवैकेन हेतुना वक्तृत्वस्य सामर्थ्यस्य च वस्तुत्वस्य क्रमयौगपद्यस्य च समूहालम्बनानुमितिसम्भवेन तदात्मकप्रमाणेन क्रमादिविरहावस्तुत्वसामर्थ्यविरहाऽवक्तृत्वादीनां पूर्वपूर्वसाधनानां बाधदोषपराहतत्वेनासिद्ध्या तत्साध्योत्तरोत्तरसाधनानामपि तथात्वान्न क्रमादिविरहस्साधयितुमपि शक्य इत्याह—

सुतत्वे च परामृष्यमाणे तदविनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरहसाधनस्यावकाशः; कुतस्तराश्चावस्तुत्वसाधनस्य, कुतस्तमाश्चावक्तृत्वादिसाधनानाम् । तस्मात् प्रमाणमेव सीमा व्यवहारनियमस्य, तदतिक्रमे त्वनियम एवेति , न ह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैजात्यं विना प्रश्नः, तत्रापि यद्येकोऽविदितपरार्थविषय एवोत्तरं ददाति न गौर इति, अपरोऽपि किं न दद्यात् न कृष्ण इति, न चैवं सति काचिदर्थसिद्धिः, प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वात् । ननु व्यवहारे ज्ञानत्वेनैव प्रयोजकत्वं, न तु प्रमाणत्वेन; गौरवात्, त्वयापि भ्रान्तेस्तथात्वोपगमाच्च, तथा चाप्रतीते व्यवहाराभाव इति युक्तम्, कूर्मरोमादयस्तु प्रतीयन्त एव, नह्येते विकल्पाः कञ्चिदर्थभेदमनुल्लिखन्त एवोत्पद्यन्त इति । तन्न युक्तम् । तथाहि–शशविषाणमिति ज्ञानमन्यथाख्यातिर्वा स्यात् असत्ख्यातिर्वा, न तदावाद्यस्ते रोचते । तथा हि–किञ्चिदारोप्यं किञ्चिदारोपविषय इति स्यात् ॥

सुतत्वे चेति, तदविनाभूतेति, तत् सुतत्वमविनाभूतं येनेति बहुव्रीहिसमासात्सुतत्वव्यापकेति भावः। वक्तृत्वादीत्यत्रादिपदात् सामर्थ्यवस्तुत्वक्रमादीनां परिग्रहः, क्रमादिविरहाऽवस्तुत्वसामर्थ्यविरहावक्तृत्वादीनां पूर्वपूर्वस्याऽसिद्ध्या तत्साध्योत्तरोत्तरासिद्धिरित्यर्थः। एवं प्रतिबन्दिमुखेन परमतं दूषयित्वा स्वमतमाश्रित्योपसंहरति-तस्मादिति, तथा चालीके प्रमाणाभावान्न विधिनिषेधव्यवहारप्रवृत्तिरिति भावः। अप्रामाणिकेऽर्थे उत्तरवादीव प्रष्टाऽप्यप्रामाणिक एवेत्याह-नहीति, अविदितपरार्थविषय इति, न विदितः स किं गौरः कृष्णो वेति प्रश्नप्रविष्टतच्छब्दार्थः पराभिलषितो येन स तथेत्यर्थः, अविदितपरामर्शविषय इति पाठान्तरम्,अस्य चायमर्थः न विदितः स इति सर्वनाम्नः परामर्शविषयो येन स तथेति,अप्रतीतपरामर्शविषय इत्यपि पाठः, न प्रतीतस्स इति तच्छब्दपरामर्शविषयो येन स तथेत्यर्थः,एवंसतीति,न कृष्ण इति वचनं यथा न गौर इति वचनेन विरुद्धं तथा न गौर इति वचनं न कृष्ण इत्यनेन विरुद्धमित्येवं प्रतिस्पर्द्धिवचने सतीत्यर्थः। प्रकृते त्वेवं योजना अप्रामाणिकाद्यथा क्रमयौगपद्यविरहादवस्तुन्यप्रामाणिकोऽसद्व्यवहारस्तथाऽप्रामाणिकात्क्रमयौगपद्यादप्रामाणिकस्सद्व्यवहारोऽपि किन्न स्यादिति भावः। प्रमाणत्वेनेति, प्रमात्वेनेत्यर्थः, क्वचित्तथैव पाठः, गौरवादिति प्रमात्वस्यापि ज्ञानत्वघटितत्वेन ज्ञानत्वस्य च प्रमात्वाघटितत्वेन ज्ञानत्वापेक्षया गुरुभूतशरीरत्वादित्यर्थः। ज्ञानत्वेन व्यवहारप्रयोजकत्वे नैयायिकसम्मतिमप्याह बौद्धः- त्वयापीति, तथात्वोपगमाच्चेति ज्ञानत्वेन व्यवहारप्रयोजकत्वोपगमाच्चेत्यर्थः। तथा च न केवलं गौरवादेव प्रमात्वं नावच्छेदकं न्यूनवृत्तित्वादपि, ज्ञानत्वञ्च लघुभूतमन्यूनानतिप्रसक्तञ्चेति तदेव व्यवहारप्रयोजकतावच्छेदकमिति नह्यप्रतीते देवदत्तादावित्यादिना यो व्यवहाराभावस्साधितस्स त्वस्मन्मतानुकूल एव, व्यवहारे व्यवहर्त्तव्यतावच्छेदकप्रकारकज्ञानत्वावच्छिन्नस्य

कारणत्वेन तस्य चाविदितपरामर्शविषये पुरुषेऽभावादित्याह—तथा चाप्रतीत इति। एते इति कूर्मरोमशशशृङ्गादिगोचरा इत्यर्थः। शशविषाणमिति ज्ञानस्य मीमांसकादिमतेन भेदाग्रहादिरूपत्वसम्भवेन विकल्पान्तरसंभवेऽपि प्रकृते वादिप्रतिवादिनौ बौद्धनैयायिकावेव तत्र बौद्धोऽसत्ख्यातिं नैयायिकस्त्वन्यथाख्यातिमभ्युपगच्छतीति तन्मतद्वयेन भेदद्वयस्यैव सम्भवाद्विकल्पद्वयमाह—शशविषाणमिति ज्ञानमिति। असत्ख्यातिर्वेति, असत्ख्यातौ भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं नवेति विप्रतिपत्तिः, विधिकोटिर्नैयायिकस्य, निषेधकोटिस्तु बौद्धस्य, विधिकोटेः प्रसिद्धिर्घटत्वादौ, निषेधकोटेस्त्ववृत्तिमत्याकाशादौ, नियतसामानाधिकरण्यरूपव्याप्यत्वस्य तत्राभावात्।

तथा चारोपविषयस्तत्रास्ति, आरोपणीयन्त्वन्यत्रेति जितं नैयायिकैः। नापि द्वितीयः, कारणानुपपत्तेः, इन्द्रियस्य ज्ञानजनकत्वे विषयाधिपत्येनैव व्यापारात्, विषयाधिपत्यं विषयसन्निकर्षः, विभ्रमादौ च ज्ञानमेव तथेति भावः। लिङ्गशब्दाभासयोरप्यन्यथाख्यातिमात्रजनकत्वात्। अलिङ्गमपि हि लिङ्गतया गृहीतं गृहीतव्याप्यव्यापकभावं तज्जातीयं वा पक्षासंसृष्टमेव पक्षसंसृष्टं बोधयदन्यथाख्यातिमेवोपपादयेत्, व्याप्तिग्रहानपेक्षणेऽतिप्रसङ्गात्, अनन्वितौ च स्वार्थावन्वितौ बोधयन्तौ शब्दावपि तथैवेति॥

आरोपविषयस्तत्रास्ति आरोपणीयन्त्वन्यत्रेति, तत्रान्यत्रेति स्थाने तत्रैवान्यत्रैवेतिपाठान्तरम्, भ्रमात्मकज्ञाने विशेष्यतावच्छेदकरूपेण भासमानं पुरोवर्त्तिदेश एवास्ति प्रकारतया भासमानं तु तद्भिन्नदेशवर्त्तिधर्मिण्येवेत्यर्थः। जितं नैयायिकैरिति, भ्रमे यदारोप्यं तत्कस्मिंश्चिद् धर्मिणि यदा कदाचित्प्रमितमेव तत्र भासत इति वादिभिर्नैयायिकैर्जितं, बौद्धानाम-

क्षणिको घट इति धीर्यद्यन्यथाख्यातिस्तदा तत्रारोप्यस्याक्षणिकत्वस्य कस्मिंश्चिद् धर्मिणि प्रमागोचरतया सिद्ध्यापत्तेरिति भावः । परिशेषेण कारणाभावमेव व्यवस्थापयति—इन्द्रियस्येति, ज्ञानजनकत्व इति, अत्र ज्ञानजनने इति पाठान्तरम्, व्यापारादिति इन्द्रियार्थसन्निकर्षजन्यत्वात्प्रत्यक्षस्येति भावः । ननु स्वार्थसन्निकर्षद्वारेन्द्रियस्य प्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वे विपर्ययसंशयादि-प्रत्यक्षाभासे प्रकारीभूतस्य विषयस्य तद्देशेऽभावेन तेन सममिन्द्रियसंयोगादिसन्निकर्षाभावेन तदुत्पत्तिर्न स्यात्, एवमलौकिकप्र-त्यक्षस्याप्यनुत्पत्तिर्भाव्येत्याशङ्कां निराकरोति—विभ्रमादाविति । ज्ञानमेवेति, अस्योपलक्षणत्वात्सामान्ययोगजप्रत्यासत्त्योरुप-सङ्ग्रहः, तथेति इन्द्रियविषयसन्निकर्षः कारणमित्यर्थः । अयं भावः, इन्द्रियसन्निकर्षः लौकिकालौकिकसन्निकर्षभेदेन द्विविध इति वि-भ्रमादौ प्रकारांशे संयोगादिलौकिकसन्निकर्षाभावेऽपि स्वसंयुक्तमनस्संयुक्तात्मसमवेतस्मृत्यात्मकज्ञानाद्यलौकिकसन्निकर्षस्य सद्भावा-न्न तदनुत्पत्तिरिति । नन्वसत्ख्यातेर्विपयस्य सर्वथैवासद्रूपत्वाद्विशेष्यांशे लौकिकसन्निकर्षस्येव प्रकारांशे तद्विषयकस्मरणाद्यभावेनालौ-किकसन्निकर्षस्याप्यऽसम्भवात्प्रत्यक्षाभासरूपता माभूत् लिङ्गाभासाच्छब्दाभासाद्वा कारणादनुमितिशाब्दाभासरूपता तु स्यादेवे-त्याशङ्कायामाह—लिङ्गशब्दाभासयोरिति, तदेवोपपादयति—अलिङ्गमपीति, सव्यभिचारादिदोषपञ्चकान्यतमदोषालिङ्गित-मपीत्यर्थः । लिङ्गतया गृहीतं व्याप्तिपक्षधर्मतोभयवत्त्वेन ज्ञातम् । गृहीतव्याप्यव्यापकभावमिति गृहीतो व्याप्यव्यापकभा-वोऽविनाभावो येन साध्येन तं साध्यमित्यर्थः । गृहीतव्यापकभावमित्यपि पाठः, तज्जातीयं व्यापकजातीयम्, अयं भावः, गो-त्वसाध्यस्यैकव्यक्तित्वेन गोपु सास्नावत्त्वेन गृहीतव्याप्यव्यापकभावस्य महिषादौ गलवद्धकम्बले सास्नात्वभ्रमाद् यत्रानुमितिस्तत्र गृहीतव्याप्यव्यापकभावमिति बोध्यम्, यत्र धूलीपटले धूमत्वभ्रमाद्वह्निसामान्यानुमितिस्तत्र तज्जातीयमिति, तथा च शशशृङ्गस्य

केन चिल्लिङ्गेन सह व्याप्त्यग्रहान्नानुमितिसम्भवः,किन्तु शृङ्गस्य, तस्य व्याप्यं न पशुत्वादिकमिति लिङ्गाभासात्पशुत्वाद्यच्छशे शृङ्गानुमानं तदन्यथाख्यातिरूपमेवेति। सामान्यलक्षणाप्रत्यासत्तेरनुपगमे त्वाह–तज्जातीयं वेति गुणानन्दः। **पक्षसंसृष्टं बोधयदिति** पक्षसंसृष्टत्वेन बोधयदित्यर्थः। ननु पक्षसंसृष्टमलीकमेव व्याप्तिग्रहानपेक्षं भासतामित्यत आह-व्यासीति, यस्य व्याप्तिग्रहस्तदेवानुमितौ भासते न चालीकस्य व्याप्तिग्रह इति भावः। तथैवेति, अन्यथाख्यातिमेवोत्पादयत इत्यर्थः। ननु यदि शशपदेन विषाणपदेन च शशं विषाणं चोपस्थाप्यानन्वितौ तावन्विततया बोध्यत इत्युच्येत तदैवान्यथाख्यातिराशङ्क्येत, किन्तु शशविषाणपदाभ्यां तिरस्कृतसङ्केतविषयरूपस्वार्थाभ्यां स्वार्थोपस्थितिं विनैवालीकरूपाखण्डशशशृङ्गं बोध्यत इत्यत आह—

**अपहस्तितस्वार्थयोश्चासत्ख्यातिजनकत्वे शशविषाणशब्दात् कूर्मरोमादिविकल्पानामुत्पत्तिप्रसङ्गात्, नियामकाभावात्। स हि संकेतो वा स्यात्, शब्दस्वाभाव्यं वा, आद्ये वाक्यस्य पदयोर्वा, आद्येऽखण्डशशविषाणादेरप्रतीतत्वेन वाक्यस्य तत्र सङ्केतपराहतिः, इतश्च तत्प्रतीतावितरेतराश्रयत्वम्। द्वितीये च पदसङ्केतबलेनैव प्रवृत्तौ स्वार्थापरित्याग इत्यनन्वितानामेव पदार्थानामन्विततया स्फुरणे विपरीतख्यातिरेव, स्वार्थपरित्यागे तु पुनरप्यनियमोऽसामयिकार्थप्रत्यायनादिति।**

अपहस्तितेति, कूर्मरोमादीति शशविषाणशब्दाच्छक्तिं विनापि शशविषाणं यथा बोध्यते तथा कूर्मरोमापि बोध्यताम्, नियामकान्तराभावेन तुल्यन्यायत्वादिति भावः। स नियामकः। **सङ्केतपराहतिरिति**, नह्यप्रतीते सङ्केतः कर्तुं शक्य इति भावः। इतः शशशृङ्गमित्यादिवाक्यतः, तत्प्रतीतौ शशविषाणादिरूपाखण्डार्थप्रतीतौ, नन्वखण्डशशविषाणाद्यभावेनाप्र-

तीते तत्र माभूद् वाक्यसङ्केतः शशविषाणादितत्तत्पदसङ्केतग्रहस्तु प्रतीते तत्तदर्थे स्यादेव सुभ्रुपदादिवत् गृहीतसङ्केतयोश्च शशविषाणशब्दयोः कूर्मरोमशब्दयोश्च सामर्थ्याद्वाक्यार्थः कश्चिदसन्नेव भासतामित्यत आह--द्वितीये चेति, प्रवृत्ताविति, अत्र प्रतीतावित्यपि पाठः । अयं भावः पदानां सङ्केतविषयीभूततत्तदर्थमुपजीव्य संसर्गबोधकत्वमभ्युपगम्यतेऽनुपजीव्य वा, आद्ये विषाणांशे शशसम्बन्धित्वमन्यत्र प्रसिद्धं कूर्मसम्बन्धित्वं रोमे समारोपितं स्यात्, तथा चान्यथा ख्यातिरनायासेनैवाभ्युपगता स्यात्, द्वितीयपक्षे च सङ्केतस्य सत्त्वेऽपि तमनादृत्य शशविषाणादिरूपासङ्केतितार्थप्रत्यायने शशविषाणशब्दात्कूर्मरोम्णोऽपि प्रत्यायनं स्यादिति।

अथ सतोरेवार्थयोर्दोषवशादसन् संसर्गो लिङ्गशब्दाभासाभ्यां बोध्यत इति मतम्, तदा तत्रासन्निति कुतोऽनियतविषयासत्ख्यात्यवकाशः । शब्दस्वाभाव्यात् तु नियमे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गः । वासनाविशेषादिति चेत् । अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणमुत वासनापि । न तावदाद्यः, वासनासन्तानस्याविच्छिन्नतया शशविषाणादिविकल्पसन्तानस्याप्यविच्छेदप्रसङ्गात् । कदाचित्प्रबोधात् कदाचिदिति चेत् । न । प्रबोधोऽपि सहकार्यन्तरं वा अतिशयपरम्परापरिपाको वा ॥

तत्रासन्निति, सर्वथाऽसत्संसर्गभासकसामग्र्यभावाद् य एवान्यत्र सन् संसर्गस्स एव तत्रासन्संसर्गो भासते, तथा चान्यथाख्यातिरेवेति भावः । शब्दस्वाभाव्यात्तु नियम इति, असङ्केतितानामपि शशविषाणादिपदानामीदृश एव स्वभावभेदः, येन शशविषाणशब्दाच्छशविषाणस्यैव प्रतीतिर्नतु कूर्मरोम्ण इति नियम इत्यर्थः । वासनाविशेषादिति, अत्र नियतविषयकासत्ख्यातिरिति शेषः । अविच्छेदप्रसङ्गादिति, अपेक्षणीयान्तराभावादिति भावः । वासनायाः प्रबोधः कदाचिदिति तत्कार्यमपि

शशविषाणादिविकल्परूपं कदाचित्स्यादित्याशङ्कते–कदाचित्प्रबोधादिति, अतिशयेति, अतिशयः तत्तत्कार्यानुकूलस्वभावविशेषः, स्वभावविशेषोऽप्यत्र कुर्वद्रूपत्ववानिति गुणानन्दः,

आद्ये वासनैवेति पक्षानुपपत्तिः । द्वितीयेऽपि यद्यर्थान्तरप्रत्यासत्तेस्तदा पूर्ववत्, अर्थान्तरस्य सहकारिणः प्रत्यासत्तेर्यदि परिपाकोऽतिशयशब्दवाच्यायां वासनायामिष्यते, तदा पूर्वस्मिन् प्रत्यय इव सहकारिकृतोपकारानुपकारपक्षयोर्यद्दूषणं तदुपनिपात इत्यर्थः । परिपाको यदि सहकारिविशेषस्तदा परिपाकद्वारावश्यकत्वात् साक्षादेव वा विकल्पे तस्य कारणत्वाद्वासनैवेति पक्षानुपपत्तिरित्यर्थ इति नारायणाचार्यप्रभृतयः ॥

यद्यर्थान्तरप्रत्यासत्तेरिति, अस्य च वितर्कस्थपरिपाक इत्यनेन सम्बन्धः, अस्यैव व्याख्यामाह–अर्थान्तरस्येत्यादीष्यत इत्यन्तम्, अर्थान्तरस्येति, अस्य विवरणं सहकारिण इति, पूर्ववदित्यस्य व्याख्या पूर्वस्मिन्नित्यादि, यद्यर्थान्तरप्रत्यासत्तेस्तदा पूर्ववदित्यस्य नारायणाचार्यसम्मतमर्थमाह–परिपाको यदीति, सहकारिविशेष इति, अत्र सहकारिविशेषादित्यपि पाठः, अत्रातिशयपरंपरेत्यादेरपि सहकार्यन्तरपरत्वे प्रबोधोऽपि सहकार्यन्तरमित्यादिमूले कल्पद्वयाऽसङ्गतिः, आद्यकल्प एवान्तर्भावादित्यस्वारस्यं ज्ञेयम् । पूर्वपूर्ववासनात एवोत्तरोत्तरवासनायां परिपाको जायते, नतु तत्र सहकार्यन्तरापेक्षा, येन वासनैवेति पक्षानुपपत्तिस्स्यादित्यत आह–

स्वसन्ततिमात्राधीनत्वे तु बाह्यवादव्याघातः । सौत्रान्तिकमते हि नीलादिप्रत्ययानां कादाचित्कत्वात् कादाचित्केन कारणेन भवितव्यमित्येवं बाह्यार्थः कल्प्यते, तत्र केवलवासनापरिपाकक्रमेण शशवि-

षाणादविकल्पोपपादने नीलादिप्रत्ययानामपि तथैवोपपत्तेर्वाह्यार्थो न सिद्ध्येदेवेति । वासनापीति पक्षे तु तदन्योऽपि कश्चिद्धेतुर्वक्तव्यः, स च विचार्यमाण इन्द्रियादेर्विषयाधिपत्यादिकं पूर्वोक्तन्यायं नातिवर्त्तते । न चादृष्टविशेष एव सहकारी वक्तव्यः, नीलादिविकल्पानामपि वासनासमुत्थत्वप्रसङ्गात् ॥

स्वसन्ततीति, बाह्यवादव्याघातमेवोपपादयति-सौत्रान्तिकमते हीति, तथैवोपपत्तेरिति क्वाचित्कत्वस्य वासनापरिपाकादेवोपपत्तेरित्यर्थः । इन्द्रियादेर्विषयाधिपत्यादिकमिति, वासनातिरिक्तो हेतुरिन्द्रियादेर्ज्ञानजनकत्वे विषयाधिपत्यादिको विषयसन्निकर्षादिकस्स्यात्, स चान्यथाख्यातिमात्रहेतुत्वान्नासत्ख्यातौ हेतुरित्युक्तमेवेति भावः । ननु मास्तु दृष्टकरणविशेषः सहकारी वासनायाः अदृष्टकारणविशेषस्तु स्यादेवेत्याशङ्कां निराकरोति-नचादृष्टेति,नीलादीति,अदृष्टकारणविशेषसहकारेण वासनयैव शशशृङ्गाद्यलीकज्ञानादिवत् नीलादिविकल्पानामप्युपपत्तेर्बाह्यार्थोच्छेदप्रसङ्ग इति भावः । असत्ख्यातौ प्रमाणं नास्तीत्युपपादनार्थमेवाह—

यैवान्यथाख्यातौ सामग्री भवद्भिरिष्यते सैवासत्ख्यातौ मया वाच्येति चेत् । सत्यम् । असत्ख्यातौ प्रमाणसत्त्वे तत्र कारणं कल्पनीयम्, तदेव तु नास्ति, प्रमाणेनासदंशस्यानुल्लेखेऽसत्ख्यातित्वासिद्धेः, उल्लेखे तु प्रमाणस्याप्रमाणताया असतो वा सत्त्वस्य प्रसङ्गात्, इति दीधितिकृतः । समानावच्छेदकतयैव क्षयोपशमरूपादृष्टस्य ज्ञानजनकत्वात् नाखण्डानवच्छिन्नासद्बोधोपपत्तिरिति पुनरर्हच्चरणाम्भोजमधुव्रता वयम् । न च शशविषाणादिशब्दानामसदर्थैः सह सम्बन्धावगमोऽपि, अमुमर्थमभिसन्धाय वक्तैवं प्रयुक्तवान् शब्दम्,

श्रोता वास्माच्छब्दादमुमर्थं प्रतीतवानिति निश्चये सति परबुद्ध्यादिविषयत्वेनोपस्थिते तस्य वाच्यत्वात्।

प्रमाणेनेति, विशेषणोल्लेखं विना विशिष्टोल्लेखो न सम्भवति न च विशिष्टोल्लेखं विना तत्सिद्धिरपि भवितुमर्हतीत्यसत्ख्यातित्वग्राहकप्रमाणेऽसदात्मकविशेषणस्यानुल्लेखे इयं ख्यातिरित्येवं ख्यातित्वमात्रस्यैवोल्लेखित्वेन तत्सिद्धावपि न चासद्घटितख्यातित्वसिद्धिः, प्रमाणेऽसदात्मकविशेषणस्योल्लेखे तु तस्य विषयविधयाऽसद्विषयकत्वेनाप्रामाण्यप्रसङ्गः, असद्विषयकत्वलक्षणत्वादप्रामाण्यस्येति तेन नाऽसत्ख्यातित्वसिद्धिः, प्रमाणविषयत्वाद्वा घटवदसदंशस्य सद्रूपत्वप्रसङ्गस्स्यादिति दीधितिकाराशयः। अवच्छेदकतासम्बन्धेन ज्ञानं प्रति अवच्छेदकतासम्बन्धेनादृष्टस्य क्षयोपशमरूपस्य कारणत्वेन शशशृङ्गादेरखण्डस्य किञ्चिद्धर्मानवच्छिन्नत्वेनोक्तसम्बन्धेन क्षयोपशमस्य कारणस्याभावेन नोक्तसम्बन्धेन तद्विषयकज्ञानोत्पत्तिरित्यर्जुमार्गेणासत्ख्यातिं निराचिकीर्षुर्ग्रन्थकारस्स्वसिद्धान्तमाह-समानावच्छेदकतयेति, अव्युत्पन्नबालस्य गवादौ सङ्केतग्रहस्तत्तच्छब्दावापोद्धापाभ्यां भवति, न च तावलीकशब्दे सम्भवत इत्यलीकशब्दसङ्केतग्रहासम्भवं व्युत्पाद्य पुनरसत्ख्यातिनिरासार्थमाह-नच शशविषाणादिशब्दानामिति, अथवा असतो भानाऽसम्भवेन तत्र सङ्केतग्रहविरहं व्युत्पाद्याभ्युपगमेनासतो भानाङ्गीकारेऽपि तं सङ्केतग्रहविरहं व्युत्पादयति-नच शशविषाणादीति, परबुद्ध्यादिविषयत्वेनोपस्थिते अलीके शक्तिग्रहः,प्रकारान्तरेण वा,आद्येऽपि विशिष्योपस्थिते सामान्यतोऽपि वा, प्रथमकल्पमाश्रित्याह-अमुमर्थमिति,वक्तैवमिति अत्रवक्तैनमित्यपि पाठः, निश्चयेसतीति तटस्थस्येति शेषः। परेतिपरोऽत्र प्रयोज्यप्रयोजकवृद्धादिः। उपस्थिते इति पदार्थे इति शेषः। तस्य सम्बन्धस्य, परबुद्ध्यादिविषयत्वेनोपस्थिते शक्तिग्रहोऽव्युत्पन्नबालस्य तदा स्याद्यदि वक्तुश्श्रोतुर्वा बुद्धावयमर्थः स्थित इत्येवं ग्रहणं स्यात्, न चैवम्,तद्बुद्धेः परोक्षतया प्रत्यक्षे

णाग्रहणे तद्विपयस्यापि विशिष्यानवगमादित्याह—

न च परबुद्धयादीनां प्रत्यक्षेणाग्रहणे तद्विषयस्याप्यलीकस्य विशिष्य निर्णय इति । न चाहं गां बध्नामीत्यभिधाय परकीयं वा गां बधानेति वाक्यमाकर्ण्य गां बध्नतो व्यवहारविशेषात् तदीयबुद्धयादिविषयविशेषं निर्णीय तत्र गोपदस्य सङ्केतग्रह इव शशविषाणादिपदस्य स्यात् इत्यपि शक्यं वक्तुम्,सर्वार्थक्रियाशून्ये तत्र व्यवहारविशेषासिद्धेः । न च शशविषाणशब्दमुच्चारयतः (कश्चित्) किञ्चिदर्थगोचरोऽभिप्रायो धृत्तस्तद्विषयोऽस्य वाच्य इति सामान्यतः प्रतीतेऽलीके सुग्रहः समय इति वाच्यम्, एतादृशस्य समयग्रहस्यार्थप्रत्ययानुपयोगित्वात् । अन्यथा गां बधानेत्यतोऽपीदृशसामान्यसमयग्रहेण शाब्दबोधप्रसङ्गात् । न च विशेषान्तरविनाकृतः कल्पनामात्रविषयः शशविषाणादिवाक्यार्थस्तत्र च वाक्य(वाक्यात्)सङ्केतग्रह इति साम्प्रतम्, घटकूर्मरोमादीनामपि तदर्थत्वप्रसङ्गात् ॥

नच परबुद्धयादीनामिति,अहं गां बध्नामीत्यभिधाय गां बध्नतः प्रयोजकवृद्धस्य व्यापारं दृष्ट्वा प्रयोजकवृद्धोऽयं देवदत्तो बन्धनक्रियाकर्मगोविषयकप्रतिपत्तिमान् गोकर्मकबन्धनक्रियानुकूलचेष्टावत्त्वात् यो यत्क्रियानुकूलचेष्टावान् स तत्क्रियाकर्मविषयकप्रतिपत्तिमान् यथौदनकर्मकभोजनकर्त्ता मित्रः इत्यादिक्रमेणोक्तलिङ्गेनोक्तप्रतिपत्तिमनुमिनोति, अथवा त्वं गां बधानेति प्रयोजकवृद्धोक्तं वाक्यमुपश्रुत्य गां बध्नतः प्रयोज्यवृद्धस्य श्रोतुर्गोबन्धनव्यवहारं दृष्ट्वा तेन लिङ्गेन तस्मिन्नुक्तप्रतिपत्तिमनुमिनोति पार्श्वस्थोऽव्युत्पन्नसङ्केतो बालः, तत्प्रतिपत्त्यन्यथानुपपत्त्या तत्र तत्रार्थे शब्दस्य समुग्धार्थतया शक्तिं च परिकल्पयति,ततश्च गां नयामि

घटमानयामीत्यभिधाय प्रयोजकवृद्धेन वा गां नय घटमानयेत्युक्तो वा प्रयोज्यवृद्धो यदा गां नयति घटमानयति च तदा तटस्थस्तत्तत्पदावापोद्वापाभ्यां तत्र तत्रार्थे तत्तच्छब्दशक्तिं निश्चिनोति, तद्वच्छशविषाणादिरूपेऽर्थेतथैव निर्णीते शशविषाणादिशब्द शक्तिग्रहस्स्यादेवेत्यत आह—**न चाहमिति, परकीयमिति** वाक्य विशेषणम्, निषेधे हेतुमाह-**सर्वेति**, गवादाविव शशशृङ्गादावपि यदि बन्धननयनानयनादिरूपार्थक्रिया स्यात्तदा तत्कर्मकबन्धनादिव्यवहारलिङ्गेनोक्तक्रियाकर्तृपुरुषबुद्धिविषयं निर्णीय तत्रार्थे सङ्केतग्रहस्स्यात्, न चैवम्, अलीकत्वव्याघातादिति भावः। सामान्यतो वेति द्वितीयविकल्पमाशङ्क्य निराकरोति-**न च शशविषाणमित्यादि**, शशविषाणादिपदमुच्चारयितुर्यत्रार्थे तात्पर्यं सोऽर्थस्तच्छब्दवाच्य इति सामान्यतस्सङ्केतग्रहस्स्यादित्याशङ्कितुरभिप्रायः। **तद्विषयः** तादृशाभिप्रायविषयः, **अस्य** शशविषाणशब्दस्य, शशविषाणमुच्चारयतः किञ्चिदर्थगोचरोऽभिप्रायस्सञ्जात इत्येतावन्मात्रेण प्रतीतेऽलीकेऽर्थप्रत्ययोपयुक्तसमयग्रहाभ्युपगमे गां बधानेत्युक्तेऽभिप्रायमात्रप्रतीतौ व्यवहारविशेषादितो विशिष्याप्रतीतशब्दार्थस्याप्यर्थप्रत्ययोपयुक्तसमयग्रहप्रसङ्गेन शाब्दबोधस्स्यादित्याह—**अन्यथेति**। प्रकारान्तरेण वाऽलीके शक्तिग्रह इति मतात्मकमुख्यद्वितीयविकल्पमाशङ्क्य निराकरोति—**न च विशेषान्तरेति**, गां बधानेत्यादिवाक्यस्थले गोबंधनक्रियाद्यर्थो गोत्वबन्धनत्वादिविशेषधर्मघटित इति सखण्डत्वाच्छाब्दबोधेऽपि च विशेषधर्मेणैव भासनाद्भवतु तत्र विशेषरूपेण तत्तत्पदशक्तिग्रहश्शाब्दबोधोपयोगी, शशविषाणादिवाक्यार्थस्तु यावद्विशेषशून्यो निरुपाख्योऽखण्ड इति तत्र न विशेषरूपेण तत्तत्पदस्य शक्तिग्रहो नियामकः, किन्त्वखण्डशशविषाणादिवाक्यस्यैवेत्याशङ्काशयः। **तदर्थत्वप्रसङ्गादिति**, शशविषाणवाक्यार्थत्वप्रसङ्गादित्यर्थः। न्यायमते घटस्य वस्तुभूतत्वेऽपि बौद्धमते कूर्मरोम्ण इव तस्यापि कल्पनामात्रनिर्मितवपुस्त्वेन निरुपाख्यत्वाऽविशेषात्तत्र शशविषाणवाक्यार्थत्वापादनं कृतमित्याह—

परेषामवयविमात्रस्यालीकत्वात् घटेत्युक्तम् । न च सर्वे प्रतिपत्तारः स्वस्ववासनयाऽसदर्थशब्दसम्बन्धप्रतिपत्तिभाज इति साम्प्रतम्, स्वस्वेत्यादेरर्थाविवेचनात् । तथा हि-किमसतोऽर्थानिव वासनावशादेव तैः समं तच्छब्दानां सङ्केतं प्रतिपद्यते(न्ते)इत्यर्थः, किंवा वासनोपनीतेषु तेषु स्वकृतं तत्तच्छब्दसङ्केतं प्रतिपद्यते(न्ते) इति। नाद्यः। शशादिप्रत्येकपदार्थाव्युत्पन्नस्य शशविषाणादिशब्दार्थप्रत्ययप्रसङ्गात्। न द्वितीयः ॥

परेषामिति । ननु स्वस्ववासनयैवोपस्थितेऽर्थे प्रतिपत्तॄणां सङ्केतग्रह इत्यत आह—नचेति,दीधितिटिप्पण्यां न्यूनताभङ्गायाह—असत इति,अर्थानित्यस्य विशेषणमित्युक्तम्, न्यायप्रभायां यथा वासनावशादसतश्शशशृङ्गादीन् अर्थानिव तत्त्वानीव प्रतिपद्यते यथा वासनावशादेवासदर्थैस्समं तच्छब्दानां सङ्केतं प्रतिपद्यत इति प्रथमविकल्पस्यार्थकरणेन असत इति शशशृङ्गादीनित्यर्थः अर्थानिवेति तत्त्वानीवेत्यर्थः कुतः। वासनावशादेवेति,प्रतिपद्येति शेषः,तैः असद्भिः। तच्छब्दानामिति,तत्तच्छब्दानामित्यान्यत्र पाठः । तेषु असदर्थेषु । शशात्मकस्य विषाणात्मकस्य च शशशब्दविषाणशब्दात्मकप्रत्येकशब्दार्थस्य सद्रूपत्वेन तेन तेन सह शशशृङ्गवाक्यघटकशशादितत्तच्छब्दस्य शक्तिग्रहस्य शशविषाणमित्याकारिकायामखण्डशशविषाणविषयकासत्ख्यातावनुपयोगित्वसूचनाय शशादिप्रत्येकपदार्थाऽव्युत्पन्नस्येत्युक्तम् । अर्थप्रत्ययप्रसङ्गादिति उक्तकारणस्य तदानीमपि सत्त्वादित्यर्थः ।

परस्परवार्त्तानभिज्ञतयाऽपरार्थत्वप्रसङ्गात् । न हि स्वयंकृतसङ्केतमग्राहयित्वा परो व्यवहारयितुं शक्यते । ग्राह्यतां तर्हि परोऽपि सङ्केतं, न, व्यवहारोपदेशावन्तरेण ग्राहयितुमप्यशक्तेः । न च गां बधानेतिवच्छशविषाणपदार्थे व्यवहारः। न चायमसावश्व इतिवदुपदेशः । न च यथा गौस्तथा गवय इतिवदुप-

लक्षणातिदेशः । न चेह(प्र) भिन्नकमलोदरे मधूनि मधुकरः पिबतीतिवत् प्रसिद्धपदसामानाधिकरण्यमस्ति । प्रवृत्तिनिमित्तविशिष्टे वाच्यताबोधकं वाक्यमुपदेशः,यथा पिकः कोकिलोऽयमसावश्व इत्यादि च । अत्राश्वत्वमेवेदन्त्वमिति गुणानन्दः । परम्परया संकेतग्राहक(वाक्य)स्याप्युपलक्षणमिदं, तेन न व्यवहारोपदेशावन्तरेणेत्यत्र न्यूनत्वम् । प्रवृत्तिनिमित्तोपलक्षणसामानाधिकरण्येन वाच्यताबोधकमुपलक्षणातिदेशः,तदमूः शशविषाणादिकल्पना नासत्ख्यातिरूपास्तथात्वे कारणाभावात्,मूकस्वप्नवदसांव्यवहारिकत्वप्रसङ्गाच्च । तस्मादन्यथाख्यातिरूपा एवेति नैतदनुरोधेनोपेते(पेतयातया)ऽवस्तुनि धर्मान्तराभावग्रहात् निषेधव्यवहारगोचरत्वं,शशविषाणे घटत्वादिकं नास्तीत्यादिविकल्पानामन्यथाख्यातित्वध्रौव्यात् तेषामपि वस्तुविषयत्वमेवेति दीधितिकृतः ।

परस्परवार्त्तेति,स्वस्ववासनाविषयीकृतेष्वर्थेषु स्वस्वकृततत्तच्छब्दसङ्केतस्यान्योन्यमज्ञानेन परप्रतिपत्त्यर्थमुच्चार्यमाणस्य वाक्यस्य परार्थबोधोपयोगित्वं न स्यादित्यर्थः,तादृशश्च सङ्केतग्रहो व्यर्थ एवेत्याह–नहीति,परव्यवहारे परकीयसङ्केतग्रहस्याहेतुत्वादिति भावः, वासनोपनीतेष्वसत्सु शशविषाणादिषु सङ्केतग्रहोपायाभावं प्रपञ्चयति–न च गां बधानेत्यादिना, शशविषाणपदार्थे इत्यस्योत्तरत्र सर्वत्रान्वयः,प्रभिन्नकमलोदरे इति प्रफुल्लकमलमध्यभागे इत्यर्थः । उक्तवाक्ये विकसितपद्मे मधुकरस्तिष्ठतीत्यादिवाक्ये च गृहीतशक्तिककमलमधुपद्मपदसान्निध्यान्मधुकरशब्दार्थस्य विकसितकमलकुड्मले मधुपानकर्तृत्वाद् विकसितपद्मवृत्तित्वज्ञानाच्च तद्देशस्थतटस्थबालस्य मधुकरशब्दस्य भ्रमरे शक्तिग्रहः, न च शशविषाणादिपदार्थस्य मधुपानादिवदसाधारणक्रियेति न तत्र शक्तिग्रह इति भावः । नन्वयमसावश्व इत्यस्येदन्त्वविशिष्टोऽश्वपदवाच्य इत्यर्थः,तथा चेन्दत्वस्याश्वपदप्रवृत्तिनिमित्तत्वं स्यात्तच्च न स-

क्तं तस्य तदभावादित्यत आह-अत्रेति, इदमिति व्यवहारोपदेशावन्तरेण ग्राहयितुमप्यशक्तेरिति वाक्यघटकीभूतमुपदेशपदमित्यर्थः। तेनेति, उक्तवाक्यघटकोपदेशपदेनोपलक्षणातिदेशप्रसिद्धपदसामानाधिकरण्ययोरपि सङ्ग्रहेणेत्यर्थः। उपलक्षणातिदेशस्य लक्षणमाह—प्रवृत्तिनिमित्तोपलक्षणेति, गोसादृश्योपलक्षितधर्मो गवयत्वं गवयपदप्रवृत्तिनिमित्तं तदुपलक्षणं गोसादृश्यं तत्सामानाधिकरण्येन वाच्यताबोधकं गोसादृश्यविशिष्टो गवयपदवाच्य इत्याकारकं यथा गौस्तथा गवय इत्याकारकं वा वाक्यमुपलक्षणातिदेश इत्यर्थः। प्रकृतमुपसंहरति—तदमूरिति, न च सर्वे प्रतिपत्तारो स्वस्ववासनयेत्यादौ दूषणमुक्तं सिंहावलोकितन्यायेन स्मारयति-मूकेति, असांव्यवहारिकत्वेति, शशविषाणादौ व्यवहाराभावेन शक्तिग्रहाभाव इति स्वस्ववासनावशादेव सङ्केतकरणे तस्य पुरुषान्तरेणाग्रहणे परोच्चारितशशविषाणादिशब्दात्परस्य तदर्थप्रतिपत्त्यादिव्यवहारो न स्यादित्यर्थः, एतदनुरोधेनेति, शशविषाणादिप्रतीत्यनुरोधेनेत्यर्थः, अन्यथाख्यातित्वध्रौव्यादिति, असत्ख्यातौ कारणाभावेनेति शेषः, वस्तुविषयत्वमेवेति, न शशविषाणमखण्डमप्रसिद्धं घटत्वाद्यभावधर्मितया भासते येनासत्ख्यातिस्स्यात्, किन्तु रोमादौ प्रसिद्धं शशीयत्वं शशीयत्वाभाववति विषाणे विशेष्यतावच्छेदकतया भासते तत्र च विषाणत्वमपि, प्रकारतया घटत्वाद्यभावश्च, तथा च शशीयत्वनिष्ठप्रकारतानिरूपितविषाणनिष्ठविशेष्यत्वाऽभिन्नशशीयत्वावच्छिन्नविषाणत्वावच्छिन्नविशेष्यतानिरूपितघटत्वाद्यभावत्वावच्छिन्नप्रकारताकबोधरूपत्वेनान्यथाख्यातित्वाद्वस्तुविषयत्वमेवेत्यर्थः। व्यधिकरणधर्मस्याभावीयानुयोगितानवच्छेदकत्वेन शशीयत्वात्मकव्यधिकरणधर्मावच्छिन्नविषाणनिष्ठानुयोगिताकत्वेन घटत्वाद्यभावावगाहिन उक्तविकल्पस्य भ्रमत्वेनैव वस्तुविषयत्वमित्युपगन्तृदीधितिकृन्मतमुपपदर्श्य व्यधिकरणधर्मावच्छिन्नानुयोगिताकप्रतियोगिताकाभावाभ्युपगन्तरि जैनमते तु व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्ववद्-

नुयोगितावच्छेदकत्वमपीति तस्य प्रमात्वेनैव वस्तुविषयत्वं, एवं शृङ्गे शृङ्गत्वेन गोवृत्तित्वमस्ति ननु शशीयत्वेनेति शशीयत्वेन शृङ्गांशे गोवृत्तित्वाभावावगाहिविकल्पज्ञानस्यापि गोत्वावच्छिन्नविशेष्यताकशशीयत्वरूपव्यधिकरणधर्मावच्छिन्नशृङ्गनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकविकल्पात्मकज्ञानदृष्टान्तेन दीधितिकृदभ्युपगतेन प्रमात्वेनैव वस्तुविषयकत्वमित्युपदर्शयति—

गवि शशशृङ्गं नास्तीत्यत्र शशीयत्वेन गवि शृङ्गाभावपरत्व इव शशशृङ्गे गोवृत्तित्वं नास्तीत्यत्रापि शशीयत्वेन शृङ्गे गोवृत्तित्वाभावपरत्वात् प्रमात्वेनैव वस्तुविषयत्वं, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव तादृशाधिकरणताकस्याप्यभावस्य चित्रस्वभाववादे दोषाभावादिति तु वयम्। भवतु वाऽसत्ख्यातिस्तथापि न ततो व्यतिरेकः प्रामाणिकः। तथाहि—कोऽयं व्यतिरेको नाम, यत् यतो व्यतिरिच्यते तत्र तस्याभावो वा, 'यदाधेयं यतो व्यतिरिच्यते व्यावर्त्तते यदवृत्तीत्यर्थः। यदधिकरणं यतो यद्धर्मवतो व्यतिरिच्यते भिद्यते तत्र तस्य धर्मस्येत्यन्ये॥

गविशशशृङ्गं नास्तीत्यादिना, अभावस्येति, अभ्युपगमे इति शेषः। अभ्युपगमवादेनाह—भवत्विति, न ततो व्यतिरेक इति, तस्मिन्नसत्यलीके क्रमयौगपद्ययोस्सत्त्वस्य च व्यतिरेको विरह इत्यर्थः, तातपादैस्तु ततः असत्ख्यातेरित्यर्थः कृतः, यद् यतो व्यतिरिच्यत इत्यादौ यत्पदस्याधेयपरत्वेन यत इत्यस्य च यतोऽधिकरणादित्यर्थत्वेन व्यतिरिच्यत इत्यस्य च व्यावर्त्तते इत्यर्थत्वेन व्याख्यानयति—यदाधेयमिति। यतो व्यतिरिच्यत इति पदद्वयपर्यवसितार्थमाह—यदवृत्तीत्यर्थः इति, तथा च यदाधेयं यदधिकरणनिरूपितवृत्तित्वाभाववत् तस्याधेयस्य तस्मिन्नधिकरणेऽभावो व्यतिरेक इति लभ्यते। अत्रान्याचार्यीयमतमाह—

यदधिकरणमिति, अत्र पक्षे यत्पदमधिकरणपरं, तस्येत्युत्तरपदेन धर्मस्योपग्रहणार्थं यत इति पदं तु यद्धर्मवत इति परं, व्यतिरिच्यत इति च भिद्यत इत्यर्थकमिति, धर्मस्येत्युत्तरमभाव इत्यनुषञ्जनीयम्, तथा च यदधिकरणं यद्धर्मावच्छिन्नप्रतियोगिताकभेदवत् तत्राधिकरणे तस्य धर्मस्याभावो व्यतिरेक इत्यर्थः, नैयायिकाद्यभ्युपगतेऽभावस्याधिकरणानात्मकत्वपक्षे व्यतिरेकस्वरूपमुपदर्श्य प्रभाकरसम्मतेऽभावस्याधिकरणात्मकत्वपक्षे तत्स्वरूपमाह—

**तदभावस्वभावत्वं वा, केवलाधिकरणस्यैवाभावत्वात्। तत्र न तावत् क्रमयौगपद्ययोः शशविषाणेऽभावः प्रमाणगोचरः, वृक्षरहितभूभृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणागोचरत्वात्। नापि क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकम्, घटाभाववत् शशविषाणस्य प्रमाणेनानुपलम्भात्। घटाभावोऽपि न प्रमाणगोचर इति चेत्। न। तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणसिद्धेः, असिद्धौ वा तत्राप्यव्यवहार एव॥**

तदभावस्वभावत्वं वेति, अत्र यद् यतो व्यतिरिच्यते तत्रेत्यनुषञ्जनीयम्, केवलेति प्रतियोगिशून्येत्यर्थः, अभावाधिकरणयोर्भेदपक्षात्मकं आद्यकल्पं निरस्यति—तत्र न तावदिति, क्रमयौगपद्ययोरिति अर्थक्रियानुकूलक्रमयौगपद्ययोरित्यर्थः, क्रमादिकं सत्त्वस्याप्युपलक्षकम्, एवमग्रेऽपि। वृक्षरहितभूभृत्कटकवदिति, अयं च व्यतिरेकिदृष्टान्तः, पर्वतनितम्बे यथा वृक्षाभावो योग्यानुपलम्भेन गृह्यते न तथा शशविषाणे क्रमयौगपद्ययोरसत्त्वस्य चाऽभावः प्रमाणेन ग्रहीतुं शक्य इति भावः। अभेदपक्षात्मकद्वितीयकल्पं निरस्यति-नापीति, घटाभाववदित्ययमपि व्यतिरेकिदृष्टान्तः। तथा च यथा घटाभावस्वभावतया

भूतलादिकमनुभूयते प्रमाणेन न तथा शशविषाणं क्रमयौगपद्याभावरूपतयाऽनुभूयत इत्यर्थः । बौद्धो व्यतिरेकिदृष्टान्तासिद्धिमाशङ्कते—घटाऽभावोपीति, तथा च सर्वत्राऽप्रामाणिको लोकव्यवहार इति भावः । समाधत्ते—तस्येति, तद्विविक्तेतरेति—तद्विविक्तस्तद्भिन्नः, तदितरस्वभावस्य, प्रतियोगिवदभावस्याप्यतद्व्यावृत्तस्वभावस्य प्रमाणसिद्धत्वादित्यर्थः केवलमधिकरणमन्यो वेत्यन्यदेतदिति भावः । असिद्धाविति, प्रमाणेनेति शेषः, तत्रापि घटाभावेऽपि । प्रमितस्यैव व्यवहार्यत्वादिति भावः । ननु घटाभावस्य स्वतः प्रमाणागोचरत्वेऽपि तत्प्रतियोगिनो घटस्य घटाभावविरहस्वभावतया प्रमाणगोचरत्वात्तावतैव घटविरहस्वभावतया घटाभावसिद्धिरित्याशयेन बौद्धश्शङ्कते—

**घटस्तावत् स्वाभावविरहस्वभाव एव प्रमाणसिद्धः ताद्रूप्येण कदाचिदप्यनुपलम्भात्, एतावतैव तदभावोऽपि घटविरहस्वभावः सिद्ध इति चेत् । न । घटाभावस्य तदभावविरहस्वभावतायास्त्वयानभ्युपगमात्, निस्स्वभावतुच्छरूपताया एवोपगमात् , न चान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यात्, अतिप्रसङ्गात् । एवंभूतावेव घटतदभावौ यदेकस्य परिच्छित्तिरेवापरस्य व्यवच्छित्तिरभावावधारणमिति यावदिति चेत् । न । घटवत् घटाभावस्यापि प्रामाणिकत्वानभ्युपगमे स्वभाववादानवकाशात् ॥**

घटस्तावदिति, ताद्रूप्येण स्वाभावरूपत्वेन, कदाचिदप्यनुपलम्भादिति प्रतियोगिमस्त्वग्रहे तदभाववत्त्वस्याव्यवहारादित्यर्थः, घटाभावस्य तदभावविरहस्वभावताया इति अत्र तदभावो घटस्तद्विरहस्वभावताया इत्यर्थः, त्वयाऽनभ्युपगमादिति, अन्यथाऽलीकत्वव्याघातस्स्यादिति भावः । निस्स्वभावेति, अभावमात्रस्यैवेति शेषः । घटभावस्येति पाठे तु घट-

रूपो भावो घटभावस्तस्येत्यर्थः । अयं भावः, प्रतियोगी न स्वाभावविरहरूपो विरहस्य त्वन्मतेऽलीकतया तस्य तद्रूपत्वेऽलीकत्वप्रसङ्गस्स्यात्, यद्वा प्रतियोगिनस्स्वाभावविरहात्मत्वे प्रामाणिके अभावप्रामाणिकताया आवश्यकत्वादिति भावः । दूषणान्तरमाह—नचेति, अन्यस्य घटस्य, स्वभावे स्वाभावविरहस्वभावे, तदन्योऽपि घटाभावोऽपि, सिद्धः घटविरहस्वभाव इति शेषः, घटस्स्वाभावविरहस्वभावतया येन प्रमाणेन गोचरीकृतस्तेन प्रमाणेन घटाभावो घटविरहस्वभावतया न गोचरीक्रियते येन तस्य तत्स्वभावतया सिद्धिस्स्यात्, अगोचरस्यापि तस्य तेन सिद्ध्यभ्युपगमेऽतिप्रसङ्ग इति भावः, स्वभावविशेषस्यैव नियामकत्वान्नातिप्रसङ्ग इत्याशङ्कते—एवम्भूताविति, एवंस्वभावावित्यर्थः, परिच्छित्तिरिति निश्चय इत्यर्थः । निराकरोति—घटवदिति, दृष्टान्तोऽयं व्यतिरेकलक्षणः, अस्मद्गुरुपादास्तु बौद्धमते अवयविरूपो घटोऽपि तुच्छ इत्युक्त्या घटवदित्यस्यान्वयदृष्टान्तत्वमाहुः, भवतां मतेऽपि प्रमाणपथावतीर्ण एव स्वभावावलम्बनमङ्गीकृतमित्याह—

प्रमाणसिद्धे हि स्वभावालम्बनं न स्वभाववादालम्बनेनैव वस्तुव्यवस्थितिरिति हि भवतामेव तत्र तत्र जयदुन्दुभिः । तत् किमिदानीं स्वाभावविरहस्वभावो घटः प्रमाणान्नैव सिद्धः, एवं च घटवत्यपि घटाभावव्यवहारः स्यादिति चेत् । तव दृष्टचैवायं दोषो यादृशस्त्वयं प्रमाणपथमवतीर्णस्तादृशस्य तस्य परमार्थतो यदि कश्चिदभावः स्यात् सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात्, न चैतदभ्युपगम्यते भवता । तस्माद् घटवत् तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकसिद्धिः । तदीयत्वेनैव च निरूपणे तज्ज्ञानमपेक्ष्यते नान्यथेति विनाऽप्यभावज्ञानं तदभावात्मनो भावस्य निरूपणं नानुपपन्नम् ।

प्रमाणसिद्धे हीति, वस्तुव्यवस्थितिरिति, अत्र वस्तुसिद्धिरित्यपि पाठः, घटवत्यपीति, अपिना घटशून्ये घटाभावव्यवहार इवेति सूचितम्, अयं दोष इति, अभावस्य तुच्छरूपत्वादप्रामाणिकत्वे तद्विरहस्वभावो घटोऽपि न प्रमाणकोटिमाटिकत इत्ययं दोष इत्यर्थः, यादृशस्त्वयमिति, अवयवी परमाणुपुञ्जस्वरूपो वा घट इत्यर्थः । सोऽपि घटोऽपि, तद्विरहस्वभावः स्वाभावविरहस्वभावः, तथैव स्वाभावविरहस्वभावत्वेनैव, भावस्य स्वाभावविरहात्मकतायाः प्रामाणिकत्वे चाभावप्रामाणिकत्वध्रौव्यात्, अस्मद्गुरुचरणास्तु सोऽपि पारमार्थिकघटाभावोऽपि, तद्विरहस्वभावः घटविरहस्वभावः, तथैव घटविरहस्वभावत्वेनेत्याहुः, अनयोः घटतदभावयोः, व्यतिरेकेति विरोधेत्यर्थः। ननु घटतदभावौ यदि परस्परविरहस्वभावौ तर्हि घटस्य घटाभावविरहस्वभावत्वेन तत्त्वेन तज्ज्ञाने घटाभावरूपप्रतियोगिज्ञानस्यापेक्षितत्वेन तज्ज्ञानं विना तज्ज्ञानं न स्यात्, अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादित्याशङ्कायामाह-तदीयत्वेनैव चेति, तदीयत्वेन प्रतियोगितासंसर्गेण घटाभावविशिष्टत्वेन, तज्ज्ञानं घटाभावात्मकप्रतियोगिज्ञानं, नान्यथा घटत्वेन रूपेण घटाभावाभावात्मकस्य घटस्य निरूपणे प्रतियोगिभूताभावज्ञानं नापेक्ष्यते,-

अप्रमाणिकत्वेन त्वनयोरपि न तथाभाव इति शशविषाणादिष्वपीयमेव गतिः । ननु काल्पनिकसपक्षसत्त्वादिरूपसम्पत्तिरेवास्त्वनुमानाङ्गं, न, तस्याः सर्वत्रानैकान्तिकासिद्धविरुद्धेषु त्वदनुमतेषु हेत्वाभासेषु सुलभत्वात्-

अन्योरपि घटतदभावयोरपि, न तथाभावः नान्योन्यविरहस्वभावत्वम्, शशविषाणादिष्विति, यदि शशविषा-

णादि प्रामाणिकं स्यात्तदा तत्र क्रमयौगपद्यव्यतिरेकस्तद्रूपत्वं वा प्रामाणिकं स्यात् न चैवमित्यर्थः, तथा च प्रमाविषयस्यैव व्यवहारविषयत्वमिति यदुपक्रान्तं तत्सिद्धमिति भावः। ननु स्थिरो भावः असन् क्रमयौगपद्याभ्यामर्थक्रियाकारित्वाभावात् शशशृङ्गवदित्यत्र मास्तु परमार्थभूता पक्षसत्त्वादिरूपसम्पत्तिः, काल्पनिक्येव साऽनुमानजनिकास्तामित्याशङ्कते—नन्विति, आदिपदेन पक्षसत्त्वविपक्षाऽसत्त्वयोरुपग्रहः। पर्वतो वह्निमान् प्रमेयत्वादित्यत्र साधारणानैकान्तिके प्रमेयत्वहेतौ विपक्षाऽसत्त्वस्य शब्दोऽनित्यः चाक्षुषत्वादित्यत्र स्वरूपासिद्धे चाक्षुषत्वहेतौ च पक्षसत्त्वस्य शब्दो नित्यः कृतकत्वादित्यत्र विरुद्धे कृतकत्वहेतौ च सपक्षसत्त्वस्य कल्पनाया अप्रतिहतप्रसरत्वेन सुलभत्वादुक्तहेत्वाभासेष्वप्युक्तरूपसम्पत्तेस्सम्भवात्तामादाय तत्र सल्लिङ्गत्वापत्त्या यथार्थानुमित्युत्पादकत्वं स्यादित्याशयेनोत्तरयति–न तस्या इति,

ननु पक्षसपक्षविपक्षास्तावद्वस्त्ववस्तुभेदेन द्विरूपाः, तत्र ये कल्पनोपनीतास्तत्र काल्पनिका एव पक्षधर्मत्वान्वयव्यतिरेकाः, प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः, तथा चासत्त्वे साध्ये काल्पनिकयोः पक्षसपक्षयोः स्थिरभावशशशृङ्गयोः काल्पनिकमेव क्रमयौगपद्यविरहस्य हेतोः सत्त्वम्, क्षणिकत्वे च साध्ये सत्त्वस्य काल्पनिके शशशृङ्गादौ विपक्षे काल्पनिक एव व्यतिरेको गमकतौपयिकं रूपं, तदिह काल्पनिकान्निरग्नेर्यद्यपि प्रमेयत्वादेर्व्यावृत्तिः काल्पनिकी सिद्धा, तथापि प्रामाणिकाज्जलह्रदादेः प्रामाणिक्येवैषितव्या, सा च न सिद्धेति कुतस्तस्य हेतुता,

तत्रेति, तेषु काल्पनिकाकाल्पनिकभेदेन द्विरूपेषु पक्षादिषु मध्य इत्यर्थः, तत्रेति, तेषु काल्पनिकपक्षसपक्षविपक्षेष्वि-

त्यर्थः। पक्षधर्मत्वान्वयव्यतिरेकाः पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वानि, पक्षादीनां द्विरूपतोपदर्शनेन प्रकृते किं कृत्यमत आह–तथा चेति, असत्त्वे साध्य इति, स्थिरं पक्षीकृत्य क्रमादिविरहहेतुनाऽसत्त्वे साध्य इत्यर्थः। स्थिरभावेति, बौद्धमते वास्तविकः स्थिरो नाङ्गीक्रियते इति तस्य काल्पनिकत्वात्तत्र सत्त्वमपि काल्पनिकमेव, विपक्षस्तत्र क्षणिको भावः तस्य वस्तुभूतत्वात् तत्र क्रमयौगपद्यविरहस्य हेतोरसत्त्वं क्रमयौगपद्यसत्त्वपर्यवसितमिति तन्न काल्पनिकमिति तन्नोक्तम्, क्षणिकत्वे च साध्य इति, शब्दादिपक्षस्य घटादिसपक्षस्य बौद्धमते वस्तुभूतत्वात्तत्सत्त्वमपि सत्त्वहेतौ वस्तुभूतमेवेति काल्पनिकत्वाभावान्नोक्तमिति, अनैकान्तिकासिद्धविरुद्धानां प्रमेयत्वचाक्षुषत्वकृतकत्वहेतूनां काल्पनिकरूपसम्पत्तेस्सुलभत्वाद्धेत्वाभासत्वं न स्यादित्युक्तमतिप्रसङ्गमुद्धरति–तदिहेत्यादिना इह पर्वते वह्नौ साध्ये,एवं शब्दस्यानित्यत्वसाध्ये एवंशब्दस्य नित्यत्वसाध्ये. जलहृदादेरिति अत्रापि निरग्नेरित्यस्यान्वयः। तस्य प्रमेयत्वहेतोः। हेतुता सद्धेतुता,

एवं प्रामाणिके शब्दे प्रामाणिक एव हेतुसद्भावो वक्तव्यो, न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः। एवं कृतकत्वस्यापि वस्त्वेकनियतधर्मस्य वास्तव एवान्वयो वक्तव्यः, वस्तुनो विपक्षाच्च वास्तव एव व्यतिरेको, न च तस्य तौ स्तस्तत्कथमसावपि हेतुरिति चेत्। वृथा प्रलपितमेतत्। नहि नियामकमन्तरेण सम्पदं प्रति कल्पना त्वरते विपदं प्रति तु विलम्बत इति शक्यं वक्तुम्।

वस्त्वेकनियतधर्मस्येति, तन्मते यत्र वस्तुत्वं तत्र कृतकत्वमेवेति. वस्तुत्वव्यापकीभूतधर्मस्य वस्तुमात्रधर्मस्य कृतकत्वस्य नित्यरूपेऽलीके सपक्षेऽन्वयो विरोधात् कल्पयितुं न शक्यत इति सूचनाय॥ यथा काल्पनिकी पक्षसत्त्वाद्यात्मकरूपसम्पत्ति-

गमिका तथा काल्पनिकी रूपविपत्तिरप्यगमिका स्यादित्याह—नहीति, रूपविपत्तिमेवाह—

तथा च निरग्निकमपि कूर्मरोम सधूममिति कल्पनामात्रेण विपक्षवृत्तित्वाद्धूमो नाग्निं गमयेत्। वास्तव्यां रूपसम्पत्तौ किमनेन काल्पनिकदोषेणेति चेत्। तर्हि वास्तव्यामसंपत्तौ किं काल्पनिक्या तयेति समानम्। विरोधाविरोधौ विशेष इति चेत्। कुत एषः। एकत्र धूमे वह्नौ साध्ये उभयोर्धूमशशशृङ्गयोर्वस्त्ववस्तुत्वात्, अन्यत्र क्रमादिविरहेणासत्त्वे सत्त्वेन क्षणिकत्वे वा पक्षहेत्वोर्हेतुसपक्षयोर्विपक्षहेत्वभावयोश्चोभयोरप्यवस्तुत्वादिति चेत्, तत्, किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्णस्तेन सह विरोधः स्यात्।

तथा चेति, वास्तविकरूपसम्पत्तिस्सबलत्वात् काल्पनिकरूपासम्पत्तावपि साध्यसाधिका, तर्हि वास्तविकरूपाऽसम्पत्तिरपि सबलत्वात् काल्पनिकरूपसम्पत्तिसत्त्वेऽपि साध्यबाधिका स्यादिति सत्त्वहेतौ त्वन्मतेन वस्तुभूतविपक्षाऽभावेन क्रमयौगपद्यविरहहेतौ च परमार्थभूतपक्षसपक्षाऽभावेन न वास्तविकरूपसम्पत्तिरिति काल्पनिकरूपसम्पत्तिसत्त्वेऽपि कथं तदुभयहेतुस्साध्यं साधयेदिति प्रतिबन्द्या समाधत्ते-तर्हीति, तया रूपसम्पत्त्या, वह्निमान् धूमादित्यादावसतो विपक्षस्य शशशृङ्गस्य काल्पनिकत्वेन सतो धूमस्य वास्तविकत्वेन सदसतोस्सम्बन्धाऽभावेन न तत्र तस्य सत्त्वं कल्पयितुं शक्यते विरोधादिति काल्पनिकरूपविपत्त्यभावेन न धूमाद्वह्न्यनुमानोच्छित्तिः, स्थिरः असन् क्रमादिविरहात् शशशृङ्गवदित्यादौ च असतस्स्थिरात्मकपक्षस्य शशशृङ्गात्मकसपक्षस्य च काल्पनिकत्ववदसतः क्रमादिविरहस्य हेतोरपि काल्पनिकत्वात्तत्र तस्य सम्बन्धे विरोधाभावात् सत्त्वं कल्पयितुं शक्यते इति विपक्षासत्त्ववत् पक्षसत्त्वं सपक्षसत्त्वं च क्रमादिविरहहेतावस्त्येवेति रूपसम्पत्त्या तेनासत्त्वसाधनं स्यादेव,शब्दादिः क्षणिकः सत्त्वात् घटव-

दित्यादौ पक्षसत्त्वसपक्षसत्त्ववत् विपक्षासत्त्वं सत्त्वस्यापि हेतोरस्त्येव, हेतोर्विपक्षासत्त्वं विपक्षेऽभावः विपक्षश्चात्र शशशृङ्गं तच्चाऽसत् तस्मिन्नसति सद्रूपस्य सत्त्वहेतोरभावोऽसत्त्वेनैवेति तयोस्सम्बन्धे विरोधाभावादिति रूपसंपत्त्या सत्त्वहेतुनापि क्षणिकत्वसाधनं स्यादेवेत्याशङ्कते—**विरोधेति**, **क्रमादिविरहेणाऽसत्त्वे** इति, साध्य इति शेषः, अस्य च पक्षहेत्वोर्हेतुसपक्षयोरित्यनेनान्वयः। **सत्त्वेन क्षणिकत्व** इति, अत्रापि साध्य इति शेषः, अस्य च विपक्षहेत्वभावयोरित्यनेनान्वयः। **अवस्तुत्वादिति**, तथा च क्रमादिविरहहेतौ पक्षसत्त्वं सपक्षसत्त्वञ्चास्ति सत्त्वे च हेतौ विपक्षासत्त्वमस्तीति भावः। ननु वस्तुभूतस्य धूमस्यावस्तुभूते कूर्मरोम्णि विपक्षे सत्त्वकल्पना माभूत् विरोधात्, काल्पनिकस्य तु तस्य सा स्यादेव, न च वस्तुभूताद्धूमात्काल्पनिको धूमो नान्य इति वाच्यं, वस्त्ववस्तुनोरैक्याभावादिति धूमहेतोरपि न रूपसम्पत्तिरित्याशयेनाह—**तत्किमिति**, हेतुत्वेनोपात्तो धूमो पर्वतमहानसादौ वस्तुभूत एवेति कथं तस्यावस्तुभूते विपक्षे सम्बन्धकल्पना स्यादिति तस्य विपक्षासत्त्वरूपसम्पत्तिस्स्यादेवेत्याशङ्कते—

**क्वचिद्वस्तुभूत एवेति चेत्, निर्धूमत्वमपि क्वचिद्वस्तुभूतमिति तेनापि विरोध एव। तस्माद् यथा काल्पनिकी विपत्तिर्न दोषाय, तथा काल्पनिकी सम्पत्तिरपि न गुणायेति, क्रमादिविरहेण स्थिरे सत्त्वव्यतिरेकसाधनरूपस्य क्षणिकत्वहेतुसत्त्वस्य शशशृङ्गेऽभावलक्षणस्य च व्यतिरेकस्य भङ्ग एव ॥ १९ ॥**

**क्वचिद्वस्तुभूत एवेति**, ननु यदि क्वचिद्वस्तुभूतस्यान्यत्रावस्तुभूतस्याप्यवस्तुनि सम्बन्धकल्पना कर्तुं न शक्यते, तर्ह्यवस्तुभूते विपक्षे कूर्मरोम्ण्यवस्तुभूतस्य निर्धूमत्वस्यापि धूमाभावरूपस्य सम्बन्धकल्पना न स्यात्, ह्रदादौ तस्य वस्तुभूतत्वात्, वस्तुभूतस्य च तस्य तत्र सम्बन्धकल्पना सुतरामशक्यैव, तथाच यद्विपक्षे धूमहेतोरसत्त्वं विपक्षे धूमाभावरूपं तदपि न स्यादिति

कात्पनिकविपक्षव्यतिरेकविरहात् धूमोऽग्निं न गमयेदित्याह–निर्धूमत्वमपीति, उपसंहरति–तस्मादिति ॥ १९ ॥ विंशतितमश्लोकावतरणिकामाह–

सत्त्वक्रमयौगपद्ययोर्व्याप्त्यसिद्धयैव न व्यतिरेकसिद्धिरिति सिंहावलोकितेन द्रढयति—

आदाय सत्त्वमपि न क्रमयौगपद्ये, नित्यान्निवृत्य बिभृतः क्षणिके प्रतिष्ठाम् ।
यन्न त्वदीयनयवाग्नगरीगरीय--श्चित्रस्वभावसरणौ भयतो निवृत्तिः ॥ २० ॥

सत्त्वक्रमयौगपद्ययोरिति, आदाय सत्त्वमपीति, बिभृत इति क्रियापदं, तत्कर्तृणी क्रमयौगपद्ये, कर्म च क्षणिके प्रतिष्ठामिति, नेत्यस्य बिभृत इत्यनेनान्वयः । किं कृत्वेत्याशङ्कायामाह–नित्यान्निवृत्त्येति, नित्यपक्षान्निवृत्तौ भूत्वेत्यर्थः । क्रमयौगपद्ये एव क्षणिके प्रतिष्ठां न बिभ्रतः किंवान्यमप्यादायेत्यारेकायामाह–आदाय सत्त्वमपीति, एतेन क्रमयौगपद्यस्य सत्त्वव्यापकत्वं सूचितमिति तन्निवृत्तौ तन्निवृत्तिरवश्यंभाविनीत्युपदर्शितम्, कथं न क्षणिके प्रतिष्ठां बिभ्रत इत्याशङ्कायां तत्र हेतुमाह–यन्नेति, यद् यस्माद् भयतो न निवृत्तिः,कस्येत्यारेकायां क्रमयौगपद्याभ्यां सञ्चरमाणस्य सत्त्वस्येति शेषः । कुत्र सञ्चरमाणस्येत्यत आह–त्वदीयेत्यादि, तात्पर्यार्थाविष्कारेणोक्तश्लोकं विवृणोति—

एकान्तनित्यगह्वरादेव हि सत्त्वव्यापकक्रमयौगपद्ये भयतो निवृत्त्य क्षणिकपद्धतिग्रामटिकां सत्त्वमादाय शरणीकर्तुमर्हतः । यदा तु भगवँस्त्वदीयवाग्नगर्यां गरीयसि चित्रस्वभावराजपथे सर्वतः सञ्चरिष्णु-

नित्यानित्यस्याद्वादयुक्तिमहारथे ताभ्यां पद्भ्यां सञ्चरमाणस्य सत्त्वस्य भयलेशोऽपि नास्ति, तदा कुतः कस्य निवृत्तिः कस्य चैकान्ते प्रतिष्ठेति वृत्तगर्भार्थः । आक्षेपसमाधानपद्धतिः पुनरियम्, अक्षणिकं हि तान्तामर्थक्रियां क्रमेण साधयेदक्रमेण वा, नाद्यः पक्षः क्षेमङ्करः ॥

एकान्तनित्यगह्वरादेवेति, न्यायनयादेवेत्यर्थः । क्षणिकपद्धतिग्रामटिकामिति, बौद्धनयमित्यर्थः । ताभ्यां क्रमयौगपद्याभ्याम्, बौद्धनयेनाक्षेपमाह–अक्षणिकं हीति, क्रमेणार्थक्रियां साधयन् स्थिरो भावः समर्थस्वभावः किंवाऽसमर्थस्वभाव इति विकल्पद्वयं, तत्राद्यपक्षमाश्रित्याह––

समर्थस्वभावस्य विलम्बे हेत्वभावात्, असमर्थेन च विलम्बेनाप्यकरणात् । समर्थस्यापि सहकार्यपेक्षया विलम्ब इति चेत्, न, अकिञ्चित्करत्वे सहकार्यपेक्षानुपपत्तेः । किञ्चित्करत्वादेव तदपेक्षेति चेत्, तत्र पृच्छामः, किं कारणस्य स्वरूपलाभार्थं सहकार्यपेक्षा, उतोपकारार्थं, कि वा कार्यार्थमिति । न प्रथमः, स्वरूपस्य कारणाधीनस्य नित्यस्य वा पूर्वसिद्धत्वात् । न द्वितीयः, स्वयं सामर्थ्येऽसामर्थ्ये वोपकारस्यानर्थकत्वात् । नापि तृतीयः, तथैव कार्यार्थमपि तदपेक्षाऽयोगादिति ॥

समर्थस्वभावस्येति, तथा च भाविकार्यमात्रस्य तदैवोत्पत्तिस्स्यात्तेनेति भावः । द्वितीयपक्षमाश्रित्याह–असमर्थेन चेति, तथा चेदानीमिवान्यदापि तेन कार्यं नोत्पद्येतेति भावः । सहकारिणो हि किञ्चित्कराः किंवाऽकिञ्चित्करा इति विकल्पद्वयं, तत्र द्वितीयं विकल्पमपेक्ष्याह–अकिञ्चिकरत्व इति, प्रथमविकल्पमपेक्ष्याशङ्कते–किञ्चित्करत्वादेवेति, कारणस्य कार्या-

नुकूलसामर्थ्यं सहकारिणमन्तरेणापि तत एव कार्योत्पत्तेः, कार्यानुकूलासामर्थ्ये च सहकारिणस्सत्त्वेऽप्युक्तस्वभावस्य तदवस्थत्वादेव कार्यानुत्पत्तेस्सहकारिणोऽकिञ्चित्करत्वेन नापेक्ष्यत्वं सम्भवतीत्याह-तथैवेति,

अनेकाधीनस्वभावतया कार्यमेवापेक्षत इति चेत् । न । तस्यास्वतन्त्रत्वात्, स्वतन्त्रकारणानुविधायित्वे च तस्य तद्वदेवान्यापेक्षत्वायोगात् । अथवा केयमपेक्षा नाम, किन्तैः सह करोतीत्यन्वयपर्यवसितः स्वभावभेदः, अथ तैर्विना न करोतीति व्यतिरेकनिष्ठं स्वरूपमेव, आहोस्वित्तैरुपकृतः करोतीत्युपकारभेदः । न प्रथमः, स्वभावस्य तादवस्थ्येन सहकार्यभावेऽपि करणप्रसङ्गात् । सहकारिसाहित्येनैव कर्तृस्वभावस्य कथं सहकारिविरहेऽपि करणं स्यादिति चेत्, तर्हि कर्तृत्ववत् सहकारिसाहित्यस्यापि स्वभावानुप्रविष्टत्वात् सहकारिणोऽपि न कदापि जह्यात्, प्रत्युत पलायमानानपि गले पाशेनाकृष्यानयेत्, अन्यथा स्वभावहानिप्रसङ्गादिति ॥

तस्याऽस्वतन्त्रत्वादिति, कार्यस्य पूर्वमसिद्धत्वेनान्यस्यापेक्षाऽयोगादित्यर्थः । तस्य कार्यस्य, तद्वदेव स्वतन्त्रकारणवदेव, तैस्सह करोतीत्यत्र सहकारिसाहित्यार्थकं तैस्सहेत्यन्तमुपलक्षणं किंवा विशेषणमिति विकल्पद्वयम्, यद्युपलक्षणं, तर्हि तस्य विशिष्टशरीराऽप्रविष्टत्वात्करोतीत्येतावन्मात्रस्य स्वभावत्वप्रसक्त्या सहकार्यसमवधानकालेऽप्युक्तस्वभावस्य सद्भावेन कार्योत्पत्तिप्रसङ्गस्स्यादित्याह-स्वभावस्येति, विशेषणपक्षमाश्रित्य शङ्कते-सहकारिसाहित्येनैवेति, स्वभावस्य यावद्द्रव्यभावित्वमित्याशयेन वौद्धः समाधत्ते-तर्हीति, अन्यथा सहकारिणः परित्यागे, स्वभावहानिप्रसङ्गादिति सहकारिणस्सद्भावे उक्तस्वभा-

वस्यासद्भावे च तदभावस्वभावस्य प्रसक्त्या ताभ्यां विरुद्धाभ्यां क्षणिकत्वप्रसङ्गस्स्यादिति भावः। उक्तव्यतिरेकस्वभावघटकस्य तैर्विनेत्यस्योपलक्षणत्वे तस्य विशिष्टशरीराऽप्रविष्टत्वान्न करोतीत्यस्यैव स्वभावस्य प्रसक्त्या सहकारिविरहकाल इव सहकारिकालेऽप्यकर्तृत्वप्रसङ्गस्स्यादित्याह—

अत एव न द्वितीयः, पूर्ववत् सर्वदाऽकर्तृत्वप्रसङ्गात्। तद्विरहादेवाकर्तृस्वभावश्चेत्; तर्हि कालान्तरेऽपि स्वहेतुवशादुपसर्पतोऽपि सहकारिणः पराणुद्य न कुर्यादेव, तद्विरहाकर्तृत्वघटितस्वभावत्वात्। अथ सहकारिषु सत्सु कर्तृस्वभावस्तद्विरहेऽकर्तृस्वभाव इति स्वभावद्वयमेवेति चेत्, तर्हि विरुद्धधर्माध्यासेन भेदप्रसङ्गाद्वस्तुनः स्थिरत्वहानिः।

पूर्ववत् सर्वदाऽकर्तृत्वप्रसङ्गादिति, तैर्विनेत्यस्य विशेषणत्वमेवाङ्गीक्रियत इति चेत्तर्हि तैर्विनेत्यस्योक्तस्वभावप्रविष्टत्वेन कदापि तत्परित्यागाभावेन सहकारिकालेऽप्युक्तस्वभावस्य सत्त्वेन तदानीमपि कार्यं न कुर्यादेवेत्याशङ्कोत्तराभ्यामाह- तद्विरहादेवेति, पराणुद्य दूरीकृत्य, उक्तस्वभावद्वयाभ्युपगमे विरोधिस्वभावद्वयस्यैकस्यां व्यक्तौ विरोधभङ्गभयादनुपपत्त्या तदाश्रयभेदापत्तेः क्षणिकत्वसिद्ध्या बौद्धानामेव समीहितसिद्धिस्स्यादित्याशयेन समाधत्ते–तर्हीति। ननूक्तस्वभावद्वयस्यैकस्मिन् वस्तुनि भिन्नकालावच्छेदेनैवाभ्युपगमान्न विरोधभङ्गः, येनोक्तदोषस्स्यात्,एककालावच्छेदेनैकाधिकरणावृत्तित्वलक्षणस्य तस्याक्षतेरिति पराशयमाशङ्क्य निषेधति—

न चायं विरोधः कालभेदेन परिहर्त्तव्यः, स्वभावयोर्धर्मिणोऽनतिरेकात्, अतिरेके वा धर्मिणो निःस्व-

भावत्वेनाकिञ्चित्करत्वप्रसङ्गात् इति । तृतीयपक्षस्तु बहुसुखानस्थादुस्थः । तथाहि–उपकारेऽपि कर्त्तव्ये सर्वदोपकारजननप्रसङ्गपरिहाराय सहकार्यपेक्षायामनवस्थापात उपकारपरम्पराकल्पनप्रसङ्गात्, तथोपकारस्याप्यपेक्षणीयमुपकारान्तरमन्तरेण न स्यादिति तत्राप्यनवस्था । तथा कर्त्तव्यस्योपकारस्य धर्म्यभेदे धर्म्यैव क्रियेत, भेदे तु धर्मिणः किमायातम्, अथ भिन्नेनापि तेन धर्मिणि किञ्चिदुपकारान्तरमाधेयं, तर्हि तेनापि तत्रान्यदाधेयं स्यादिति तृतीयानवस्था स्यात् । एवं क्षणिकोऽपि भावः किं निरपेक्षः सापेक्षो वा, न प्रथमः, केवलाद्वत्सरसहस्रेणापि कार्यानुत्पत्तेः । न द्वितीयः, अनुपकारकापेक्षायामतिप्रसङ्गात् ॥

नचायमिति, विभिन्नत्वलक्षणविरोधाभिप्रायेण निषेधे हेतुमाह–स्वभावयोरिति, अनतिरेकादिति–स्वभावस्वभाववतोरभेदात् स्वभावयोर्भेदे तदभिन्नधर्मिणोरपि भेद आवश्यकः, एकस्य धर्मिणस्त्वाभिन्नस्वभावद्वयाऽयोगात्, योगे वा तद्वत्धर्मिणोऽपि द्वैतप्रसङ्गस्स्यात्, धर्मिण इव स्वभावद्वयस्यापि वैक्यप्रसङ्गस्स्यात्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति भावः । स्वभावस्वभाववतोर्भेदे हिमाद्रिविन्ध्याचलयोरिव भेदे सम्बन्धाऽयोगेन स्वभावयोर्धर्मिणि सत्त्वाऽयोगेन निस्स्वभावत्वेनासतो धर्मिणः किञ्चित्कार्यकारित्वं न स्यादित्यभिप्रायेणाह–अतिरेके वेति, न्यायनये तु नाऽभेदस्सम्बन्धे प्रयोजक इति विभिन्नयोरप्यङ्गुल्योस्संयोगवद्विभिन्नयोरपि स्वभावतद्वतोस्स्वरूपसम्बन्धविशेषसम्भवेन न निस्स्वभावत्वप्रसङ्ग इति बोध्यम् । सहकारिभिरुपकृतः करोतीति तृतीयपक्षमनवस्थात्रयदूषणेन दूषयितुमाह–तृतीयपक्षस्त्विति । सहकारिणा कारणे य उपकारः कर्त्तव्यस्तं स सहकारी सहकार्यन्तरमनपेक्ष्यैव यदि करोति, तदा तेन सर्वदोपकारजननप्रसक्त्या सर्वदा प्रकृतकार्योत्पादकत्वप्रसङ्गस्स्यात्

कारणस्य, यदि चापेक्ष्यैव करोति, तदा सहकार्यन्तरमपि सहकारिणि उपकारे कर्त्तव्ये सहकार्यन्तरमपेक्ष्यैव तं कुर्यात्, तदपि सहकार्यन्तरमेवमेव सहकारिमुखावलोकनसापेक्षं पूर्वसहकार्यन्तरे उपकारं कुर्यात् एवमग्रेऽपीत्यनवस्थां प्राथमिकीमुपदर्शयति–उपकारेऽपीति। द्वितीयानवस्थामाह–तथोपकारस्यापीति, यथा सहकारिकृतोपकारानपेक्षं कारणं न कार्यकरणसमर्थं तथोपकारोऽपि सहकारिकृतोपकारान्तरानपेक्षो न तथा, अन्यथा तेनोपकारेण सर्वदा कार्योत्पादप्रसङ्गः, समर्थस्य क्षेपाऽयोगात्, इत्युपकारान्तरमभ्युपगन्तव्यम्, तदप्युपकारान्तरसापेक्षमेव कार्यदक्षम्, एवमग्रेऽपीत्यनवस्थेति भावः। तृतीयाऽनवस्थामाह–तथा कर्त्तव्यस्योपकारस्येति, धर्म्यंव क्रियेतेति, सहकारिणा कारणात्मकधर्म्यंवोत्पादितस्स्यादित्यर्थः, न चैवमभ्युपगन्तुं युक्तं, कारणीभूतस्य धर्मिणस्स्वसामग्रीत एवोत्पन्नत्वादिति भावः, धर्मिणः किमायातमिति, भेदे सम्बन्धाऽयोगेन कारणात्मके धर्मिणि उपकारसम्बन्धाऽभावेन धर्मिणोऽनुपकृतत्वेन तदवस्थरूपत्वादिति भावः। तेन उपकारेण, प्रथमोपकारकृतमुपकारान्तरमपि धर्मिणो भिन्नमिति तत्र स्वोपनीतोपकारान्तरमन्तरेण नोपकृततामाधातुमलं, तदप्युपकारान्तरं धर्मिणो भिन्नरूपमिति तेनाप्युकारान्तरापेक्षणं कर्तव्यमित्यनवस्थेत्याह–तर्हीति। नैयायिकश्शङ्कते–एवं क्षणिकोऽपीति, निरपेक्ष इति सहकार्यनपेक्ष इत्यर्थः, स्वकार्यं करोतीति शेषः। अतिप्रसङ्गादिति, येन केनापि सहितस्सन् कार्यं कुर्यादिति दोषपरिहारार्थमुपकारिणं सहकारिणमपेक्ष्यैव क्षणिकोऽपि भावः स्वकार्यं करोतीत्यभ्युपगन्तव्यं बौद्धेनापि, तत्र च पूर्वोक्तानवस्थात्रयदूषणमपरिहार्यमिति " यत्रोभयोस्समो दोषः परिहारोऽपि वा समः, नैकः पर्यनुयोज्यस्स्यात् तादृश्यर्थविचारणे " ॥ १ ॥ इति न्यायेन स्थिरवादिनं प्रति क्षणिकवादिनो मूकीभवनमेव ज्याय इति भावः। स्वभावभेदेनैकस्यापि धर्मिणो भेदापादनं यत्कृतं नैयायिकानां मते, तदपि बौद्धानां मते सममेवेत्याह–

तथा पुञ्जात् पुञ्जोत्पत्तौ बीजमपि पवनपाथस्तेजोऽङ्कुरान् करोतीति यदा पक्षः, तदा किं येन स्वभावेनाङ्कुरं करोति बीजं तेनैव पवनादीनन्येन वा। नाद्यः। एकस्वभावाधीनत्वेन कार्याणामभेदप्रसङ्गात्। न द्वितीयः। एकस्यापि क्षणस्य स्वभावभेदेन भेदापत्तेरिति, तदिदमशिक्षितोत्रासनम्। तथा हि—न तावत् सहकारित्वं कारणानां, किन्तु सहितकारित्वेन परस्परोपकृतानि कार्यं कुर्वन्ति, सहितानि सन्ति एकं कार्यं कुर्वन्तीत्यर्थः, एवं च सहकारित्वलक्षणापेक्षास्त्येव, न तु तैरुपकार्यत्वं स्थिरपक्षवत्॥

तथेति, यद्येकेनोपादानस्वभावेनैव बीजमङ्कुरमिव पवनादीनप्युत्पादयेत्, तर्हि पवनादयोऽपि स्वस्वरूपं परित्यज्योपादेयाङ्कुररूपतां परिगृह्णीयुः, कारणाऽभेदे कार्याभेदस्यावश्यकत्वात्, एवमेकेन सहकारिस्वभावेनैव बीजं पवनादीनिवाङ्कुरमप्युत्पादयेत्तर्ह्यङ्कुरमपि सहकार्यपवनादिरूपतामङ्गीकुर्यादित्याशयेनाह—नाद्य इति, एकस्यापि क्षणस्येति, एकक्षणावच्छिन्नस्य बीजस्यापीत्यर्थः, अथवा क्षणस्थायित्वाद्बीजमेव क्षणं तस्येत्यर्थः, स्वभावभेदेनेति, अङ्कुरादिकार्यं प्रत्युपादानस्वभावस्य पवनादीन् प्रति सहकारिस्वभावस्य च भेदेनेत्यर्थः। बौद्धस्समाधत्ते—तदिदमशिक्षितोत्रासनमिति, तैः सहकारिभिः। स्थिरस्य सहकारिभिर्विनापि विद्यमानस्य सहकारिकृतोपकारसत्त्व एव कार्यकरणं सहकार्यन्तराभावप्रयुक्तोपकाराभावे च तदकरणमिति स्थिरपक्षे सहकारिप्रयुक्तोपकारापेक्षत्वमावश्यकम्, क्षणिकस्य तु भावस्य स्वसामग्रीत एव सहकारिभिस्सहैव कार्यकर्तृत्वस्वभावत्वेनोत्पन्नस्य सहकारिविरहे स्वाभावप्रयुक्तमेव कार्याकरणमिति नात्रोपकारापेक्षेत्येतत्समर्थनायाह—

स्थिरस्य हि तैर्विनाऽपि विद्यमानस्य समर्थस्याकरणे उपकारापेक्षत्वमन्तरेण हेत्वभावात्। क्षणिक-

स्य तु समर्थस्य तैर्विनाऽसत्त्वेनैवाकरणोपपत्तेः । तथा चैकस्यैवानेककार्यकारिस्वभावस्य स्वकारणादुत्पत्तेः कार्यभेदेन स्वभावभेदापादानस्यापि दूरनिरसनात् सिद्धं युगपदेव सर्वार्थक्रियाकारि, द्वितीयकरणाप्रसङ्गेन स्थिरत्वासंभवात् । तस्मात्क्रमयौगपद्ययोर्व्यावृत्तेरक्षणिकाद् व्यावर्तमानार्थक्रिया क्षणिके विश्राम्यतीति प्रतिबन्धसिद्धिरिति । उच्यते । अयं व्यतिरेकमुखः प्रतिबन्धोऽन्वयमुखप्रतिबन्धखण्डने खण्डित एव ।

स्थिरस्य हीति, स्वभावभेदप्रयुक्तभेदापादनमपि स्थिरवन्न क्षणिके भावे सङ्गतम्, तस्यानेककार्यानुकूलैकस्वभावत्वादित्याह–तथा चेति, द्वितीयकरणाऽप्रसङ्गेनेति प्रथमक्षण एवाशेषार्थक्रियासम्पत्तेर्द्वितीयकार्यरूपार्थक्रियाकारित्वाभावेन तल्लक्षणसत्त्वाभावेनेत्यर्थः,बौद्ध उपसंहरति–तस्मादिति, प्रतिबन्धसिद्धिः क्षणिकत्वसत्त्वयोर्व्याप्तिसिद्धिः । नैयायिकस्समाधत्ते–उच्यत इत्यादिना; समर्थोऽपि सहकारिसहकृतस्सन् कार्यं करोति नान्यथेति .समर्थस्यापि सहकारिविरहात्कार्यकरणे विलम्ब इति न युगपत्कार्यकारित्वप्रसङ्गः, इत्याह––

अपि च व्यापकव्यावृत्तिरसिद्धा, क्रमेणैवार्थक्रियाकारित्वोपपत्तेः । यत्तु समर्थस्य किं विलम्बेनेत्युक्तं, तत्र सहकार्यसन्निधेरिति वदामः । तथा हि–सहकारिषु सत्सु करोति तैर्विना न करोतीत्ययमस्य स्वभावो दर्शनबलादेवावगम्यते, एवंविधस्वभावस्य विरोधाभावादुभयवादिसिद्धत्वाच्च । क्षणिकोऽपि हि कुर्वद्रूपो भावः सहकारिभिः सहैव करोतीति स्वभावो भवद्भिरभ्युपगन्तव्यः, इतरथा सहकारिणामसहकारित्वप्रसङ्गात् ।

तत्र सहकार्येति, समर्थस्य क्षेपायोग इत्यत्र सहकारिसान्निध्ये सतीति विशेषणीयमिति भावः । एवंविधस्वभावस्य प्रत्यक्षानुपलम्भदर्शनबलसिद्धस्वभावस्य, उक्तस्वभावद्वयं बौद्धैरप्यभ्युपगन्तव्यमित्याह–क्षणिकोऽपि हीति, यदि समर्थोऽपि भावस्सहकारिभिस्सहैव करोतीति स्वभाववान् न स्यात् सहितकार्यपि न स्यादिति प्रसङ्गो बोध्य इत्याह—

ननु नैते सहकारिणः किन्तु सहितकारिण इति, तर्हि सहितकारित्वमेव न भवेदिति प्रसङ्गोऽस्तु, अतः सहैव करोतीति नियमे सत्यसाहित्ये न करोतीति विपर्ययनियमोऽपि स्यात्, अतः सहकार्यसन्निधेर्विलम्बो युक्त एव । यत्त्वत्रोक्तं, तैः सह करोतीति स्वभावाभ्युपगमे सहकारिणो न जह्यादिति, तत् तवापि समानम् ॥

तर्हीति, प्रत्येकस्य सामर्थ्ये पृथगेव कार्यजननापत्तिः, असामर्थ्ये सहितकारित्वमपि न भवेत्, नहि षण्ढः इतरसहकृतोऽपि पुत्रोत्पादको दृष्ट इति भावः । न जह्यादिति सहकारिसाहित्यस्योक्तस्वभावान्तः प्रविष्टत्वादिति भावः ।

तथा हि–व्यतिरेकनियमे सहकारिणः स्वकारणादापततोऽपि निवार्य न कुर्यात्, तैर्विना हि न करोतीत्ययमस्य स्वभाव इति । तस्मात् यद्युपनिबन्धेन यदि सहकारिणः स्वकारणादागच्छेयुस्तदा कुर्यात्, यदि नागच्छेयुस्तदा न कुर्यादित्येवंविधे स्वभावे न कश्चिद्दोष इति । स्यादेतत्, तैः सह करोति तैर्विना न करोतीति योऽस्य स्वभावः स पश्चादस्ति वा नवा, प्रथमे पश्चादपि न कुर्यात्, द्वितीये त्वस्मन्मतापात इति । मैवम् । तवापि मते तैः सह कुर्वतो योऽस्य तैर्विना न करोतीति स्वभावः स यद्यस्ति तदा न कुर्यादेव,

नास्ति चेद्व्यतिरेकव्यावृत्तावन्वयव्यावृत्तिरिति स्वरूपहानिप्रसङ्गः ॥

व्यतिरेकनियमे, सहकार्यसाहित्ये न करोतीति नियमे, आपततोऽपि आगच्छतोऽपि, तत्र हेतुमाह–तैर्विनेति. उक्तस्वभावद्वयाभ्युपगममुखेनोपसंहारमाह–तस्मादिति, प्रथमे पश्चादपि न कुर्यादिति, अस्तीति पक्षे कारणोत्पत्तिकाल इव कार्योत्पत्तिकालेऽपि व्यतिरेकस्वभावस्य विद्यमानत्वेन सहकारिसाहित्ये सत्यपि कारणं कार्यं न कुर्यात्, अन्यथोक्तव्यतिरेकस्वभावहानिप्रसङ्ग इति भावः । यदि पश्चात्स्वभावो नास्ति, तर्हि सुतरां तद्वतोऽप्यभाव एव, नहि स्वभावमन्तरेण स्वभाविनस्सत्त्वं युक्तम्, निस्स्वभावस्यालीकत्वादित्यभ्युपगतं भावानां क्षणिकत्वमित्यस्मन्मतानुगो भवान् सञ्जात इत्याह–द्वितीये त्विति, न कुर्यादेवेति, तथा च क्षणिकवाह्यवादोऽप्युच्छिद्येत, क्षणिकभावस्य द्वितीयक्षणावच्छेदेनाप्यर्थक्रियाकारित्वाभावेनालीकरूपत्वादिति भावः । नास्तीति पक्षेऽपि वाह्यवादोच्छितिरेव, अन्वयव्यतिरेकस्वभावद्वयमूर्त्तिकत्वात्क्षणिकभावस्य, स्वभावद्वयस्य च परस्परानुस्यूतत्वादेकस्याभावे तन्नियतद्वितीयस्याप्यभावेन निस्स्वभावत्वापत्तेरित्याह–नास्ति चेदिति, धर्मिणश्शुद्धस्वरूपमस्त्येव, किन्तु सहकारिभिर्विना कर्तृत्वाऽभावात्मकव्यतिरेकस्वरूपमात्रं नास्ति, सहकारिवैकल्यविशेषणस्याभावादित्याशङ्कते बौद्धः–

स्वरूपमस्त्येव तैर्विनाऽभावमात्रं तु नास्तीति चेत्, ममाप्युत्तरकालं स्वरूपमस्ति तत्साहित्यमात्रं नास्तीति समः समाधिः, यच्चोक्तं किं समर्थस्य सहकार्यपेक्षयेति, तत्रोच्यते, स्वरूपमेव कुर्वद्रूपं सहकार्यपेक्षं, तदेव च रूपं सामर्थ्यशब्देनाप्युच्यतेऽतः सहकारिसहितस्यैव समर्थत्वात् न पूर्वोक्तदोष इति क्रमेणाप्यर्थक्रियोपपत्तेः स्थिराद्व्यापकव्यावृत्तिरसिद्धेति सिद्धम् । इदं तु ध्येयम्, बौद्धानां नैयायिकानां चानेक-

कार्यकरणैकस्वभाववस्त्वभ्युपगमे रूपरसादीनामप्यनेकचाक्षुषादिज्ञानकरणैकस्वभावत्वापत्तिः, तथा च द्रव्यनयप्रवेशः ॥

स्वरूपमस्त्येवेति, ममापि कार्याकरणकाले सहकारिसाहित्यस्य विशेषणस्याभावात्तद्विशिष्टान्वयस्वभावस्याभावेऽपि न स्वरूपाभाव इति समः समाधिरित्युत्तरयति नैयायिकः—ममापीति, अस्मद्गुरुचरणास्तु ननु क्षणिकस्य भावस्य सहकारिभिर्विनापि यदि सत्त्वं स्यात् कारित्वं च स्यात्तदा व्यतिरेकस्वभावाऽपलापादन्वयस्वभावस्याप्यपलापस्स्यात्, नचैवम्, क्षणिकस्य सहकारिसहितस्यैव भावान्नाऽवस्तुत्वप्रसङ्ग इत्याशयेन बौद्धश्शङ्कते—स्वरूपमस्त्येवेति, भावमात्रं सत्त्वमात्रम् इत्येवमर्थमाहुः, कुर्वद्रूपमिति, नैयायिकैः कुर्वद्रूपत्वजातेरनभ्युपगमात्फलोपधानात्मककारणताशालीत्यर्थः, तदेवेति सहकार्यपेक्षमेवेत्यर्थः। तथा च सहकारिसत्ताधीनसत्ताकतया सामर्थ्यं सहकार्यपेक्षयैव स्वस्वरूपतां बिभ्रतीति तदपेक्षाऽऽवश्यकीति भावः। रूपरसादीनामपीति, एकस्मिन्नेव रूपे चाक्षुषरासनघ्राणजस्पार्शनप्रत्यक्षात्मकानेककार्यानुकूलैकशक्तिमत्त्वेनालोकादिसामग्रीसहकृतस्य तस्य चाक्षुषज्ञानजनकत्वात्तत्र रूपत्वं रासनघ्राणजस्पार्शनसामग्रीसहकृतस्य च तस्य रासनघ्राणजस्पार्शनप्रत्यक्षोत्पादकत्वात्तत्र रसत्वगन्धत्वस्पर्शत्वानि, एवं रसादावपि ज्ञेयम्, तथा चैकस्मादेव रूपात्तत्तत्सामग्रीसहकृताद्रूपाद्यनेकप्रत्यक्षकार्यसम्भवेन किं रूपादिचतुष्टयकल्पनया, एकस्य रूपस्यैवानेककार्यानुकूलैकस्वभाववत्त्वादेकस्यापि द्रव्यस्य नेत्ररसनादितत्तदिन्द्रियसम्बन्धतो रूपरसादिप्रत्यक्षजनकत्वं भविष्यति, भविष्यति च रूपरसादिव्यपदेशगोचरत्वं, न च नानासंज्ञाकरणमात्रेणैकस्य नानात्वं, तथा सत्येकस्यापि गीर्वाणनाथस्य शक्रेन्द्रादिनानाशब्दैर्व्यवह्रियमाणत्वेन नानात्वं स्यादिति द्रव्यनयसाम्राज्यमित्याह—तथा च द्रव्यनयप्रवेश इति ॥

एतेन स्वरूपत एकत्वमुपाधिघटितस्वभावेन चानेकत्वमित्यपि व्याख्यातम् । औपाधिकस्वभावस्य मिथ्यात्वे द्रव्यनयस्यैव साम्राज्यात् । तत्सत्यत्वे च स्याद्वादस्यैव शरणीकरणात् । किं च कार्यतावच्छेदकभेदेन कारणतास्वभावभेदस्तावदन्यैरप्येकत्रावश्यं स्वीकर्त्तव्य एव, अन्यथा विविक्तव्यवहारोच्छेदापत्तेः । एवं च घटतदन्यावच्छेदेन ज्ञाने घटत्वप्रकारकत्वतदभाववत् तत्तत्कार्यभेदेनैकत्र कारणतास्वभावभेदोऽवश्यमागत इति जितं चित्रस्वभाववादिभिरस्माभिः, एकानेकस्वभावस्य वस्तुनो नित्यानित्यतयैवार्थक्रियाक्षमत्वादिति ॥ २० ॥

स्वरूपत इति, धर्मित्वस्वभावेनेत्यर्थः । उपाधिघटितस्वभावभेदेनेति, बौद्धमते उपादानतत्तत्कार्यसहकारिकारणविधयोपादेयतत्तत्सहकार्यकार्योत्पादकत्वलक्षणेन न्यायनये तत्तत्सहकारितद्वैकल्यकृतानेककार्योत्पादकत्वानुत्पादकत्वलक्षणेन चाऽवान्तरविकस्वभावभेदेनेत्यर्थः । शरणीकरणादिति, परमार्थभूतेनौपाधिकस्वभावभेदेन धर्मिणो भेदः स्वस्वरूपतोऽभेदश्चेत्येवमभ्युपगमादिति भावः । अनेककार्यकरणैकस्वभाववस्तुवादिनो बौद्धस्यापि कार्याणामनेकत्वेन तत्तद्धर्मावच्छिन्नतत्तन्निष्ठकार्यतात्मकनिरूपकभेदेन तन्निरूपितकारणतास्वभावस्य भेदावश्यकत्वेनैकस्याप्यनेकात्मकत्वमेवाभ्युपगमार्हम्, एवं नैयायिकस्यापीत्याशयेनाह—किञ्चेति, कार्यतावच्छेदकभेदेनेति, कार्यतात्मकं यदवच्छेदकं निरूपकं तद्भेदेनेत्यर्थः । तत्तद्धर्मावच्छिन्नतत्तत्कार्यतानिरूपितकारणताया भेदाभावे रूपं रूपं प्रत्येवोपादानकारणं न रसादिकं प्रतीतिव्यवहारोच्छेदस्स्यात्, रूपत्वावच्छिन्नकार्यतानिरूपितरूपत्वावच्छिन्नकारणतायां रसत्वाद्यवच्छिन्नकार्यतानिरूपितरूपत्वावच्छिन्नकारणतात्वस्यापि सत्त्वादित्याह—अन्यथेति, एवञ्चेति,

सनिरूपकपदार्थानां निरूपकभेदेन भेदस्यावश्यकत्व इत्यर्थः, घटतदन्यावच्छेदेनेति, घटपटगतविशेष्यताकत्वावच्छेदेनेत्यर्थः । ज्ञाने घटःपटश्चेति समूहालम्बनज्ञाने ॥ २० ॥ एकविंशतितमश्लोकमवतारयति—

प्रतियोग्युत्तरभाविनो हि कारणस्यापेक्षणीयत्वे सत्यपि प्रतियोगिनि तद्विलम्बाद्विलम्बो नाशस्य स्यात्, निरस्ते च तस्मिन् भावस्योत्पत्त्यनन्तरमेव विनाशः, स एव क्षणभङ्गः । यदि चैवमुत्पत्तिमतां क्षणिकत्वे सिद्धेऽपि नित्यत्वेन परैरभ्युपगतानां परमाणूनां तन्न सिद्धमिति विभाव्यते, तदा जन्येषु सिद्धव्यासिकेन सत्त्वेन तेषां विनाशित्वं क्षणिकत्वं वा साधयिष्यते इत्याशयमपाकर्त्तुमाह—

नाशोऽत्र हेतुरहितो ध्रुवभावितायाः—स्तेनागतं स्वरसतः क्षणिकत्वमर्थे ॥
इत्येतदप्यलमनल्पविकल्पजाले--रुच्छिद्यते तव नयप्रतिबन्दितश्च ॥ २१ ॥

प्रतियोग्युत्तरभाविनो हीत्यादिना, अपेक्षणीयत्व इत्यत्र ध्वंसोत्पत्ताविति शेषः, सत्यपीत्यस्यान्वयः प्रतियोगिनीत्यनेन, तदिति, अपेक्षणीयेत्यर्थः । परमाणूनामिति, उपलक्षणन्यायेनात्राकाशादिपञ्चद्रव्याणां नित्यगुणानां सामान्यादीनां च ग्रहणं कर्त्तव्यम्, उद्देश्यवचनपूर्वकत्वाद्विधेयवचनस्य प्रथमं नाश इत्युद्दिश्य विधेयमाह—हेतुरहित इति, प्रतियोग्युत्तरभाविहेत्वनपेक्ष इत्यर्थः । तेन न बौद्धमतेऽपि विनाशस्य प्रतियोगिजन्यतया हेतुरहितत्वासङ्गतिरिति भावः, पञ्चम्यन्तं हेतुरित्यनुसृत्य ध्रुवभावितायाः इति हेतुमाह,—तथाच नाशः प्रतियोग्युत्तरभाविहेत्वनपेक्षः ध्रुवभावित्वादित्यनुमानं लभ्यते इति,

उक्तानुमानफलमाह- तेनागतमिति, परार्थानुमानरूपं परोक्तं तत्किं प्रमाणभूतं नवेत्याशङ्कायां परोक्तं तदप्रमाणीक्रियते इत्युपदर्शयति–इत्येतदप्यलमिति, कैरिति करणाकाङ्क्षायामनल्पविकल्पजालैरित्युक्तम्, कर्तृपदानभिधानेऽपि करणपदसाकाङ्क्षत्वात्कर्तृपदस्य भवद्भिर्नैयैरिति शेषः, हेत्वन्तरमप्याह–तव नयप्रतिबन्दितश्चेति, अस्याप्युच्छिद्यत इत्यनेनान्वयः, इति श्लोकसङ्क्षेपार्थः । विस्तरार्थस्तु ग्रन्थकृतैवोपदर्श्यते—

अत्र जगति, नाशो ध्रुवभाविताया हेतोर्हेतुरहितः, तेन स्वरसतः प्रमाणान्तरापेक्षामन्तरेणैवार्थे घटादौ क्षणिकत्वमागतम्, उत्पत्त्यनन्तरमेव नाशध्रौव्येण क्षणभङ्गस्य स्फुटत्वात् । हे भगवन् इत्येतदपि परोक्तमलमत्यर्थमनल्पजालैरुच्छिद्यते । भवद्भिर्नैयैरिति शेषः ॥

अत्रेत्यादिना, यो यन्मात्रहेतुकः यो यदुत्तरभाविहेत्वनपेक्षो वा स तदुत्पत्त्युत्तरक्षणेऽवश्यमभ्युपगन्तव्यः, यथा-प्रतियोगिमात्रहेतुको ध्वंसः, यद्वा यो यदधीनत्वेन ध्रुवभावी स तदुत्पत्त्युत्तरक्षणेऽवश्यमभ्युपगन्तव्यः, यथा प्रतियोग्यधीनत्वेन ध्रुवभावी ध्वंसः इति सामान्यव्याप्तिमूलके स्थितिः स्वाश्रयोत्पत्त्युत्तरक्षणेऽवश्यमभ्युपगन्तव्या स्वाश्रयमात्रहेतुकत्वात् स्वाश्रयाधीनत्वेन ध्रुवभावित्वाद्वेत्यनुमाने पुरस्कृत्य प्रतिबन्दिमाह—

च पुनस्तव नयप्रतिबन्दितो भवदुक्तनयप्रतिबन्द्या, ध्वंसवत् स्थितेरप्यर्थमात्रहेतुकत्वात्, अर्थवशतो वा ध्रुवभावित्वात् अन्तत उत्पादध्वंसयोरैकाधिकरण्यायापि द्रव्यरूपस्थित्यन्वयस्यावश्याभ्युपगन्तव्यत्वात् । वस्तुतो घटत्वावच्छिन्नं यथा कारकजन्यं वियद्वयासत्वं तु तत्र स्वभावादेव, तथोत्पादव्ययस्थित्या-

त्मकत्वमपि स्वभावादेव, तदीयत्वादिना निरूपणे च तत्र सम्बन्धिविशेषज्ञानापेक्षेति नैकान्ततो नश्वरत्वमर्थानां युक्तम्, घटमौलीत्यादिनैकस्मादप्यर्थादुत्पादादिकार्यत्रयप्रदर्शनाच्च तदात्मकत्वमर्थानां किन्न रोचये:, वासनामात्रेण तदुपपादने नीलादिविकल्पानामपि निर्विषयत्वापत्तेः ॥

ध्वंसवदित्यादिना, अर्थमात्रेति, आश्रयमात्रेत्यर्थः । सिद्धान्तमनुसृत्याह–अन्तत इति, यद्यर्थमात्रहेतुकत्वे ध्रुवभावित्वे वा विवदेत परस्तदाऽपीत्यर्थः । उत्पादध्वंसयोरैकाधिकरण्यायापीति, यदेव हेमद्रव्यं कुण्डलरूपेणोत्पद्यते तदेवाङ्गदादिरूपेण विनश्यतीत्यादिप्रत्ययानुरोधेनोत्पादध्वंसयोरेकाश्रयवृत्तित्वायापीत्यर्थः । अथ नोक्तप्रतीतिः, किन्तु कुण्डलमुत्पद्यते अङ्गदं विनश्यतीत्युत्पादस्य कुण्डले सत्त्वात्स्वप्रतियोगितावत्त्वसम्बन्धेन ध्वंसस्य चाङ्गदे सत्त्वात्तयोस्सामानाधिकरण्यं नेति न तदर्थमनुगतद्रव्याभ्युपगमः साधीयानिति चेत्, तर्हि किं तदानीं तत्रानुगतहेमद्रव्यं नास्त्येव, ओमिति चेत्, अनुभवविरुद्धमेतत्, तदानीं क्रयविक्रयादेर्हेमद्रव्यसत्त्वमुद्दिश्यैव क्रियमाणत्वात्, अस्त्येव तथाऽपि तत्कुण्डलाङ्गदादिभ्यो भिन्नमेव नच भिन्नानामुत्पादविनाशसद्भावे तस्य किमप्यायातमिति चेत्, मैवम्, सामान्यविशेषयोरेकान्तभेदस्यास्मत्कृत–स्याद्वादबिन्दौ सविस्तरं निषिद्धत्वेनात्र निषेधयिष्यमाणत्वेन च कुण्डलोत्पत्तौ कथञ्चित्तदभिन्नत्वाद्धेमद्रव्यस्य तद्रूपेणोत्पादः, विनाशोऽपि नातिरिक्ताभावरूपः, किन्त्ववस्थान्तरभूत एवेत्यङ्गदविनाशस्य तदुत्तरभाविकुण्डलाद्यवस्थारूपत्वेनावस्थायाश्चावस्थातर्यैव सद्भावेनावस्थातृभूते हेमद्रव्य एव तस्य विनाश इत्युत्पादविनाशयोरैकाधिकरण्यायाप्यनुगतद्रव्यमभ्युपगन्तव्यमेवेति भावः । अनुभवे कोऽपि विपर्यस्तात्मा विवादं कुर्यात्, न स्वभावे, शर्करायां कथं माधुर्यमिति नहि स्वभावे पर्यनुयोगं सचेताः करोतीति स्वभावपक्षमवलम्ब्य पक्षान्तरमाह–वस्तुत इति,

-धियद्व्यासत्वमिति, आकाशसंयोगित्वं विवक्षिताकाशप्रदेशावगाहित्वं वेत्यर्थः, अस्य तत्त्वं सविस्तरं तातपादास्मदीयगुरुकृतन्यायप्रभायां द्रष्टव्यं,तथोत्पादव्ययस्थित्यात्मकत्वमपीत्यस्यापि च तत एवास्मत्कृतस्याद्वादबिन्दुलश्च तत्त्वं द्रष्टव्यं, विस्तरभयान्नेह विस्तार्यत इति । नन्वपेक्षणीयज्ञानाभावेऽपेक्ष्यज्ञानं भवतीत्युत्पादादित्रयाणां सापेक्षत्वेन तल्लक्षणसत्त्वस्यापि तथात्वादुत्पादाद्यपेक्षणीयरूपज्ञानाभावे तद्घटितोत्पादादिसमुदायलक्षणसत्त्वस्य ज्ञानाभावाद् घटस्सन्निति व्यवहारस्सखण्डसत्त्वानभिज्ञस्य न स्यादित्याशङ्कायामाह–तदीयत्वादिनेति, उत्पादादित्रयं यद्यदपेक्षया स्वस्वस्वरूपतां बिभर्ति तत्तद्रूपेणेत्यर्थः, निरूपणे इति ज्ञाने कर्त्तव्य इत्यर्थः । सम्बन्धिविशेषेति, तत्तद्द्रव्यक्षेत्रकालभावात्मकापेक्षणीयविशेषेत्यर्थः । घटमौलीत्यादीति " घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वयम् । शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ १ ॥ इति सम्पूर्णश्लोकः, अस्य विवेचनमष्टसहस्र्यां तृतीयपरिच्छेदे न्यायप्रभायां च कृतं विस्तरार्थिना तत एवावसेयमिति, तदात्मकत्वं उत्पादादित्रयात्मकत्वम् । नन्वुत्पादादित्रयव्यवहारो वासनामात्रप्रयुक्तः, वासनायाश्च निर्विषयत्वेनाप्रमाणरूपत्वात्तदुपपादितमर्थानामुत्पादादित्रयात्मकत्वमप्यप्रमाणभूतमेवेत्याशङ्कां निराकरोति–वासनामात्रेणेति, निर्विषयत्वापत्तेरिति, नीलपीतादिविकल्पा वासनामात्रप्रभवा इति वक्तुं शक्यत्वेनोक्तविकल्पानामप्रमाणत्वेन तेभ्यो नीलपीताद्यर्थासिद्धेर्बाह्यार्थवाद उच्छिद्येतेति भावः ।

एवं च सत्पदशक्तिस्तदवच्छेदकता वोत्पादादिषु त्रिषु व्यासज्यवृत्तिः कल्प्यते । उत्पादादीनामप्यनन्तान बुद्धिविशेषविषयत्वेनानुगमान्न नानार्थत्वमित्येको नयः, उत्पादादीनां त्रयाणामपि सम्बन्धिभेदेनानन्तत्वेऽपि स्वरूपत एकत्वान्न नानार्थत्वमित्यपरः । जातिरेव स्वरूपतो भासते नान्यदिति तु नैयायिकगाथामात्रं,

दर्शनसाक्षिकरूपस्य सर्वत्रैकस्य भानाविगानादित्यन्यत्र विस्तरः। अथ यो यस्य ध्रुवभावी स तदुत्पत्त्युत्तरभाविहेत्वनपेक्षः, यथा पूर्वस्य बीजक्षणस्योत्तरः, यथा वा कर्मणो विभागः, ध्रुवभावी च प्रतियोगिनां विनाश इति बौद्धानां प्रयोगे यथा नैयायिकाः प्रत्यवतिष्ठन्ते तथोपदर्शयामः। किमिदं ध्रुवभावित्वं तादात्म्यं वा, निरुपाख्यत्वं वा, तत्कार्यत्वं वा, तद्व्यापकत्वं वा, अभावत्वमेव वेति।

उत्पादादिषु त्रिष्विति, सत्पदजन्यशाब्दबोधे त्रित्वस्य भाने त्रित्वविशिष्टे सत्पदशक्तिस्तदवच्छेदकता वा, अभाने तु त्रित्वोपलक्षित इति विवेकः, उपलक्षकधर्मस्य शक्यतानवच्छेदकत्वेन शाब्दबोधविषयतावच्छेदकतया शक्तिग्रहाविषयत्वेऽपि शाब्दबोधविषयतासमानाधिकरणतया शक्तिग्रहविषयत्वमभ्युपगम्यत एव, यथाऽऽकाशपदस्य शब्दाश्रयत्वोपलक्षिताकाशव्यक्तौ शक्तिपक्षे उपलक्षणस्य शब्दाश्रयत्वस्य, यथा वा तत्पदस्य बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तिरिति बुद्धिस्थत्वस्योपलक्षणस्य शक्यतावच्छेदकतानवच्छेदकत्वेन शाब्दबोधविषयतावच्छेदकतावच्छेदकतया शक्तिग्रहाविषयत्वेपि शाब्दबोधविषयताच्वछेदकतासमानाधिकरणतया शक्तिग्रहविषयत्वमितिशक्यतावच्छेदकानुगमकत्वम्, तथा प्रकृतेऽप्युत्पादादीनां त्रयाणां शक्यत्वपक्षे शक्यतावच्छेदकत्वपक्षे वा त्रित्वस्योपलक्षणस्य शक्यतानवच्छेदकत्वे शक्यतावच्छेदकतानवच्छेदकत्वे वा शक्यानुगमकत्वं शक्यतावच्छेदकानुगमकत्वं वाऽस्त्येव, अत एव न सत्पदस्य नानार्थत्वप्रसङ्गः, त्रित्वावच्छिन्नानुयोगिताकपर्याप्तिसम्बन्धेन सत्पदशक्तेस्तदवच्छेदकताया वोत्पादादिषु त्रिषु सद्भावेन तस्या एकत्वेनाभ्युपगमात्, अत एवाह—व्यासज्यवृत्तिः कल्प्यत इति, व्यासज्यवृत्तित्वम् एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम्, एतेन सत्पदस्योत्पादादिषु त्रिषु प्रत्येकं शक्तेस्तदवच्छेदकताया वा कल्पने कदाचित्सत्पदादुत्पाद

मात्रस्य कदाचिद्विनाशमात्रस्य कदाचित्स्थितिमात्रस्योपस्थितिसंभवादेकैकधर्ममात्रतात्पर्येणापि घटस्सन्निति निरुपचरितप्रयोगस्या-
दित्यारेकापि निरस्ता, उत्पादादित्रयस्यैव सत्पदादेकयैव शक्त्योपस्थितेर्नतु प्रत्येकधर्मस्य। यद्यप्येकं द्रव्यं पर्यायं वोद्दिश्यो-
त्पादादित्रयस्यैकत्वात्तद्वाचकसत्पदस्यैकार्थत्वमस्तु तथापि द्रव्यान्तरं पर्यायान्तरं चोद्दिश्य तस्य भिन्नत्वेन द्रव्यानन्त्येन प्रतिद्रव्यं
पर्यायानन्त्येन चाश्रयाणामानन्त्यादुत्पादादीनामनन्तभेदत्वान्नानार्थत्वं स्यादेवेत्यारेकां नयभेदेन निराकरोति–उत्पादादीनामि-
ति, बुद्धिविशेषविषयत्वेनानुगमादिति, उत्पादत्वव्ययत्वस्थितित्वप्रकारिकोत्पादव्ययस्थितिविशेष्यिकोत्पादेषूत्पाद उत्पादो
व्ययेषु व्ययो व्ययः स्थितिषु स्थितिस्स्थितिरित्याकारिका याऽनुगतसमूहालम्बनबुद्धिस्तद्विषयत्वेनानुगमकेनैकेन धर्मेणैकीकृतत्वा-
दित्यर्थः। एको नय इति, औपचारिकाभेदविशिष्टानुपचरितभेदवादी पर्यायनय इत्यर्थः, स्वरूपत इति, उत्पादत्वव्ययत्वस्थिति-
त्वात्मकवस्तुभूतात्मीयरूपेणेत्यर्थः। अपर इति औपचारिकभेदविशिष्टानुपचरिताभेदवादी द्रव्यार्थिकनय इत्यर्थः। तदीयत्वादिना
निरूपणे च नत्र सम्बन्धिविशेषज्ञानापेक्षेतीति पूर्वग्रन्थेन स्वरूपत उत्पादादीनां ज्ञाने न सम्बन्धिज्ञानापेक्षेति सम्बन्धिविशेषाज्ञाने-
ऽप्युत्पादादीनां स्वरूपतो भानमाश्रित्य सन् घटः सन् पट इति प्रतीतिस्सम्भवतीति यदर्थाक्षिप्तं तत्रोत्पादादीनां सावच्छिन्न-
रूपत्वेन जात्यखण्डोपाध्यतिरिक्तत्वान्न स्वरूपतो भानसम्भवः, जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्रूपेण भाननियमादिति
नैयायिकाशङ्कामपाकरोति–जातिरेवेति, जातिश्चाखण्डोपाधेरप्युपलक्षिका, तेन जातिवदखण्डोपाधेरपि तैस्स्वरूपतो भानस्याङ्गी-
कारान्नावधारणाऽसङ्गतिरिति, जातिरूपं भवतु तदन्यं सखण्डोपाधिरूपमखण्डोपाधिरूपं वा तद्यदि प्रमाणेन देशतः कालतो वा
ऽनुगतरूपत्वेनैकरूपं सिद्धं स्यात्तदा स्वरूपतो भानं निर्विवादमेवेति घटस्सन् पटस्सन्निति प्रात्यक्षिकप्रतीतौ भासमानं सत्त्वं

न नैयायिकाभ्युपगतजातिरूपं,समवायनिरासेन निरस्तत्वात्,नापि बौद्धाभ्युपगतार्थक्रियाकारित्वरूपं,तस्यापि निषिद्धत्वादित्यनन्यगत्या रूपान्तरपरिहारेणोत्पादव्ययस्थित्यात्मकमेव, तस्याऽविवक्षितरूपविशेषस्यात एव घटपटादौ सर्वत्रानुगतरूपत्वेनैकरूपस्यापेक्षणीयसम्बन्धिविशेषज्ञानं विनापि स्वरूपतो भानं सम्भवतीत्याशयेनाह–दर्शनसाक्षिकरूपस्येति,अस्मद्गुरुचरणप्रदर्शितोऽस्यायं भावः, सर्वत्रैव वस्तुनि सामान्यविशेषोभयात्मके प्रथमं सामान्यज्ञानात्मकं दर्शनं पश्चाद्विशेषावगाहिबोधात्मकं ज्ञानमभ्युपगन्तव्यम्, तथैवावरणक्षयोपशमावश्यंभावात्, क्षायिकातिरिक्तस्थले विशेषज्ञानं प्रति सामान्यज्ञानस्य हेतुत्वात्, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वाद्वा, तथा चोत्पद्यते विनश्यति स्थीयते इत्यादिविशेषज्ञानस्यापि सामान्यात्मकोत्पादादिस्वरूपावगाहिबोधात्मक दर्शनजन्यत्वानुरोधेन तथाविधं दर्शनं तद्विषयाश्चोत्पादादयोऽनुगता अङ्गीकरणीयाः, तत एव च स्वरूपतो भानमप्यवर्जनीयम्, अन्यथा दर्शनेऽपि तेषां किञ्चिद्रूपेणैव भाने दर्शनत्वस्यैव व्याघातादिति। स्वसिद्धान्तेन बौद्धनैयायिकौ शिक्षयित्वा तयोः पूर्वपक्षसमाधानप्रकारोपदर्शनायोपक्रमते–अथेति, न्यायनये दृष्टान्तमाह–यथा वेति, पक्षधर्मतां दर्शयति ध्रुवभावी चेति, तादात्म्यमिति, प्रतियोगितादात्म्यमित्यर्थः, नच तदात्मनस्तदुत्तरभाविसापेक्षत्वसम्भव इति भावः। तदिति प्रतियोगीत्यर्थः।

न पूर्वः कल्पः तदात्मनस्तदुत्तरभाविहेत्वनपेक्षत्वनिर्वाहको नाशस्य युक्तो, मिथो विरुद्धस्वभावत्वेन निषेध्यनिषेधयोरेकत्वानुपपत्तेः, उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तेः। कालान्तरे समर्थतरस्वभावो भाव एव विनाश इति चेत्, स किं समर्थात् प्राचो भावाद्भिद्यमानो लाघवात् तस्य विनाशोऽभ्युपेयते, अथाभिन्न एव। आद्ये सामर्थ्यविरह एव भेदं साधयन् क्षणभङ्गे पर्यवस्येत्, न चासावद्यापि सिद्ध इति समीची-

नम् असिद्धेनासिद्धसाधनम्, विनाशस्य प्रतियोगितादात्म्याभ्युपगमविरोधश्चेयम्।

न पूर्वः कल्प इति, तदात्मनो नाशस्य तदुत्तरभाविहेत्वनपेक्षत्वनिर्वाहकः पूर्वः कल्पो न युक्त इत्यन्वयः, निषेध्यनिषेधयोरिति प्रतियोगिध्वंसयोरित्यर्थः। एकत्वानुपपत्तेरिति, तथा चोक्तहेतौ स्वरूपासिद्धिरिति भावः। कालिकविरोधशालिस्वभावयोरपि प्रतियोगिध्वंसयोरैक्योपगमे तद्विरोधासिद्धिवत् दैशिकविरोधशालिस्वभाववतामपि घटत्वपटत्वादीनां विरोधाऽसिद्ध्या विरुद्धधर्मवत्त्वाऽभावेन घटपटादीनामपि भेदो न सिद्ध्येदिति जगदेकरूपमभावशेषं वा स्यादित्याह—उपपत्तौ वेति, प्रकारान्तरेण विनाशस्य प्रतियोगितादात्म्योपपादनायाशङ्कते—कालान्तर इति, स इति कालान्तरवर्त्त्यसमर्थस्वभावो भाव इत्यर्थः, भिद्यमान इति, सामर्थ्यविरहेणेति शेषः। तस्य प्रथमक्षणवर्त्तिनस्समर्थस्वभावस्य, सामर्थ्यविरह एव भेदं साधयन्निति, उत्तरक्षणवर्त्तिभावः समर्थस्वभावात्प्राचीनभावाद्भिन्नः असामर्थ्यात् यो यस्माद्विरुद्धस्वभावस्स तस्माद्भिन्नः यथा घटो पटाद्भिन्न इत्यनुमानाद्भेदं साधयतस्तवानया वचनभङ्ग्या क्षणभङ्ग एव पर्यवसानं स्यादित्यर्थः, असिद्धेनासिद्धं साधयतो बौद्धस्योपहास्यतामाह—समीचीनमिति, असिद्धेन सामर्थ्यविरहेण. असिद्धसाधनम् क्षणभङ्गसाधनम्, केचित्तु असिद्धेन क्षणभङ्गेन असिद्धसाधनं समर्थतरस्वभावत्वसाधनमित्यप्याहुः। द्वितीयपक्षे समर्थस्वभावस्य भावस्य समर्थतरस्वभावभावलक्षणनास्तिता विनाशरूपा समर्थस्वभावभावाभिन्नैव, सापि देशान्तरकालान्तरानुगामिनी चेदभ्युपगम्यते, तर्हि समर्थस्वभावस्य भावस्यैव प्रकारान्तरेण देशान्तरकालान्तरानुगामित्वमभ्युपगतं स्यादिति स्वकालेऽपि क्षणिकत्वं साधयितुमुद्यतस्य तव सर्वदेशव्यापकत्वस्य सर्वकालव्यापकत्वस्य च सिद्ध्या विभुत्वं नित्यत्वं च स्यादित्याशयेनाह—

द्वितीये देशान्तरकालान्तरानुषङ्गिण्यस्य नास्तिता यथ्यमेव, नूनमनक्षरमिदमुक्तं यदयमेव देशान्तरकालान्तरानुषङ्गीति, यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयोरपि नास्तितानुषङ्गेऽस्तित्वप्रसङ्गः। अशक्तेः कथमस्तु, शक्तेःसत्तालक्षणत्वात्, न च पूर्वाभेदः, पूर्वमशक्तभावरूपाया इदानीं तु शक्तिविरहरूपाया अशक्तेर्विचारादिति चेत्। ननु कालान्तरकार्यं प्रत्यशक्तिरसत्त्वं, किं वा स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वम्। आद्ये स्वकालेऽप्यसत्त्वप्रसङ्गः, तदानीमपि तस्य ताद्रूप्यात्। कालान्तरकार्यं प्रत्येवमेतदिति चेत्, किमयं मन्त्रपाठः, नहि यो यत्राशक्तः स तदपेक्षया नास्तीति व्यवह्रियते, न हि रासभापेक्षया धूमो जगति नास्ति, (तत्कस्यहेतोः) न ह्यशक्तस्य स्वरूपं निवर्त्तत इति।

द्वितीय इति, देशान्तरकालान्तराननुगामिनी चेदभ्युपगम्यते तर्हि समर्थस्वभावभावदेशकालवत् देशान्तरकालान्तरयोरपि नास्तित्वाभावे स्वरूपत एव घटानुवृत्तेरस्तित्वप्रसङ्ग इत्याह—यदि वेति। अयं चार्थः बौद्धाधिकारे नास्तितानुषङ्ग इति पाठानुसारेण कृतः। किञ्चित्कार्यं प्रति शक्तिरेव सत्त्वं कालान्तरे च तदभावात्कथं सत्त्वं स्यादित्याशङ्क्ते—अशक्तेरिति, कथमस्त्विति, अस्तित्वप्रसङ्ग इत्यनुषज्यते, पौनरुक्त्यमाशङ्क्य निषेधति—नच पूर्वेति, निषेधे हेतुमाह—पूर्वमिति, कालान्तरे समर्थेतरस्वभाव इत्यादावित्यर्थः, आद्ये इति स्वकाले कालान्तरीयकार्यं प्रत्यशक्तिरसत्त्वमिति पक्ष इत्यर्थः। तदानीमपि स्वकालेऽपि, तस्य समर्थस्वभावस्य भावस्य, ताद्रूप्यात् कालान्तरकार्यं प्रत्यशक्तिरूपत्वात्, स्वकालकार्यं प्रति समर्थत्वात्तत्प्रतिसद्रूपं बीजादिकारणं स्वकालेऽपि कालान्तरकार्यं प्रत्यसद्रूपमेवेत्याशङ्क्ते—कालान्तरकार्यमिति, व्यवहारविरोधमाह—नहीति,

उक्तमेवोपपादयति तत्कस्य हेतोरिति, स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वमिति द्वितीयपक्षे स्वकार्ये प्रत्यशक्तिः किं कालान्तरनिष्ठा समर्थभावनिष्ठा वेति विकल्पद्वयं तत्राद्यं दूषयति—

द्वितीये तु यदि कालान्तराधाराऽशक्तिः, कथं तदात्मिका, तदाधारा चेत्, तदैवासत्त्वप्रसङ्गः, कालान्तरे तु विपर्ययः, तस्मात् ‘विधिरात्माऽस्य भावस्य निषेधस्तु ततः परः ॥ सोऽपि चात्मेति कः प्रेक्षः शृण्वन्नपि न लज्जते’ ॥१॥ अस्तु तर्हि निरुपाख्यत्वमलीकत्वमिति यावत्, अलीकस्य च कारणानपेक्षत्वं व्यक्तम्, विलक्षणमेव च तदलीकं प्रतिनियतदेशकालमिति नातिप्रसङ्गः। भावस्वरूपा निवृत्तिरतिरिक्ता नास्तीत्यत्र च सोपाख्येति शेषः, तथा च भावस्वरूपा (ऽतिरिक्ता) सोपाख्या निवृत्तिर्नास्तीति पर्यवसितवाक्यस्य निरुपाख्या निवृत्तिरिति तात्पर्यमिति चेत्। नन्वयमपि क्षणभङ्गस्योद्गारः स च कफोणिगुडायितो वर्त्तते।

यदीति, तदात्मिकेति समर्थभावात्मिकेत्यर्थः। तस्य समर्थभावस्य त्वया क्षणिकत्वाङ्गीकारेण कालान्तरेऽभाव इतीदानीं वृत्तेः क्षणिकस्य तस्य कालान्तरवृत्तिरूपत्वाऽभावादिति भावः। द्वितीये त्वाह–तदाधारेति, तदैवेति भावस्य सत्त्वकाल एवेत्यर्थः। असत्त्वप्रसङ्ग इति, अत्राऽशक्तेरसत्त्वरूपतया तत्कालेऽसत्त्वापादनं बोध्यम्, तथा च विरुद्धधर्माध्यासादेकक्षणेऽपि भेदप्रसङ्ग इति भावः, अभेदे कथमाधाराधेयभाव इत्यपि द्रष्टव्यम्। विपर्यय इति सत्त्वप्रसङ्ग इत्यर्थः। यद्वा असत्त्वरूपाशक्तेस्समर्थभावात्मकप्रतियोग्याधारकतया कालान्तरे प्रतियोग्यसत्त्वेनासत्त्वस्याप्यभावप्रसङ्ग इत्यर्थः। उपसंहरति–तस्मादिति, आत्मेति स्वरूपमित्यर्थः, अस्येति निषेध इत्यनेनान्वयः, तथा च भावस्यात्मा स्वरूपं विधिः अस्य निषेधो ध्वंसस्तु ततः परः भावाद्भिन्नः। सोऽपि निषे-

धोऽपि आत्मा भावात्मकप्रतियोग्यात्मा इत्यर्थः। ध्रुवभावित्वं निरुपाख्यत्वमिति द्वितीयपक्षमाशङ्कते—अस्त्विति, यदि विनाशोऽलीकत्वात्प्रतियोग्युत्तरभाविहेत्वनपेक्षस्तर्हि प्रतियोग्यव्यवहितोत्तरक्षणे तद्देशे च न स्यात्, येन क्षणिकत्वं सिद्धं स्यात्, स्याच्च प्रतियोगिव्यवहितपूर्वोत्तरक्षणे देशान्तरे वेत्याशङ्कायामाह—विलक्षणमेवेति, भावस्वरूपेति, भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति बौद्धीय—( धर्मकीर्तीय ) वाक्यं निवृत्तेरलीकत्वाङ्गीकारे विरुध्येत, भावातिरिक्तस्यैवालीकत्वादित्याशङ्कायां तत्र विरोधपरिहाराय सोपाख्येति शेषः इत्येवं प्रकारेण व्याख्यातमित्यर्थः।

**भवतु वा निवृत्तिरसमर्था तथाप्यहेतुकत्वे तस्याः किमायातम्। तुच्छस्य कीदृशं जन्मेति चेत्, यादृशः कालदेशनियमः। सोऽपि कस्य (तस्य) कीदृश इति चेत्, एवं तर्हि न घटनिवृत्तिः क्वापि कदापि वा, सर्वत्रैव सर्वदैव वेति स्यात्। घटनिवृत्तिदेशकालसम्बन्धनियमनिषेधो हि किं विशेषणसम्बन्धान्तस्य निषेधः, किं वा विशेष्यस्य नियमांशस्य। आद्ये आद्यं, द्वितीये च द्वितीयं दूषणमिति भावः। भवतु प्रथम एवेति चेत्, स तावद् घटनिवृत्तिदेशकालसम्बन्धनिषेधः, तत्र किं देशकालसम्बन्धस्य निषेधे तात्पर्यं, घटनिवृत्तेर्वा, आद्ये निवृत्तेर्देशकालासम्बन्धित्वेनाविरोधित्वाद् घटस्य सार्वत्रिकत्वसदातनत्वप्रसङ्गः॥**

असमर्थेति निरूपाख्येत्यर्थः। ननु निवृत्तिर्यदि सहेतुका स्यात्तर्हि तस्य जन्म स्यात्, न च सङ्गतं तत्, तस्या अलीकत्वेनाद्यक्षणसम्बन्धरूपधर्माऽभावादित्याशङ्कते—तुच्छस्येति, तुच्छस्य नियतदेशकालसम्बन्धवज्जन्माप्यस्त्वित्युत्तरयति-यादृश इति, तुच्छस्य तस्य विनाशस्य देशकालसम्बन्धनियमोऽपि नास्त्येवेत्याशङ्कते—सोऽपीति कस्येति, तस्येत्यन्यत्र पाठः उक्तापत्तिद्वयं विकल्प्य सङ्गमय-

ति-घटनिवृत्तीति, अत्र घटनिवृत्तेर्देशकालसम्बन्धनियमनिषेधो हि किं विशेषणस्य सम्बन्धांशस्य निषेधः किं वा विशेष्यस्य नियमांशस्येत्यपि पाठः। आद्ये घटनिवृत्तौ देशकालसम्बन्धनिषेधपक्षे, आद्यम् न घटेत्यादि, द्वितीये नियमांशस्य निषेधपक्षे, द्वितीयम् सर्वत्रैवेत्यादि, घटनिवृत्तिरित्यनुषज्यते, घटनिवृत्तेर्वेति, निषेधे तात्पर्यमित्यस्यानुषङ्गः, घटतन्निवृत्त्योर्विरोधो देशकालसम्बन्धघटित एवेति निवृत्तेर्देशकालसम्बन्धनिषेधे तया सह घटस्य विरोधाभावात्तस्य व्यापकत्वनित्यत्वप्रसङ्गः, निवृत्तेः कस्मिंश्चिद्देशे कस्मिंश्चित्कालेऽपि चाभावादित्याह—आद्ये निवृत्तेरिति; घटनिवृत्तिनिषेधपक्षेपि किं निवृत्तिरूपविशेष्यस्य देशकालसम्बन्धो निषिध्यते उतघटरूपविशेषणस्य, आद्ये न घटनिवृत्तिः क्वापि कदापि स्यात्, द्वितीये घटनिवृत्तिस्सर्वदैव सर्वत्रैव स्यादित्याह—

द्वितीयेऽपि निवृत्तेर्घटस्य वा देशकालसम्बन्धेन निषेधे निवृत्तेरुक्तप्रसङ्ग इति। अस्तु तर्हि तत्कार्यत्वमेव ध्रुवभावित्वम्। न। तस्यापि कार्यं इति पक्षे विरोधात्, अपिना तदुत्तरभाविसमुच्चये तदुत्पत्त्यनन्तरभाविहेत्वनपेक्षत्वसाध्येन सहोक्तहेतौ तस्य स्फुटत्वात्, तस्यैव कार्यं इत्यसिद्धेः, सामग्र्या एव कार्योपधायकत्वात्। अथ तद्व्यक्तिकार्यत्वमात्रस्य सन्दिग्धव्यतिरेकितया तत्सामग्रीकार्यत्वं हेतूकार्यम्, परामर्शनीया च तदा तद्व्यक्तिसामग्री, तदा तत्र व्याप्तिमनुमन्यामह एव, न तु पक्षधर्मतां, तदाह—यस्याः सामग्र्या यत्कार्यं तत् तदतिरिक्तानपेक्षमिति साधनार्थः, तमिमं को नाम नानुमनुते॥

द्वितीयेपि निवृत्तेरिति, विरोधमेवोपपादयति—अपिनेति, तस्यापीत्यत्रापिशब्देनेत्यर्थः। तस्य विरोधस्य, तस्यापि कार्यं तस्यैव कार्यं वेति समुच्चयनियमौ विनैव तस्य कार्यं तत्कार्यं तस्य भावस्तत्त्वमिति विग्रहकरणेन तत्कार्यत्वमात्रं हेतूक्रियते, तत्रापि

तच्छब्देन तत्कारणव्यक्तिमात्रग्रहणे संदिग्धविपक्षवृत्तित्वाद्धेतोस्संदिग्धव्यभिचारस्स्यादिति तद्व्यक्तिसामग्री ग्राह्येत्याशङ्कते—अथेत्यादिना, तदेति तच्छब्देनेत्यर्थः, समाधत्ते—तदा तत्रेत्यादिना, व्याप्तिमिति यत्र यत्र तद्व्यक्तिसामग्रीकार्यत्वं तत्र तत्र तत्सामग्र्युत्तरभाव्यनपेक्षत्वमिति व्याप्तिमित्यर्थः। ननु पक्षधर्मतामिति, व्याप्तिपक्षधर्मतोभयविषयक एव परामर्श इति प्रकृते व्याप्त्यङ्गीकारेपि कारणव्यक्तिविनाशात्मकपक्षे तद्व्यक्तिसामग्रीकार्यत्वरूपहेतुमत्त्वं नाङ्गीक्रियत इति पक्षधर्मत्वाभावात्तद्विषयकपरामर्शस्य प्रमात्वाभावेन न कार्यस्वरूपविनाशपक्षे तत्सामग्र्युत्तरभाव्यनपेक्षत्वसाध्यानुमितिः प्रमेति भावः। तदाहेति, बौद्धाधिकारे उदयनाचार्य इति शेषः, तदतिरिक्तानपेक्षमिति तद्व्यक्तिसामग्र्युत्तरभाव्यनपेक्षमित्यर्थः।

यत्तु नारायणादिभिस्तदितरकारणानपेक्षत्वमेवाहेतुकत्वं वर्णितम्, तत् पुञ्जात् पुञ्जोत्पत्तिं वदतो वैनाशिकस्य क्वचिदपि वस्तुनि न प्रसिद्धमिति स्फुटतरदोषत्वादुपेक्षणीयम्। कथमुक्तहेतौ न पक्षधर्मतेति चेत्। कार्यमेव नाश इति केनानुरोधेन व्यवहर्त्तव्यम्, किन्तद्विरहवत्त्वात् कार्यस्य, किं वा तद्विरहरूपत्वात्। न तावत् पूर्वः। सहकारिष्वपि तथा व्यवहारप्रसङ्गात्, तेषामपि बीजादिविरहित्वात्, विरहस्वरूपानिरुक्तेश्चालीकतद्वत्ताया वस्तुनः कार्यस्यासम्भवात् सदसतोः संसर्गनिषेधात्, अधिकरणस्वरूपत्वे च तेनैव तद्वत्त्वायोगात्॥

न प्रसिद्धमिति, सर्वस्यैव कार्यस्य तत्कारणव्यक्तीतरस्य पुञ्जप्रविष्टकारणान्तरस्यापेक्षणादिति भावः। कार्यस्य कारणविनाशात्मकत्वव्यवहारबीजं विकल्पयति—किमिति, तद्विरहरूपत्वादिति अत्र तत्कार्यत्वे सतीति विशेषणीयं, तेन कारणात्यन्ताभावे

कारणविरहरूपत्वहेतुसत्त्वेऽपि कारणविनाशात्मकत्वसाध्याभावेन व्यभिचारस्स्यादित्याशङ्कापि निरस्ता, तथा व्यवहारप्रसङ्गादिति, सहकारिष्वपि पवनसलिलादिषु बीजादिविनाशत्वव्यवहारप्रसङ्गादित्यर्थः। तथा प्रसङ्गादित्यपि पाठः। तत्र हेतुमाह–तेषामपीति, सहकारिणामपीत्यर्थः, ननु भवतु तथा व्यवहारप्रसङ्गः कोऽनुमाने दोष इति चेत्,पवनादिसहकारिषु बीजादिविरहत्वस्य सत्त्वेऽपि बीजादिविनाशात्मकत्वाभावेन व्यभिचार एवेति जानीहि, स्वरूपासिद्धिप्रदर्शनायाह–विरहस्वरूपेति, अलीकेति विरहो यद्यभावस्तर्हि स भवतामलीक इति कथं तद्वत्ता वस्तुनः कार्यस्येत्यर्थः,तत्र हेतुमाह–सदसतोरिति,प्रकृते सद्रूपं कार्यम्,असद्रूपो विरहः, तयोरित्यर्थः, अधिकरणस्वरूपत्व इति, विरहस्येति शेषः, तेनैवेति, आधाराधेयभावस्य भेदनियतत्वादित्याशयः।

न द्वितीयः। स हि कार्यकाले कारणस्य योग्यानुपलम्भनियमाद्वा भवेत्, व्यवहारानुरोधाद्वा, अतिरिक्तविनाशे बाधकानुरोधाद्वेति। न प्रथमः। उपलभ्यन्ते हि पटकाले वेमादयः, न ते त इति चेत्, किमत्र प्रमाणम्, अभेदेऽपि किं प्रमाणमिति चेत्, माभूत् तावत्, सन्देहस्थितावप्यनुभवबलावलम्बविलयात्। न द्वितीयः। न हि पटो जात इत्युक्ते तत्तन्तवो नष्टा इति कश्चिद्व्यवहरति। पटस्यानतिरेकात् तथोत्पन्नानां तन्तूनामेव पटत्वात् तेषां सौसादृश्येन भेदाग्रहात् तज्जन्यत्वाग्रहेण न विनाशव्यवहार इति चेत्॥

न ते त इति, उपलभ्यमाना वेमादयः पटपूर्वकालीनेभ्यो भिन्ना इत्यर्थः, क्षणिकत्वासिद्धाविदमप्यसिद्धमित्यभिप्रायेणाह–किमत्रेति, यद्यप्यभेदे प्रत्यभिज्ञानमेव मानं वक्ष्यते,तथाप्यापाततः संदेहेऽपि न कार्यस्य कारणध्वंसरूपता सिद्ध्यतीत्याशयेनाह–माभूदिति,अभेदे प्रमाणमिति वर्त्तते,अनुभवबलावलम्बविलयादिति,सन्देहे सत्यनुभवो न भेदे प्रमाणतामास्कन्दतीति तद्बलं

तव भग्नमेवेत्यर्थः। अत्रानुपलब्धिबलावलम्बनविलयादित्यपि बौद्धाधिकारे पाठः। कार्यकाले कारणानुपलम्भः सन्दिग्ध इति तद्वलं तव भग्नमेवेत्यर्थः। अवयवेभ्योनन्यत्वमवयविन इति पक्षमादाय शङ्कते—पटस्येति,तन्तुभ्य इति शेषः। पञ्चम्यन्तत्रयं तज्जन्यत्वाग्रहेणेत्यनेनान्वीयते, भेदाग्रहादिति, यस्य परीक्षकस्य तन्त्वात्मके पटे पूर्वतन्तुभेदग्रहस्तस्य तथा व्यवहारो भवत्येवेति शङ्कितुरभिप्रायः।

न तर्हि व्यवहारबलमपि। विसभागसन्ततावङ्गारादिजन्मनि काष्ठादिविनाशव्यवहारात्, कार्यस्य विनाशत्वस्थितौ सभागसन्ततावपि कार्यमेव विनाशत्वेन कल्प्यते; बाधकाभावात्. समानाः सदृशा भागाः सान्तानिका यस्याः सा सन्ततिः सभागा, विसदृशसान्तानिका च विसभागेत्यर्थ इति चेत्। सत्यम्। एकत्र बाधकबलादतिक्तविनाशसिद्धौ विसभागसन्तानेऽपि तथैव कल्पनौचित्यात्। यदि हि तन्तुमालैव पटनिवृत्तिः, कथं तदाश्रयस्तदात्मको वा पटः प्राक्। अन्यैवासाविति चेत्, न तावज्जातिकृतमन्यत्वमुपलभ्यते, व्यक्तिकृतं तु नाद्यापि सिद्ध्यति।

विसभागसन्ततावििति, काष्ठाङ्गारसन्ततावित्यर्थः, बौद्धोक्तदृष्टान्तदार्ष्टान्तिकयोर्व्युत्क्रमेण विसभागसन्तानेऽप्यतिरिक्तनाशसिद्ध्यर्थमाह—एकत्रेति, पटविनाशस्तन्तुमालात्वावच्छिन्नात्मकः, किंवा तन्तुमालाविशेषात्मकः, तत्राद्यपक्षमाश्रित्य बाधकमाह—यदि हीति, कथमिति,यदि तन्तुमालात्वावच्छिन्नास्तन्तव एव पटनिवृत्तिस्तदा कथं तन्तुमालात्मकः पटः स्वकालेऽपि वर्त्तेत, तदानीमपि स्वनिवृत्तिरूपतन्तुमालासत्त्वादित्यर्थः। तदाश्रय इति,अत्र बहुव्रीहिः तेन तन्तुमालाश्रित इत्यर्थः, तेन

न्यायनये तन्तुमालायाः प्रवृत्तित्वाभावेऽपि न क्षतिः, तदात्मक इति बौद्धमतेन, अस्य चायमाशयः,पटोऽपि तन्तुमाला पटनिवृत्तिरपि तन्तुमाला, तथा च प्रतियोग्यात्मिकैव निवृत्तिस्स्यादिति विरोध इति, द्वितीयपक्षमाश्रित्याशङ्कते–अन्यैवेति, पटाकारतन्तुमालातोऽन्यैव तदुत्तरकालीना पटध्वंसात्मिका तन्तुमालेत्यर्थः। पदार्थानां भेदो हि जातिभेदाद् व्यक्तिभेदाद्वेति पूर्वापरतन्तुमालयोरपि भेदस्तथैव स्यात्, तत्र नाद्यः, जातिभेदस्य तत्र योग्यानुपलब्धिबाधितत्वात्, न द्वितीयोऽपि, अद्यापि क्षणिकत्वासिद्धेरित्याशयेनोत्तरयति–न तावदिति।

इत एव तत्सिद्धावितरेतराश्रयत्वं, वर्त्तमानतन्तुमालायाः पूर्वकालीनतन्तुमालाव्यावृत्तपटनाशात्मकत्वे सिद्धे भेदसिद्धिः सिद्धे च भेदे तत्सिद्धिरिति। तथापि यद्येवं स्यात् कीदृशो दोष इति चेत्। न कश्चित्। केवलं प्रमाणाभावो,व्यवहारविरोधश्च, तत्सिद्धावप्यसिद्ध्यतस्तदसिद्धावपि सिद्ध्यतश्च तस्य निमित्तान्तरापेक्षणात्।

इत एव उत्तरकालीनतन्तुमालायाः पटनिवृत्त्यात्मकत्वादेव, तत्सिद्धौ पूर्वोत्तरतन्तुमालयोर्व्यक्तिभेदकृतभेदसिद्धौ, इतरेतराश्रयत्वमिति पूर्वोत्तरकालीनतन्तुमालयोर्व्यक्तिभेदकृतभेदे सिद्धे सति वर्त्तमानतन्तुमालाया उत्तरकालीनतन्तुमालाया भिन्नरूपत्वात् पटनाशात्मकत्वं सिद्ध्यति,तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थः। एतदेव व्याख्याति-वर्त्तमानेत्यादिना, पूर्वकालीनतन्तुमालाव्यावृत्तेति, अत्र पूर्वकालीनतन्तुमालाव्यावृत्ते इति व्यावृत्तेरित्यपि च पाठः, ननु प्रमाणाभावादिना तस्य सन्देह एवापतितः, न च तन्निरासकं बाधकं किमपि दत्तमित्यत आह–तत्सिद्धाविति, तस्य नाशव्यवहारस्य, तन्तुभेदग्रहस्य तन्तुभिन्नत्वे सति तन्तुजन्यत्वग्रहस्य च विनाशव्यवहारकारणत्वे तत्सिद्धावप्यसिद्ध्यत इत्यनेन योऽन्वयव्यभिचारो यश्च तदसिद्धा-

न्वपि सिध्यतश्चेत्यनेन व्यतिरेकव्यभिचारः प्रदर्शितस्तदुभयं विशदयति—

पटो हि यादृशस्तादृशो भवतु गृह्यते तावत् तन्तुभ्यो भिन्नत्वेन तन्तुजन्यत्वेन च, न च तथापि तन्तुविनाशबुद्धिव्यपदेशौ भवतः, भवतश्च तन्तुमालायां पूर्वतन्तुनिवहाभिन्नत्वे गृह्यमाणेऽगृह्यमाणे च पटजन्यत्वेऽभावात्मनि च पटजन्यान्तरे पटस्य ताविति सिद्ध्यति कार्याद्भावादन्य एव विनाश इत्यर्थः। अपि च तन्तुविनाशस्तन्तुविनाशत्वावच्छेदेन तन्तुसामान्यभिन्नस्तन्तुसामान्याभिन्नो वा, आद्ये कथं तन्त्वन्तरं, तत्सामान्यभिन्नत्वावच्छेदकरूपवतस्तद्विशेषत्वायोगात्, न ह्यनीलसामान्यभिन्नत्वावच्छेदकनीलत्ववन्नीलमनीलविशेषो भवितुमर्हति॥

पटो हीत्यादिना, यादृशस्तादृश इति, तन्तुस्वरूपोऽतिरिक्तो वेत्यर्थः। तद्भिन्नत्वज्ञानं तद्भिन्नत्वे सति तज्जन्यत्वज्ञानं चान्वयव्यभिचारान्न नाशव्यवहारकारणमित्येवं तत्सिद्धावित्यादेरर्थं प्रदर्श्य तदसिद्धावपीत्यादेरर्थं व्यतिरेकव्यभिचारप्रदर्शनार्थं विशदयति-भवतश्चेति, तावित्यनेनान्वयि, तन्तुमालायां पूर्वतन्तुनिवहाभिन्नत्वे गृह्यमाण इति, पटनाशकालीनतन्तुमालायां पटस्वरूपपूर्वतन्तुनिवहेन सहाभेदे गृह्यमाणे इत्यर्थः, वास्तवपटनाशे पटस्य नाशबुद्ध्युदयाद् व्यभिचारेण न भेदज्ञानं पटनाशबुद्धिकारणमिति भावः। ननु पटजन्यत्वज्ञानाधीनमेव तदा पटनाशज्ञानं स्यादत आह-अगृह्यमाणे चेति, पटजन्यत्व इत्यस्य तन्तुमालाया इत्यनेन पूर्वेण सहान्वयः। अभावात्मनि च पटजन्यान्तर इति, भावात्मनि च पटजन्यान्तर इत्यादि पाठान्तरम्, तस्य चायमर्थः, ननु तदा तन्तुमालामादाय पटनाशबुद्धिर्न भवति किन्तु पटजन्यभावान्तर एव सा भविष्यतीत्यत आह—भावात्मनीत्यादि, भावात्मनि च

पटजन्यान्तरेऽगृह्यमाणे चेत्यर्थः । ताविति, विनाशबुद्धिव्यपदेशावित्यर्थः। अन्य एव विनाश इति, भावस्येति शेषः। अन्य एव भावस्य विनाश इत्यपि पाठः । सभागसन्ताने कार्यस्य विनाशात्मकत्वे वाधकान्तरमाह–अपि चेति, भेदपक्षात्मकाद्य-पक्षे उत्तरकालीनं सभागसन्ततिरूपं तन्त्वन्तरं तन्तुविनाशरूपत्वात्कथं तन्तुविशेषरूपं स्यात्, तत्वन्तरे व्याप्यस्य तन्तुविनाशत्वस्य सत्त्वेन व्यापकस्य तन्तुत्वावच्छिन्नप्रतियोगिताकभेदस्यैव सत्त्वादित्याशयेनाह–आद्ये कथमिति, कथं तन्त्वन्तरमिति, तन्तुविनाशकालीनतन्तुस्तन्तुविशेषात्मकः कथं स्यादित्यर्थः । अस्यैवार्थस्य दृढीकरणार्थमाह–तत्सामान्यभिन्नस्वेति, यद् यत्सामान्यभिन्नत्वावच्छेदकधर्मवत्तन्न तद्विशेषरूपमिति तन्तुस्तन्तुत्वावच्छिन्नप्रतियोगिताकभेदावच्छेदकतन्तुविनाशत्ववान् स्यात्तर्हि तन्तुविशेषात्मको न स्यादिति पर्यवसितोऽर्थः। तत्र दृष्टान्तमाह–न ह्यनीलेति, अभेदपक्षे दोषमाह–

**द्वितीये भस्मादिलक्षणविसभागसन्तानीयस्तन्तुविनाशः कथं तन्तुसामान्यभिन्नः तत्सामान्यभिन्नत्वावच्छेदकरूपवतस्तत्सामान्यभिन्नत्वायोगात्, न हि नीलसामान्याभिन्नत्वावच्छेदकनीलत्वशालि नीलं नीलसामान्यभिन्नमिति। नीलपीतादिवत्तन्तुतद्विनाशयोः सामान्यतो न विरोधोऽपि तु व्यक्तिविशेषयोरेवेति न तन्तुविनाशस्य तन्तुविशेषत्वानुपपत्तिरिति चेत्, तत् किं सामान्यतोऽनुभयस्वभाव एव विनाशः। यथा भवतां जन्यविनाशिनोरस्माकं वा कलमाङ्कुरकुर्वद्रूपयोः सामान्यतो न विरोधो नाप्यविरोधः, क्वचित् समावेशस्य मिथो व्यभिचारस्य च दर्शनात्, तथा तन्तुविनाशयोरपीत्यत्रार्थेऽभ्युपगम एवास्माकमिति चेत्।**

द्वितीय इति, तन्तुलक्षणसभागसन्तानात्मकतन्तुनाशः तन्तुसामान्याऽभिन्न एवेति तन्तुसामान्यभिन्नः कथमिति वक्तुं

न शक्यते इत्यत उक्तम्—भस्मादीति, कथं तन्तुसामान्यभिन्न इति, तथा च भस्मादिस्तन्तुत्वावच्छिन्न एव स्यादिति तत्र तन्तुसजातीयत्वप्रसक्त्या विसभागसन्तत्युच्छेदप्रसङ्ग इति भावः । यद्यत्सामान्यभिन्नत्वावच्छेदकधर्मवत्तन्न तत्सामान्यभिन्नमिति पूर्वंवत्सामान्यनियमं सदृष्टान्तमुपदर्शयति—तत्सामान्याऽभिन्नत्वेति, नीलपीतादिवत्तन्तुतद्विनाशयोस्सामान्यतो न विरोध इति, यथा नीलपीतयोस्सामान्यतो विरोधः, यतो नहि नीलं पीतं भवति, तथा नैवं प्रकृते, तथा च नीलत्वावच्छेदेन नीले पीतत्वावच्छिन्नप्रतियोगिताकभेदो यथा तथा न तन्तुविनाशत्वावच्छेदेन तन्तुविनाशे तन्तुत्वावच्छिन्नप्रतियोगिताकभेद इत्यर्थः, अत्र नञा सामान्यतोऽविरोध इत्यपि ज्ञेयम्, अस्य च तन्तुविनाशत्वावच्छेदेन तन्तुविनाशे तन्तुत्वावच्छिन्नप्रतियोगिताकभेदाभावो नवेत्यर्थः,व्यक्तिविशेषयोरिति,आद्यतन्तुभस्मादिलक्षणतन्तुविनाशव्यक्त्योरित्यर्थः । विरोध इत्यनुषज्यते,तथा च तन्तुविनाशत्वसामानाधिकरण्येन तन्तुविनाशे तन्तुसामान्यभेद इति भावः । तन्तुविनाशस्य तन्त्वन्तरविनाशस्य, सामान्यतोऽनुभयस्वभाव एव विनाश इति, तन्तुविनाशत्वावच्छेदेन तन्तुविनाशस्तन्तुसामान्यभेदाभेदान्यतरस्वरूपरहित इत्यर्थः । अनुभयस्वभावापादनस्याभ्युपगमेन परिहारायाशङ्कते—यथा भवतामिति, बौद्धमते तत्तत्कार्योपादानात्मा तत्तत्कार्यप्रागभावः तत्तत्कार्यध्वंसस्तूत्तरतत्कार्यात्मा तत्तत्क्षणे विभिन्नस्वरूपतया जन्य एवाभ्युपगतः, न नैयायिकवदतिरिक्तस्वरूप इति तन्मते जन्यत्वविनाशित्वयोस्समव्याप्तत्वाज्जन्यत्वावच्छेदेन जन्ये विनाशित्वावच्छिन्नप्रतियोगिताकभेदस्याभावेऽपि विनाशित्वावच्छिन्नप्रतियोगिताकाऽभेदस्य विनाशित्वावच्छेदेन विनाशे जन्यत्वावच्छिन्नप्रतियोगिताकाभेदस्य वाऽभ्युपगमे न काचित् क्षतिः ध्वंसेऽपि विनाशित्वस्य प्रागभावेऽपि च जन्यत्वस्याभ्युपगमात्, नैयायिकमते तथा न सम्भवति जन्यत्वावच्छेदेन जन्ये विनाशिसामान्यभेदाभ्युपगमे

घटपटादीनामप्यविनाशित्वापत्तिः, तदभेदाभ्युपगमे ध्वंसस्य जन्यत्वात् तत्रापि विनाशित्वं स्यात् , विनाशित्वावच्छेदेन विनाशो जन्यसामान्यभेदाभ्युपगमे विनाशिनां घटपटादीनामप्यजन्यत्वं स्यात् ,तदभेदाभ्युपगमे प्रागभावस्यापि विनाशित्वाज्जन्यत्वं स्यादित्यतो जन्यत्वादिसामानाधिकरण्येन विनाश्यादिसामान्यभेदाभ्युपगमाज्जन्यत्वविनाशित्वयोस्सामानाधिकरण्यमसामानाधिकारण्यञ्चाभ्युपगतं न्यायमते, तथा प्रकृतेऽपि तन्तुविनाशत्वसामानाधिकरण्येन तन्तुसामान्यभेदाभ्युपगमात्तन्तुत्वतद्विनाशत्वयोस्तथात्वमभ्युपगन्तव्यमित्याशयेनाह—भवतामिति नैयायिकानामित्यर्थः। कलमत्वावच्छेदेन कलमबीजे नाङ्कुरकुर्वद्रूपत्वावच्छिन्नप्रतियोगिताको भेदः, तथा सति क्षेत्रस्थकलमबीजेऽपि तथात्वापत्त्या तेनाऽप्यङ्कुरोत्पत्तिर्न स्यात् ,तदभेदाभ्युपगमे कुशूलस्थकमलबीजे तथात्वापत्त्या ततोऽपि कलमाङ्कुरोत्पत्तिस्स्यात्, अङ्कुरकुर्वद्रूपत्वावच्छेदेनाङ्कुरकुर्वद्रूपे न कलमसामान्यभेदस्तदभेदो वा, आद्येऽङ्कुरकुर्वद्रूपे कमलबीजेऽपि कलमत्वं न स्यात्, द्वितीये च यवबीजेऽपि कलमाभेद प्रसक्त्या कलमत्वं स्यात्,तथा च कलमत्वादिसामानाधिकरण्येनाङ्कुरकुर्वद्रूपादिसामान्यभेदाभ्युपगमात् कलमत्वाङ्कुरकुर्वद्रूपत्वयोस्सामानाधिकरण्यमसामानाधिकरण्यञ्चाभ्युपगतं बौद्धमते, तथा प्रकृतेऽप्यभ्युपगन्तव्यमित्याशयेनाह—अस्माकमिति बौद्धानामित्यर्थः ननु नैयायिकानाम्, तन्मते अङ्कुरकुर्वद्रूपत्वस्यानभ्युपगमादिति भावः। उभयत्रैव यथासङ्ख्येन हेतुमाह—क्वचिदित्यादि, तन्तुविनाशयोरपीति, सामान्यतो न विरोधो नाप्यऽविरोध इत्यनुषज्यते, तन्तुत्वतन्तुविनाशत्वयोस्सभागसन्ततौ सामानाधिकरण्यस्य विसभागसन्ततौ तदभावस्य च दर्शनादिति हेतुर्ज्ञेयः।

**न, अन्यतरं तन्तुमादायानुगततन्तुविनाशव्यवहारानुपपत्तेः। सामान्यस्यालीकत्वात् तदाश्रयानुगतव्य-**

वहारानुपपत्त्यादिरूपविरोधोऽपि किं करिष्यतीति चेत्, विलीनमिदानीं विरुद्धधर्माध्यासेन भेदप्रत्याशया, तस्य भेदसिद्ध्युपयोगिनो विरोधस्य सामान्याश्रयत्वात्। इदमुक्तं भवति, एकमात्रवृत्तिधर्मयोर्विरोधो नाश्रयभेदमगृहीत्वा शक्यग्रहः, गृहीते तु तस्मिन् विरोधानुधावनमनर्थकम्, अतः सामान्ययोः सामान्यावच्छिन्नयोर्वाश्रयान्तरे विरोधो ग्रहीतव्यः, तच्चेदलीकतया न विरोधोपयोगि, न तर्हि विरुद्धधर्माध्यासेन भेदस्य सिद्धिरिति ॥

अन्यतरमिति, सभागविसभागयोर्मध्ये एकतरो यस्तन्तुस्तमादायानुगतो यस्तन्तुविनाशव्यवहारस्तदनुपपत्तिरित्यर्थः। तन्तुं विनापि भस्मादिकमादाय तद्व्यवहारात् तस्यापि च तन्तुविनाशव्यवहारनिमित्तत्वकल्पने अनुगतो व्यवहारो न स्यादिति भावः। यद्वाऽतिरिक्तविनाशेष्वनुगतविनाशत्वधर्मो भवेत् यदि तदा सर्वत्र तमादायानुगतप्रतीतिव्यवहारौ स्याताम्, विनाशस्य सभागसान्तानिकविसभागसान्तानिकतत्तत्कार्यरूपत्वे तु तदुभयगतानुगतविनाशत्वधर्माभावान्न तौ स्यातामित्यर्थः। ननु तन्तुत्वादिसामान्यस्यालीकत्वान्न पारमार्थिकोऽनुगततन्तुविनाशव्यवहार इत्याशयेनाशङ्कते–सामान्यस्येति, विरोधोऽपीति, अत्रापिकारादविरोधो ग्राह्यः। ननु सामान्यस्यालीकत्वे कथं विरुद्धधर्माध्यासाधीनयावद्भेदानुपपत्तिः, सामान्यानधीनस्य तत्तद्व्यक्त्योर्विरुद्धधर्माध्यासेन भेदस्य सिद्धिकेऽभ्युपगतत्वादत आह-इदमुक्तमिति, एकमात्रवृत्तिधर्मयोः एकव्यक्तिमात्रवृत्तित्वेनाभ्युपगतधर्मयोरित्यर्थः। नाश्रयभेदमगृहीत्वा शक्यग्रह इति, यौ धर्मावेकव्यक्तावेव वर्तेते, नतु व्यक्त्यन्तरे, तयोर्यावदाश्रयस्य भेदो न गृहीतस्तावदेकाधिकरणवृत्तित्वमेव गृह्यते, नत्वेकाधिकरणावृत्तित्वरूपविरोधः, निश्चयरूपतद्ग्रहेण तद्ग्रहस्य प्रतिबन्धादित्यर्थः। अनर्थकमिति, विरोधज्ञानकार्यस्या-

श्रयभेदज्ञानस्य प्रागेव सञ्जातत्वादित्यर्थः । तथा च तत्तद्व्यक्तिभेदो न विरुद्धधर्माध्यासाधीन इति भावः । एकाधिकरणावृत्तित्वलक्षणविरोधघटकवृत्तित्वं समवायसम्बन्धावच्छिन्नं ग्राह्यमित्यभिप्रेत्याह-**सामान्ययोरिति**, वृत्तित्वस्थाने सम्बन्धित्वमभिनिवेश्य तत्तादात्म्यसम्बन्धेन ग्राह्यमित्यभिप्रेत्याह-**सामान्यावच्छिन्नयोरिति**, सामान्यस्य सामान्यान्तरेण विरोधज्ञानं सामान्यस्यालीकतया यदि न विरोधोपयोगि तर्हि विरुद्धधर्माध्यासाधीनभेदस्यैवासिद्धिरिति गवाश्वादीनामभेद आपद्येतेत्याशयेनाह—**तच्चेदलीकतयेति**.

**अथ यथा भवतामननुगता एव तत्तत्तन्तुविनाशास्तन्तुविनाशत्वेनानुगता अनुगततन्तुविनाशव्यवहारमर्जयन्ति तथास्माकमपि सरूपाणि विरूपाणि च तन्तुकार्यत्वेन तन्तुविनाशत्वेन चानुगतानि, यथा भवतां विरोधे तत्पटत्वावच्छेदेन भेदेऽपि सामान्यतो न तथा, तथास्माकमपि,अभ्युपगच्छन्ति हि भवन्तोऽतिरिक्ताभावपक्षेऽपि पटः पटान्तराभाववांश्च तज्जातीयश्चाभावोऽपि पटविरोधी च पटान्तरसहवृत्तिश्चेत्येवं न कश्चिद्विरोध इति चेत्, नैतदेवं, प्रतियोगिना हि तादात्म्यसंसर्गैकजातीयत्वानि नेष्यन्तेऽप्रतियोगित्वप्रसङ्गात्, भिन्नकालत्वादेककालावच्छिन्नैकदेशवृत्तित्वरूपसंसर्गायोगात्, सामान्यतो विरुद्धधर्मसंसर्गाच्च; अवधार्यते हि सामान्यत आद्ये तन्तौ विसभागस्थलीयतन्तुविनाशे च तन्तुत्वविनाशत्वयोर्विरोध इति ॥**

**अननुगता एवेति**, प्रतियोगिभेदेनाभावभेदादिति भावः । **तन्तुविनाशत्वेनेति**, तन्तुनिष्ठप्रतियोगिताकत्वविशिष्टविनाशत्वेनेत्यर्थः, नतु तस्य तन्तुत्वावच्छिन्नप्रतियोगिताकविनाशत्वेनेत्यर्थः । प्रागभावध्वंसप्रतियोगितायां तन्तुत्वादिधर्मावच्छिन्नत्वे मानाभावात्,तन्तुर्भविष्यति तन्तुर्नष्ट इत्यादिप्रतीतेस्तन्तुप्रतियोगिकप्रागभावध्वंसाद्यवगाहितयैवोपपत्तेः । ननु प्रागभावध्वंसयोरिवा-

त्यन्ताभावान्योन्याभावयोरप्यनुगतधर्मावच्छिन्नप्रतियोगिताकत्वं न स्यादिति चेत्, मैवम्, बाधनिश्चयादिप्रतिबन्धकत्वानुरोधेन तयोस्तथात्वोपगमात्, नचैवं तन्तुत्वाद्यवच्छिन्नवत्ताबुद्धिं प्रति तन्तुत्वाद्यवच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयत्वेन तादृशनिश्चयस्य प्रतिबन्धकतया तन्त्वाद्यत्यन्ताभावस्येव तन्त्वादिप्रागभावध्वंसयोरपि तन्तुत्वाद्यवच्छिन्नप्रतियोगिताकत्वमावश्यकमिति वाच्यम्, एकसम्बन्धेन तन्त्वत्यन्ताभावग्रहेऽपि सम्बन्धान्तरेण तन्तुमत्ताबुद्ध्युत्पादात्सम्बन्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया प्रागभावध्वंसवत्ताग्रहसाधारण्याऽसम्भवात्, प्रागभावत्वस्य ध्वंसत्वस्य चानुयोगिताविशेषरूपतयाऽभावत्वाघटितत्वेन तदवगाहिबुद्धेरत्यन्ताभावसाधारण्याऽयोगाच्चेत्यलं पल्लवितेन, **सरूपाणि** पूर्वपूर्वतन्तुविनाशात्मकोत्तरोत्तरतन्तुलक्षणानि; **विरूपाणि** अन्त्यतन्त्वादिविनाशलक्षणानि भस्मादिविसभागसन्तानीयानि, तन्तुकार्यत्वेन ग्रहदशायामपि तन्तुर्नश्यति तन्तुर्नश्यतीत्यनुगतविनाशव्यवहाराभावादुक्तं—**तन्तुविनाशत्वेनेति**, **अनुगतानीति** अनुगततन्तुविनाशव्यवहारमर्जयन्तीत्यनुषज्यते, तन्तुतद्विनाशयोस्सामान्यतो न विरोध इत्युपपादनायाह-**यथा भवतामित्यादि**, **विशेषतो विरोध** इति तत्पटैतत्पटयोस्तादात्म्येन विरोधइत्यर्थः, अस्यैव कृत्यमाह—**तत्पटत्वेति**, **भेदेपि**, तत्पटे एतत्पटभेदेऽपि, **सामान्यतो न तथा**, पटत्वावच्छेदेन तत्पटैतत्पटयोर्न विरोधः, नापि च भेदः, **तथास्माकमपीति**, तत्तन्तुतत्तन्तुविनाशयोस्तत्तन्तुत्वतत्तन्तुविनाशत्वाभ्यां विरोधे तत्तन्तुत्वावच्छेदेन तत्तन्तौ तत्तन्तुविनाशस्य तत्तन्तुविनाशत्वावच्छेदेनैतत्तन्त्वात्मकतत्तन्तु विनाशे तत्तन्तोश्च भेदेऽपि यद्वा तन्तुतद्विनाशयोराद्यतन्तुत्वविसभागसन्तानीयतन्तुविनाशत्वाभ्यांविरोधे विसभागसन्तानीयतन्तुविनाशत्वावच्छेदेन तन्तुभेदेऽपि आद्यतन्तुत्वावच्छेदेन तन्तुविनाशभेदेऽपि च तन्तुसामान्यतन्तुविनाशयोस्तन्तुत्वतन्तुविनाशत्वाभ्यां न विरोधः, अत एव तन्तुविनाशत्वावच्छेदेन तन्तुविनाशे न तन्तुसामान्यभेदः नवा तन्तुत्वावच्छेदेन तन्तौ

तन्तुविनाशभेद इत्यर्थः । ननु तन्तुस्तन्तुविनाशात्मकश्चेत्कथं तत्प्रतियोगिजातीयः, एवं तन्तुतन्तुविनाशयोर्विरोधे तन्तुविनाशस्त-
न्त्वन्तरसहवृत्तिः कथं स्यादित्यत आह–अभ्युपगच्छन्ति हीति, पटः पटान्तराभावेत्यादिमूलेन विशेषतो विरोधेऽपि सामा-
न्यतो न विरोध इति दर्शितम्, पटान्तराभाववान् पटान्तरभिन्नः । तज्जातीयः पटान्तरजातीयः, पटत्वेनेति शेषः । अभावोऽ-
पि तत्पटाभावोऽपि, पटविरोधी स्वप्रतियोगितत्पटविरोधी, पटान्तरसहवृत्तिः स्वाऽप्रतियोगिना पटान्तरेण सहैकतन्त्वादिवृत्तिः,
नैयायिकस्समाधत्ते–नैतदेवमित्यादिना, ध्वंसप्रतियोगिनोस्तादात्म्याऽनभ्युपगमे हेतुमाह–अप्रतियोगित्वेति । ध्वंसस्य प्रति-
योगितादात्म्ये तयोः प्रतियोग्यनुयोगिभाव एव न स्यात्, तस्य भेदनियतत्वात्, तथाच प्रतियोगिनः प्रतियोगित्वमभावस्याभा-
वत्वं न स्यादिति भावः । एककालाद्यवच्छेदेनैकदेशवृत्तित्वलक्षणसंसर्गानभ्युपगमे हेतुमाह–भिन्नकालेति, ननु प्रतियोगिसमवा-
यिकारणे प्रागभावप्रध्वंसौ वर्त्तेते इति तयोर्भिन्नकालीनेन प्रतियोगिना सह सामानाधिकरण्यसंसर्गाभ्युपगमाद्विनाशः न प्रति-
योगिसंसर्गी भिन्नकालत्वादित्यनुमाने उक्तहेतुर्बाधित इत्याशङ्कायामाह–एककालावच्छिन्नेति, एकजातीयत्वानभ्युपगमे हेतु-
माह–सामान्यत इति, तथाच पूर्वतन्तुविनाशस्योत्तरतन्तुरूपत्वे प्रतियोगिना सह विनाशस्य तादात्म्यसंसर्गयोरप्रसङ्गेऽपि एक-
जातीयत्वं प्रसज्यत एव, तच्चानिष्टमिति न ध्वंसस्योत्तरकार्यरूपताभ्युपगमार्हेति भावः, तन्तुतद्विनाशौ नैकजातीयौ सामान्यतो
विरुद्धधर्मसंसर्गात् घटपटाविवेत्यनुमाने हेतुर्न स्वरूपासिद्ध इत्युपपादनायाह–अवधार्यते हीति । तन्तुतद्विनाशौ यद्येक-
जातीयौ न तर्हि विरुद्धधर्मसंसर्गिणौ स्याताम् घटत्वैकजातिमन्तौ तद्घटैतद्घटाविवेति भावः । तन्तुत्वविनाशत्वयोरिति,
तन्तुत्वतन्तुविनाशत्वयोरिति पाठान्तरम्, अभावोऽपि पटविरोधी च पटान्तरसहवृत्तिश्चेति दृष्टान्ततया यद्बौद्धेन प्रदर्शितं तत्राह–

अप्रतियोगिना तु संसर्गे को दोषः। नहि भेदविजातीयत्वैककालता संसर्गविरोधिन्यः, तादात्म्यं तु संसर्गविरुद्धं विरोधित्वं च ते च नेष्येते एवेति। ननु यथा जन्यत्वेन कादाचित्कत्वादिनाऽभावत्वेन वा तन्तोस्तत्प्रागभावस्य वा सजातीयोऽपि कश्चित्तद्ध्वंसस्तथा तन्तुजातीयोऽप्यस्तु, उपदर्शितश्च मिथो व्यभिचारिणोरऽपि समावेश इति चेत् ॥

अप्रतियोगिना त्विति, तथा च तत्पटाभावस्य स्वाप्रतियोगिनः पटाद्यन्तरस्य सहवृत्तित्वरूपसंसर्गित्वं न विरुध्यत इति भावः, एवञ्च तादात्म्येति एकजातीयत्वेति च दृष्टान्तार्थमिति केचित्, अत एव अप्रतियोगिना त्वित्यादिना संसर्गमात्रमेव दर्शितम्, नन्वप्रतियोगिना सहाभावस्य भेदादिप्रतीतय एव सामानाधिकरण्यरूपसंसर्गे विरोधिन्यस्स्युरत आह–नहीति संसर्गविरुद्धे तादात्म्यविरोधित्वे, ते चाप्रतियोगिना सममभावस्य नाभ्युपगम्येतेअस्माभिरित्याह–तादात्म्यं त्विति, ननु जन्यत्वेन तन्तोस्सजातीयस्तन्तुध्वंसः कादाचित्कत्वादिना तन्तोस्सजातीयस्तन्तुध्वंसस्तन्तुप्रागभावस्य च सजातीयस्तन्तुप्रागभावध्वंसः अभावत्वेनासाधारणधर्मेण तन्तुप्रागभावस्य सजातीयस्तन्तुप्रागभावप्रतियोगिकोऽपि तन्तुध्वंस इति प्रदर्श्य तद्दृष्टान्तेन तन्तुत्वेन तन्तुसजातीयस्तन्त्वात्मकतन्तुविनाशो भवत्वित्याशङ्कते–ननु यथेति, ननु तन्तुत्वेन तन्तुसजातीयत्वे तद्ध्वंसस्य तन्तुत्वतन्तुविनाशत्वयोरेकत्र समावेशस्स्यात्, स चाऽयुक्तः, मिथोव्यभिचारित्वादित्यत आह–उपदर्शितश्चेति, यथा भवतां जन्यविनाशिनोरित्यादिना पूर्वोक्तग्रन्थेनेति शेषः ॥

एवमपि तृतीयादितन्तूत्पादे प्राथमिकादितन्तोस्तृतीयविसभागसन्तानोत्पादे च प्राथमिकसन्तानस्य

विनाशव्यवहारो न स्यात्, तज्जन्यस्य विलयात्। सर्वं एव तत्सान्तानिकस्तदुदीच्यस्तस्य विनाश इति चेत्। न। चलसन्तानोत्पन्नसान्तानिके सुदूरेऽपि देशान्तरविलीनस्य प्राथमिकस्य विनाशवत्ताव्यवहारप्रसङ्गात्। अनन्तसान्तानिकानां विनाशत्वकल्पनामपेक्ष्यैकस्यैव विनाशस्य कल्पनाया न्याय्यत्वाच्च। अथैवमनन्तघटव्यक्तीनामभावत्वकल्पने गौरवात् घटसामान्याभावाभावोऽप्यतिरिच्येतेति चेत्॥

एवमपीति, तथाऽभ्युपगमेऽपीत्यर्थः, तत्तत्तन्तुकार्यस्यैव तत्तत्तन्तुविनाशरूपत्वे तृतीयतन्तोर्द्वितीयतन्तोरेव कार्यत्वेन प्राथमिकतन्तुकार्यत्वाभावेन तद्विनाशरूपत्वाभावात् तृतीयतन्तूत्पाददशायां प्राथमिकतन्तुविनाशस्य व्यवहर्त्तव्यस्याभावेन तद्व्यवहारो न स्यात्, एवं चतुर्थपञ्चमादितन्तूत्पादे द्वितीयतृतीयादितन्तुविनाशव्यवहारो न स्यादित्यपि तृतीयादिप्राथमिकादीत्यत्रादिपदाद्ज्ञेयमिति। दोषान्तरमाह—तृतीयविसभागेति, प्राथमिकसन्तानस्य, तन्तुसन्तानस्य, तत्र हेतुमाह—तज्जन्यस्येति, सभागविसभागरूपाणामुत्तरोत्तरतन्तुकार्याणामपि साक्षात् परम्परया वा पूर्वतन्तुकार्यत्वेन तद्विनाशत्वमेवेति नोक्तदोष इत्याशयेनाशङ्कते—बौद्धः सर्व एव तत्सान्तानिक इति, सर्वं एतत्सान्तानिक इति पाठान्तरम्, चलसन्तानोत्पन्नसान्तानिक इति, अविरलदेशक्रमेण भिन्नभिन्नदेशोत्पन्नकार्यसन्तान इत्यर्थः। सुदूरेऽपीति देश इति शेषः, सुदूरेऽपि देशे इत्येवमन्यत्र पाठः। कल्पनाया न्याय्यत्वाच्चेति, अनन्तसान्तानिकव्यक्तीनां विनाशप्रतीतिविषयत्वकल्पनापेक्षयाऽतिरिक्तविनाशे तत्कल्पने लाघवादिति भावः। प्रतिवन्दिमाशङ्कते—अथैवमनन्तेति, एवम्, पूर्वोक्तन्यायेनातिरिक्तविनाशाभ्युपगमे, परिहारसाम्याभावेन नात्र प्रतिवन्दिप्रवृत्तिरित्याशयेन नैयायिकस्समाधत्ते—

न। घटग्रहे घटाभावस्याग्रहादभावव्यवहाराच्च घटत्वेनानुगतानां घटव्यक्तीनामेव तत्तदभावत्वस्वीकारात्। एवमन्योन्याभावाभावाः प्रतियोगितावच्छेदका एव धर्मा इत्यभ्युपगमः। अबाधिताभावप्रतीत्यनुरोधादभावस्याप्यतिरिक्त एवाभावः, न चानवस्था, तयोः परस्परविरहरूपत्वाङ्गीकारात्। एवं ध्वंसप्रागभावयोरपि प्रागभावध्वंसावतिरिक्तावित्येकदेशिनः। अन्योऽन्याभावस्यान्योऽन्याभावस्त्वनवस्थाभयादनायत्या तत्तदधिकरणरूपस्तद्वृत्तिद्रव्यत्वरूपो वा स्वीक्रियत इति न दोषः। नाप्यतिरिक्ते बाधकानुरोधात्कार्यस्य तद्विरहरूपत्वम्, तदभावात्॥

नेति, अभावव्यवहाराच्चेति घटाभावाभावव्यवहाराच्चेत्यर्थः, तत्तदभावत्वस्वीकाराच्चेति, नचापसिद्धान्तप्रसङ्ग इति वाच्यम्, अभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्युदयनाचार्योक्तेः, एकदेशिमतमाह–अबाधितेति, परस्परविरहरूपत्वाङ्गीकारादिति प्रथमाभावस्य तृतीयाभावरूपत्वाङ्गीकारात्, द्वितीयाद्यभावस्य च चतुर्थाद्यभावरूपत्वाङ्गीकारादित्यर्थः। यद्यपि न्यायसिद्धान्ते घटध्वंसप्रागभावः घटात्मकः घटप्रागभावध्वंसोऽपि च घटात्मकस्तथाऽप्येकदेशिमतेनाऽबाधिताभावप्रतीत्यनुरोधेन तावतिरिक्तावेवेत्याह–एवमिति, लाघवात्कल्पान्तरमाह–तद्वृत्तिद्रव्यत्वरूपो वेति, अत्र द्रव्यत्वपदं प्रतियोग्यवृत्त्यनुगतधर्मोपलक्षकम्। अतिरिक्तविनाशे बाधकानुरोधाद्वेति तृतीयकल्पं निरस्यति–नाप्यतिरिक्त इति, विनाश इति शेषः। तद्विरहरूपत्वमिति, कारणविरहरूपत्वमित्यर्थः, तेन च कार्यस्य कारणविनाशरूपत्वमिति भावः, नापीत्यनेनान्वयः, तदभावात्, बाधकाभावात्, बाधकमेवाशङ्कते—

ननु घटध्वंसे घटोऽस्ति न वा, आद्ये घटवांस्तदभावः कपालेष्वस्तीति तान्यपि परम्परया तद्वन्ति प्रसज्येरन्, तथा च घटध्वंसकालेऽपि प्रतियोगी स्यादुपलभ्येत चेति द्रष्टव्यम् । नास्तीतिपक्षेऽनवस्थाप्रसङ्गः, अभावान्तरमन्तरेण तत्र नास्तिताव्यवहारे भावान्तरेऽपि तथा प्रसङ्गः । न । भावान्तरस्य सजातीयत्वेनाविरुद्धजातीयत्वात्, विरुद्धजातीयत्वे वा सजातीयत्वानुपपत्तेः, सजातीयत्वविरुद्धजातीयत्वे भावत्वाभावत्वाभ्यां बोध्ये । प्रतियोग्यन्यत्वेन प्रतियोगिमदन्यत्वेन वाऽभावव्यवहारे प्रतियोगिमत्यपि तत्प्रसङ्गः, तस्यापि प्रतियोगिनस्तद्वतश्च यतः कुतश्चिदन्यत्वात् । प्रतियोगिमद्यावदन्यत्वेन तथा व्यवहारे त्वेकदा प्रतियोगिमति कालान्तरे तदन्यत्वं विनाऽभावेन दुर्वचमिति ॥

नन्विति, तदभावः घटध्वंसः । तान्यपि कपालान्यपि, परम्परया घटध्वंसद्वारा, तद्वन्ति घटवन्ति, अनवस्थेति, अभावेऽभावान्तरमेवं तत्र तत्रापीत्यर्थः । तत्र अभावे, भावान्तरेऽपीति, भूतलादावपि घटाभावव्यवहारोऽधिकरणस्वरूपेणैव स्यादित्यर्थः । अभावाधिकरणकाभावस्यैवाधिकरणस्वरूपत्वं नतु भावाधिकरणकाभावस्येति नियमे विनिगमकमुपदर्शयन् नैयायिकस्समाधत्ते—नेति, भावान्तरस्य अधिकरणात्मकभावस्य, सजातीयत्वेन प्रतियोगिरूपभावसजातीयत्वेन, अविरुद्धजातीयत्वादिति, अभावत्वात्मकविरुद्धजातिमत्त्वाऽसम्भवादित्यर्थः, तथा चाधिकरणस्वरूपातिरिक्ताभावादेव भावान्तरेऽभावप्रतीतिरिति भावः । जातिपदेनानुगतधर्म एवात्र विवक्षितो नतु नित्यत्वे सत्यनेकसमवेतत्वरूपजातित्वालिङ्गित इति बोध्यम् । तथानभ्युपगमे दण्डमाह—विरुद्धजातीयत्व इति, अधिकरणीभूतस्य भावान्तरस्याभावत्वरूपविरुद्धजातिमत्त्वाऽभ्युपगमे भूतलादेर्भा-

वत्वेन प्रतियोगिसजातीयत्वानुपपत्त्या तस्य भावप्रतिक्षेपरूपतयैव भानं स्यादिति भावः ॥ अतिरिक्ताभावस्वीकारमन्तरेण प्रतियोगिभिन्नत्वेन प्रतियोगिमद्भिन्नत्वेन वा भूतलादीनामभावव्यवहारप्रवर्त्तकत्वाभ्युपगमे दोषमाह-प्रतियोगिमत्यपीति, एवंसति घटवतोऽपि भूतलस्य घटभिन्नत्वेन घटवद्भूतलान्तरभिन्नत्वेन च घटाभावव्यवहारप्रवर्तकत्वं स्यादित्यर्थः । ननु नोक्तातिप्रसङ्गः प्रतियोगिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नवत्त्वेनाभावव्यवहाराभ्युपगमादित्याङ्कायामाह-प्रतियोगिमद्यावदन्यत्वेनेति, तथा व्यवहारे अभावव्यवहारे, अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य नव्यमतेऽव्याप्यवृत्तित्वेऽपि नोक्तलक्षणस्य प्रतियोगिमद्यावदन्यत्वस्याव्याप्यवृत्तित्वं, प्रतियोगिमत्त्वसमानाधिकरणोभयावृत्तिधर्माणां तत्तद्व्यक्तित्वानां व्याप्यवृत्तित्वेन तदवच्छिन्नप्रतियोगिताकभेदानामपि व्याप्यवृत्तित्वेन तद्घटितस्य तस्यापि व्याप्यवृत्तित्वात्, तथा च प्रतियोगिसत्त्वकालावच्छेदेन भूतलं प्रतियोगिमदेवेति यावत्तदन्यत्वस्य कदापि तत्र सत्त्वाभावेन कथं तत्र प्रतियोगिशून्यकालावच्छेदेनाभावव्यवहारस्स्यादित्याशयेनाह—एकदेति, तदन्यत्वम् प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदरूपं प्रतियोगिमत्त्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिमन्निष्ठप्रतियोगितानिरूपकभेदरूपं वा । ननु भावाधिकरणकाभावो यथाऽधिकरणस्वरूपादतिरिक्तोऽभ्युपगतस्तथाऽभावाधिकरणकाभावोऽप्यतिरिक्तोऽस्त्वित्यत आह—

**अभावेऽभावान्तरं च न तावद्विरुद्धस्वभावेनाप्यधिकरणस्वरूपेणाभावव्यवहारजनने प्रतियोगिमतोऽपि तदापत्त्या स्वीकार्यम्, अभावस्य विरुद्धस्वभावत्वेन तदयोगात् । नाप्यनुभवबलात्, तदसिद्धेः, नाप्य-**

भावत्वप्रत्ययात्, अभावान्तरोपगमेऽन्योन्याश्रयचक्रकानवस्थानामन्यतमप्रसङ्गे लाघवादात्माश्रयस्योपगमात्। एतेन घटाभावो यदि घटाभाववान् स्यात् न स्यादित्यादिस्तर्कोऽपि निरस्तः, आपादकासिद्धेरिति दिग्। भिन्नाभावजन्मनि घटतादवस्थ्यं दोष इति चेत्, तादवस्थ्यं यदि घटत्वमेव, अभिमतमेतत् ॥

अभावेऽभावान्तरं चेति, भावाधिकरणकाभावस्य भावस्वरूपत्वे घटाभाववतो भूतलस्येव घटवद्भूतलस्यापि भावत्वेन प्रतियोगिना सहाऽविरुद्धजातीयत्वाद्घटवद्भूतलेऽप्यऽभावव्यवहारापत्त्या यथा भावेऽतिरिक्ताभावोऽभ्युपगतः, न तद्बलेनाऽभावेऽप्यऽभावोऽतिरिक्तस्स्वीकार्यः, अभावस्य प्रतियोगिना सह विरुद्धजातीयत्वेन प्रतियोगिमत्यभावव्यवहारापत्त्ययोगादित्यर्थः। नाप्यनुभवबलादिति, अभावेऽभावान्तरं स्वीकार्यमित्यनुषज्यते, तदिति, अनुभवेत्यर्थः। अभावेऽभाववत्त्वप्रत्ययादभेदे आधाराऽऽधेयभावाऽभावेनातिरिक्ताऽभावसिद्धिरिति न च वाच्यम्, एवंसति द्वितीयाभावेऽप्यभाववत्त्वप्रत्ययात्तस्य प्रथमाभावमादायोपपादनेऽन्योन्याश्रयः, तृतीयाभावमादायोपपादने तत्राप्यभाववत्त्वप्रत्ययात् तस्य प्रथमाभावादिकमादायोपपादने चक्रकम्, अभावान्तरमादायोपपादने तत्राप्येवं तत्राप्येवमित्यनवस्था, अतो लाघवादात्माश्रय एव स्वीकरणीयः, अस्य प्रामाणिकत्वेनादोषरूपत्वादित्याह—नाप्यभाववत्त्वप्रत्ययादिति, अत्राप्यभावेऽभावान्तरं स्वीकार्यमित्यनुषज्यते। आपादकासिद्धेरिति, आत्माश्रयस्य प्रकृते प्रामाणिकत्वेन घटाभावे घटाभाववत्त्वस्यापादकत्वाऽसिद्धेरित्यर्थः। यो यस्माद्भिन्नस्तदुत्पत्तावपि स तदवस्थ एव, यथा घटाद्भिन्नः पट इति पटोत्पत्तौ घटस्तदवस्थः, घटध्वंसो घटाद्भिन्नश्चेद् घटध्वंसोत्पत्तावपि घटस्य तादवस्थ्यमेव स्यात्, भिन्नत्वाविशेषादित्याशयेन शङ्कते-बौद्धः—भिन्नाभावजन्मनीति, अथवा बाधकान्तरमाशङ्कते—भिन्नाभावेति, नह्यकार्योत्पादे

अकारणं निवर्त्तते, घटोत्पादे पटनिवृत्तिप्रसङ्गात्, अतःकार्यमेव विनाश आस्थीयत इत्याशङ्कितुर्बौद्धस्याभिप्रायः। तादवस्थ्यं किं घटत्वमेव किंवा घटस्य घटध्वंसकालसत्त्वमिति विकल्पद्वयं, तत्राद्यविकल्पमिष्टापत्त्या परिहरति–अभिमतमेतदिति, तदेवोपपादयति—

न ह्यभावजन्मनि घटोऽघटतामुपैतीत्यभ्युपगमः। तत्कालसत्त्वं चेत्। न तर्ह्यभावो जातः, कालान्तरे घटानवस्थानस्वभाव एव हि तदभाव इति। भिन्नाभावजन्मनि प्रतियोग्यनिवृत्त्या कार्यमेव विनाशोऽस्थायी त्वया वाच्यः, स च न सम्भवति, भिन्नमात्र इव कार्यमात्रेऽपि विनाशबुद्धिव्यपदेशयोरभावात्, तथा च कार्यविशेष एव विनाश आस्थेय इति निष्कर्षः। अस्तु तर्हि निरुपादानत्वं बाधकं, जन्मन उपादानव्याप्तत्वाज्जन्मव्यापकसोपादानत्वनिवृत्त्या नाशे व्याप्यजन्मनिवृत्तिसिद्धेरिति चेत्॥

नहीति, द्वितीयविकल्पमाह- तत्कालसत्त्वमिति, न तर्ह्यभावो जात इति, ध्वंसकाले यदि प्रतियोगिसत्त्वं स्यात्तर्हि ध्वंसोत्पत्तिरेव न स्यात्, ध्वंसस्य प्रतियोग्यसमानकालीनत्वस्वाभाव्यादिति भावः। ध्वंसो हि प्रतियोगिकार्यात्मेत्यनभ्युपगमे अकार्यभूतस्य ध्वंसस्योत्पत्तावप्यकारणभूतस्य प्रतियोगिनो निवृत्तिर्न स्यादित्यतिप्रसङ्गदोषेण कार्यमेव विनाशः, सोऽप्युत्तरतत्कार्यात्मकध्वंसप्रतियोगित्वादस्थायी बौद्धेन वाच्यः, स च न सम्भवति, यथाऽतिरिक्तविनाशपक्षे घटध्वंसपटाद्योर्घटभिन्नत्वाऽविशेषाद् घटध्वंसोत्पत्ताविव पटाद्युत्पत्तावपि घटविनाशबुद्धिव्यपदेशौ स्यातामित्यतिप्रसङ्गदण्डोऽस्मन्मते, तथा कार्यरूपविनाशपक्षेऽपि सभागविसभागसन्तानकार्येषु कार्यत्वाऽविशेषाद् विसभागसन्तानकार्योत्पत्ताविव सभागसन्तानकार्योत्पत्तावपि तौ

स्यातामित्यतिप्रसङ्गदण्डो भवन्मतेऽपि समान एव, ननु तौ प्रति न कार्यत्वसामान्यं प्रयोजकं,किन्तु कार्यविशेषत्वमेवेति नोक्तातिप्रसङ्ग इति चेत् ,तर्ह्यतिरिक्तविनाशरूपास्मत्पक्षेऽपि भिन्नत्वमात्रं न प्रयोजकं,किन्तु भिन्नविशेषत्वमेव,कार्यविशेषत्वमेव वा, प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणत्वेनातिरिक्तविनाशेऽपि तत्त्वमस्त्येवेति समः समाधिरित्याशङ्कासमाधाननिष्कर्षमाह-भिन्नाभावजन्मनि प्रतियोग्यनिवृत्त्येति । वाधकान्तरमाशङ्कते-अस्तु तर्हीति, बाधकमिति, अतिरिक्तविनाशपक्ष इति शेषः, कथं वाधकमित्याशङ्कायामाह-जन्मन इति, उत्पत्तिमत्त्वस्येत्यर्थः । उपादानेति समवायिकारणेत्यर्थः, व्यापकाभावाद्व्याप्याभाव इति नियममनुसृत्याह-जन्मव्यापकेति, तथा चातिरिक्तध्वंसो न जायते निरुपादानत्वात्, आकाशवदित्यनुमानमत्र पर्यवस्यति ।

न । धर्मिग्राहकप्रमाणबाधात्, घटादेरिव ध्वंसस्यापि जन्यतायाः प्रत्यक्षसिद्धत्वात्, भावावच्छिन्नत्वाच्च व्याप्तेः, भावजन्म हि सोपादानत्वनियतं न तु जन्ममात्रमिति । एतेन 'निरुपादेयत्वं व्याख्यातं, गुणादिसिद्धौ चानैकान्तात् । अस्तु तर्हि व्यापकत्वं ध्रुवभावित्वमिति चेत् । न । अतादात्म्यादतत्कारणत्वाच्च, परेषां तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिग्रहाद्व्यापकत्वमपि तदात्मकतत्कारणयोरेव गृह्यते, न च ध्वंसः प्रतियोग्यात्मेति प्रागेवावेदितं, न वा प्रतियोगिकारणमिति न तत्र तद्व्यापकत्वग्रह इति तात्पर्यम् ॥

धर्मिग्राहकप्रमाणबाधादिति, येन इहेदानीं घटो नष्टः इत्यादिप्रत्यक्षप्रमाणेन ध्वंससिद्धः तेनैव च तत्रोत्पत्तिमत्त्वं विषयीक्रियत इति तेन जन्यतयैव स सिद्ध्यति, तथा चाजन्यत्वे साध्ये ध्वंसरूपधर्मिग्राहकोक्तप्रत्यक्षबाध एवेति भावः । उक्तानु-

माने प्रत्यक्षप्रमाणबाधदोषमेव विवृणोति–घटादेरिव ध्वंसस्यापीति, निरुपाधेर्हेतोर्बाधस्यानवकाशादुपाधिमाह–भावेति, यद्यपि भावत्वमुपाधिरभावान्तरे साध्याऽव्यापकं, तथापि बाधोन्नीतपक्षेतरत्वमुपाधिरनेनोपलक्ष्यते, अथवा यद्यज्जायते तत्तत्सोपादानकमित्यत्र भावत्वमुपाधिः, तत्र साध्यं सोपादानकत्वं यत्र वर्त्तते तत्र भावत्वमस्त्येवेति भवत्येव साध्यव्यापकं तदिति भावः । **भावजन्मेति**, भावत्वे सत्युत्पत्तिमत्त्वमित्यर्थः, **सोपादानत्वनियतमिति**, तथा च सोपादानत्वनिवृत्त्या भावत्वे सत्युत्पत्तिमत्त्वमेव निवर्त्तते, न तूत्पत्तिमत्त्वमात्रमिति निर्गलितार्थः । ननु ध्वंसो न जायते निरुपादेयत्वात् गोत्वादिवदित्यस्त्वनुमानमित्यत आह–**एतेनेति**, निरुपादेयत्वं धर्मिग्राहकप्रमाणबाधेन बाधोन्नीतपक्षेतरत्वोपाधिग्रासेन च निराकार्यत्वेन व्याख्यातमित्यर्थः, दूषणान्तरमाह–**गुणादिसिद्धाविति**, उपादेयं समवेतकार्यं तन्निर्गतं यस्मात्तत्तथा तस्य भावस्तत्त्वमित्येवं लक्षणं निरुपादेयत्वं गुणादेर्गुण्यादिभ्यो भेदसिद्धावनैकान्तिकं तदसिद्धौ व्याप्यत्वासिद्धमित्यर्थः । चतुर्थं ध्रुवभावित्वविकल्पं निराकर्तुं शङ्कते–**अस्त्विति**, व्यापकत्वमिति प्रतियोगिव्यापकत्वमित्यर्थः, विनाशस्येति शेषः । तथाच विनाशः प्रतियोग्युत्तरभाविहेत्वनपेक्षः प्रतियोगिव्यापकत्वादित्यनुमानेन सिद्धमहेतुकत्वं विनाशस्य, तेन च ध्वंसस्याग्रिमक्षण एवोत्पादात् क्षणिकत्वमिति भावः । उक्तमेव विशदयति–**परेषामित्यादिना**, परेषां बौद्धानाम् ।

**अस्मद्दिशापि व्याप्तिग्रहो न साहित्यनियमेन । स हि देशतो वा, कालतो वा, देशोऽपि संयोगी, समवायी वा । नाद्यः । गृहे जातस्यापि प्राङ्गणे विनाशोपगमात् । नेतरः, आश्रयनाशेनापि विनाशोपगमात् । न द्वितीयः । विरोधितया विषमसमयत्वात् । नापि जन्मानन्तर्यनियमः, तदसिद्धेः, सिद्धौ वा तत एव**

क्षणभङ्गसिद्धेः किमनेन । भविष्यत्तामात्रेण व्यापकत्वमस्तीति चेत्, अस्तु, न त्वेतावता हेत्वन्तरानपेक्षत्वसिद्धिः, अद्यतनघटस्य श्वस्तनकपालमालयैवानेकान्तादिति ॥

अस्मद्दिशापि नैयायिकप्रक्रिययाऽपि, प्राङ्गणदेशावच्छिन्नपुत्रादिध्वंसस्य यस्स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्तद्वत्यपि गृहे पुत्रोत्पत्तेस्तस्य संयोगेन विद्यमानत्वेन व्यभिचारात्संयोगिदेशगर्भसाहचर्यनियमो यत्र यत्र देशे संयोगेन प्रतियोगी तत्र तत्र स्वरूपसंसर्गेण तद्ध्वंस इत्याकारो नेत्याह–नाद्य इति । य आश्रयनाशजन्यद्रव्यादिध्वंसस्स समवायेन प्रतियोग्याश्रये स्वरूपसम्बन्धेन न वर्त्तते प्रतियोगी च तत्र वर्त्तेत इति व्यभिचारेण समवायिदेशगर्भोऽपि साहचर्यनियमो नेत्याह–नेतर इति, आश्रयनाशेनापीति, अत्राश्रयनाशेऽपीत्यपि पाठः । ध्वंसप्रतियोगिनोरेककालानवस्थायितया भिन्नकालवृत्तित्वनियमात्कालगर्भापि न व्याप्तिरित्याह–न द्वितीय इति । समानकालघटिता मास्तु ध्वंसप्रतियोगिनोर्व्याप्तिः प्रतियोग्युत्पत्त्यव्यवहितोत्तरक्षणघटिता तु स्यादेव, न च तत्र व्यभिचारः, प्रतियोगिनस्स्वोत्पत्त्यव्यवहितोत्तरक्षण एव ध्वंसनियमादित्याशङ्कां निराकरोति–नापि जन्मानन्तर्यनियम इति, व्याप्तिग्राहक इति पूरणीयम् । बौद्धाधिकारे जन्मानन्तर्यनियमेनेति पाठः, व्याप्तिग्रह इत्यनुषज्यते, तत एवेति जन्मानन्तर्यनियमग्राहकमानादेवेत्यर्थः । अनेन प्रतियोगिव्यापकत्वलिङ्गकानुमानेन, अद्यतनेति, श्वस्तनकपालमालाया भविष्यत्तामात्रेणाद्यतनघटव्यापकत्वेऽपि तत्र नाद्यतनघटोत्तरभाविहेत्वनपेक्षत्वं, मुद्गरनिपातादिरूपहेत्वन्तरापेक्षित्वेन व्यभिचारादित्यर्थः ।

एतेन सापेक्षत्वे व्यभिचारोऽपि स्याद्विनाशहेतूनां प्रतिबन्धवैकल्यसम्भवादिति परास्तम्, कपाल-

सन्ततिसमानयोगक्षेमत्वाद्विनाशस्येति । उत्पन्नस्यापि प्रतियोगिनो यदीतरविरहेणापि विनाशाजनकत्वं तदा यावत्सत्त्वं प्रतिबन्धकादिवशात् तदसमवहितो विनाशं न जनयेदित्युत्पन्नोऽपि भावः कश्चिदविनाशी स्यात्, न चैवम्, अतो नोत्पन्नस्येतरविरहेण विनाशाजनकत्वमिति, तदिदमुत्पत्तिमतां भावानां विनाशनियमासिद्धौ न सिध्यतीति तत्सिद्धिरवश्याभ्युपेया, तथा चान्वयव्यतिरेकसिद्धकारणभावानां सहकारिणां सर्वत्र समवधानं सैव साधयिष्यतीत्याशयः ॥

एतेनेति, परास्तमित्यनेनान्वयः, सापेक्षत्वे ध्वंसस्य प्रतियोग्युत्तरभाविहेत्वपेक्षत्वे, व्यभिचारोऽपि स्यात् कदाचिदुत्पन्नोऽपि भावो न नश्येत्, तत्र हेतुमाह–विनाशेति, एतेनेत्यनेनोपदर्शितं निरासे हेतुमाह–कपालेति, एवं सति कपालमालाऽपि हेत्वन्तरापेक्षित्वेन तत्प्रतिबन्धवैकल्यसम्भवेन कारणव्यभिचारप्रसङ्गतः कदाचिन्न भवेदित्यपि सम्भाव्येत, न चैवं सम्भाव्यते, तद्वत्प्रकृतेऽपीत्यर्थः । सापेक्षत्वे व्यभिचारोऽपि स्यादित्याद्युक्तं विशदयति–उत्पन्नस्यापीत्यादिना, तदसमवहित इति स्वोत्पत्त्युत्तरभाविहेत्वसमवहितः प्रतियोगीत्यर्थः, तदिदम् नोत्पन्नस्येतरविरहेण विनाशाजनकत्वमिति पूर्वोक्तम्, सैव उत्पत्तिमतां भावानां विनाशनियमसिद्धिरेव । प्रतिबन्धवैकल्यसम्भवादिति बौद्धोक्तहेतोर्व्याख्याभेदमाह—

प्रतिबन्धवैकल्यसम्भवादित्यत्र प्रतिबन्धेन वैकल्यस्य सम्भवादित्येके, प्रतिबन्धवैकल्ययोरित्यपरे । विकल्पाभिप्रायात् प्रतिबन्धस्य वा वैकल्यस्य वेति नारायणाचार्यः । अस्तु तर्हि चरमः पक्षोऽभावत्वस्यैव ध्रुवभावित्वमिति । तथा हि–विनाशो न जायतेऽभावत्वात् प्रागभाववत्, जातो वा निवर्तेत जातत्वात्

घटवदिति । नैतदेवं, प्रागभावो जायतेऽभावत्वात् विनाशित्वात् वा प्रध्वंसवद्, घटवद्वा, अजातो वा न निवर्त्तेत अजातत्वादाकाशवत् शशविषाणवद्वेतिवदसाधनत्वात् । किमेतेषां दूषणमिति चेत् । भावावच्छिन्नव्याप्तिकत्वादप्रयोजकत्वं, प्राक्प्रध्वंसाभावग्राहकप्रत्यक्षबाधः, प्राक् पश्चात् कार्योन्मज्जनलक्षणप्रतिकूलतर्कत्वं च ॥

प्रतिबन्धेति, प्रतिबन्धेन वैकल्यस्येति, विनाशहेतूनां प्रतिरोधकेन वैकल्यस्येत्यर्थः । प्रतिबन्धवैकल्ययोरिति सम्भवादित्यस्यानुषङ्गः, प्रतिबन्धस्य वा वैकल्यस्य वेति, हेतुसाकल्ये सत्यपि प्रतिबन्धस्य हेतूनां वैकल्यस्यैव वा सम्भवादित्यर्थः । जन्मविरहे हेत्वपेक्षाविरहः सुतरां सिध्यतीति तं साधयति-तथाहीति । विपक्षे बाधकमाह-जातो वेति, तथाच भावोन्मज्जनापत्तिरिति भावः । प्रध्वंसवदिति, अभावत्वे हेतौ दृष्टान्तः, घटवद्वेति विनाशित्वे हेतौ दृष्टान्तः । विपक्षे बाधकमाह-अजातो वेति, प्रागभावो यदि न जायेत न निवर्त्तेत निवर्त्तते च तस्माज्जायत इत्यर्थः । स्वपरमतभेदेन दृष्टान्तद्वयमाह-आकाशवादित्यादि, असाधनत्वादिति, साधनाभासत्वादित्यर्थः । दोषे सत्येवाभासतेत्यतः पृच्छति-किमेतेषामिति, प्राक् पश्चात् कार्योन्मज्जनेति, प्राक् पश्चाच्च कार्योन्मज्जनप्रसङ्गलक्षणप्रतिकूलतर्कश्चेति पाठान्तरम्, स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वविशिष्टमित्रातनयत्वश्यामत्वयोरिव भावावच्छिन्नजातत्वविनाशित्वयोर्भावावच्छिन्नविनाशित्वजातत्वयोरेव व्याप्तिर्नतु केवलयोस्तयोरिति स श्यामो मित्रातनयत्वादित्यत्र साधनावच्छिन्नसाध्यव्यापकस्य शाकपाकजत्वस्येव विनाशो निवर्त्तेत जातत्वादित्यत्र प्रागभावो जायते विनाशित्वादित्यत्र च साधनावच्छिन्नसाध्यव्यापकस्य भावत्वस्योपाधि

त्वादुक्तानुमानद्वयस्याप्रयोजकत्वोपदर्शनेन भावावच्छिन्नव्याप्तिकत्वात् अप्रयोजकत्वमित्युक्तं सङ्गमयति—

अत्र जातत्वेन विनाशित्वेन च विनाशित्वे जातत्वे च साध्ये साधनावच्छिन्नसाध्यव्यापकस्य भावत्वस्योपाधित्वात् तत्र तयोरप्रयोजकत्वं, विनाशित्वस्य च सोपाधितया जातत्वाव्याप्यत्वेन जातत्वाभावो नाविनाशित्वव्याप्य इति तस्याप्रयोजकत्वं, विपक्षबाधकयोश्चाप्रयोजकत्वेनाजातत्वे जातत्वे वाऽभावत्वस्याप्रयोजकत्वं, प्रागभावस्य जन्यत्वे साध्ये च यद्यपि प्रत्यक्षेण न बाधस्तस्याजन्यत्वाग्राहकत्वात्, तथापि प्रत्यक्षतः सिद्धस्य प्रागभावस्य प्रागभावान्तरकल्पनायामनवस्थानादजन्यत्वसिद्ध्या प्रत्यक्षबाधोऽभिहितः। ध्वंसस्याजन्यत्वे साध्ये च तज्जन्यत्वग्राहकप्रत्यक्षबाध एव ॥

अत्र जातत्वेनेत्यादिना, जातत्वेन विनाशित्वे साध्ये विनाशित्वेन जातत्वे साध्ये चेत्यन्वयः, बौद्धाधिकारे तु तथैव पाठः। उपाधिश्चतुर्विधः, केवलसाध्यव्यापकः, हेत्वतिरिक्तपक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति, आद्यः पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः, द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्, तृतीयो यथा स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं शाकपाकजत्वम्, चतुर्थो यथा अत्यन्ताभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम्, प्रकृते भावत्वस्य केवलसाध्यव्यापकत्वाभावात् जन्यत्वस्य पक्षवृत्तित्वेऽपि हेत्वतिरिक्तत्वाभावेन हेत्वतिरिक्तपक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभावात् जन्यत्वस्य पक्षधर्मसाधनधर्माभ्यां भिन्नत्वलक्षणौदासीन्याभावेनोदासीनधर्मावच्छिन्नसाध्यव्यापकत्वाभावाच्च भावत्वे नाद्यद्वि-

तीयचतुर्थोपाधित्वसम्भवः, किन्तु तृतीयोपाधित्वमेवेत्यतस्साध्ये साधनावच्छिन्नेति विशेषणमुक्तम्, तत्र विनाशित्वे जातत्वे च साध्ये, तयोः जातत्वविनाशित्वयोः, प्रागभावो न निवर्त्तेत अजातत्वादिति स्वोक्तानुमानेऽप्रयोजकत्वं सङ्गमयति-विनाशित्वस्य चेत्यादि, तस्य जातत्वाभावस्य, विनाशो न जायते अभावत्वात् प्रागभाववदिति बौद्धानुमाने प्रागभावो जायते अभावत्वात् प्रध्वंसवदिति स्वानुमाने चाप्रयोजकत्वं सङ्गमयति विपक्षबाधकयोश्चेति, जातो वा निवर्त्तेत जातत्वात् घटवत् अजातो वा न निवर्त्तेत अजातत्वात् आकाशवत्शशविषाणवद्वेति द्वयोरित्यर्थः। अजातत्वे जातत्वे वेति, साध्ये जातत्वे चेति पाठान्तरम्, इति शेषः। प्राक्प्रध्वंसाभावग्राहकप्रत्यक्षबाध इति यदुक्तं तद्विवृणोति-प्रागभावस्य जन्यत्वे साध्ये चेति, चकारो ध्वंसस्य विनाशित्वे साध्ये इत्यस्य परिग्राहकः। अजन्यत्वाग्राहकत्वादिति, ध्वंसगताविनाशित्वाऽग्राहकत्वादित्यपि बोध्यम्, तथा च मुद्गरेण घटोध्वस्त इत्यादिप्रत्यक्षप्रमाणसिद्धस्य विनाशस्य विनाशान्तरकल्पनायामनवस्थालतापत्तेरविनाशित्वसिद्ध्या प्रत्यक्षबाधो ज्ञेयः,

ध्वंसस्याजन्यत्वे साध्ये चेति, चकारात्प्रागभावस्याविनाशित्वे साध्ये इत्यस्य परिग्रहः, तज्जन्यत्वेति ध्वंसनिष्ठजन्यत्वेत्यर्थः। प्रागभावनिष्ठविनाशित्वग्राहकप्रत्यक्षबाधस्याप्युपलक्षणं बोध्यम्। प्राक्पश्चाच्च कार्योन्मज्जनप्रसङ्गलक्षणप्रतिकूलतर्कश्चेत्युक्तं विवृणोति--

प्रतियोग्युन्मज्जनं च, प्रागभावस्य जन्यत्वे तत्पूर्वं ध्वंसस्य च विनाशत्वे तत्पश्चात् कार्यसत्त्वप्रसङ्गो, ध्वंसप्रागभावानाधारकालस्य प्रतियोगिमत्त्वनियमादिति बोध्यम्। उत्पादव्ययस्थितय एकस्वरूपा एव सत्तात्मकत्वात् तत्तदाकारभेदाच्च व्यवहारभेद इति सिद्धं सर्वत्र विशिष्टोत्पादव्ययसंवलितध्रौव्यात्मक-

त्वम् । व्यवहरन्ति हि लोका अपि घटो मृत्पिण्डत्वेन नष्टो घटत्वेनोत्पन्नो मृत्त्वेन च ध्रुव इति, हेम कुण्डलत्वेन नष्टमङ्गदत्वेनोत्पन्नं हेमत्वेन च ध्रुवमिति ॥

प्रतियोग्युन्मज्जनश्चेति " इत्थं दानादयो धर्माः स्वस्वमाहात्म्यगर्विताः । विवदन्तो मिथः प्रापुः, पार्श्वे तीर्थकृतः प्रभोः ॥ १ ॥ समानदृष्टिः सर्वत्र, वीतरागः स सर्ववित् । विवादं भङ्क्तुमिति तान् स्वोपज्ञं न्यगदत्तदा " ॥२॥ इत्युक्तिं स्मरन् परस्परं विवदमानयोर्बौद्धन्यायनययोर्वीतरागसिद्धान्तमुपाश्रित्योपसङ्ग्रहं चिकीर्षुरार्हतसिद्धान्तमुपदर्शयति–उत्पादव्ययस्थितय इति, उत्पादव्ययध्रौव्ययुक्तं सदिति तत्त्वार्थोक्तेस्सत्ताया उत्पादव्ययस्थितिमत्त्वलक्षणत्वात्त्रयाणामपि सत्तात्मकत्वेनैकरूपत्वं, त्रयाणां भिन्ननिमित्तकत्वेन भिन्नाकारज्ञानगोचरत्वेन च भिन्नत्वं तेन च व्यवहारभेद इत्यर्थः । स्वरूपत एकरूपस्यापि वस्तुमात्रस्यापेक्षाभेदप्रयोज्योत्पादादिभेदेन त्रैरूप्यं पर्यायनये उपदर्श्य द्रव्यार्थिकनयेऽपि तदुपदर्शयति—

**एवं पर्यायार्थतया सर्वत्र त्रैलक्षण्यं सिद्धम् । द्रव्यार्थतयापि विसभागसन्ततौ तत्तत्कार्यव्यक्तावतिरिक्तध्वंसे वा ध्वंसत्वं कल्पनीयमित्यन्ततः प्रत्येकं विनिगमकाभावात् समुदायविभागरूपध्वंसत्वसिद्धौ सभागसन्ततावपि परेषां विलक्षणसंयोगनाशस्य जन्यद्रव्यनाशत्वं न कार्यतावच्छेदकं, जन्यत्वप्रवेशे गौरवात्, किन्तु द्रव्यनाशत्वमेव, कारणतावच्छेदकमपि न विलक्षणसंयोगनाशत्वं, गौरवात्, किन्तु विलक्षणसंयोगत्वमेव, कार्यकारणतावच्छेदिका प्रत्यासत्तिरेकद्रव्यार्थत्वमिति**

द्रव्यार्थतयापीति, तन्निराबाधमित्युत्तरेण सम्बन्धः, अयम्भावः, द्रव्यं पर्यायवियुक्तं नास्ति, मृत्पिण्डस्थासकोशकु-

शूलाद्यनुगतमृत्सामान्यप्रतीतेः विशेषविनिर्मुक्तस्य सामान्यस्याभावात्, द्रव्यविरहिताश्च पर्याया न सन्ति, अनुगतैकाकारमृत्सामान्यानुविद्धतया मृत्पिण्डस्थासकोशकुशूलादीनां विशेषाणां प्रतिपत्तेः सामान्यरहितानां विशेषाणामभावात्, अतो द्रव्यार्थिकाभिमतं वस्तु पर्यायाक्रान्तमेव, न तद्विविक्तं, पर्यायाभिमतमपि द्रव्याक्रान्तमेव न तद्विकलं, परस्परविविक्तयोः कदाचिदप्यप्रतिभासनादिति यावुत्पादव्ययौ पर्यायधर्मौ, तौ द्रव्यस्यापि, यश्च स्थितिधर्मो द्रव्यस्य, स पर्यायस्यापि, परस्परसापेक्षत्वादेव चोत्पादादित्रयशिबिकोद्वाहिपुरुषा इव परस्परस्वरूपोपादानेनैव सतो लक्षणं, मिथोऽपेक्षारहितास्त्वेकैका उत्पादादयो द्वयोरपि द्रव्यास्तिकपर्यायास्तिकयोरलक्षणम्, तथाभूतविषयाभावेन तद्ग्राहकयोरपि तथाभूतयोरभावात्, उत्पादादीनां च परस्परविविक्तरूपाणामसम्भवात्, तदुक्तं 'एए पुण संगहओ पडिक्कमलक्खणं दुवेण्हंपि" इति, इत्यलं पल्लवितेन । **विसभागसन्ततावित्ति,** अस्य समुदायविभागरूपध्वंसत्वसिद्धावित्यनेनान्वयः, तत्तत्कार्यव्यक्तावित्ति, घटस्य पटस्य च विभक्तावयवात्मकतयोत्पन्नकपालकदम्बकात्मिकायामुत्पन्नतन्तुकदम्बकात्मिकायां च विजातीयकार्यव्यक्तावित्यर्थः । **समुदायविभागरूपध्वंसत्वसिद्धा-**विति, अतिरिक्तध्वंसाख्योऽभावस्तत्र चानुयोगिताविशेषरूपं ध्वंसत्वमिति धर्मिधर्मरूपोभयाभ्युपगमापेक्षया 'धर्मिकल्पनातो धर्मकल्पना लघीयसीति' न्यायाल्लाघवादुभयानुमते तत्तदवयवविभागात्मके धर्मिणि ध्वंसत्वधर्मसिद्धावित्यर्थः, समुदायविभागरूपध्वंससिद्धावुत्पादस्य तन्नियतत्वाद् ध्रौव्यस्य चोत्पादविनाशक्रिये निराधारे न सम्भवत इति तदुभयनियतत्वाद् घटरूपेण विनाशः विभक्तकपालकदम्बकरूपेणोत्पादः मृद्रूपेण ध्रौव्यमित्येवं विसदृशसन्तानस्थले विजातीयकार्यस्य त्रैरूप्यं प्रतिपाद्य सदृशसन्तानस्थले सजातीयकार्यस्य तत्प्रतिपादनाय प्रथमर्थान्तरभावगमनलक्षणध्वंसत्वोपपादनायाह—**सभागसन्तता**वीति, अस्य

संयोगजद्रव्येऽर्थान्तरभावगमनरूपध्वंसत्वसिद्धावित्यनेन सम्बन्धः । परेषां नैयायिकानां, विलक्षणेति, आरम्भकेत्यर्थः, किन्तु द्रव्यनाशत्वमेवेति, तथा चात्मादिनित्यद्रव्याणां नाशस्यापि कार्यतावच्छेदकाक्रान्तत्वेन तेषामपि स स्यादेवेति सूचितम् । नन्वात्मादिनित्यद्रव्याणां नाशस्य कार्यतावच्छेदकाक्रान्तत्वेऽपि तेषां स्वावयवसंयोगरूपाऽसमवायिकारणाऽभावेन तन्नाशरूपकारणाभावात्कथं नाशस्यादित्याशङ्कायामाह-कारणतावच्छेदकमपीति, एकद्रव्यार्थत्वमिति, स्वाश्रयद्रव्यत्वमित्यर्थः । ननु स्वाश्रयद्रव्यत्वसम्बन्धेन द्रव्यनाशत्वावच्छिन्नं प्रति स्वाश्रयद्रव्यत्वसम्बन्धेन विलक्षणसंयोगस्य कारणत्वमिति कार्यकारणभावो भवतु तेन किमित्यत आह—

**संयोगजद्रव्येऽर्थान्तरभावगमनरूपध्वंसत्वसिद्धौ खण्डघटे दण्डजन्यत्वानुरोधाय स्वजन्यविलक्षणव्यापारसम्बन्धेन तत्तत्कारणानां हेतुत्वात् प्रतिक्षणोत्पादस्याप्यवर्जनीयत्वादाकाशादावपि परप्रत्ययोत्पादध्वंसानामागमसिद्धत्वात् यावदुत्पादध्वंसं स्थितेरप्यौत्सर्गिकत्वात् तन्निराबाधम् । एवं सति बौद्धनैयायिकोभयमतानुग्रहः । तत्खण्डनं च किंचित्त्वचिदर्थमर्यादयैवेति पुनरस्माकं सिद्धान्तः ॥ २१ ॥**

संयोगजद्रव्य इति, तथा चातिरिक्तध्वंसाभ्युपगमे तस्य कारणाश्रयद्रव्यानाश्रितत्वादुक्तकार्यकारणयोरुक्तसम्बन्धेन सामानाधिकरण्यमेव न स्यादिति भावः ॥ अर्थान्तरभावगमनरूपध्वंसत्वसिद्धाविति, ननु पूर्वावस्थालक्षणपूर्वकार्यस्य विनाश उत्तरावस्थालक्षणार्थान्तरभावेनोत्पादः, यथा मृत्पिण्डस्य विनाशो घटार्थान्तरभावेनोत्पाद इत्यभ्युपगमे घटकार्यलक्षणार्थान्तररूपविनाशस्य विनाशे मृत्पिंडप्रादुर्भावप्रसक्तिरिति चेत्, मैवम्, पूर्वोत्तरकालावस्थयोरसङ्कीर्णत्वात्. अतीततरत्वेन प्राक्तना-

वस्थाया उत्पत्तेरतीतस्य वर्त्तमानत्वाऽयोगात्, तयोः स्वस्वभावाऽपरित्यागतस्तथा नियतत्वादिति, न च समुदायविभागलक्षणार्थान्तरभावगमनलक्षणध्वंसद्वयाभ्युपगमे भवतामपसिद्धान्तदोषस्स्यादिति वाच्यम् "विगमस्स वि एस विही समुदयजणियम्मि सोउ दुवियप्पो । समुदयविभागमेत्तं अत्थंतरभावगमणं च " ॥ १ ॥ इति सम्मतितर्के इत्युक्तत्वात् । उत्पादात्मकत्वसिद्ध्यर्थमाह–**खण्डघट इति,** अनित्यद्रव्य इव नित्यद्रव्येऽप्युत्पादव्ययसिद्ध्यर्थमाह–**आकाशादावपीति,** आदिपदाद् धर्मास्तिकायाधर्मास्तिकाययोः परिग्रहः **परप्रत्ययोत्पादध्वंसानामिति,** यस्समुपरततद्देशावगाहकस्वभावे चैत्रे सति तन्निमित्तकतद्देशावच्छिन्नतदवगाहनास्वभाववत्तयाऽपैति स एवाकाशास्तिकायः समुपगततदन्यदेशावच्छिन्नावगाहकस्वभावे चैत्रे तन्निमित्तकदेशान्तरावच्छिन्नतदवगाहनास्वभाववत्तयोत्पद्यते, एवं यस्समुपरतगतिव्यापारे चैत्रे तद्गत्युपग्रहव्यापारवत्तयाऽपैति, स एव धर्मास्तिकायो जिगमिषद्देवदत्ते तद्गत्युपग्रहकारितयोत्पद्यते, अधर्मास्तिकायेऽपि गतिपदस्थले स्थितिपदमुपस्थाप्य तत्त्वं ज्ञेयम्, इत्येवमवगाहकगन्तृस्थातृद्रव्यनिमित्तोत्पादध्वंसानामित्यर्थः । **आगमसिद्धत्वादिति,** उक्तञ्च सम्मतितर्के–" आगासाईआणं तिण्हं परपच्चओ नियमा " इति, **औत्सर्गिकत्वादिति,** स्थितेरपि सामान्यरूपतया तथैव नियतत्वात्, स्थितिरहितस्योत्पादस्य व्ययस्य चाभावात्, भावे वा शशशृङ्गादेरपि प्रसङ्गादिति भावः । **तत्खण्डनमिति** बौद्धनैयायिकोभयमतखण्डनमित्यर्थः । **किंवृत्तचिदर्थमर्यादयैवेति,** कथञ्चिद्वादेनेत्यर्थः ॥ २१ ॥ द्वाविंशतितमश्लोकावतरणिकामाह—

ननु तथापि स्थिरपक्षसाधकाभावादेव क्षणिकत्वावकाशो भविष्यतीत्याशङ्कायां तत्साधकोपन्यासगर्भां भगवतः स्तुतिमाह—

द्रव्यार्थतो घटपटादिषु सर्वसिद्ध—मध्यक्षमेव हि तव स्थिरसिद्धिमूलम् ।
तच्च प्रमाणविधया तदिदंत्वभेदा—भेदावगाहि नयतस्तदभेदशालि ॥ २२ ॥

हे भगवँस्तव मते सोऽयमित्याद्यध्यक्षमेव सर्वलोकसिद्धं घटपटादिषु, द्रव्यार्थतो द्रव्योपयोगे, स्थिरसिद्धेः धर्मप्रधाननिर्देशात् स्थिरत्वसिद्धेर्मूलम्, तच्चाध्यक्षं प्रमाणविधया स्याद्वादसंस्कृततया तदिदंत्वाभ्यां यो भेदः स्वरूपतश्चाभेदस्तदवगाहि, द्रव्यार्थोपयोगेऽभेदस्य प्राधान्येन भेदस्य चोपसर्जनतया भानात्, भेदावच्छेदकरूपोपयोगं विनापि तदुपगमे स स अयमयम् इत्यस्यापि प्रसङ्गात्, समानसंवित्संवेद्यतया च विशेषान्तराकाङ्क्षानिमित्तकव्यावहारिकावग्रहादिक्रमेण भेदप्रधानाभेदोपसर्जनसंवित्तेरप्यभ्युपगमात् प्रमाणसंस्कारसिद्धिः ॥

नन्विति, अयं श्लोको ग्रन्थकारेणैव सुस्पष्टं विवृत इति नेह प्रतन्यते, द्रव्योपयोग इति, द्रव्यनयाश्रयेण इत्यर्थः। ननु सोऽयमित्यध्यक्षस्य भेदाभेदयोर्विरुद्धधर्मत्वात्तदवगाहित्वे संशयरूपत्वं स्यादित्याशङ्कायामाह—द्रव्यार्थोपयोग इति, अयम्भावः, भेदाभेदौ निरपेक्षावेव विरुद्धाविति प्रधानभावेनैव तौ तत्र यदि भासेताम् तर्हि संशयरूपत्वं स्यात्, नचैवमत्र, ह्रस्वत्वदीर्घत्वे इव सापेक्षत्वेनाविरुद्धौ ताविति द्रव्यार्थनयचिन्तायामभेदस्य प्राधान्येन भेदस्य च गौणतयैव भानादिति। पर्यायनयाभ्युपगतस्वनिमित्तापेक्षकभेदावगाहनं विनाऽपि द्रव्यनयेनाभेदावगाहनाभ्युपगमेऽतिप्रसङ्गमाह—भेदावच्छेदकेति, स स इति केवलाभेदभाने

उक्ताकारा पृथक्प्रतीतिस्स्यात्, ननु सोऽयमिति विशिष्टप्रतीतिः, तत्र तत्त्वेन्दत्वभिन्नविशेषणद्वयभाने विशिष्टयोरपि भेदात् तद्भानावश्यकत्वादिति भावः। ननु नयद्वयसापेक्षमेवाध्यक्षं प्रमाणतामास्कन्दतीति द्रव्यार्थनयचिन्ताया इव पर्यायनयचिन्ताया अप्यावश्यकत्वात्तदपेक्षया भेदस्य प्राधान्यमभेदस्य च गौणत्वमाश्रित्य तदुभयभान एव सोऽयमिति प्रत्यभिज्ञायाः प्रमाणभावं भवति न केवलं द्रव्यार्थनयचिन्तया भेदाभेदयोः प्रधानगौणभावेन भानमात्रेणेत्याशङ्कायामाह–**समानसंवित्संवेद्यतयेति**, यद्यपि तुल्यवित्तिवेद्यतयेत्यर्थकत्वे यत्राभेदो भासते तत्र भेदोऽपि भासते इत्यर्थो भवितुमर्हति, स च न प्रकृतोपयोगी, द्रव्यार्थोपयोगेऽपि भेदस्य भानोपगमात्, यत्राभेदः प्रधानतया भासते तत्र भेदोऽपि प्रधानतया भासते इत्यर्थस्तु नयज्ञाने न सम्भवत्येव, प्रमाणे तत्सम्भवेऽपि न तावन्मात्रस्य प्रस्तुतत्वं, भेदोपसर्जनाभेदस्याभेदोपसर्जनभेदस्य च प्राधान्येन भानमेव प्रस्तुतं, न च तत्प्रमाणे, तत्र भेदाभेदोभययोः प्राधान्येनैव भानमतः समानसंवित्संवेद्यतयेत्यस्यानुगताकारबुद्धिविषयत्वेनेत्यर्थस्तातपादैरुपवर्णित एव कान्तः, तथा च सामान्यधर्मज्ञानस्यावान्तरधर्मप्रकारकज्ञानेच्छाया हेतुत्वात्प्रकृते सोऽयमित्यभेदज्ञानस्य सामान्यज्ञानत्वेन तदवान्तरविशेषज्ञानस्य व्यावहारिकावग्रहस्य निदानतया ततस्तस्य समुल्लासे ततोऽपीहायास्ततोऽपि चावायस्य समुल्लासोऽवर्जनीय एव, विशेषज्ञाने च भेदस्य प्राधान्येन भानमभेदस्य च गौणतयेति तादृशक्रमिकसामान्यविशेषज्ञानकदम्बस्य च कथञ्चिदेकत्वेन तादृशसमुदायानुस्यूतप्रत्यभिज्ञानव्यक्त्यात्मकोर्ध्वतासामान्यस्य च प्रमाणरूपत्वेन तत्र भेदोपसर्जनाभेदस्याऽभेदोपसर्जनभेदस्य च प्राधान्येन भानाद्भवति प्रमाणसंस्कारसिद्धिरिति भावः। विशेषणभेदे विशिष्टयोरपि भेद इतिनियमात्तत्ताविशिष्टेदन्त्वविशिष्टयोर्भेदेन पूर्वोत्तरव्यक्त्योरभेदस्य बाधाच्छक्त्या तदिदम्पदोपस्थाप्यतत्ताविशिष्टेदन्त्वविशिष्टाभेदावगाहिबोधानुपपत्त्या "तत्त्वमसि" इति वाक्यतो-

ऽन्तःकरणावच्छिन्नत्वमायावच्छिन्नत्वविशिष्टयोर्भेदेनाभेदस्य बाधाद् जहदजहल्लक्षणया शुद्धचैतन्यबोधवत् सोऽयं देवदत्त 'इत्याद्याप्त-
वाक्येनाप्युक्तलक्षणया शुद्धव्यक्तेरेवावगाहिशाब्दबोध इत्यभ्युपगमो वेदान्तिनां, नार्हतानाम्, उक्तनियमस्य कथञ्चिद्भेदपरत्वेनो-
क्तबोधानुपपत्तेरेवाऽस्फुर्त्तेस्तन्मूलकोक्तलक्षणाया अप्यभावेन शाब्दमर्यादायामपि कथञ्चिद्भेदाभेदभानोपपत्तेरित्याशयेनाह—

**शाब्द्यामपि मर्यादायां सोऽयं देवदत्त इत्यादौ न प्राथमिकबोधानुपपत्त्या जहदजहल्लक्षणया शुद्धव्य-**
**क्तिबोधाश्रयणं वेदान्तिनामिवास्माकं, भेदाभेदवादेऽनुपपत्तेरेवास्फूर्त्तेः, किन्त्वावृत्त्या क्रमिकनयद्वयजन्यबो-**
**धोपपादनाय तुल्यवत्, समुच्चयबोधे तु सप्तभङ्गीं विना न कथमपि निस्तार इत्यन्यत्र विस्तरः। नयतो नय-**
**मर्यादया तु, तस्य प्रागनुभूतघटस्याभेदशालि अभेदावगाह्येव सोऽयमित्याद्यध्यक्षं प्रत्येतव्यम्। तथा च नैया-**
**यिकाः, कुतः पुनः स्थिरसिद्धिः, प्रत्यभिज्ञानात्, तस्य पूर्वापरकालीनाभेदावगाहित्वात् क्षणिकत्वेऽनुगत-**
**प्रतीत्यनुपपत्तेः॥**

शाब्द्यामपीति, ननु प्रत्यक्षमनियन्त्रितविषयकमिति तत्र नयभेदविवक्षया भेदाभेदयोर्द्विधा भानं सम्भवति, शाब्दज्ञानं
तु शक्त्या लक्षणया वा शब्दोपस्थितार्थमात्रविषयकत्वान्नियन्त्रितविषयकमिति सोऽयमिति शाब्दस्थले द्रव्यार्थनयाश्रयणे भेदविशि-
ष्टाभेदस्तत्तेदन्ताविशिष्टयोस्संसर्गतया भासते पर्यायार्थिकनयाश्रयणे त्वऽभेदविशिष्टभेद इति भेदस्याभेदस्य वा प्राधान्येन तदितरस्य
च गौणतया भानेन प्रत्येकबोधसम्भवेऽपि नोक्तप्रकारेण द्विधा बोधस्सम्भवति, सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीति न्याया-
च्छब्दानां विरम्य व्यापाराभावाच्चेति चेत्, मैवं, सोऽयमिति शब्दस्यावृत्त्या तदुपपादने दोषाभावात् इत्याह–किन्त्यावृत्त्येति,

प्राथमिकाभेदबोधानुपपत्तिः स्याद्वादे नास्तीति न लक्षणाश्रयणेन कृत्यं, परं भेदबोधोऽपि ततो वाक्याद् भवतीत्येतदर्थं तदावृत्तिः कल्प्यते, तावताऽपि च सप्तधर्मविषयकसमूहालम्बनबोधात्तेसम्पस्तामन्तरेण च न परिपूर्णार्थबोध इति सप्तभङ्गीवाक्यमाश्रयणीयमेव, तथा च प्रथमभङ्गः स्यादयं सः, द्वितीयभङ्गश्च स्यादयमसः तृतीयभङ्गश्च स्यादयं सः स्यादयमसश्चेत्येवं क्रमेण सप्तभङ्गीप्रवृत्तौ प्राधान्येन भेदबोधस्य पर्यायार्थिकनयाश्रितस्य द्वितीयभङ्गेनैवोपपत्तेरावृत्त्या बोधाश्रयणमपि न कार्यमित्यावेदयितुमुक्तं समुच्चयबोधे त्विति, न कथमपीत्यनेनावृत्त्याऽपि न निर्वाह इति स्पष्टमावेदितम्। समुच्चयबोधः कथञ्चिद्भिन्नः कथञ्चिदभिन्न इत्यादिसप्तप्रकारावगाहिसमूहालम्बनबोधः। चतुर्थचरणार्थमाह–नयत इति, स्थैर्ये साधकबाधकमानाभावात्तत्संशये सति पृच्छति बौद्धः–कुतः पुनरिति, उत्तरं प्रत्यभिज्ञानादिति, तस्य पूर्वापरेति, तथा च पूर्वापरकालीनाभेदावगाहिप्रत्यक्षमेव स्थैर्ये प्रमाणमित्यर्थः। क्षणिकत्व इति, क्षणिकत्वाभ्युपगमे अनुगतगवादिप्रतीतिव्यवहारानुपपत्तेरित्यर्थः। उभयसंप्रतिपन्ने प्रतिक्षणं भिन्नभिन्नदीपकलिकासन्ताने सेयं दीपकलिकेत्यादिप्रत्यभिज्ञायामप्यप्रमाणभूतायां विद्यमानत्वेन प्रत्यभिज्ञानत्वं न सोयं घट इति प्रत्यभिज्ञाप्रामाण्यगमकमित्याशङ्कते—

**निश्चितार्थव्यभिचारज्वालादिप्रत्यभिज्ञासाधारणं प्रत्यभिज्ञानत्वं न प्रामाण्यप्रयोजकम्, न चात्र तत्प्रयोजकान्तरमीक्षामहे इति चेत्, अञ्जयामो वो युक्त्यञ्जनशलाकया लोचनं, पश्यत विरुद्धधर्मासंसृष्टविषयत्वमेव तत्। एवंभूतमपि कदाचिद्व्यभिचरेदिति चेत् ॥**

निश्चितार्थेति, तत्प्रयोजकान्तरमिति, प्रत्यभिज्ञानत्वभिन्नप्रामाण्यप्रयोजकमित्यर्थः, विरुद्धधर्मासंसृष्टविषयत्व-

मिति, विरुद्धधर्मासंसृष्टविषयविशेषितस्यैकत्वप्रत्ययस्यप्रत्यभिज्ञानत्वमित्यर्थः । तदिति, प्रामाण्यप्रयोजकमित्यर्थः ।

विरुद्धधर्मानास्कन्दितस्यैकत्वप्रत्ययस्य व्यभिचारे सर्वत्रैकत्वोच्छेदप्रसङ्गात् । तथा चानेकत्वमपि न स्यादिति सर्वशून्यतापातः । तस्माद्भेदप्रवृत्तावश्यं विरुद्धधर्मसंसर्गस्तदसंसर्गे चावश्यं भेदव्यावृत्तिरिति भेदाभेदव्यवहारमर्यादा । निष्कम्पप्रदीपकुड्मलेषु निपुणं निभालयन्तोऽपि न विरुद्धधर्मसङ्करमीक्षामहे अथ च प्रत्यभिज्ञानमवधूय तत्र भेद एव पदं विधत्ते इति चेत्, कस्य प्रमाणस्य बलेन, आश्रयनाशस्य हुताशननाशहेतुत्वेन निर्ज्ञातत्वात् तस्य चात्र प्रतिक्षणमुपलब्धेः, वर्तितैलयोरुत्तरोत्तरमपचीयमानत्वात् पूर्वस्य नाश उत्तरस्योत्पादश्च न्यायसिद्ध इति चेत् ॥

विरुद्धधर्मानास्कन्दितस्येति अत्र विरुद्धधर्मसंसर्गानास्कन्दितस्येति बौद्धाधिकारे पाठः । क्षणिकवस्तुन्येकत्वप्रतीतिरपि मिथ्या स्यादिति क्षणिकमप्येकं न स्यात्, तथा चैकत्वरूपप्रतियोगिनोऽसिद्धौ तत्पर्युदासरूपाभावात्मकस्यानेकत्वस्याप्यप्रसिद्धिः स्यादिति जगति शून्यतैव स्यादित्याह—सर्वत्रैकत्वेति, विरुद्धधर्मासंसृष्टविषयत्वहेतौ व्यभिचाराभावमेवोपसंहरति—तस्मादिति, ननु भेदप्रवृत्तावश्यं विरुद्धधर्मसंसर्ग इत्येव नियमो नास्ति, निष्कम्पप्रदीपकलिकासु भेदे सत्यपि विरुद्धधर्मसंसर्गाभावात्, तथाच विरुद्धधर्मासंसृष्टविषयविशेषितप्रत्यभिज्ञानत्वं हेतुस्तदेवेदं प्रदीपकुड्मलमिति प्रत्यभिज्ञाने वर्त्तते नच तत्र प्रदीपकुड्मलेषु भेदे सत्यप्यभेदावगाहित्वेन प्रामाण्यमिति व्यभिचारस्स्यादेवोक्तहेतावित्याशङ्कते—बौद्धः—निष्कम्पप्रदीपेति । नैयायिक आह—कस्य प्रमाणस्य बलेनेति, प्रदीपे केन प्रमाणेन भेदसिद्ध इत्यर्थः । भेदसाधकं प्रमाणमुपन्यसति बौद्धः—आश्रयनाशस्येति,

वर्त्तितैलादिरूपनिमित्तात्मकाश्रयनाशस्येत्यर्थः, पूर्वस्य नाश उत्तरस्योत्पाद इत्युक्त्यैव पूर्वोत्तरप्रदीपकुड्मलेषु नष्टत्वाऽनष्टत्वलक्षणनष्टाश्रयकत्वानष्टाश्रयकत्वलक्षणविरुद्धधर्मसंसर्गोऽभ्युपगत एवेत्युत्तरयति नैयायिकः—

नन्वयं प्रत्यनीकधर्मसंसर्ग एव, नष्टत्वानष्टत्वयोराश्रयनाशानाशयोर्वा एकत्र तेजस्यनुपपत्तेः, सोऽयं शतं शिरश्छेदेऽपि न ददाति विंशतिपञ्चकं तु प्रयच्छतीति किमत्र ब्रूमः, यथा लोकानुभवमेतत् । वस्तुतस्तूत्पन्नस्य वह्नेरवयवक्रियादिक्रमेण नाशो वह्न्यन्तरस्य तु कारणाभावादनुत्पादोऽवयवानां विशरारुस्वभावत्वाच्चाशुविनाशेऽनवरतानुभूयमानपरिमाणभेदः सिद्ध इति दीधितिकारः । तच्चिन्त्यम् । महापटनाशे खण्डपटस्येव महातेजोनाशेऽल्पतेजसोऽप्रतिबद्धावस्थितकारणेभ्य एवोत्पत्तिसम्भवात्, अनुभूयमानावयविभेदस्यावयवभेदेनैवोपपादनेऽवयविन एव जलाञ्जलिदानप्रसङ्गात् ॥

नन्वयमिति, आश्रयनाशेन पूर्ववह्नेर्नाशः अवशिष्टतत्तदवयवसंयोगैरुत्तरवह्नेरुत्पत्तिरित्यनवरतानुभूयमानपरिमाणभेदस्तद्गत एवेति प्राचीननैयायिकमतमुपदर्श्य अवयवक्रियाविभागारम्भकसंयोगनाशक्रमेण पूर्वस्यावयविभूतस्य वह्नेर्नाशः अवयवानां विशरारुत्वेनापरमाणुविनाशात्तत्संयोगानामपि विनाशेन नोत्तरस्य वह्नेरुत्पत्तिः, नवा वर्त्तितैलादिरूपनिमित्तकारणस्वकारणोपजातावयवान्तरतत्संयोगरूपसमवाय्यसमवायिकारणाभावेन वह्न्यन्तरस्य चोत्पत्तिः, अनुभूयमानह्रस्वह्रस्वतरादिपरिमाणभेदश्चावयवानां विशरारुत्वादाशुविनाशेन तद्गत एव, यदा त्ववयवान्तरेण वह्न्यन्तरस्योत्पत्तिस्तदा तु तद्गत एवेति नव्यसूत्रणसूत्रधारस्य शिरोमणेर्मतमुपदर्शयति—वस्तुत इत्यादिना, जलाञ्जलिदानप्रसङ्गादिति, अवयवसमुदायमात्रेणावयविव्यवहारोपपत्तेरिति भावः।

भवतु प्रामाण्यप्रयोजकं विरुद्धधर्माऽसंसृष्टविषयकत्वं ननु तत्प्रकृत इत्याशङ्कते—

भविष्यति तर्हीहापि व्याहतधर्मसंसर्गो दुरूह इति चेत् । अथ स एवायं स्फटिक इत्यत्र प्रमाणप्रतीतसंसर्गाणां विरोध आशङ्क्यते, उत प्रतीतविरोधानां संसर्गः, अथाप्रतीतस्वरूपविरोधधर्मिसंसर्गा एव केचिद्विरुद्धतया संसृष्टतया वेति । न प्रथमः । प्रागेव निराकृतत्वात् । न द्वितीयः । योग्यानामनुपलब्धिप्रतिहतत्वात्, अयोग्यानामपि कारणादिव्याप्यव्यापकविगमविलोकनव्यावर्त्तितत्वात् ॥ न तृतीयः, तस्यातिप्रसञ्जकतया सर्वत्रैकत्वोच्छेदप्रसङ्गादिति ।

भविष्यतीति, व्याहतधर्मेति, विरुद्धधर्मेति पाठान्तरम्, प्रमाणप्रतीतेति, सत्त्वद्रव्यत्वस्फटिकत्वादीनामित्यर्थः । प्रतीतेति, तत्प्रतीतेति पाठान्तरम्, गोत्वाश्वत्वादीनामित्यर्थः । अप्रतीतेति, न प्रतीतं स्वरूपं विरोधो धर्मिसंसर्गो येषां ते तथा, केचिद्धर्मा इहापि विरुद्धाः स्युरिति शङ्कामात्रमित्यर्थः, उभयत्र आशङ्क्यत इत्यनुषञ्जनीयम्, प्रागेवेति प्रमाणप्रतीतसंसर्गाणां सामर्थ्यासामर्थ्यकरणाकरणादीनां पूर्वमेव विरोधस्य निराकृतत्वादित्यर्थः । प्रतीतविरोधभाजो धर्मा अपि योग्यायोग्यभेदेन द्विविधाः, तत्राद्यपक्षमाश्रित्याह—योग्यानामिति, कारणादीति, आदिपदेन कार्यस्य सङ्ग्रहः, तस्यापि चरमसामग्रीनिवेशिकारणाव्यापकत्वात्, यद्यपि कार्यं व्याप्यं नच तन्निवृत्त्या व्यापकनिवृत्तिः तथापि व्यापकत्वे सति यद्व्याप्यं समनियतरूपं तदत्र विवक्षितं, यथा स्पर्शकम्पादि वायोः, व्यापकं विषमव्यापकं, तस्यैव द्रव्यत्वादि । प्रत्यभिज्ञाने विरुद्धधर्मासंसृष्टविषयके प्रामाण्ये सिद्धे तद्घटकं यद्विरुद्धधर्माऽसंसृष्टत्वं तेन लिङ्गेन स्थिरत्वसिद्धिरित्याह—

एवं च प्रत्यभिज्ञानादेव विरुद्धधर्मासंसृष्टत्वं लक्षणभागमाकृष्यानुमानेन स्थैर्यसिद्धिः । प्रत्यभिज्ञानस्यापि हेतुत्वे धूमप्रागभाववद्वैयर्थ्येऽपि तन्मात्रस्य व्यभिचारितया विशिष्टोपादानध्रौव्ये प्रथमोपस्थितत्वाद्विशेषणस्यैव हेतूकरणौचित्यात् । तथा हि–विवादाध्यासितो भावः कालभेदेऽपि न भिद्यते, विरुद्धधर्मासंसृष्टत्वात्, यो यद्भेदेऽपि न विरुद्धधर्मसंसृष्टो नासौ तद्भेदेऽपि भिद्यते, यथा प्रतिसम्बन्धिपरमाणुभेदेऽप्येकः परमाणुः, तथा चायं विवादाध्यासितो भावः, तस्मात् कालभेदेऽपि न भिद्यत इति । अत्र व्याप्तौ न कश्चिद्विप्रतिपद्यते, पक्षधर्मता तु प्रसाधितैवेति ॥ प्रत्यभिज्ञाने इदं पदार्थमुद्दिश्य तत्ताविशिष्टाभेदावगाहनात् तत्प्रामाण्यनिर्वाहायोत्तरकालीनो भावः पूर्वकालीनात् तस्मात् न भिद्यते तद्विरुद्धधर्मासंसृष्टत्वादिति प्रयोगार्थमाहुर्दीधितिकृतः । तेन पूर्वकालीनो भाव उत्तरकालीनाभिन्न इत्यादेः सम्भवतोऽप्युपेक्षा । सर्वभावानां क्षणिकाक्षणिकत्वान्यतरसाध्यत्वेऽनन्यथासिद्धानेककालानुगतव्यवहारबलात् क्षणिकत्वबाधादक्षणिकत्वसिद्धिरित्यपि कश्चित् । अनुगतव्यवहारश्च न देशकालानुगतमन्तरेति कुतः क्षणिकत्वम् ॥

एवञ्चेति, नन्वयं धूमावयवः धूमप्रागभावादित्यत्र यथा धूमप्रागभावहेतोर्न व्यर्थविशेषणघटितत्वं धूमत्वधूमप्रागभावत्वयोस्सामानाधिकरण्याभावात्, तथा विरुद्धधर्माऽसंसृष्टत्वत्वप्रत्यभिज्ञायमानत्वत्वयोस्सामानाधिकरण्याभावान्न विरुद्धधर्मासंसृष्टविषयकप्रत्यभिज्ञायमानत्वस्य व्यर्थविशेषणघटितत्वमिति किमिति न विरुद्धधर्मासंसृष्टत्वसहितमेव विषयतासम्बन्धेन प्रत्यभिज्ञानं प्रत्यभिज्ञायमानत्वं वा हेतूक्रियते इति चेत्, मैवम्, असमर्थविशेष्यत्वप्रसङ्गादित्याशयेनाह–प्रत्यभिज्ञानस्यापीति, क्षणिकोऽपि

भावः स्वस्माभ्र भिद्यत एवेति सिद्धसाधनं स्यादिति तन्निवृत्तये उक्तं—कालभेदेऽपीति । विरुद्धधर्मासंसृष्टत्वादिति तद्भेदेपि विरुद्धधर्माऽसंसृष्टत्वा दित्यपि पाठान्तरम् । तेनेति, पुरोवर्त्तिपदार्थे पूर्वकालीनपदार्थभेदसिद्धावेव तादृशाऽभेदावगाहिन्यां प्रत्यभिज्ञायां प्रामाण्यनिर्वाह इति तत्सिद्धिमूलकप्रामाण्यनिर्वाहायोक्तप्रयोगार्थकरणेनेत्यर्थः । अनुगतव्यवहारश्चेति, सर्वभावानां क्षणिकत्वेऽनन्यथासिद्धानेककालानुगतगवादिव्यवहारानुपपत्तिरक्षणिकत्वं साधयतीत्यर्थः । अनुगतव्यवहारस्यानन्यथासिद्धत्वमुपपादयति—

शब्दलिङ्गेन्द्रियजविकल्पा हि साधारणं रूपमनुपस्थापयन्तो न तृणकुब्जीकरणेऽपि समर्था इत्यविवादम्, अनुगतधर्मावच्छिन्नसमयनियमग्रहाधीनप्रवृत्तिकयोः शब्दलिङ्गयोर्गृहीतेष्टजनकजातीयत्वं रजतत्वादिकं समुल्लिख्य स्फुरतो विकल्पस्य च विनानुगतधर्ममप्रवृत्तेः, तच्चालीकं वा स्वाकारो वा बाह्यं वस्तु वेति त्रयः पक्षाः । यद्यपि विकल्पानामप्यनुगतो नीलत्वादिराकारोऽतद्व्यावृत्तिरूपत्वादलीक एव, तथापि बाह्याभ्यन्तरभेदेन पृथगुक्तिः । आद्यपक्षे विकल्पविषयस्यानुगतधर्मस्यालीकत्वं किं विकल्पेनैव गृह्यते, किं वा प्रमाणान्तरसिद्धम् । नाद्यो, विकल्पेन तस्यालीकत्वानुल्लेखात् ॥

शब्दलिङ्गेति, शाब्दलैङ्गिकप्रात्यक्षिकप्रतीतीनामनुगतरूपावगाहनाऽभावे प्रवृत्तिनिवृत्तिविषयावगाहनाभावेन विषयतासम्बन्धेन शाब्दादिप्रवृत्त्यादिसामानाधिकरण्याभावेन तयोः कार्यकारणभावाभावेन प्रवर्त्तकत्वं निवर्त्तकत्वं च न स्यादित्यर्थः । अनुगतेति, अनुगतधर्मावच्छिन्नसङ्केतग्रहाधीनप्रवृत्तिकस्य शब्दस्यानुगतधर्मावच्छिन्नव्याप्तिग्रहाधीनप्रवृत्तिकस्य लिङ्गस्य चेत्यर्थः । अन्वयश्चास्य विनानुगतधर्ममप्रवृत्तेरित्युत्तरेण, अविवक्षितविशेषं साधारणरूपमन्तरेण सङ्केतग्रहस्य व्याप्तिग्रहस्य च कारणस्या-

ऽभावेन तत्कार्यस्य शाब्दबोधस्यानुमितेश्चाऽभावेन तत्कार्यभूते प्रवृत्तिनिवृत्ती न स्याताम्, प्रवर्त्तकस्येष्टसाधनताज्ञानरूपस्य सविकल्पकज्ञानस्याप्यनुगतेष्टसाधनतावच्छेदकधर्मपुरस्कारं विनानुपजायमानत्वेन प्रवर्त्तकता न स्यादित्यर्थः। तच्चेति अनुगतरूपं पुनरित्यर्थः । ननु स्वाकारोऽतद्व्यावृत्तिरूपत्वादलीकरूप इति प्रथमविकल्पेनैव गतार्थं इति किमिति पृथगुक्त इति चेत्, उच्यते, अलीकं वेति विकल्पेन बाह्ये नीलादावतद्व्यावृत्तिरूपत्वादलीकं नीलत्वं बाह्यं गृहीतं, स्वाकारो वेति विकल्पेन च ज्ञानगतत्वादभ्यन्तरभूते स्वाकारेऽतद्व्यावृत्तिरूपत्वादलीकरूपो नीलत्वादिराकारोऽभ्यन्तररूप एव गृहीत इत्याह—यद्यपि विकल्पानामिति,

**तथात्वे वा प्रवृत्तिविरोधात् । नह्यलीकमेतदित्यनुभूयाप्यर्थक्रियार्थी प्रवर्त्तते । न द्वितीयो, विधिरूपस्यानुगतस्य स्फुरतो मानान्तरेणाप्यलीकत्वासिद्धेः, मानान्तरसिद्धालीकताकान्यनिवृत्तेश्च स्फुरणानभ्युपगमात् । न हि शब्दलिङ्गाभ्यामिह महीधरोद्देशेऽनग्निर्न भवतीति स्फुरणमपि त्वग्निरस्तीति। यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः, तथापि निवृत्तपदार्थोल्लेख एव निवृत्त्युल्लेखो, नह्यनन्तर्भावितविशेषणा विशिष्टप्रतीतिर्नाम, ततो यथा सामान्यमहं प्रत्येमीत्यनुव्यवसायासाधारणाकारस्फुरणाद्विकल्पधीः सामान्यबुद्धिः परेषां, तथा निवृत्तप्रत्ययाक्षिप्ता निवृत्तिबुद्धिरस्माकमिति चेत् ॥**

तथात्वे वा, अलीकत्वेनोल्लिख्यमानत्वे वा, तदेवोपपादयति—नहीति, प्राधान्येनान्यनिवृत्तेस्स्फुरणं निराकरोति—नहि शब्देति, ननु प्राधान्येनान्यनिवृत्तेस्स्फुरणाभावेऽपि धर्मिविशेषणतया तस्यास्स्फुरणसद्भावेन तद्विशिष्टस्फुरणेन तत्सिद्धिरप्यभ्युपगन्तव्या, विशिष्टबुद्धेर्विशेषणविषयकत्वनियमादित्याशयेनाशङ्कते—बौद्धः—यद्यपीति, विशिष्टभाने विशेषणभानमावश्यकमित्यत्र

दृष्टान्तमाह—यथेति, परेषां नैयायिकानाम्, तथेत्यादि, विशिष्टस्यातिरिक्तस्याभावेन विना विशेषणविषयत्वं विशिष्टविषयत्वानुपपत्तेर्निवृत्तबुद्धौ निवृत्तिविषयकत्वकल्पनम् आक्षेपः। यद्यगोव्यावृत्तोऽयमिति विकल्पस्स्यात्तदा तत्रोपसर्जनतया निवृत्तेरपि भानं स्यात्, नचैवमिति समाधत्ते—

न। न ह्यगोपोढोऽयमिति विकल्पः, किन्तु गौरिति; अनुव्यवसायविषयतावच्छेदकत्वेनास्फुरन्त्या अन्यनिवृत्तेर्व्यवसायविषयत्वे मानाभावात्, अन्यथा त्वतत्प्रतिभासे तत्प्रतीतिनिश्चयवृत्तिरिति गवाकारे चेतसि तुरगबोध इत्यपि स्यात्। न च निवृत्तिमात्रप्रतिभासे प्रवृत्तिसम्भवः, न ह्यपटो नास्तीत्येव प्रवर्ततेऽपि तु पटोऽस्तीति। अपटस्यैव निवृत्तिरिति प्रतीतौ नायं दोष इति चेत्, सोऽयमपटत्वावच्छिन्ननिवृत्तिप्रत्ययः स च विनातिरिक्तं पटत्वं दुर्वच इति। अन्यनिवृत्तेरस्फुरणे गोपदादश्वसाधारणप्रतीत्याऽश्वेऽपि प्रवृत्तिप्रसङ्ग इति चेत्। न। यद्धर्मविशिष्टे यस्य पदस्य संकेतग्रहस्ततस्तद्धर्मविशिष्टस्य प्रतीतिः, गोपदस्य सङ्केतश्च गोत्वविशिष्ट एव गृह्यत इति ततो गोत्वविशिष्ट एव प्रतीयते नाश्व इति दोषाभावात्॥

न, नह्यगोपोढोऽयमिति, यद्यपि गव्यन्यव्यावृत्तिर्वर्त्तते नच तथाप्यनुगतरूपा सा प्रकारतया गौरिति व्यवसाये भासते, किन्तु तत्र विधिरूपतयाऽनुगतं गोत्वमेव, गोत्वेनेमां जानामीत्यनुव्यवसाये ज्ञानान्वयितृतीयार्थप्रकारत्वान्वयितया विषयतावच्छेदकतया वा स्फुरतो गोत्वस्यैव व्यवसायनिरूपितप्रकारत्वौचित्यादित्याशयेनाह—अनुव्यवसायेति, विपक्षे दण्डमाह—अन्यथेति, गवाकारे गौरित्याकारे, चेतसि, ज्ञाने, अत्यन्ताभावरूपनिवृत्तिमात्रभाने दोषान्तरमाह—नचेति, यत्रापटस्य घटादेरिव

पटस्याप्यभावो वर्त्तते तत्राप्यऽपटो नास्तीति निवृत्तिमात्रोल्लेखिज्ञानमुत्पद्यते, न च ततः पटार्थिप्रवृत्तिरिति व्यभिचारान्न तत्प्रवर्त्तकं, किन्तु पटत्वेन पटज्ञानमेवेति भावः । पटविरहिण्यपि देशे अपटस्य घटादेरसत्त्वे अपटो नास्तीति प्रतीतेः पटार्थिनः प्रवृत्त्यसम्भवेऽपि तत्र पटस्यापि निवृत्तिसद्भावादपटस्यैव निवृत्तिरिति प्रत्ययो न भवतीति तस्य प्रवर्त्तकत्वे नोक्तव्यभिचारादिदोष इत्याशङ्कते-अपटस्यैवेति, पटाभाववति देशे अपटनिवृत्तिरिति प्रत्ययाऽसम्भवस्तदैव स्यात् यदि पटत्वावच्छिन्नप्रतियोगिताको यो भेदस्तदवच्छिन्नप्रतियोगिताकाभावस्यैवापटनिवृत्तिरूपतयाऽभ्युपगन्तव्यत्वेन तद्विषयक उक्तप्रत्ययस्स्यात्, अन्यथा पटस्य पटान्तरनिवृत्तिरूपत्वेनापटात्मकस्य तस्य निवृत्तेरप्यपटनिवृत्तिरूपतया पटशून्येऽपि देशे तत्प्रत्ययस्स्यादेव, तथा च प्रथमाभावप्रतियोगितावच्छेदकतया पटत्वाद्यभ्युपगमः कर्तव्य एवेति लाघवात्तज्ज्ञानमेव प्रवर्त्तकमभ्युपगन्तव्यमित्याशयेन समाधत्ते—सोऽयमिति, अन्यनिवृत्तेरस्फुरणे गोत्वाश्वत्वयोर्भेदेनाज्ञाने सति सङ्केतबलेन गोपदाद् गोत्वविशिष्टस्य ग्रहणेऽपि गव्येव प्रवृत्तिर्नाश्वे इति नियमः कथं, गोत्वस्याश्वत्वभिन्नतया ग्रहणाभावेऽश्वस्यापि गोत्वरूपेण गोत्वविशिष्टबुद्धौ भानापत्तेरित्याशङ्कते-

गोत्वस्यैवाश्वत्वव्यावृत्त्यस्फुरणे कथं ततोऽपि नियम इति चेत्, अगोव्यावृत्तेरनश्वव्यावृत्तितोव्यावृत्तिः स्फुरति न वा, आद्ये तत्राप्याश्वासे निवृत्त्यन्तरापेक्षायामनवस्था । द्वितीये स्वस्वरूपेणैव भिन्ना निवृत्तिर्भासते तेन प्रतिनियम इति यदि, तदा विधेरपि तादृशस्यैव भानान्नियमो भविष्यतीति को दोषः । व्यावृत्तेर्निःस्वरूपतया स्वरूपभेदो न सम्भवति, किन्तु सा स्वत एव व्यावृत्ता, विधिस्तु सस्वरूप इति तस्यैव स्वरूपभेदः, स चान्यस्यापोह इति स्वरूपभिन्नस्य तस्य भानेऽन्यापोहभानमावश्यकमिति चेत्, स्वरूपभिन्नो विधिरवास्तवो

भासते वास्तवो वा, आद्येऽलीकस्य निःस्वरूपतायास्त्वयैवोक्तत्वात्, सस्वरूपत्वेऽलीकत्वव्याघातः ॥ द्वितीये स्वलक्षणस्य निर्विकल्पकमात्रवेद्यतायास्त्वयोक्तत्वात् तस्य विकल्पारोहानुपपत्तिः । अस्माकं तु विकल्पविषयस्यान्यापोहशालिनोऽपि विधेः स्वरूपेण स्फुरणं न विरुद्धमिति भावः । अपि च गोशब्दादन्यव्यावृत्तिभानं किं गवि प्रवृत्तये स्वीक्रियते, किं वाऽश्वे तदभावाय, उताश्वानिवृत्तये, नैकमप्यत्र चारु, यतो गोशब्दात् प्रत्यक्षतश्च प्रतीते गवि प्रवर्त्तते नाश्वे, तस्य गोशब्दार्थत्वाभावात्, इन्द्रियासन्निकर्षाच्चाप्रवृत्तेः, प्रवृत्तौ प्रवृत्तिविषयप्रत्यक्षस्यापि हेतुत्वात् ॥

गोत्वस्यैवेति, अगोव्यावृत्तेरप्यनश्वव्यावृत्तितो व्यावृत्तिस्फुरणपक्षे अनश्वव्यावृत्तिव्यावृत्तावप्यनश्वव्यावृत्त्यात्मकप्रतियोग्यादितो व्यावृत्तिस्स्फुरतीत्यभ्युपगन्तव्यम्, तत्राप्येवम्, एवमग्रेऽपि, अग्रे गत्वा कस्यांचिदनश्वव्यावृत्तिव्यावृत्तावनश्वव्यावृत्तिव्यावृत्तेरस्फुरणाभ्युपगमे तस्या अनश्वव्यावृत्तिरूपत्वापत्त्या तत्पूर्वपूर्वस्या अपि तथात्वापत्तिः, तथा चागोव्यावृत्तावनश्वव्यावृत्तिव्यावृत्तिभाने तस्या अनश्वव्यावृत्तिरूपतया तस्या अपि भानाद् गोत्वाश्वत्वयोरैक्यापत्त्याऽश्वेपि गवार्थिप्रवृत्तिप्रसङ्ग इति सर्वास्वपि व्यावृत्तिपरंपरासु व्यावृत्तिस्फुरणमभ्युपगन्तव्यमित्यनवस्थेत्याह -आद्ये तत्रापीति, अनश्वव्यावृत्तितोऽगोव्यावृत्तिस्स्वरूपेणैव भिन्नेत्यगोव्यावृत्तिस्वरूपभाने तदात्मकानश्वव्यावृत्तिव्यावृत्तिरपि भासत एवेति नातिरिक्तव्यावृत्तिनिबन्धनाऽनवस्था, नवाश्वेऽपि प्रवृत्तिः, तर्हि गोत्वस्यापि स्वरूपमेवाश्वत्वभेद इति गोत्वस्वरूपभाने तदात्मकाश्वत्वभेदो भासत एवेति गोज्ञानान्नाश्वे प्रवृत्तिरित्याह–द्वितीये स्वस्वरूपेणैवेति, तादृशस्यैवेति स्वस्वरूपेण भिन्नस्यैवेत्यर्थः । स्वरूपलक्षणो भेदो यः प्रागुक्तस्सो-

ऽलीकत्वेन निस्स्वरूपायां व्यावृत्तौ न सम्भवति विधित्वापत्तेः, किन्तु सा व्यावृत्त्यन्तरमन्तरेणैव व्यावृत्ता, विधिस्तु न निस्स्वरूप इति तत्र स सम्भवति, स्वरूपभेद एवान्यापोहः, अन्यापोहस्वरूपत्वाद्विधेः, तथा चाश्वत्वभेदो गोत्वस्वरूप एवेत्यश्वत्वभिन्नस्य गोत्वस्य भानेऽश्वत्वव्यावृत्तिभानमावश्यकमित्याशङ्कते बौद्धः—व्यावृत्तेर्निस्स्वरूपतयेति, अवास्तवशब्दस्यालीकार्थकत्वादाह—अलीकस्येति, उक्तत्वादिति, तथा च निस्स्वरूपस्य तस्य स्वरूपभिन्नतया भानं व्यावृत्तेरिवायुक्तमिति भावः । विधिस्स-स्वरूपश्चेदभ्युपगम्यते तर्ह्यवास्तवत्वव्याघात इत्याह—सस्वरूपत्वे इति, तस्य स्वलक्षणात्मकविधेः ।

यदा त्विन्द्रियसन्निकर्षाद्गोसाधारणाकारमश्वमुपलभते, तदा गवाशङ्कया प्रवृत्त्युन्मुखोऽपि तत्र गोरन्योन्याभावं प्रतीत्य निवर्त्तते, यदा त्वयं गौरिति भ्राम्यति तदा प्रवर्त्तत एवेति । स्यादेतत् नह्यनुभवमभिभूय भवितुं क्षममिति को विधेः स्फुरणमपन्हुतां, तदुपसंजनीभूतस्तु निषेधोऽपि परिस्फुरत्येव, अन्यथा विधेर्विशेषणत्वानुपपत्तेः, नह्यन्यतो विशेष्यमव्यावर्त्तयतो विशेषणत्वं नाम, न चान्यतो व्यावर्त्तनं व्यवच्छित्तिमप्रत्यायनादन्यत्, ततो यथेन्दीवरपुण्डरीकादिशब्देभ्यो गुणीभूतनीलधवलादिविधिशेखरा प्रतीतिः, तदन्यव्यवच्छेदस्तु तद्गर्भीभंकायमाणस्तथा सर्वत्रेति चेत् ॥

यदा त्विति, गोप्रवृत्तिं प्रति न गोविशेष्यकं प्रत्यक्षं कारणं, येनाश्वेऽपि गोसंशयात्प्रवृत्त्या व्यभिचारस्स्यात्, किन्तु गोत्वप्रकारकं ज्ञानं, तच्च यदि गवि तदा प्रमात्मकत्वात्संवादिप्रवृत्तिः, यदान्यत्र तदा भ्रमत्वाद्विसंवादिप्रवृत्तिरिति भावः, विशेषणं तावदितरव्यावृत्तिबोधजनकं विशेषणजन्या च विशिष्टबुद्धिरेवेति तस्यामवश्यमितरव्यावृत्तिर्भासत इत्याशङ्कते-स्यादेतदिति,

व्यवच्छत्तिप्रत्यायनादिति अन्यव्यावृत्तिज्ञानादित्यर्थः। इन्दीवरं नीलोत्पलम्, पुण्डरीकं सितपद्मम्, सर्वत्रेति, गोमहिषादिप्रतीतावपीत्यर्थः। विशेषणविशेष्यसम्बन्धावगाहिविशिष्टबुद्धिः प्रागेव भूत्वा पश्चादितरव्यावृत्तिबुद्धिं जनयतीति वस्तुस्थितिः प्रदर्श्य विधिस्फुरणं भवतीत्यत्र नो निर्बंधः तच्च स्वीकृतमेव त्वया एतावतैव वयं कृतार्था इति स्वाशयं नैयायिकः प्रदर्शयति–

**अत्र यद्यपि विशेषणं नागृहीतं नाप्यगृहीतविशेष्यसम्बन्धमन्यव्यावृत्तिबुद्धिमाधत्ते, परं तु विशेष्यगृहीतसंबन्धं, स एव च ग्रहो विशिष्टबुद्धिस्तदधीना तु पश्चात्तनीतरव्यावृत्तिबुद्धिरिति वस्तुस्थितिः, तथापि विधिस्फुरणमात्रेणैव सम्प्रति कृतार्थत्वाद्, अन्यथाऽवच्छेद्यावच्छेदकतयोरप्रतीत्यावच्छित्तिरपि न स्यात्, यथोत्पलादावेव नीलत्वाद्यप्रतीतौ। अपि च यत्किञ्चिदितरव्यावृत्तिरतिप्रसक्ता, यावदितरव्यावृत्तिश्च यावदितरानवगतौ दुरवगमा॥**

अत्र यद्यपीत्यादिना, अन्यथेति, यदि विशिष्टज्ञाने विधिरूपयोर्विशेष्यविशेषणयोरवगाहनाभावेन तत्प्रतीतिर्न स्यात्तदेतरव्यावृत्तिबुद्धिरपि न स्यात्, गौबुद्धौ गोत्वभानानभ्युपगमेऽन्यतो व्यावर्त्तनीयस्य गोर्व्यावर्त्तकस्य च गोत्वस्याप्रतीत्याऽश्वादिव्यावृत्ता गौरिति व्यावृत्तबुद्धिर्न स्यादिति भावः। तत्र दृष्टान्तमाह–यथेति, नीलं नीलत्वमुत्पलमुत्पलत्वं च यदि न भासते तदाऽनीलादनुत्पलाद्व्यावृत्तिर्न भासत एवेत्यर्थः। गोबुद्धौ भासमानाऽगोव्यावृत्तिर्यत्किञ्चिदगोव्यक्तेर्व्यावृत्तिरूपा वा स्यात् किंवा यावदगोव्यक्तीनां व्यावृत्तिरूपा, तत्र नाद्यः इत्याह–यत्किञ्चिदितरेति, अतिप्रसक्तेति महिषादिरूपाया यत्किञ्चिदगोव्यक्तेर्व्यावृत्तेरश्वादावपि सत्त्वेन तदवगाहिगोविकल्पात्तत्रापि प्रवृत्तिस्स्यादित्यर्थः। द्वितीयपक्षोऽपि न सम्भवतीत्याह–याव-

दितरेति–अभावज्ञाने प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणत्वेन नहि यावदितरव्यक्तीनां प्रतियोगिभूतानां प्रति-
योगितावच्छेदकरूपेण ज्ञानाभावे तद्व्यावृत्तिरूपतदभावज्ञानं शक्यमित्यर्थः, प्रतियोगितावच्छेदकश्च द्विधा एकोऽश्वमहिषादिगत-
तत्तद्व्यक्तित्वात्मकाननुगतधर्मरूपः, तदन्यस्त्वश्वत्वमहिषत्वादिरूपानुगतधर्मात्मकः, न चैकेनापि तेन धर्मेण व्यावृत्तिप्रतियोगि-
भूतानां यावदगोव्यक्तीनां ज्ञानं जन्मसहस्रेणापि शक्यमित्याह–

**न च सर्वेषामितरेषां प्रातिस्विकरूपेणाश्वत्वादिना वा भानं जन्मनां सहस्रेणापि शक्यम्,। ताद्रूप्ये-
णाप्रतीतानां च गवां विकल्पवासनयाप्युपस्थानशक्यम्, मेयत्वादिना चोपस्थितिर्न भेदनिरूपणक्षमा, प्रति-
योगितावच्छेदकरूपेण प्रतियोग्युपस्थितिं विना तदसम्भवात्। यत्किञ्चिद्गवेतरत्वं तु गवान्तरसाधारणं,
गोमात्रेतरत्वे न च भाने गोत्वं भाविकमवश्यमभ्युपेयं, गवेतरेतरत्वस्यैव गोत्वरूपत्वे गवेतरत्वरूपनिषेधेवि-
शिष्टज्ञाने तज्ज्ञानं तज्ज्ञाने च गोत्वावच्छिन्नेतरत्वज्ञानमित्यन्योन्याश्रयस्य स्फुटत्वात्। तदुक्तं 'सिद्धश्चा-
गौरपोह्येत गोनिषेधात्मकश्च सः॥ तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते॥ १॥ इति। परानपेक्षनिरूप-
णे तु विधौ नायं दोषः एवं च प्रतीतावितरेतराश्रयत्वमुक्तम्॥**

नच सर्वेषामिति, अत्र न च भवतां वस्तुभूतमश्वत्वादिकमप्यभ्युपगतमित्यपि बोध्यम्। ताद्रूप्येणेति,
यावदितरव्यावृत्तिमत्त्वेनेत्यर्थः। अत्र ताद्रूप्येणाप्रतीतानां वाऽगवां विकल्पवासनयाऽप्युपस्थापनमशक्यमिति बौद्धधिकारे पाठः।
तत्र ताद्रूप्येणेति अश्वादिगततत्तद्व्यक्तित्वेनाश्वत्वमहिषत्वादिना वा प्रतियोगितावच्छेदकरूपेणेत्यर्थः। ननु माभूद्गवे-

तराणामुक्तप्रतियोगितावच्छेदकरूपेण ज्ञानं, प्रमेयत्वादिना तु भविष्यत्येवेत्याशङ्कायामाह–**मेयत्वादिनेति**, भेदनिरूपणाक्षमेति, यावदगोव्यावृत्त्यात्मकभेदज्ञानोत्पादिकेत्यर्थः । अगोव्यावृत्तिघटकता यथा गवेतराणां तत्तद्व्यक्तित्वेनाश्वत्यादिना वा न सम्भवति तथा गवामपि यत्किञ्चिद्गोव्यक्तित्वेन गोमात्रगतं यद्गोत्वं तद्रूपेण वा न सम्भवतीत्याह–**यत्किञ्चिद्गवेतरत्वमिति**, अगोव्यावृत्तिघटकं यद्यगोत्वं यत्किञ्चिद्गोव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदरूपं, तदा चालनीन्यायेनागोत्वमेव यावत्सु गोष्विति तत्रागोव्यावृत्त्यसम्भवात्तद्रूपेण गोज्ञानाभावाद् गोष्वपि प्रवृत्तिर्न स्यादिति भावः । गोमात्रस्य गोत्वावच्छिन्नरूपत्वाद् गोमात्रगतं रूपं गोत्वमेवेति तद्रूपेणागोव्यावृत्तिघटकतया गवां भानाभ्युपगमे गोत्वं परमार्थभूतमवश्यमभ्युपगन्तव्यमित्याह–**गोमात्रेतरत्वेनेति** । ननु गोत्वमप्यगोव्यावृत्तिरूपमेवेति तस्य विध्यात्मकतयाभ्युपगमदोषो नेत्यत आह–**गवेतरेतरत्वस्यैवेति**, **गवेतरत्वरूपनिषेधविशिष्टज्ञान** इति, गवेतरत्वरूपो गोत्वावच्छिन्नप्रतियोगिताकभेदरूपो यो निषेधस्तदात्मकप्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञान इत्यर्थः । **तज्ज्ञानं** गवेतरेतरत्वरूपगोत्वज्ञानं, **तज्ज्ञाने** गवेतरेतरत्वरूपगोत्वज्ञाने । अत्र श्लोकवार्तिकसम्मतिमाह–**तदुक्तमिति**, **सिद्धश्चागौरिति** एतच्छ्लोकानन्तरं " सचेदगोनिवृत्त्यात्मा, भवेदन्योन्यसंश्रयः । सिद्धश्चेद् गौरपोह्यार्थं वृथाऽपोहप्रकल्पना । १ । गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः । इति सार्द्धश्लोकस्योपयोगत्वाद्दृश्यः, अयमर्थः अगोव्यवच्छेदेन गोः प्रतिपत्तिः स चागौर्गोनिषेधात्मा, ततश्चागौरित्यत्रोत्तरपदार्थो वक्तव्यो, यो न गौरगौरित्यत्र नञा प्रतिषिध्यते, नह्यनिर्ज्ञातस्वरूपस्य निषेधः शक्यते विधातुम् । अथापि स्यात् किमत्र वक्तव्यं, अगोनिवृत्त्या गौः, नन्वेवमगोनिवृत्तिस्वभावत्वाद्गोरगोप्रतिपत्तौ तत्प्रतीतिः, अगोश्च गोप्रतिषेधात्मकत्वाद्गोप्रतिपत्तौ तत्प्रती-

तिरिति स्फुटमितरेतराश्रयत्वमिति, यदि त्वगोसिद्ध्यर्थं विधिरूपो गौरङ्गीक्रियते तत्र वृथाऽपोहवागित्याह-सिद्ध इति, इतरेतराश्रयं विवृणोति-गव्यसिद्ध इति, ननु भावोऽप्यभावविरहरूप इति परस्पराश्रयत्वं तथैव स्यादित्यत आह-परानपेक्षेति, अभावविरहरूपतया भाने तथात्वेऽपि गोत्वादिना विधिरूपेण भाने नोक्तदोष इत्यर्थः । अन्योन्यज्ञानाधीनमन्योन्यज्ञानमिति नैयायिकोक्तमन्योन्याश्रयमन्योन्यसङ्केतग्रहाधीनमन्योन्यसङ्केतग्रहणमिति छलतस्सञ्चार्य ज्ञानश्रीनाम्ना बौद्धेन यत्समाहितं तदेतद् ग्राम्यजनस्य पामरजनस्य व्यामोहनं ननु परिक्षकस्येत्याह-एवञ्च प्रतीताविति, ज्ञानश्रीसंज्ञकबौद्धोक्तसञ्चारपरिहारावेवोपदर्शयति-

सङ्केते सञ्चार्य यत् पतिहृतं ज्ञानश्रिया, तद् ग्राम्यजनध्यान्धीकरणमात्रं, गोलकादिवत् स्थानान्तरसञ्चारात्, अगोव्यावृत्तो गोपदवाच्य इति वाक्याद्गोपदशक्तिग्राह्या,, तद्वाक्यप्रवृत्तिश्च गोपदशक्तिग्रहाधीनेति यद्यन्योन्याश्रयः, तदा गौर्गोपदवाच्येत्यत्रापि स स्यात्; यदि च प्रत्यक्षादिनोपस्थिते गोत्वविशिष्टे व्यवहारादयं गोपदवाच्य इति वाक्याद्वा सङ्केतग्रह इति नान्योन्याश्रयस्तदा तथैवोपस्थिते गवेतरापोढे तत एव न स इति सञ्चारपरिहारौ । स्फुरतु विध्यलीकमिति चेत्; किं विधिस्वरूपमलीकं, किं वा विधित्वेनारोपितम्, किं वाऽगृहीतभेदकमिति ३ । आद्ये व्याघातः ॥

अगोव्यावृत्त इत्यादिना, गोपदशक्तिग्रहाधीना अगोव्यावृत्तिघटकगोपदशक्तिग्रहाधीना, दोषसाम्यमभिधाय परिहारसाम्यमाह-यदि चेति, न्यायमते परिहारमाह-प्रत्यक्षादिनेति, व्यवहारादिति सङ्केतग्रह इत्यनेनान्वयि, ज्ञानश्रीस्वमतेन परिहारमाह-तदेति, तत एव न स इति व्यवहारादित एव सङ्केतग्रह इति नान्योन्याश्रय इत्यर्थः, 'तत एव स' इति

बौद्धाधिकारे पाठः, सः सङ्केतग्रहः, किंवाऽगृहीतभेदकमिति 'किंवाऽगृहीतव्यक्तिभेदकमिति' बौद्धाधिकारे पाठः, व्याघातमेव स्फुटयति––

किञ्चिदिति हि विध्यर्थो न किञ्चिदिति चालीकार्थ इति, स्वरूपव्यावृत्त्याऽनुगतस्य विधेरलीकत्वमिति चेत्, किमतद्रूपव्यावृत्त्या, रूपमात्रव्यावृत्त्या वा, आद्ये स्वलक्षणस्याप्यलीकत्वप्रसङ्गः। द्वितीये तु रूपमात्रपरावृत्तौ कथं विधिर्नाम। द्वितीयपक्षेऽपि किमलीके स्वलक्षणरूपो विधिरारोप्यते, सामान्यरूपो वा। नाद्यः। स्वलक्षणविधेर्विकल्पासंस्पर्शात्। न द्वितीयः। सामान्यविधेरन्यत्राप्यनभ्युपगमात्। तथा चारोपासम्भवात्, क्वचित् प्रसिद्धस्यैव क्वचिदारोपात्, परिशेषादलीकविधौ तव मते विरोधस्यैव स्थितेस्तत्र भासमानस्य विधित्वस्य तदीयस्य वक्तव्यत्वात्, भेदाग्रहाद्विधिव्यवहारमात्रेण तृतीयस्तु सम्भवेदपि, यदि स्वलक्षणमपि विधित्वमपहाय स्फुरेत् यदि चालीकमपि निषेधरूपतां परिहृत्य प्रकाशेत, न चैवम्।

किञ्चिदितीति, स्वरूपव्यावृत्त्याऽलीकत्वम् अनुगतविधिव्यवहारविषयतया च विधित्वमिति तयोरविरोधस्स्यादित्याशङ्कते–स्वरूपव्यावृत्त्येति, अस्यालीकत्वमित्यनेनान्वयः, अलीकत्वप्रसङ्ग इति स्वलक्षणेऽपि स्वभिन्नव्यावृत्तिमत्त्वादिति भावः। ननु स्वलक्षणस्य नालीकत्वप्रसङ्गः, पररूपव्यावृत्तिमत्त्वेऽपि स्वरूपव्यावृत्त्यभावात्, विधौ त्वलीकत्वं स्यादेव स्वपररूपमात्रव्यावृत्तेरिति चेत्, तर्हि तत्र विधित्वस्वरूपमपि परिहृतं स्यादित्याह–द्वितीये त्विति, स्वलक्षणविधेरिति 'आरोपस्य विकल्परूपत्वेन स्वलक्षणात्मकविधेस्त्वन्मतेन तदविषयत्वादित्यर्थः। सामान्यविधेरिति, नहि क्वचिदपि कश्चित्सामान्यरूपो विधिरभ्युपगतो

भवता, योऽलीके आरोप्येत, तथा च सामान्यस्यानुगतस्य वस्तुभूतस्यानभ्युपगमेन स्वलक्षणादौ कुत्राप्यऽसत्त्वेनाप्रमितत्त्वान्नाली-केऽप्यारोपस्सम्भवतीत्यर्थः । अन्यत्राप्रसिद्धस्यान्यत्रारोपाऽसम्भवादलीके आरोपप्रकारतया भासमानं विधित्वं सामान्यात्मकविधावेव प्रसिद्धं वाच्यं, तथाच तत्रालीकत्वाभ्युपगमे तव मते विरोध एव स्यादित्याह–परिशेषादिति, तृतीयपक्षमाशङ्कते–भेदाग्रहादिति, विध्यलीकयोरिति शेषः, मात्रपदमारोपव्यवच्छेदार्थम्, भेदाग्रहस्तयोरेव भवति ययोस्स्वस्वासाधारणधर्मेण परिस्फुरणं न भवति, भवति चोभयसाधारणधर्मेण परिस्फुरणं, न चेह तत्सम्भवः, स्वलक्षणात्मकविधेर्विधिस्वरूपतयाऽलीकस्य च निषेधरूपतयैव भानात्, द्वयोर्बौद्धमते निर्द्धर्मकतया साधारणरूपस्य चाऽभावेन तेनाभानात्, तथाच द्वयोरपि विधित्वालीकत्वाभ्यां भाने सति कथं भेदाग्रहः, नहि शुक्तित्वेन भासमानायाश्शुक्तेः रजतत्वेन भासमानस्य च रजतस्य भेदाग्रहस्सम्भवतीति न तृतीयपक्षसम्भव इत्याशयेनाह–सम्भवेदपीत्यादि, निषेधरूपतां विधिविलक्षणरूपताम्,–

उभयोरपि निरंशतया प्रकारान्तरमुपादायाप्रथनात्, ततः कथं भेदाग्रहनिमित्तकोऽभेदव्यवहारः, व्यावर्त्तकेन रूपेणानुपस्थितयोरुपस्थितयोश्च साधारण्येन तत्सम्भवादिति मन्तव्यम् । न च विनापि साधारणं रूपमुपस्थितयोर्व्यावर्त्तकविधित्वनिषेधत्वाग्रहेण भेदाग्रहादभेदव्यवहार इत्यपि साम्प्रतम् । स्वतो विलक्षणतदुभयातिरिक्तयोर्विधित्वनिषेधत्वयोर्भवता तत्रानभ्युपगमात्, तव तयोर्निर्धर्मकत्वस्थितेः ॥

उभयोरपीति, भवतामिति शेषः, निरंशतया निर्द्धर्मकतया, प्रकारान्तरं साधारणरूपम्, तत्र हेतुमाह–व्यावर्त्तकेन रूपेणेति, स्वस्वासाधारणरूपेणेत्यर्थः, साधारण्येनेति, अत्र साधारणेनेति पाठो युक्तः, अन्यत्र तथा दर्शनात्, तत्सम्भवादिति,

भेदाग्रहनिमित्तकाभेदग्रहसम्भवादित्यर्थः, भेदाग्रहात्स भवेत् न चेह तत्सम्भव इति भावः । विधेर्विधित्वं निषेधस्य च निषेधत्वं नातिरिक्तं किञ्चिद् भवताऽभ्युपगतमिति विधिभानमेव विधित्वभानं निषेधभानमेव च निषेधत्वभानमिति व्यावर्त्तकीभूतेनासाधारणधर्मेण स्वस्वरूपात्मकेनाग्रहणे ग्रहणमेव तस्य न स्यादिति तद्ग्रहणान्यथानुपपत्त्या तदात्मक एव व्यावर्त्तकधर्मग्रहोऽभ्युपगन्तव्यो भवतेति तत्सत्त्वे भेदग्रह एव स्यान्नतु भेदाग्रह इति कुतस्तन्निमित्तकोऽभेदव्यवहार इत्याशयेन निषेधे हेतुमाह नैयायिकः—स्वतो विलक्षणेति,

निर्धर्मकयोरपि तयोः काल्पनिकाभ्यामेव विधित्वनिषेधत्वाभ्यां सह काल्पनिको धर्मधर्मिभावो भविष्यतीति चेत् ।नैवम् । नित्यं विशेषदर्शनग्रस्तत्वात् । अथासत्ख्यात्युपनीतस्य विधित्वस्य निषेधत्वस्य च विधौ निषेधे च ग्राहको विकल्प एव विशेषदर्शनम्, अतस्तद्विरहदशायां भेदाग्रहो न विरुध्यत इति चेत् । न । तव विधेर्विकल्पासंस्पर्शात् असत्ख्यातिनिरासात्,गोत्वादौ प्रतीयमानस्य विधित्वस्य वास्तवत्वे बाधकाभावाच्च । साधारणं च रूपं विकल्पगोचरो न चालीकं तथा भवितुमर्हति, तस्य हि देशकालानुगमो न भाविकः तुच्छत्वात्, न काल्पनिकः, स हि किं कल्पनौपाधिकः, अन्यदीय एव वा कल्पनाया विषयः ॥

निर्धर्मियोरपि तयोः, स्वलक्षणात्मकविध्यलीकयोः परमार्थभूतधर्मशून्ययोरपि, धर्मधर्मिभावो भविष्यतीति, तथाच काल्पनिकविधित्वनिषेधत्वयोरग्रहणादेव भेदाऽग्रहो भविष्यति तेन चाभेदव्यवहार इति भावः । विशेषदर्शनेति, विधौ विधित्वस्य निषेधे निषेधत्वस्य च विशेषस्य नित्यं ग्रहणमेवास्तीति भेदाग्रहस्यैवाऽसम्भवादिति भावः, विकल्पो हि धर्मधर्मिग्रहणा-

त्मकः, न च भवतां मते तत्र काल्पनिकविधित्वादिधर्मभावेऽपि स्वलक्षणविध्यात्मकधर्मी भासत इत्युक्तविकल्पात्मकविशेषदर्शनस्यैवाभावेन कुतस्तद्विरहाद्भेदाग्रह इत्याह–तव विधेरिति । प्रकारान्तरेण वास्तवविधिस्फुरणं साधयति–साधारणं चेति, साधारणं बहुतरदेशकालानुगतम् । तथा साधारणं रूपम्, अलीकं साधारणं कथं नेत्याकाङ्क्षायां तस्य तत्त्वाभावमुपपादयितुमाह–तस्येति, किं कल्पनौपाधिक इति, तथाच स्वधर्म एव बहुदेशकालसम्बद्धः कल्पनया गोत्वादौ गृह्यते इति भावः ।

आद्येऽपि संबन्धो विषयित्वं वृत्तिर्वा । नाद्यो गोत्वादिर्नानादेशकालसम्बद्धविषय इति प्रतीत्यापत्तेः । न द्वितीयः । कल्पनायाः क्षणिकत्वेन तद्वृत्तेरनुगतस्यासम्भवात् । नापि द्वितीयः पक्षो युक्तः, अन्यत्रासिद्धस्यान्यत्रानारोपादसत्ख्यातेश्च निरासात् । अननुगतानामेवालीकानां भेदाग्रहादभेदारोपेणानुगतव्यवहारः स्यादिति चेत्, अलीकानां भेदः पारमार्थिको वा परमार्थसत्ताको वा आरोपितो वाऽऽरोपितासत्ताको वाऽलीको वा व्यधिकरणो वेति षट् पक्षाः । नाद्यः, भाविकस्य भेदस्याभावात् । भावे वा काल्पनिकत्वव्याघातात्, तद्गतभेदस्य पारमार्थिकत्वे तस्यापि पारमार्थिकत्वापातात्, असतः सदाश्रयत्वानुपगमाच्च ॥

गोत्वादिर्नानादेशकालसम्बद्धविषय इतीति, नानादेशकालविषयककल्पनाविषयो गोत्वादिरित्याकारकेत्यर्थः । कल्पनाया एव क्षणिकत्वेन तत्र नानादेशकालानुगमस्यैवासम्भवेन तदुपाधिकमनुगतत्वं गोत्वादावपि कथमित्याशयेन द्वितीयपक्षं निषेधयति–न द्वितीय इति । नापि द्वितीय इति, गोत्वादिकं यद्यप्यलीकमननुगतं च तथाप्यन्यत्र दृष्टस्य देशकालानुगमस्य तत्रारोप इत्याकारपर्यवसितोऽन्यदीय एव वा कल्पनाया विषय इति द्वितीयपक्षोऽपि न युक्त इत्यर्थः, निषेधे हेतुमाह–अन्यत्रा-

सिद्धस्येति, देशकालानुगमस्य भवता गोत्वादिभिन्ने कुत्रापि प्रमितस्यानभ्युपगमेन गोत्वादावारोपासम्भवादित्यर्थः। नह्यप्रमि-
तमारोप्यत इति न्यायो नाभ्युपगम्यत इत्यसत्ख्यातिगोचरस्यापि तस्यारोपस्स्यादेवेत्याशङ्कायामाह–असत्ख्यातेश्चेति। भा-
विकस्येति, अलीकानां तावत्पारमार्थिको भेद एव नास्ति यदग्रहादनुगतप्रत्ययस्स्यादित्यर्थः। ननु पारमार्थिकभेदे को दोष इ-
त्यत आह–भावे वेति, तदेव विशदयति–तद्गतभेदस्येति, अलीकगतभेदस्येत्यर्थः। तस्यापि अलीकस्यापि, अलीकानां पार-
मार्थिकभेदाश्रयत्वाभ्युपगमे अपसिद्धान्तदोषमप्याह–असत इति, तथा चालीकस्य पारमार्थिकभेदनिरूपिताधिकरणत्वानुपपत्ति-
रिति भावः। अलीकानां भेदस्यालीकेष्वसत्त्वे यदि पारमार्थिकं तदा तत्र तदभेदोऽपि पारमार्थिक एव स्यादित्यत्र प्रथमं दृष्टान्तमाह–
न द्वितीयः, यथा स्वलक्षणे स्वभेदासत्त्वस्य पारमार्थिकत्वे स्वाभेदः पारमार्थिकः, तथालीकानां भेदस्य
तत्रासत्तायाः पारमार्थिकत्वे तत्र तदभेदस्य पारमार्थिकत्वापत्तेः, सा चानिष्टेति। न तृतीयः। आरोपस्यैव
तद्ग्रहरूपत्वात् भेदग्रहे चाभेदारोपानवकाशादारोपितभेदस्य पारमार्थिकाभेदपर्यवसायित्वादारोप्यारोपविषय-
पारमार्थिकत्वमन्तरेणारोपानुपपत्तेश्च। एतेन कालान्तरारोपितस्य तस्य तदानीमग्रह इत्यपि प्रत्युक्तम्। न च-
तुर्थः। आरोपितासत्त्वस्य परमार्थसत्त्वप्रसङ्गात्। भेदस्य च पारमार्थिकत्वे प्रतियोग्यनुयोगिनोरपि पारमार्थि-
कत्वान्नालीकत्वम्। न पञ्चमः। चतुष्कोटिविनिर्मुक्तस्यातिप्रसञ्जकत्वात्, तदग्रहस्य त्रैलोक्येऽपि सुलभत्वात्॥
यथा स्वलक्षण इति, तद्ग्रहरूपत्वादिति, भेदग्रहरूपत्वादित्यर्थः। भवत्वारोपो भेदग्रहरूपः को दोष इति चेत्, मैवम्, त-
स्य भेदाग्रहप्रतिबन्धकत्वेन तत्सत्त्वे तदभावेनाभेदारोपस्यैवानुपपत्तिस्स्यादित्याह–भेदग्रहे चेति, पारमार्थिकाभेदपर्यवसा-

धित्वादिति, तथा चाभेदस्य प्रमैव स्यात् नत्वारोप इति भावः। आरोपाभावे हेत्वन्तरमप्याह–आरोप्यारोपेति, अरोप्येति प्रकृते अलीकाभेदेत्यर्थः, आरोपविषयेति अलीकेत्यर्थः, नन्वारोपितो भेद इत्युक्त्या न भेदारोपस्तात्कालिकोऽभ्युपगतः येन विरोधाद्भेदाग्रहाभावेनाभेदारोपो न स्यात्, किन्तु कालान्तरीयः, नच स विरोध्यात्मा इत्याशङ्कां निराकर्तुमाह–एतेनेति, उक्तदूषणद्वयोद्भावनेनेत्यर्थः. अस्य प्रत्युक्तमित्यनेनान्वयः, भेदस्य पारमार्थिकसत्त्वप्रसङ्गे यत्स्यात्तदाह–भेदस्य चेति, तदग्रहस्येति अलीकात्मकभेदाग्रहस्येत्यर्थः। त्रैलोक्येऽपीति, तथाच सर्वत्रैवानुगतप्रत्ययस्स्यादिति भावः। तदेव तात्पर्योपवर्णनेनविशदयति–

अलीकभेदाग्रहस्याभेदारोपहेतुत्वे तस्य सार्वत्रिकतया घटपटादौ पारमार्थिकभेदग्रहे विद्यमानेऽलीकभेदाग्रहस्य सत्त्वादभेदव्यवहारापत्तिरिति तात्पर्यम्। अलीकभेदाग्रहस्य सत्त्वेऽपि पारमार्थिकभेदग्रहेण प्रतिबन्धान्नारोप इति चेत्, तर्हि पारमार्थिकभेदग्रहस्य प्रतिबन्धकताया आवश्यकत्वेऽलीकभेदग्रहस्य तथात्वे मानाभावः॥

अलीकभेदाग्रहस्येति, प्रतिबन्धकतायाः अभेदग्रहप्रतिबन्धकतायाः, तथात्वे अभेदग्रहप्रतिबन्धकत्वे, मानाभाव इति तथाच भेदग्रहस्याभेदग्रहाऽप्रतिबन्धकत्वे तदभावरूपभेदाग्रहस्याभेदारोपकारणत्वानुपपत्त्या तत्सत्त्वेऽपि स न स्यादिति भावः। नन्वलीकभेदप्रत्ययस्याभेदग्रहाऽप्रतिबन्धकत्वे रजते रजतभेदस्यालीकत्वेन तद्ग्रहो न प्रतिबन्धकः,योऽपि च पारमार्थिकभेदग्रहः प्रतिबन्धकोऽभ्युपगतः सोऽपि रजते पारमार्थिकरजतभेदस्याभावान्नास्त्येवेति तत्कालेऽपि रजताभेदग्रहात्कथं न रजतानुगतव्यवहार इत्याशङ्कते—

कथं तर्हि रजत एव रजतभेदग्रहे न रजताभेदप्रत्यय इति चेत्, रङ्गादौ सतः पारमार्थिकस्य रजतभेदस्या–

रोपेण प्रतिबन्धादिति प्रतीहि । कूर्मरोमवाजिविषाणयोः कथं नाभेदप्रत्यय इति चेत्, परमार्थसतो रोमविषाणयोरारोपितकूर्मरोमवाजिसम्बन्धयोः पारमार्थिकभेदग्रहेण प्रतिबन्धादिति गृहाण ॥

**कथं तर्हीति, मास्तु रजते रजतभेदस्य परमार्थभूतस्याभावेनालीकात्मकतद्भेदग्रहस्तदभेदग्रहप्रतिबन्धकः रङ्गादौ परमार्थभूतस्यैव रजतभेदस्य रजते आरोपात्मकग्रहस्तु स्यादेवेति तेन न रजताऽभेदप्रत्यय इति समाधत्ते–रङ्गादाविति,** कूर्मरोमात्मकानुयोगिवाजिविषाणात्मकप्रतियोगिनोरुभयोरप्यपारमार्थिकत्वात्तयोर्भेदस्याप्यलीकतया तद्ग्रहस्य प्रतिबन्धकत्वानुपगमे तदग्रहस्य सुलभत्वेन कथं नाभेदप्रत्यय इत्याशङ्कते–कूर्मरोमेति, कूर्मसम्बन्धित्वेन भ्रमविषयस्य रोम्णो वाजिसम्बन्धित्वेन भ्रमविषयस्य विषाणस्य च पारमार्थिकत्वेन तयोर्भेदस्यापि पारमार्थिकत्वाद्रोम्णि विषाणभेदावगाहिप्रमात्मकग्रहसम्भवेन तेन प्रतिबन्धान्नाभेदप्रत्यय इत्याशयेन समाधत्ते–परमार्थसत इति, उक्तन्यायमन्यत्राप्यतिदिशति—

**एवं शशशृङ्गतुरगविषाणयोरप्यनुसन्धेयम् । तत्रापि शशीयत्वेनारोपिते शृङ्गे पारमार्थिकविषाणनिष्ठप्रतियोगिताकभेदग्रहस्यैव तुरगीयत्वावच्छिन्नप्रतियोगिताकत्वांशे आरोपरूपस्य प्रतिबन्धकत्वाच्छशशृङ्गत्वावच्छिन्नसंसर्गभानस्यापि तत्र खण्डशः प्रसिद्धव्यापकत्वघटकयावत्पदार्थनिष्ठपरस्परनिरूपितसांसर्गिकविषयतावलम्बनेनैवोपपत्तेः, संसर्गतया भानं स्वरूपत एवेति मिश्रादिप्रवादस्य निर्युक्तिकत्वादसत्ख्यातौ साधकाभावस्योक्तत्वादिति दीधितिकृदाशयः ॥**

एवमिति, अत्र दीधितिकृतामाशयं प्रदर्शयति–तत्रापीत्यादिना, प्रतिबन्धकत्वादिति, नाभेदप्रत्यय इत्यनुवर्त्तते ।

उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्वेन प्रकृते शशशृङ्गत्वस्य वाजिविषाणभेदोद्देश्यतावच्छेदकत्वेन शशशृङ्गत्वव्यापकवाजिविषाणभेदप्रतियोगिकस्वरूपसम्बन्धस्यैव संसर्गतया भानं स्वीकरणीयं, तच्च न सम्भवति, शशशृङ्गत्वाऽप्रसिद्ध्या तद्व्यापकत्वादेरप्रसिद्धेरत आह—शशशृङ्गत्वावच्छिन्नेति, शशशृङ्गत्वव्यापकेत्यर्थः, खण्डशः प्रसिद्धेति, सामानाधिकरण्यसम्बन्धावच्छिन्नशशीयत्वनिष्ठविषयतानिरूपितशृङ्गत्वनिष्ठविषयतानिरूपिताधिकरणनिष्ठविषयतानिरूपितवृत्तित्वनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपितप्रतियोगित्वनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपिता या तुरगीयत्वावच्छिन्नप्रतियोगिताकत्वनिष्ठविषयतानिरूपितविषाणभेदनिष्ठविषयतानिरूपितप्रतियोगिकत्वनिष्ठविषयतानिरूपितस्वरूपत्वावच्छिन्नसंसर्गताख्यविषयता तन्निरूपकत्वस्यैव भ्रमे स्वीकारेण विशिष्टव्यापकत्वस्याऽप्रसिद्धत्वेऽपि न क्षतिः, तथा च तादृशसंसर्गतानिरूपिततुरगीयत्वावच्छिन्नप्रतियोगिताकत्वनिष्ठविषयतानिरूपितविषाणभेदत्वावच्छिन्नप्रकारतानिरूपितशशीयत्वनिष्ठविषयतानिरूपितशृङ्गत्वावच्छिन्नविशेष्यतानिरूपको बोधः शशशृङ्गं तुरगविषाणं नेति वाक्यादिति भावः। असतः प्रकारविधयैव भानं न सम्भवति संसर्गविधयाखण्डस्याप्यऽसतः स्वरूपतो भानं न विरुद्धमिति शशशृङ्गत्वव्यापकविषाणभेदप्रतियोगिकस्वरूपसम्बन्धस्यासतोऽपि निरवच्छिन्नसंसर्गतयैव भानं स्यात्, ननु परस्परविशेष्यविशेषणभावापन्नधर्मपुरस्कारेणेत्युक्तव्यापकत्वघटकपरस्परसाकाङ्क्षविषयतानिरूपितत्वस्य सांसर्गिकविषयतायामसम्भवेन न संसर्गांशे भ्रमः किन्त्वसत्ख्यातिरेवेति मिश्रमतं, तन्न सम्भवति, ग्राहकाभावात्, सन्निकर्षव्याप्तिज्ञानसङ्केतग्रहाकाङ्क्षाग्रहादीनां सतो भानं प्रत्येव प्रयोजकत्वात्, असति तदभावादिति व्यापकत्वविशिष्टस्य स्वरूपसंसर्गस्याखण्डस्यासत्तया तद्ग्राहकसामग्र्यभावात्तद्विषयकख्यातेरसम्भवान्न संसर्गांशेऽसत्ख्यातिः, किन्तु भ्रम एवेत्याशयेनाह—संसर्गतया भानमिति।

परेषां मते प्रतियोग्यनुयोगिनोरुभयोरसद्भूतयोर्भेदस्याऽसत्त्वान्नास्योपयोगित्वमित्यत आह—

**नापि षष्ठः । व्यधिकरणस्यापि सतोऽसतो वा भेदस्याग्रहस्याभेदारोपानुपपत्तेः । असद्व्ययभेदस्यासत्त्वाद्व्यधिकरणस्य यस्य कस्यचिद्भेदस्याग्रहो यद्यभेदग्रहे हेतुस्तदा तस्य सार्वत्रिकत्वाद् गृह्यमाणभेदानामप्यभेदप्रत्ययप्रसङ्गः । अथ निखिलानामेव तेषामग्रहस्तथा, तर्हि ययोःकयोश्चिदपि भेदग्रहे क्वाप्यभेदप्रत्ययो न स्यादिति । नापि न्यायादन्यापोहसिद्धिः, तदभावात् ॥**

'व्यधिकरणस्येति, अस्यैव विवरणं यस्य कस्यचिदिति, गृह्यमाणभेदानाम्, घटपटादीनाम् । ननु व्यधिकरणाव्यधिकरणानां यावद्भेदानामग्रहोऽभेदग्रहहेतुरिति गृह्यमाणभेदानां घटपटादीनां नाभेदप्रत्ययप्रसङ्गः, तेषां भेदस्यापि यावदन्तर्गतत्वेन तदग्रहणाभावादिति चेत्तर्हि घटपटयोर्भेदग्रहेऽपि कटमठयोरप्यभेदप्रत्ययो न स्यादित्याशयेनाह—अथेति, तस्माद्विध्यलीकशब्दार्थस्याघटमानत्वेन स्फुरतु विध्यलीकमित्येतदनुपपन्नमेवेति स्थितम् । गोत्वादीनामन्यव्यावृत्तिरूपत्वे मास्तु प्रत्यक्षं प्रमाणं उदाहरणोपनयात्मकौ नयौ तु स्त इत्याशङ्कते—

**यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं ( निष्ठाशब्दस्य स्वरूपार्थत्वादन्यव्यावृत्तिस्वरूपमित्यर्थः ) यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपमिति न्यायौ स्तः । इतिरुपनयसूचकः । पूर्वत्र यथाऽघटनिवृत्त्यात्मा घटः, उत्तरत्र यथाऽघटात्मानः पटात्मादय इति दृष्टान्तोपन्यासः कार्य इति चेत् । न । कालात्ययापदेशात् ॥**

यदिति, अन्यव्यावृत्तिर्निष्ठा स्वरूपं यस्येत्यर्थमभिप्रेत्याह–निष्ठाशब्दस्येति, यच्चेति मिथो व्यावृत्तानामनुगतव्यवहारहेतुरित्यर्थं, न्यायाविति, उक्तविभिन्नहेतुकोदाहरणरूपौ न्यायावित्यर्थः। बौद्धस्यावयवद्वयाभ्युपगन्तृत्वादुदाहरणमात्रोपदर्शने न्यूनता स्यादिति तत्परिहारायाह–इतिरुपनयसूचक इति। इतिः, इति न्यायावित्यत्रेतिशब्दः, भावाभावसाधारणं च गोत्वमिति प्रथमोपनयः सालक्षण्यव्यवहारहेतुश्च गोत्वमिति द्वितीयोपनयः, उदाहरणद्वये यथाक्रमं दृष्टान्तद्वयमाह–पूर्वत्रेति, तथा च गोत्वमन्यव्यावृत्तिस्वरूपं भावाभावसाधारणत्वात् यद्भावाभावसाधारणं तदन्यव्यावृत्तिरूपं यथाऽघटनिवृत्त्यात्मा घटः, भावाभावसाधारणं च गोत्वम्, गोत्वमन्यव्यावृत्तिरूपम्, अत्यन्तविलक्षणानां शवलधवलादीनां सालक्षण्यव्यवहारहेतुत्वात्, यदत्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपं यथाऽघटात्मानः पटात्मादयः, सालक्षण्यव्यवहारहेतुश्च गोत्वमित्याशङ्कितुर्बौद्धस्य मतेन गोत्वेऽन्यव्यावृत्तिरूपत्वसाधकावुदाहरणोपनयौ परार्थानुमाने पर्यवस्यतः। निषेधे हेतुमुभयत्र बाधदोषमाह–कालात्ययापदेशादिति, अनुभूयमानस्य यद्रूपेणानुभवस्तद्रूपत्वमेवाङ्गीकरणीयमिति गोत्वं प्रत्यक्षतो विधित्वेनैवानुभूयत इति तत्र निषेधरूपत्वं धर्मिग्राहकप्रत्यक्षेण बाधितमिति न तत्साधकानुमानप्रवृत्तिस्सम्भवतीति भावः। एतदेवाह–

**नहि प्रथमानस्य निष्ठा न्यायसाध्या नाम, प्रथनशरीरं तु चिन्तितमेवेति निष्फलः प्रयासः। यदा चानलीक एवैवंन्यायस्यानुभवात्रासस्तदा कैव कथाऽलीके, न हि तस्याप्रतीयमानमपि किञ्चिदस्ति यन्न्यायेन साध्यमित्युक्तम्, किञ्चेदं भावाभावसाधारण्यं, न तावदुभयरूपत्वं, विरोधात्, न तद्धर्मत्वम्, अनभ्युपगमात्, नहि गोत्वमभावस्यापि धर्म इत्यभ्युपगम्यते, न तद्धर्मित्वम्, अनैकान्तिकत्वात्, व्यक्तिरपि हि भावाभाव-**

धर्मशालिनी, न च निषेधैकरूपा, स्वाभावनिषेधरूपत्वेऽपि स्वतो विधित्वादिति ॥

नहीति, अनेकरूपशालिनोऽपि विधेः सम्भवदप्यगृह्यमाणं रूपं यदानुभवबाधान्न सिद्ध्यति तदा कथमसम्भवतोऽप्यगृह्यमाणरूपस्यालीकस्यागृह्यमाणमनुभवबाधितं रूपं सेत्स्यतीत्याह–यदा चेति, किञ्च न्यायोऽपि विचारं न सहते इत्याह–किञ्चेति, विरोधादिति, नहि य एव भावः स एवाभाव इति भवतीत्यर्थः । तद्धर्मत्वमिति, भावाभावोभयधर्मत्वमित्यर्थः, भावाभावसाधारण्यमित्यनुषज्यते, एवमग्रेऽपि, ननु गोत्वे जातित्वं गुणाद्यत्यन्ताभावश्च विद्येते इत्युभयधर्मित्वमेव भावाभावसाधारण्यं स्यादित्यत आह–न तद्धर्मित्वमिति, भावाभावरूपधर्मशालित्वमित्यर्थः, अनैकान्तिकत्वं सङ्गमयति–व्यक्तिरपीति, निषेधैकरूपेति अन्यव्यावृत्तिमात्ररूपेत्यर्थः, स्वतो विधित्वादिति, तत्र विधित्वस्यापि सत्त्वेन विध्यात्मकत्वादित्यर्थः, ननूक्तानुमानेऽन्यव्यावृत्तिरूपत्वमेव साध्यमिति तदभावोपदर्शनेन व्यभिचारोपदर्शनं युक्तं तव, न च निषेधैकरूपेत्यनेनान्यव्यावृत्तिमात्राभावोपदर्शनेनेत्यत उक्ताशयस्फोरणात्मकं गुणानन्दमतमाह—

एवं च विध्यन्यत्वे सति निषेधरूपत्वमेव साध्यमिति तदभावमात्रोपदर्शनं युक्तमिति गुणानन्दः ॥

न च तदुभयसादृश्यं, तदुभयसादृश्यरूपत्वमित्यर्थः, अभावावृत्तित्वेन तथात्वासम्भवात्, उभयवृत्तेरेव धर्मस्य सादृश्यत्वात् । भवेदेवं यदि गोत्वं भावो भवेत्, न त्वेवम्, किन्तु गवान्यात्मकमहिषादिव्यावृत्तिः, सा च निरात्मकेऽभावे गवात्मनि च वर्तत इति चेत्, तदा साध्याविशेषः, निवृत्तिरूपत्वस्यैव साध्यत्वात् । केचित्तु गोत्वस्य भावाभावसादृश्यं न भावत्वाभावत्ववत्त्वम्, असम्भवात् ।

एवञ्चेति, अभावावृत्तित्वेनेति, गोत्वस्येति शेषः, तदासाध्याऽविशेष इति, गोत्वादेरतद्व्यावृत्तिरूपतायां सिद्धायां भावाऽभावोभयवृत्तित्वे सिद्धे तदुभयसादृश्यरूपत्वहेतुनाऽतद्व्यावृत्तिरूपं साध्यं सिद्धं स्यात्, तद्रूपता च नाद्यापि सिद्धा, सिद्धौ वाऽलमनुमानेनेत्यर्थः, असम्भवादीति, गोत्वस्य विधिरूपतायां भावत्वस्यैवातद्व्यावृत्तिरूपतायामभावत्वस्यैव सत्त्वेन तदुभयवत्त्वस्याऽसम्भवादित्यर्थः ।

**नाप्यन्यव्यावृत्तिमत्त्वं, व्यक्तावनेकान्तात् । नाप्यन्यव्यावृत्तिरूपत्वं, भावेऽभावात् । यदि चाभावमात्रसादृश्यमन्यव्यावृत्तिरूपत्वं हेतूकुर्यात्, तदा साध्याविशेषदोष उद्भावनीय इत्याहुः । नाप्यस्तिनास्तिसामानाधिकरण्यं, तद्धि तादृशस्य विकल्पस्य व्यपदेशस्य वा विषयत्वं, स्वलक्षणं तु न विकल्पस्य न वा व्यपदेशस्य विषयो धर्मधर्मिणोश्चाभेदो नातो व्यभिचार इत्यपि साम्प्रतम् ।**

व्यक्तावनेकान्तादिति, व्यक्तावन्यव्यावृत्तिमत्त्वहेतुसत्त्वेपि निषेधैकरूपत्वसाध्याभावादिति भावः । भावेऽभावादिति, अभावेऽन्यव्यावृत्तिरूपत्वस्य भावेऽपि भावेऽभावाद्भावाभावोभयधर्मत्वाभावेन तस्य भावाभावोभयसादृश्यरूपत्वासम्भवादित्यर्थः । तादृशस्येति, अस्तिनास्तीत्याकारकस्येत्यर्थः । स्वलक्षणस्य तद्धर्मस्य च तदभिन्नस्य नास्तिनास्तिप्रतीतिव्यपदेशविषयत्वमित्युभयत्र न व्यभिचार इत्याह–स्वलक्षणं त्विति, येनैव रूपेणास्तिविकल्पव्यपदेशविषयत्वं तेनैव रूपेण नास्तीति विकल्पव्यपदेशविषयत्वं विवक्षितं किंवा रूपान्तरेणेति विकल्प्य दूषयति—

**यतस्तदेकेन रूपेण विवक्षितं रूपान्तरेण वा, आद्ये विरोधः, नहि यदस्ति तदेव नास्तीति प्रत्ययगो-**

चरः। तर्हि प्रकारान्तरेणास्तु द्वितीयपक्ष एवेति चेत्। तर्हि तमेव प्रकारभेदमुपादाय विधिव्यवस्थायां को विरोधो, येन प्रकृतप्रतिबन्धसिद्धिः स्यात्। न कश्चिदिति चेत्, स्फुटान्यथासिद्धिः। तस्य विधिरूपतायामस्तिना किमुपनेयम्, विधित्वबोधकेन किं विधेयमित्यर्थः।

यतस्तदेकेनेति, विरोधमेव विवृणोति–नहीति, यदस्तीत्यस्य प्रत्ययेन सम्बन्धः। प्रत्ययशब्देन प्रतीयतेऽनेनेति व्युत्पत्त्या प्रतीतिर्व्यपदेशश्च वाच्यः,तथा च नहि यद्यद्रूपेणास्तीति प्रतीतिव्यपदेशयोर्गोचरस्तद्रूपेणैव तन्नास्तीति प्रतीतिव्यपदेशयोरपीत्यर्थः, को विरोध इति, गोत्वे विधिरूपत्वमस्तुनास्तिप्रत्ययगोचरत्वञ्चास्त्वित्यत्र को विरोध इत्यर्थः, येन विरोधेन, प्रकृतप्रतिबन्धेति, यदस्तिनास्तिप्रत्ययगोचरलक्षणभावाभावसाधारणं तदन्यव्यावृत्तिरूपमिति व्याप्तीत्यर्थः। न चान्यव्यावृत्त्यात्मकत्वसाध्यं गोत्वे वर्त्तते अस्तिनास्तिप्रत्ययगोचरत्वहेतुस्तु तत्र वर्त्तत इति व्यभिचारेण हेतोर्व्याप्यत्वासिद्धिरिति समाधत्ते–स्फुटान्यथासिद्धिरिति। विधिरूपत्वे बाधकं शङ्कते–तस्येति, गोत्वस्येत्यर्थः। अस्तिना किमुपनेयमिति, अत्रास्तिना किमधिकमुपनेयमित्यपि पाठः, अस्य विवरणमाह–विधित्वेति, गोत्वे विधिरूपत्वस्य सिद्धत्वेन न विधेयत्वसम्भवः, अप्राप्तस्यैव विधेयत्वमिति नियमादिति गौरित्युक्तौ तत एवास्तित्वे लब्धेऽस्तिपदार्थस्य विधेरवगमादस्तीति पदं पुनरुक्तं, तस्यापूर्वार्थप्रतिपादकत्वाभावात्, गौर्नास्तीत्यत्र नास्तीतिपदं विरुद्धं च, नास्तिपदार्थस्य विधित्वशून्यत्वस्य गव्यघटमानस्य प्रतिपादकत्वादित्याह–

तथा चास्तीति पुनरुक्तम्, विधित्वशून्यत्वबोधकतया नास्तीति विरुद्धमपीति चेत्, निषेधरूपत्वेऽपि नास्तिना किमपनेयमिति समानम्, निषेधत्वबोधकेन किं निषेध्यम्, तथा च नास्तीति पुनरुक्तमस्तीति च

विरुद्धमित्यर्थः। अत एव पौनरुक्त्यविरोधाभ्यां भावाभावबोधकास्तिनास्तिव्यपदेशायोग्यत्वमेव भावाभावसाधारण्यमभावत्वसाधकमाद्रियत इति चेत्, तथापि किमेतदुभयात्मकमुभयपरिहारो वेत्यशक्यमेतत्। एकैकव्यपदेशायोग्यत्वेनैकैकान्यात्मकत्वम् एकैकात्मकत्वविरहो वा सिद्धयन्नर्थाद्भावाभावात्मकत्वे भावाभावात्मकत्वविरहे वा पर्यवस्येत्, तच्च विरोधान्न सम्भवतीत्यर्थः॥

तथा चेति, प्रतिबन्द्या समाधत्ते–निषेधरूपत्वेऽपीति, गोत्वस्येति शेषः। नास्तिनेत्यस्य विवृतिमाह–निषेधत्वबोधकेनेति, किमपनेयमित्यस्य किं निषेध्यमिति, अत एवेत्यस्य विशेषार्थमाह–पौनरुक्त्यविरोधाभ्यामिति, अस्तिनास्तिव्यपदेशविषयत्वपक्षे पूर्वोक्तनीत्येति शेषः, एतत् गोत्वादि, उभयात्मकमिति विधिनिषेधलक्षणभावाभावोभयात्मकमित्यर्थः। उभयपरिहारो वेति न विधिलक्षणभावात्मकं नवाऽन्यव्यावृत्तिलक्षणाभावात्मकमित्यर्थः, उभयात्मकमित्यस्योभयपरिहारो वेत्यस्य च पर्यवसितार्थमाह–एकैकेति, अस्तिव्यपदेशाऽयोग्यत्वेन न विध्यात्मकत्वं, किन्तु निषेधात्मकत्वं, नास्तिव्यपदेशाऽयोग्यत्वेन न निषेधात्मकत्वं, किन्तु विध्यात्मकत्वमित्युभयात्मकत्वम्, एवमस्तिव्यपदेशाऽयोग्यत्वेन विधिरूपत्वाभावः नास्तिव्यपदेशाऽयोग्यत्वेन निषेधरूपत्वाभाव इत्युभयात्मकत्वविरहो वेत्यर्थः। विधिनिषेधयोः विधिरूपत्वाभावनिषेधरूपत्वाभावयोश्च परस्परविरोधान्नोभयात्मकं तत्परिहारात्मकं वा गोत्वादिकं सम्भवतीत्याह–तच्चेति, ननु गोत्वस्य विधिरूपत्वेऽस्तित्वस्यापि तद्रूपत्वात् तत एवास्त्यर्थसिद्धेरस्तिपदपौनरुक्त्यं नास्तीत्यनेन विरोधश्च स्यात्, एवं निषेधरूपत्वेऽपि नास्तीत्यनेन पुनरुक्तमस्तीत्यनेन विरोधश्च स्यात्, न चास्तित्वं नास्तित्वं च धर्मान्तररूपं, तथाच गौरस्तीति गौर्नास्तीति च व्यपदेशावनुपपन्नौ स्यातामित्याशयेन

पृच्छति—

तत् किमस्तिनास्तिव्यपदेशावनुपपन्नौ, न, अस्तिनास्तिभ्यामुपाध्यन्तरोपसम्प्राप्तौ प्राप्तोपाधिनियमने वाऽनुपपत्त्यभावात् । उपाध्यन्तरं देशकालविशेषसत्त्वासत्त्वरूपं तस्याप्राप्तौ प्रापणं,प्राप्तौ तु नियमनम्, एतावतैव चरितार्थत्वमिति भावः । एतच्च विधौ घटमानं, शान्ताशेषविशेषत्वादलीकपक्षे क्वोपाध्यन्तरविधिस्तन्नियमो वेति विशेषदोषः । ततो गोशब्दो गोत्वविशिष्टव्यक्तिमात्राभिधापर्यवसितस्तास्तु विप्रकीर्णदेशकालतया नार्थक्रियार्थिप्रार्थनामनुभवितुमीशते इति प्रतिपत्ता विशेषाकाङ्क्षः,

तत्किमिति, अस्तिपदेन न गोपदशक्यतावच्छेदकं गोत्वरूपमेव भावत्वं नास्तिपदेन च तन्निषेधो वा बोध्यते, येनोक्तदोपस्स्यात्, किन्तु धर्मान्तरमेव, तच्च येन पुंसा नावगतं तं प्रत्युक्तव्यपदेशो विधायकः, येन च पुंसाऽवगतं तं प्रति च नियामकः, इत्येतावतैवास्तिनास्तिव्यपदेशयोः कृतार्थत्वान्नोक्तदोष इत्याशयेनाह—अस्तिनास्तिभ्यामिति, उक्तमेव विवृणोति--उपाध्यन्तरमिति, धर्मान्तरमित्यर्थः, किं रूपं तदित्यत आह—देशेति, उपाध्यन्तरविधिर्नियमश्चोभयमस्मत्पक्षे घटते त्वत्पक्षे च न घटत इत्याह–एतच्चेति, निषेधपक्षे कथं न घटत इत्यत आह–शान्तेति, निस्स्वरूपत्वादित्यर्थः, विधिपक्षेऽस्तित्वनास्तित्वयोः धर्मान्तररूपयोर्विधिनियमौ स्फुटयति–तत इत्यादिना, व्यक्तिमात्रेति, अत्र मात्रपदे नास्तित्वविशिष्टगोव्यक्तेर्वाच्यत्वस्य निषेधः कृत इति, गौरित्युक्तेऽस्तित्वबोधाभावान्न तत्पदपौनरुक्त्यादिदोष इति भावः । ताः गोत्वविशिष्टव्यक्तयः । विप्रकीर्णदेशकालतया विभिन्नदेशकालवृत्तित्वेन,प्रतिपत्तेति, गोकार्यदानदोहनबन्धनाद्यर्थिनो

मे विभिन्नदेशकालवर्त्तिनो गोपदाभिधेया गोत्वविशिष्टव्यक्तयो दानाद्यर्थक्रियाप्रार्थना न पूर्णीकर्तुमीशते इति ज्ञानवानित्यर्थः, विशेषाकाङ्क्षः,गौरितिवाक्यश्रवणानन्तरमस्त्यादिविशेषाकाङ्क्षः, गौरितिवाक्यश्रवणानन्तरमस्त्यादिविशेषमाकाङ्क्षत इति यावत्,

सा च तस्याकाङ्क्षास्ति गोष्ठे कालाक्षी धेनुर्घटोघ्नी महाघण्टा नन्दिनीत्यादिभिर्नियामकैर्विधायकैर्वा निवार्यत इति विधौ न कश्चिद्दोषः। गोत्वविशिष्टसदसद्व्यक्तिमात्रप्रतीतेस्तदेवास्त्यादिपदप्रयोगवैयर्थ्यमिति चेत्, तावन्मात्रप्रतिपत्त्यर्थमेवमेतत्, अधिकप्रतिपत्त्यर्थं तु तदुपयोगः, तस्य प्रागप्रतीतेरित्युक्तम्। अस्तित्वादिकं न धर्म्यतिरिक्तं धर्मधर्मिणोरभेदादित्याशयेनाशङ्का, धर्मधर्मिणोर्भेद एवेत्याशयेन चोत्तरमिति ध्येयम् ॥

सा चाकाङ्क्षा निवार्यत इत्यन्वयः, तस्य प्रतिपत्तुः, कैर्निवार्यत इत्याकाङ्क्षायां नियामकैर्विधायकैरित्युक्तम्, वाक्यैरिति शेषः। किंरूपैरित्याकाङ्क्षायां तत्स्वरूपमाह—अस्ति गोष्ठ इत्यादि, विधौ न कश्चिद्दोष इति, गोत्वस्य विध्यात्मकत्वे न कश्चिद्दोषः, गोत्वस्यालीकरूपत्वे तु सदसतोरसम्बन्धाभावाद् गोव्यक्तेस्तद्विशिष्टत्वाभावाद् गोशब्दश्रवणे गोत्वमात्रमेव गोव्यक्त्याख्यविशेषविनिर्मुक्तमवगतं तत्रोक्तास्त्यादिविशेषधर्मवैशिष्ट्यं न सम्भवतीति न विशेषाकाङ्क्षोदय इति न तत्र विधायकं नियामकं वा वाक्यमुपयुज्यत इति भावः, अस्त्यादिविशेषधर्मा गवात्मकधर्म्यनतिरिक्ताश्चेत्,तदा, गोपदात्तज्ज्ञाने तज्ज्ञानादस्त्यादिपदवैयर्थ्यं तदवस्थमेवेत्याशङ्कते-गोत्वविशिष्टेति, अस्त्यादिपदानां गोपदाभिधेयार्थप्रतिपत्तिमात्रफलकत्वे स्याद्वैयर्थ्यं,

न चैवम्, अस्त्यादिपदाभिधेयानां विशेषधर्माणां ततो विभिन्नत्वेन तद्रूपतदधिकार्थप्रतिपत्त्यर्थत्वात्, तत्प्रतिपत्तेश्च पूर्वमसञ्जातत्वादित्याशयेन समाधत्ते–तावन्मात्रेति, यदाशयेनाशङ्का समाधानं च तदाशयं प्रदर्शयति–अस्तित्वादिकमित्यादिना, गोत्वं निषेधैकरूपमित्यनुमानं यत्कृतं, तत्र गोत्वं व्यावृत्तिरूपं न पक्षः, अस्मन्मतेन सिद्धसाधनात् अनुमानात्प्राक्पक्षसिद्धौ तदात्मकसाध्यसिद्धेः, नैयायिकमतेन त्वाश्रयासिद्धेः, तन्मते विधिरूपतयैव सिद्धेः। नापि विधिरूपं गोत्वं पक्षः, अस्मन्मतेनाश्रयासिद्धेः, अस्मन्मते गोत्वस्य तुच्छरूपत्वात्, विधिरूपत्वाभ्युपगमे वा बाध इत्यतो गोत्वं न पक्षः किन्तु विकल्प एवेति ज्ञानश्रीनाम्नो बौद्धस्य मतं प्रदर्श्य निराकरोति–

**यस्तु गोत्वं व्यावृत्तिरूपं विधिरूपं वा पक्षः, आद्ये सिद्धसाधनम्, अन्त्ये आश्रयासिद्धिः, सिद्धौ वा बाध इति दोषं परिजिहीर्षुर्निपुणंमन्यो विकल्पमेव पक्षयति स्म। यद् ज्ञानं यत्र भावाभावसाधारणप्रतिभासं नतेन तस्य विषयत्वम्, यथा गोज्ञानस्याश्वेनेत्यादि। अत्र गोविकल्पस्य पक्षत्वे गौरनुपाख्यः स्वलक्षणो वाविषयतया पक्षावच्छेदकः। आद्येऽस्माकमाश्रयासिद्धिरसत्ख्यातिविरहात्॥**

यस्त्वित्यादिना, विधिरूपं वा पक्ष इति, विधिरूपं वा न पक्ष इत्यन्यत्र पाठः। निपुणम्मन्य इति, योऽनिपुणोऽपि निपुणं स्वात्मानं मन्यते स निपुणम्मन्यः, विकल्पपक्षीकरणे पूर्वोक्ताश्रयासिद्धिबाधौ नेति ज्ञानश्रीबौद्धस्य नैपुण्यम्, विषयनिरूप्यं हि ज्ञानमिति न्यायाद्विकल्पेऽवश्यं विषयभानमङ्गीकर्त्तव्यं, तथाच गोविकल्पस्य पक्षत्वे तत्र निस्स्वरूपाया गोर्भासने नैयायिकमतेनाश्रयासिद्धिः, तन्मतेऽसत्ख्यातिविरहात्, स्वलक्षणात्मकत्वेन सस्वरूपाया तस्या भासने आश्रयासिद्धिर्बौद्धस्य, तन्मते स्वल-

क्षणस्य विकल्पागोचरत्वात्, गोचरत्वे वा बाध इति विकल्पपक्षीकरणेऽप्युक्तप्रकारेणाश्रयासिद्धिबाधसद्भावाद् निपुणम्मन्यतेति भावः । विकल्पस्य पक्षत्वेऽन्यादृशसाध्यहेत्वोर्ज्ञानार्थमुदाहरणवाक्यमाह-यद् ज्ञानं यत्रेत्यादि, यद्ज्ञानं यदित्यादि अन्यत्र पाठः, अत्र गोविकल्पः न गवा सविषयकः तद्भावाभावसाधारणप्रतिभासत्वात् यथा गोज्ञानमश्वेनेत्यनुमानं पर्यवस्यति । अत्र गोवि-कल्पस्येति, पक्षावच्छेदकः पक्षघटकः पक्षतावच्छेदक इति यावत्, अन्यत्र पक्षतावच्छेदक इत्येव पाठः । अस्मा-कम् नैयायिकानाम्,

द्वितीये च भवतां स्वलक्षणस्य विकल्पागोचरत्वाद्गोचरत्वे वा बाधः । गौर्गौरिति व्यवहारहेतुत्वेन पक्षत्वेऽपि तादृशविषयित्वादिना तद्दोषतादवस्थ्यमिति,इत्यादिपदेन गोस्वलक्षणभावाभावसाधारणप्रतिभा-सस्य गोविकल्पस्य संग्रहः । तत्र किं तद्भावाभावसाधारण्यं, तस्य सत्त्व इवासत्त्वेऽपि जायमानत्वं वा, तद-स्तित्वनास्तित्वयोर्यादृशत्वं तदग्राहकत्वं तादृशत्वं तदग्राहकत्वमिति वा, तदस्तित्वनास्तित्वाकाङ्क्षोत्थापक-त्वं वा, तद्विरहो वा, तदस्तित्वनास्तित्वग्राहकत्वं वा ॥ नाद्यः, विकल्पस्य विषयाजन्यस्य विनापि विषयमु-पपत्तेः, अजनकस्यापि विषयत्वाविरोधात् । कथमन्यथा त्वयालीकमाकारो वा विकल्पविषयः । द्वितीये यदि गोविकल्पस्याश्वाविषयत्वमेव तद्भावाभावसाधारण्यम्, तदाकारातिरिक्ते गव्यपि वाच्ये तथेति साध्यावि-शिष्टत्वम् । तृतीयेऽस्तित्वादिसामान्याकाङ्क्षोत्थापकत्वं वा, देशविशेषादिनियततदाकाङ्क्षोत्थापकत्वं वा । आद्येऽसाधारण्यं, दृष्टान्तस्य साधनविकलत्वात् ॥

भवताम् बौद्धानाम्, आश्रयासिद्धिरित्यनुषज्यते, विकल्पस्य न गोविकल्पत्वेन पक्षता, किन्तु गौर्गौरित्याकारकानुगतव्यवहारहेतुत्वेन,नच तत्रोक्तदोष इत्यत आह-**गौर्गौरिति व्यवहारहेतुत्वेनेति**,विकल्पस्येति शेषः । **तद्दोषतादवस्थ्यमिति** गौर्गौरिति व्यवहारे विषयतयाऽनुपाख्यस्य गोःप्रवेशः किंवा स्वलक्षणात्मकस्य, आद्येऽस्माकमाश्रयासिद्धिः,द्वितीये भवतामित्याद्युक्तदोषस्तदवस्थ एवेत्यर्थः । **इत्यादिपदेनेति** यथा गोज्ञानस्याश्वेनेत्यादीत्यत्रादिपदेनेत्यर्थः । **गोलक्षणभावेति**,गोलक्षणभावाभावसाधारणप्रतिभासश्च गोविकल्प इत्यस्य सङ्ग्रह इति पाठदर्शनादत्रापि गोलक्षणभावाभावसाधारणप्रतिभासश्च गोविकल्प इत्युपनयस्य सङ्ग्रहः कर्तव्य इत्येवमर्थः । तत्र गोलक्षणभावाभावसाधारणप्रतिभासे, षट्कत्वं सप्तम्यर्थः, **विषयत्वाविरोधादिति**, तथाच विकल्पस्य स्वलक्षणाजन्यत्वेऽपि न तद्विषयकत्वं तस्येत्युक्तहेतोर्व्यभिचार एवेति भावः । ननु नोक्तव्यभिचारः जनकस्यैव विषयत्वादित्यत आह-**कथमिति, अन्यथेति**, अजनकस्य विषयत्वविरोध इत्यर्थः । तव बौद्धस्य, मत इति शेषः। दृष्टान्ते गोविकल्पस्याश्वभावाभावसाधारण्यमश्वाऽविषयत्वमेवं गोस्वलक्षणभावाभावसाधारणत्वमपि गोस्वलक्षणाऽविषयत्वमेव वाच्यं, तथाच हेतोरिव साध्यस्यापि तद्रूपत्वात्तयोरैक्यमसङ्गः, तदविषयत्वेनैव तदविषयत्वस्य साधनादित्याशयेनाह-**द्वितीये यदीति, तदाकारेति**, विकल्पाकारेत्यर्थः, **तथेति** गवाविषयत्वमेव तद्भावाभावसाधारण्यमित्यर्थः । **अस्तित्वादीति** अत्रादिपदेन नास्तित्वपरिग्रहः, **देशविशेषादीति** अत्रादिपदात्कालविशेषपरिग्रहः, **असाधारण्यमिति**, हेतोः सपक्षादपि व्यावृत्तिरित्यर्थः । दृष्टान्तस्य साधनविकलत्वमेव स्फुटयति-

**नह्युदाहृतो गोविकल्पोऽश्वेऽस्त्यादिविशेषमाकाङ्क्षति । अतद्विषयविकल्पस्य तत्रास्तित्वाद्याकाङ्-**

क्षाहेतुत्वायोगाद्विरोधोऽप्यत्र द्रष्टव्यः। द्वितीयेऽपि विरोधः। न ह्यतद्विषयस्य तद्विशेषनियमाकाङ्क्षा नाम, गोज्ञानस्याश्वविशेषनियमाकाङ्क्षाप्रसङ्गात्। असाधारण्यमपि प्राग्वद्द्रष्टव्यम्। न चतुर्थः, असिद्धेः, गोविकल्पस्यास्तित्वाद्याकाङ्क्षाहेतुताया अनुभवसिद्धत्वात्, क्वचिदजननस्य कारणान्तरविरहप्रयुक्तत्वात्। पञ्चमे, तदीयसत्त्वासत्त्वानुपदर्शनं चेत् स्वरूपमेव, ततोऽसिद्धिदोषः॥

नहीति, विरोधे हेतुमाह—अतद्विषयविकल्पस्येति, यो विकल्पो यत्रास्त्यादिविशेषाकाङ्क्षामुत्थापयति स तेन विषयेण विषयी न भवतीति व्याप्त्यभ्युपगमे विरोध एव, किन्तु यो विकल्पो यत्रास्त्यादिधर्माकाङ्क्षामुत्थापयति स तेन विषयेण विषय्येव भवतीति व्याप्तिरेव तस्या एव अनुभवगोचरत्वादिति भावः। तदनभ्युपगमे दण्डमाह-गोज्ञानस्येति, पञ्चमे तदस्तित्वनास्तित्वाग्राहकत्वं तद्भावाभावसाधारण्यमिति चरमपक्षे, अस्य तदीयसत्त्वासत्त्वानुपदर्शनमित्यर्थः, तथाच गोविकल्पस्य गोस्वलक्षणाविषयकत्वं गोस्वलक्षणसदसत्त्वानुपदर्शकत्वात्सेत्स्यतीत्याशयेनाशङ्कते-तदीयेति, उक्तहेतुघटकं सदसत्त्वं धर्मिस्वरूपमेव किंवा तद्भिन्नं धर्मान्तरम्, आद्ये तद्यदीति, असिद्धिदोष इति, उक्तहेतोस्स्वरूपासिद्धिदोष इत्यर्थः, असिद्धिमेव नैयायिकस्स्वमतेन प्रदर्शयति—

न हि गोविकल्पो गोस्वरूपं नोपदर्शयतीति मम कदापि सिद्धम्, तव चाद्यापि। उपाध्यन्तरं चेत्, अनेकान्तः। न हि यो यस्योपाध्यन्तरं नोपदर्शयेन्नासौ तमपीति नियमः। ननु नियम एव, तथा हि—यन्न यत्समवेतधर्मबोधनम् न तत् तत्स्वरूपबोधनम्, यथा गोविकल्पशब्दो तुरगे, तथा च तौ गव्यपि नीलत्वा-

द्यपेक्षयेति व्यापकानुपलब्धिः ॥

नहीति, बौद्धमतेनापि तामाह—तच्च चाद्यापीति, अद्यापि तत्र विवादस्यासमाप्तत्वादिति भावः । चकारः उक्तसमुच्चयार्थः । द्वितीये चाह—उपाध्यन्तरमिति, गोगतं सदसत्त्वं तदतिरिक्तं धर्मान्तरं नोपदर्शयतीति गोविकल्पो न गोस्वलक्षणविषयक इति भावः । अनेकान्तः व्याप्यत्वासिद्धः, तदेव स्फुटयति—नहीति, तमपीति धर्मिस्वरूपमपीत्यर्थः, तदपीति पाठान्तरम्, व्याप्तिमुपदर्श्य हेतोः पक्षधर्मतोपदर्शनायोपनयवाक्यमाह—तथा चेति, गोसमवेतधर्मबोधनत्वाभाववन्तौ इत्यर्थः, तौ गोविकल्पशब्दौ । व्यापकानुपलब्धिरिति, तत्स्वरूपविषयकबोधनत्वं तत्समवेतधर्मविषयकबोधनत्वव्याप्तमिति तत्स्वरूपविषयकबोधनत्वव्यापकस्य तत्समवेतधर्मविषयकबोधनत्वस्याऽनुपलब्धिरनुपलब्धिविषयोऽभाव इति यावत् ।

अत्र बोधनत्वं बोधरूपत्वं बोधजनकत्वं च, व्युत्पत्तिभेदात् । तथा च विकल्पे धर्मबोधरूपत्वेन धर्मिबोधरूपत्वाभावः, शब्दे च धर्मबोधकत्वेन धर्मिबोधकत्वाभावः साध्यः । अथासिद्धो हेतुर्गोधर्मवत्त्वबोधनत्वात् तयोः, अत उक्तम् नीलत्वाद्यपेक्षयेति, तथा च यत्किञ्चिद्धर्मबोधनत्वं हेतुर्न तु धर्ममात्राबोधनत्वमिति भावः ॥

व्युत्पत्तिभेदादिति, भावकरणव्युत्पत्तिभेदादित्यर्थः, विकल्पपक्षे बुद्धिर्बोधनं तस्य भावस्तत्त्वमिति भावव्युत्पत्त्या बोधनत्वशब्देन बोधत्वं, शब्दपक्षे च बुद्ध्यतेऽनेनेति बोधनं तस्य भावस्तत्त्वमिति करणव्युत्पत्त्या तेन बोधजनकत्वं बोध्यमिति भावः । उपनये नीलत्वाद्यपेक्षयेति यदुक्तं तत्फलं हेत्वसिद्धिनिवृत्तिरूपमाह—अथेति, गोधर्मवत्त्वेति गोत्वेत्यर्थः, अन्यत्र गोधर्मगोत्वेत्येव पाठः, तयोः गोविकल्पशब्दयोः । यच्च यत्समवेतधर्मबोधनं न तत् तत्स्वरूपबोधनमिति व्याप्तिदार्ढ्याय विकल्पयति बौद्धः—

ज्ञायमाने धर्मिणि धर्मस्य ज्ञानं, धर्मिणि सत्तामात्रेण, धर्मिजनितज्ञानानुकूलोपकारशालित्वेन वा । आद्येऽविशेषात् सर्वत्रोपकाराधानात् युगपत् सर्वग्रहणम् । द्वितीयेऽप्युपकारजनिका शक्तिरेकाऽनेका वा । एका चेत्, पूर्वोक्तमनुवर्त्तते । अनेका चेत्, तज्जननायाप्यनेकशक्त्यन्तराभ्युपगमेऽनवस्था, धर्मिस्वरूपमात्राधीनत्वे धर्मिकारणाधीनत्वे वा शक्तेर्भेदानुपपत्तिः । शक्तियौगपद्याच्चोपकारस्य ज्ञानस्य च यौगपद्यमावश्यकम् ॥

ज्ञायमान इति, ज्ञानमाने धर्मिणि धर्मस्य ज्ञानं धर्मिणि सत्तामात्रेण, धर्मिजनितज्ञानानुकूलोपकारशालित्वेन वा, आद्ये युगपत्सर्वधर्मग्रहणध्रौव्यम्, अन्त्ये धर्मिणोपकारस्य जननं स्वरूपेण तदनुकूलशक्तिशालित्वेन वा, आद्येऽविरोधात्सर्वत्रोपकाराधानाद् युगपत्सर्वग्रहणं,द्वितीयेऽप्युपकारजनिका शक्तिरेकानेका वेति पाठस्य रघुनाथटीकायां दर्शनादत्राप्येवमेव पाठस्सम्भवति अर्थोऽपि तदनुसारेण क्रियते–धर्मिजनितेति, एतद्विशेषणमुपकारस्येति विज्ञेयम्, धर्मिणि धर्मस्य सत्तामात्रेण कस्यचिदेव धर्मस्य बोध इत्यभ्युपगमे गोधर्मिणि गोत्ववद् धर्मान्तराणामपि वृत्तित्वाऽविशेषात्तद्वत्तेषामपि सर्वेषां नियमेन युगपद्ग्रहणं स्यादित्याह–आद्य इति, द्वितीयपक्षेऽपि धर्मिजनितो यो ज्ञानानुकूलोपकारस्तमपि धर्मे किं धर्मी स्वस्वरूपेणैव स्वशक्तिमनपेक्ष्यैवोत्पादयति किंवा शक्तिमपेक्ष्यैवेति विकल्पद्वयमाह–अन्त्य इति, आद्य इति,यथैकस्मिन् गोत्वादिधर्मे गोधर्मी स्वस्वरूपेणोपकारं जनयति तथा धर्मान्तरापेक्षयापि धर्मिणि स्वस्वरूपाऽविशेषात्तत्रापि तेन तज्जनने विरोधाऽभावाद् युगपत्सर्वधर्मग्रहणं स्यादिति भावः । पूर्वोक्तमिति, धर्मगतोपकारजनिकाया धर्मिणि शक्तेरैक्येन तया जन्यानामुपकाराणां यौगपद्येन युगपत्सर्वधर्मग्रहणप्रसङ्ग इत्यर्थः । ननु तत्तद्धर्मविषयकज्ञानानुकूलतत्तद्धर्मगतोपकारजनिकाश्शक्तयो न तदनुकूलशक्त्यन्तरेभ्यः, यतस्तदनुकूलाने-

कशक्त्यन्तराभ्युपगमाविरामप्रसङ्गेनानवस्था स्यात्, किन्तु धर्मिरूपस्वाश्रयमात्राधीना धर्मिरूपस्वाश्रयसामग्र्यधीना वेति चेत्, मैवम्, शक्तेर्भेदानुपपत्तिस्स्यात् कारणभेदाभावादित्याह–धर्मिस्वरूपेति, ननु न कारणभेदाभावः कार्योत्पत्तौ स्वस्वप्रागभावस्यापि कारणत्वेन तद्भेदेन तद्भेदादिति यदि ब्रूयात्तदाप्याह–शक्तियौगपद्याच्चेति, कारणकालभेदादेव कार्यकालभेदो भवतीति प्रकृते तदभावेन शक्तिरूपकार्ययौगपद्याच्चेत्यर्थः, अत्रार्थे बौद्धसम्मतिमाह–

**तदुक्तम्-नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ॥ सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः ॥ १ ॥ एकोपकारके ग्राह्ये नोपकारास्ततः परे ॥ दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः ॥ २ ॥ इति । ततः सर्वोपाधिसहितो बोधोऽबोधो वेति द्वयी गतिरिति प्रतिबन्धसिद्धिरिति चेत्, दुष्प्रयुक्तमेतत्, उपाधितद्वतां भेदे प्रतिनियतसामग्रीबोध्यत्वादेव तदयौगपद्ये बोधाबोधोपपत्तेः, प्रतिनियतसामग्रीबोध्यत्वस्यापि स्वभाववैचित्र्यनियतत्वात्, तस्यापि स्वकारणाधीनत्वात्, तस्याप्यन्वयव्यतिरेकसिद्धत्वात्, तस्यापि कार्यानेयत्वात् । यच्च शक्तियौगपद्यात् ज्ञानयौगपद्यमुक्तं तत्तदा शोभेत,**

तदुक्तमिति, नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मन इति, अनेकधर्मगतस्वस्वज्ञानानुकूलोपकारजनकशक्त्यभिन्नस्य धर्मिण इत्यर्थः, उत्तरार्द्धेन सर्वधर्मग्रहप्रसङ्गमाह–सर्वात्मनेति, उपकार्यस्येति, धर्मिजनितोपकाराश्रयस्य धर्मस्येत्यर्थः । भेदः प्रकारः, स्यादनिश्चित इति, काकुपाठान्न कोप्यनिश्चितस्स्यादित्यर्थः । उपकाराधानस्याऽविशेषात्सर्वात्मना सर्वे धर्मा निश्चिता एवेति भावः । एकधर्मविशिष्टधर्मिग्रहे सकलधर्मविशिष्टतद्ग्रहस्स्यादित्याशयेनाह–एकोपकारक इति, अस्य च श्लो-

कस्यैकोपकारके ग्राह्ये तस्मिन् दृष्टे येऽदृष्टास्ते इति शेषः परे उपकारा उपकारवन्तो न ततस्तद्ग्रहे सकलग्रह इत्यन्वयः । ततः परे इत्यत्र ततोऽपरे इति पाठान्तरम्, अनयोर्भावार्थस्तु दर्शितदिशा बोध्यः । धर्मिबोधेऽपि हि धर्माणां मध्ये कस्यचिद्बोधः कस्यचिच्चाबोध इति नैयायिकाभ्युपगतनियमाऽसिद्धिप्रदर्शनायोपसंहरति–तत इति, सर्वोपाधिसहित इति, सर्वधर्मविशिष्टधर्मिविषयक इत्यर्थः । अथवा विषयितासम्बन्धेन सर्वधर्मविशिष्ट इत्यर्थः । धर्मधर्मिणां भेदे सति यैव धर्मिबोधसामग्री न सैव तद्धर्मबोधसामग्री, यैव चैकधर्मबोधसामग्री न सैवाशेषधर्मान्तरबोधसामग्रीति सामग्रीभेदेन धर्मिणस्तत्तद्धर्माणां च प्रतिनियतसामग्रीबोध्यत्वात् स्वस्वग्राहकसामग्रीणां विभिन्नकालीनत्वेन धर्मिबोधेऽपि कस्यचिद्धर्मस्य बोधः कस्यचिच्चाबोध इति नियमोपपत्तिस्स्यादेवेति यत्र यत्समवेतधर्मबोधनं न तत्तत्स्वरूपबोधनमिति नियमस्संदिग्धानैकान्तिक इत्याशयेनाह–उपाधितत्क्षतामित्यादि, तदयौगपद्य इति, धर्मिग्रहधर्मग्रहसामग्र्योरयौगपद्य इत्यर्थः । स्वभाववैचित्र्यस्यापि सिद्ध्यर्थमाह–तस्यापीति, स्वकारणेति एतज्जन्यमुपाधिमधिकृत्य ज्ञेयम्, स्वकारणस्यापि सिद्ध्यर्थमाह–तस्यापीति, स्यादेतत् सिद्धे बोधकसामग्रीप्रतिनियमे तन्नियामकस्वभाववैचित्र्यमास्थेयं, तदेव तु कुत इत्यत आह–तस्यापीति, तच्छब्देन व्यवहितस्य गुणीभूतस्यापि सामग्रीप्रतिनियमस्य परामर्शः, योग्यताबलात् कार्ये धर्मिणि गृह्यमाणे कदाचिदेव कस्यचिदुपाधेर्ग्रहः, अन्वयव्यतिरेकाभ्यां कारणत्वग्रहेऽपि अपरिदृश्यमानकारणस्य कथं सिद्धिरित्यत आह–तस्यापीति, इत्यपि केचित् ॥

यदि धर्मिमात्राधीनस्तद्बोधमात्राधीनः तावत्मात्रबोधसामग्र्यधीनो वा यावदुपाधिबोधः स्यात् । न चैवम् । यद्यपि धर्मबोधस्य धर्मिबोधाधीनत्वे धर्माबोधनत्वेन धर्मिबोधनत्वाभावसाधनं सुदूरनिरस्तम्, तथा-

पि युगपदशेषधर्मग्रहापादकत्वात् तन्निरासादर इति द्रष्टव्यम्। एतेन भेदाद्धर्मिणः प्रतीतावपि शब्दलिङ्गद्वारा धर्माणां चेदप्रतीतिरिन्द्रियद्वारापि मामूदित्यादि कर्णस्पर्शे कटिचालनमपास्तम्। तत्तदुपाध्युपलम्भकसामग्रीविरहकाले प्रसञ्जितस्येष्टत्वात्, विचित्रशक्तिकत्वाच्च प्रमाणानां, लिङ्गस्य प्रसिद्धप्रतिबन्धाधीनशक्तिकत्वात्, शब्दस्य समयसीमविक्रमत्वात्, इन्द्रियस्य त्वर्थशक्तेरप्यपेक्षणात्, न तु सम्बद्धोऽर्थ इत्येव प्रमाणैः प्रत्याय्यते, अतिप्रसङ्गात्रूपादिप्रतीतौ रसादेरपि प्रत्ययप्रसङ्गात् इति यावत्। न चैकस्येव सर्वेषामपि धर्माणामग्रहे धर्मिग्रहणापत्तिः, यस्योपाधेरुपलम्भ एव येन धर्म्युपलभ्यते तस्यानुपलम्भे स तेन नोपलभ्यते सर्वोपाध्यनुपलम्भे वेति नियमस्य युक्तत्वात्, तथा च सिद्धसाधनमिति सङ्क्षेपः। तथापि लिङ्गशब्दयोर्न धर्मिविषयत्वम् इन्द्रियेणासमानविषयत्वात् तयोः, अन्यथा प्रतिभासभेदानुपपत्तेः। एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तम् सव्येतरनयनदृष्टवद्दृष्टम्। न चेह तथा॥

तद्बोधेति, धर्मिबोधेत्यर्थः। तावन्मात्रेति धर्मिमात्रेत्यर्थः, यद्यपि धर्मबोधस्य धर्मिबोधाधीनत्वे प्राग्धर्मिबोधः स्यात् पश्चाद् धर्मबोध इति पूर्वं धर्माबोधेऽपि धर्मिबोधो भवतीति धर्माबोधनत्वहेतुना धर्मिबोधनत्वाभावानुमानस्य बाधितत्वमेवेति तन्निरासप्रयासोऽनर्थक एव, तथापि धर्मिज्ञानस्य युगपदशेषधर्मज्ञानापादकत्वमप्यनभ्युपगतमिति तत्खण्डनप्रयास इत्याशयेन तद्बोधमात्रेत्याद्युक्तमेव विवृणोति-यद्यपीत्यादिना, युगपदशेषधर्मग्रहापादकत्वादिति, युगपदशेषधर्मग्रहापादकत्वाभावादित्यपि पाठः, एतेनेति, धर्माणां भिन्नसामग्रीबोध्यत्वव्युत्पादनेनेत्यर्थः, भेदादिति धर्मधर्मिणोर्भेदादित्यर्थः, अस्य च चेदप्रतीतिरि-

त्यनेनान्वयः,प्रमाणानां धर्मिबोधकत्वाऽविशेषे धर्मबोधकत्वाबोधकत्वलक्षणो विशेषः कुतस्त्य इत्यत आह-विचित्रेति,शक्तिवैचित्र्यान्न तुल्यप्रतिभासनियम इत्यर्थः । विचित्रशक्तिकत्वमेवाह-लिङ्गस्येति, प्रसिद्धप्रतिबन्धाधीनशक्तिकत्वादिति, प्रसिद्धप्रतिबन्धप्रतिसन्धानशक्तिकत्वादिति पाठान्तरम्, अस्य चायमर्थः, प्रसिद्धो दृढतरप्रमाणावधारितो यः प्रतिबन्धो व्याप्तिः प्रतिसन्धानं च पक्षधर्मतानिश्चयः सैव शक्तिर्यस्य तत्तथा तस्य भावस्तत्त्वं तस्मादिति, केचित्तु प्रसिद्धो दृढतरप्रमाणावधारितो यः प्रतिबन्धस्तत्प्रतिसन्धानं पक्षधर्मे सैव शक्तिर्यस्येत्यर्थमाहुः । अर्थशक्तेः विषयगतचाक्षुषादिप्रत्यक्षयोग्यतायाः, अपिना सन्निकर्षसमुच्चयः । अर्थशक्त्यनभ्युपगमप्रयोज्यमतिप्रसङ्गमेवोपपादयति-रूपादिप्रतीताविति, चक्षुस्संयुक्तसमवायसन्निकर्षस्य प्रतियोगितासम्बधेन महत्त्वोद्भूतरूपयोश्च सामानाधिकरण्यसम्बन्धेन रूपादाविव रसगन्धादावपि सद्भावेन तद्वृत्तस्यापि चाक्षुषप्रत्यक्षप्रसङ्गादित्यर्थः । येनेति, प्रमाणेनेति शेषः, अन्यत्र येन प्रमाणेनेत्येव पाठः,अत्र चक्षुषा रूपस्योपलम्भ एव घटादिद्रव्यमुपलभ्यते तदनुपलंभे तेन तन्नोपलभ्यते, व्यापकतावच्छेदकस्य शक्यतावच्छेदकस्य वा वह्नित्वादेरुपलम्भ एव लिङ्गशब्दाभ्यां व्यापकश्शक्यो वा वह्निरुपलभ्यते तदनुपलम्भे नाभ्यां स नोपलभ्यत इति दृष्टान्तानुसरणं कर्तव्यम्,स इति धर्मीत्यर्थः, सर्वोपाध्यनुपलम्भे वेति, कस्याप्युपाधेरनुपलम्भ इत्यर्थः, अत्र स नोपलभ्यत इत्यनुषञ्जनीयम्, इन्द्रियजन्यप्रत्यक्षस्योक्तन्यायेन स्वलक्षणविषयत्वेऽपि लिङ्गशब्दजन्यानुमितिशाब्दविकल्पयोर्न तथात्वमित्याह-तथापीति, लिङ्गशब्दयोः लिङ्गशब्दजन्यविकल्पयोः,तत्र हेतुमाह-इन्द्रियेणेति, इन्द्रियजन्यप्रत्यक्षेणेत्यर्थः । असमानविषयत्वादिति, अन्यूनानतिरिक्तविषयत्वाभावादित्यर्थः । प्रतिभासभेदानुपपत्तेरिति, प्रतिभासस्य भेदो न्यूनाधिकविषयत्वं तदनुपपत्तेरित्यर्थः । यद्येन सहैकविषयं तत्तेन सहान्यूनानतिरिक्तविषयं यथा,वामदक्षिणचक्षुर्जन्ये

तस्मान्नैकविषयावित्याशयेनाह—एकविषयत्वमिति, प्रतिभासाऽभेदेनेति अन्यूनाधिकविषयत्वेनेत्यर्थः, दृष्टवदिति सप्तमीसमर्थाद्वतिः, दृष्टवदित्यत्र भावे क्तः, प्रतिभासभेदमेव स्फुटयति—

**यथा हि प्रत्यक्षचेतसि देशकालावस्थानियतातिपरिस्फुटस्वरूपाणि स्वलक्षणानि प्रतिभान्ति, न तथा शाब्दलैङ्गिकविकल्पेषु, तत्र हि विजातीयव्यावृत्तमिव परस्पराकारसङ्कीर्णमिवास्फुटमिव प्रत्यक्षापरिचितं किञ्चिद्रूपमाभासमानमनुभवविषयः, व्यावर्त्तकगोत्वादिस्फूर्त्तावपि व्यावृत्तेरस्फुरणाद्विजातीयव्यावृत्तमिवेति। एतच्च गोत्वादेर्विधिरूपतामते। व्यावृत्तिरूपतानये तु व्यावर्त्तकधर्मास्फुरणात् सजातीयान्तराद्व्यावृत्तेरस्फुरणात् परस्परेति, असाधारणधर्मास्फुरणादस्फुटमिति॥**

यथाहीति, प्रत्यक्षचेतसि निर्विकल्पात्मकप्रत्यक्षे, तत्रापि बौद्धमते स्वजन्यविकल्पद्वारोक्तप्रतिभासनमवगन्तव्यम्, नातोऽपसिद्धान्तदोषः। तत्र शाब्दलैङ्गिकविकल्पेषु, उक्तविशेषणानि समर्थयति—व्यावर्त्तकेति, व्यावर्त्तकधर्माऽस्फुरणादिति, विजातीयव्यावृत्तमिवेत्यनुषञ्जनीयम्, ऐन्द्रियकलैङ्गिकशाब्दविकल्पेष्वेकविषयत्वेऽपि करणभेदादेव स्फुटास्फुटप्रतिभासभेद इति नैयायिकाशङ्कायामाह—

**न चोपायभेदमात्रेण प्रतिभासभेद उपपद्यते। न हि प्रतिपत्त्युपायाः प्रतिपाद्याकारं परिवर्त्तयितुमीशते। न चैकं वस्तु द्व्याकारमिति प्रतिबन्धसिद्धिः। अत्र प्रयोगः, यो यः क्वचिद्वस्तुनि प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो नासौ तेनैकविषयो, यथा घटग्राहकात् पटप्रतिभासः, तथा च गवि प्रत्यक्षप्रतिभासाद्विपरीतः**

प्रतिभासो विकल्पकाल इति, यत्किञ्चिद्विषयापेक्षया न्यूनत्वलाभाय क्वचिद्वस्तुनीति । तथा च यो प्रत्य-तिभासविषययत्किञ्चिद्वस्त्वविषयको नासौ तद्विषयविषय इति व्याप्तिः फलिता बोध्या । इदमप्यवद्यम्, चित्राचित्रप्रतिभासाभ्यां मिथो विरुद्धाभ्यामेकनीलविषयाभ्यामनेकान्तात् । न हि चित्राध्यक्षे यन्नीलं चकास्ति तदेव पश्चान्न केवलम्, तदेव वा पुरुषान्तरस्य । येनाकारेणैकविषयत्वं तयोर्न तेनैव विरोधः,येन च विरोधो न तेनैकविषयत्वम् ,

नचोपायेति, निषेधे हेतुमाह–नहीति, करणभेदमात्रेण ज्ञाने वैजात्यं स्यात्, न तु विषयभेदनियम इत्यर्थः, भिन्नकरणजन्यज्ञानयोस्त्वयाऽप्यभिन्नविषयत्वोपगमादिति भावः । प्रतिपाद्याकारं,विषयाकारमित्यर्थः । अन्यत्र प्रतिपत्त्याकारमिति पाठः । परिवर्तयितुम्,अन्यथाकर्तुम्ननु वस्तुस्वाभाव्यमेव स्फुटास्फुटभेदेन द्विरूपमस्तु येनैकविषयत्वेऽपि प्रतिभासभेदस्स्यादित्यत आह–नचेति,वैयधिकरण्यं निरस्यन्नाह–अत्र प्रयोग इति, अस्य प्रयोग इति पाठान्तरम्,घटग्राहकादिति,घटग्रहादिति पाठान्तरम्, गवीति, विकल्पकाले यो गवि विकल्पात्मकप्रतिभासस्स गोस्वलक्षणे यः प्रत्यक्षप्रतिभासो निर्विकल्पकं तस्माद्विपरीत इति न स तेनैकविषय इति न तस्य स्वलक्षणविषयतेत्यर्थः । चित्राचित्रप्रतिभासाभ्यामिति, चित्रप्रतिभासः चित्रपटे नीलपीते इति समूहालम्बनो यः प्रतिभासो ज्ञानं यश्चाचित्रप्रतिभास इदं नीलमिदं पीतमित्याद्येकैकाकारः प्रतिभासो ज्ञानं ताभ्यामित्यर्थः । नीलपीते इत्याद्याकारचित्राध्यक्षेण सहैकविषयत्वरूपं साध्याभावमेव नीलमित्याद्याकारकाचित्राध्यक्षे उपपादयति– नहीति, ननु बौद्धानां मते भावानां क्षणिकत्वात् कालान्तरभाविनि नीलाध्यक्षे नीलपीते इति पूर्वोत्पन्नचित्राध्यक्षविषयीभूतमेव नीलं

न चकास्ति, किन्त्वन्यमेवेति नोक्तव्यभिचार इत्याशङ्कायामाह—तदेव वेति, तदेव वेति पाठान्तरम्, यदा यदेकं नीलमेकस्य पुरुषस्य चित्राध्यक्षे चकास्ति तदानीमेवान्यस्य पुरुषस्य केवलं तन्नीलं न चकास्तीति नेत्यर्थः । चित्रत्वाचित्रत्वाभ्यां चित्राचित्रप्रतिभासयोर्विरोधः, नीलत्वेन चैकविषयतेति न तत्रानेकान्तिकत्वमित्याशङ्कते बौद्धः—येनेति—

धर्मान्तराकारेण हि विरोधो नीलमात्राकारेण चैकविषयतेति चेत्, हन्तैवम् यत्प्रतिभासविषययदर्थाविषयो यः नासौ तेनार्थेन तत्समानविषय इति पर्यवसिता व्याप्तिः । तथा च यदि प्रत्यक्षविषयगोत्ववत्पिण्डाविषयत्वं हेतूक्रियते तदा स्वरूपासिद्धिः, प्रत्यक्षवत् शब्दादिविकल्पस्यापि गोत्ववत्पिण्डविषयत्वोपगमात् । अथ प्रत्यक्षविषयदेशादिनियमाविषयत्वं,तदा सिद्धसाधनम्,देशादिनियमेनार्थेन प्रत्यक्षसमानविषयताविरहस्य शाब्दादिविकल्पेऽस्माभिरभ्युपगमात् । अथ प्रत्ययानां स्फुटास्फुटप्रतिभासत्वम् स्फुटास्फुटार्थावगाहित्वम्, न चैकोऽर्थः स्फुटोऽस्फुटश्च सम्भवति, विरोधात्, अतः स्फुटप्रतिभासस्याध्यक्षस्य स्फुटत्वं स्वलक्षणविषयत्वम्,अस्फुटप्रतिभासस्य च लैङ्गिकादिविकल्पस्यास्फुटालीकविषयत्वमित्येवं किं न स्यादिति चेत् ।

यत्प्रतिभासविषययदर्थाविषयो यः,यत्प्रतिभासश्चित्रप्रतिभासस्तद्विषयो यदर्थः पीतं तदविषयको यो नील इत्याद्याकारोऽचित्रप्रतिभासः, असौ नीलाद्यैकाकारोऽचित्रप्रतिभासः, तेनार्थेन पीतात्मकार्थेन, न तत्समानविषयः न चित्रप्रतिभासविषयविषयक इत्येवं विशेषव्याप्तिरेवाहता स्यात्, तथा चोक्तव्यभिचारपरिहारेऽपि स्वरूपासिद्ध्यादिदोपोपनिपातस्स्यादित्येकं सिध्यतोऽपरमच्युतिरित्याशयेनाह-तथा चेति, लैङ्गिकशाब्दगोविकल्पे गोप्रत्यक्षविषयविषयकत्वाभावसाधने हेतुघटक-

यदर्थपदेन प्रत्यक्षविषयगोत्ववत्पिण्डो गृह्यते प्रत्यक्षविषयदेशादिनियमो वा, आद्ये आह-यदीति, द्वितीये त्वाह- अथेति, अस्माभिरभ्युपगमादिति, तथा च प्रत्यक्षे देशकालनियमादयो धर्मविशेषा ये भासन्ते ते सर्व एव शाब्दलैङ्गिकविकल्पे विषयभावमासादयन्तीति नाभ्युपगच्छाम इति तदविषयकत्वेऽपि लैङ्गिकादिविकल्पानां स्वलक्षणात्मकधर्मिविषयत्वमविरुद्धमिति भावः । स्फुटत्वं स्वलक्षणविषयत्वमिति, स्फुटस्वलक्षणविषयत्वमिति पाठान्तरम् । प्रत्ययमात्रं स्फुटमेव, नन्वेवं तर्हि तत्र स्फुटास्फुटव्यवहारः कथमिति चेत्, एकधर्मिविषयतानिरूपितबहुतराल्पतरधर्मविषयतानिबन्धन इत्याशयेन निषेधे हेतुमाह-

न । बहुतराल्पतरधर्मवद्धर्मिविषयत्वेनैव स्फुटास्फुटव्यवहारोपपत्तेः, तावन्मात्रस्यैकविषयत्वाविरोधात् । यथा यथा हि धर्माः प्रतिभान्ति तथा तथा स्फुटप्रतिभासव्यवहारो, यथा यथा च धर्माणामप्रतिपत्तिः तथा तथा प्रतिभासस्य ः॰घव्यवहारो दूरान्तिकादौ प्रत्यक्षेऽपि लोकानाम्, नतु सर्वथैवाप्रतिपत्ताविति । दूरादिप्रत्यया अपि नास्माकं स्वलक्षणसाक्षिणो, न वा साक्षात्कारिणः, परन्त्वलीकालम्बना अनादिविकल्पवासनासमुत्थाः समारोपितसाक्षात्कारा इति चेत्ति चेत्, हन्तैवं यमर्थमनुमिनोमि तमेव पश्यामीति लैङ्गिकप्रत्यक्षयोरेकविषयताग्राहकोऽनुव्यवसायो धर्मधर्मिणोरभेदात् तत्तद्धर्मग्राहिणो लैङ्गिकप्रत्ययस्य धर्मिविषयत्वानुपपत्त्या बाधकेनाप्रमाणीकर्तव्यस्त्वया, सिद्धे च धर्मधर्मिणोर्भेदे बाधकाभावात् प्रमाणेनानुव्यवसायेन कथं न बाधितम् लैङ्गिकप्रत्यक्षयोरेकविषयत्वाभावसाधकमनुमानम् ॥

बहुतरेति, यथा यथैकस्मिन् धर्मिणि बहुबहुतरबहुतमादिप्रतिभासस्तथा तथा स्फुटस्फुटतरस्फुटतमादिप्रतिभासव्यवहारः

यथा यथा चैकस्मिन् धर्मिण्यल्पाल्पतरतमादिधर्मप्रतिभासस्तथा तथाऽस्फुटास्फुटतरतमादिप्रतिभासव्यवहार इत्युक्तमेवोपपादयति—यथा यथा हीति, अत एवैकधर्मिविषयकेऽपि दूरान्तिकप्रत्यक्षेऽस्फुटस्फुटप्रतिभासत्वं दृष्टमित्याह—दूरेति, नतु सर्वथैवाप्रतिपत्ताविति, मान्द्यव्यवहार इत्यनुषङ्गः, धर्मिणोऽप्रतीतावेव प्रतिभासस्यास्फुटत्वमिति न तु, तदप्रतीतौ तत्रास्फुटप्रतिभासत्वानुपपत्तेरिति भावः। दूरान्तिकादिप्रत्यक्षदृष्टान्तस्याप्यलीकविषयत्वेन स्वलक्षणावगाहित्वाभावादनादिविकल्पवासनासमुत्थत्वादनारोपितप्रत्यक्षत्वाभावादसिद्धिमाशङ्कते बौद्धः—दूरादिप्रत्यया अपीति, स्वलक्षणसाक्षिण इति स्वलक्षणात्मकधर्म्यवगाहिन इत्यर्थः। हन्तैवमित्यादि, यमर्थमनुमिनोमि तमेव पश्यामीत्यनुव्यवसायोऽप्रमाणीकर्त्तव्यस्त्वयेत्यन्वयः, लैङ्गिकप्रत्यक्षयोरेकविषयत्वाभावसाधकानुमानस्य लैङ्गिकप्रत्यक्षविषयीभूतैकार्थविषयकानुव्यवसायरूपप्रत्यक्षबाध एवेत्युपदर्शनाय लैङ्गिकप्रत्यक्षयोरेकविषयताग्राहक इत्यनुव्यवसायस्वरूपोपरञ्जकं विशेषणमुक्तम्, अनुव्यवसायस्याप्रमाणीकर्त्तव्यत्वे हेतुग्रन्थमाह—लैङ्गिकप्रत्ययस्य धर्मिविषयत्वानुपपत्त्या बाधकेनेति—धर्मिविषयत्वानुपपत्तौ हेतुमाह—धर्मधर्मिणोरभेदात्तद्धर्माग्राहिण इति, बाधकाभावादिति, किञ्चिद्धर्माऽभानेऽपि किञ्चिद्धर्मभानाद्धर्मिभानं लैङ्गिकप्रत्ययस्य स्यादेवेति तस्य धर्मिविषयत्वोपपत्तेरनुव्यवसायेऽप्रामाण्यनिश्चायकोक्तानुपपत्त्यात्मकबाधकाभावादित्यर्थः।

यदा च तद्धर्मधर्मिणोर्भेदे सन्देहस्तदा बाधकसन्देहादापाततोऽनुव्यवसायस्य प्रामाण्यसन्देहेऽपि दूरादिप्रत्ययैः कथं न सन्दिग्धानैकान्तिकम्। अथ दूरादिप्रत्यया अपि परकुक्षौ निक्षिप्यन्ते, तदा कथं नाप्रयोजकम्, तावतापि प्रतिभासभेदस्योपपत्तेः। यदि च नैवम्, दूरतमादिप्रत्ययेषु कः समाश्वासः। दूरतमादौ

सद्‌द्रव्यमित्यादयः क्रमिकाः प्रत्यया यदि नैकविषयाः, न तर्हि सर्वे प्रमाणं स्युः। न खलूत्तरोत्तरप्रत्ययोल्लिखितरूपरहितं पूर्वपूर्वप्रत्ययगोचरो वस्त्वन्तरं नाम। अथैक एव प्रमाणं, कतमस्तथेति वक्तव्यम्, यस्यार्थो लभ्यत इति चेत् ॥

यदा च तद्धर्मधर्मिणोर्भेदे सन्देहस्तदा बाधकसन्देहादिति, भेदे संदेहो भेदाभेदद्विकोटिक इत्यभेदकोट्यपेक्षया धर्मधर्मिणोरभेदात्तत्तद्धर्मग्राहिणो लैङ्गिकप्रत्ययस्य धर्मिविषयत्वानुपपत्तिरूपबाधकसन्देहादित्यर्थः। अनुव्यवसायस्य प्रामाण्यसन्देहेऽपीति, अनुव्यवसायात्मकप्रत्यक्षस्य प्रामाण्यसन्देहात् तदात्मकबाधनिश्चयस्याप्रामाण्यज्ञानानास्कन्दितत्वाभावादुक्तानुमितिप्रतिबन्धकत्वाभावेऽपीत्यर्थः, ननु दूरादिप्रत्यया यदि पक्षकुक्षौ न निक्षिप्तास्स्युस्तदा पक्षातिरिक्तेषु तेषु हेतुनिश्चयेऽपि साध्याभावसन्देहाद्भवतु हेतोस्सन्दिग्धाऽनैकान्तिकता,न चैवम्, न च पक्षरूपत्वेऽपि तेषु तद्दोषतादवस्थ्यमिति वाच्यम्, एककालावच्छिन्नसामानाधिकरण्यसम्बन्धेन सिद्धिविशिष्टपरामर्षे अनुमित्सायां जायमाना याऽनुमितिस्तद्भिन्नानुमितिमात्रस्यैवोच्छेदापत्तेः, वस्तुतस्तु सर्वत्र साध्यतदभावसंदेहस्य सद्भावादित्याशयेनाह–अथेति, परकुक्षौ परोक्षकुक्षौ, तथा च तस्य पक्षत्वमेवेति भावः, पक्षकुक्षावित्येव पाठस्समीचिनः,अन्यत्र तथैव दर्शनात्, दूरादिप्रत्ययानां पक्षान्तर्भावेऽपि नैकविषयत्वाभावेन सह प्रतिभासभेदहेतोर्व्याप्तिसिद्धिः, एकविषयत्वेऽपि बहुतराल्पतरधर्मवद्धर्मिविषयत्वेन प्रतिभासभेदस्योपपत्तेरित्याह–तदेति, यदि च नैवमिति तदेति शेषः,दूरतमादिप्रत्ययेषु कः समाश्वास इति, एतदेव विवृणोति–दूरतमादाविति, यद्यपि पूर्वोत्तरप्रत्ययानां भिन्नाकारत्वेन नैकविषयत्वं, तथापि नाऽप्रामाण्यम्, अन्यान्यवस्तुविषयत्वेन प्रामाण्योपपत्तेरित्याशङ्कायामाह–न खल्विति, पूर्वपूर्वप्रत्य-

येषु यदेव पुरोवर्त्तिवस्तु सामान्यरूपेण प्रतिभासते तदेवोत्तरोत्तरप्रत्ययेषु विशेषरूपेण भासते नत्वन्य इत्येकस्य धर्मिणस्सर्वत्र सामान्यरूपेण विशेषरूपेण वा भानादेकविषयत्वादेव सद्द्रव्यमित्यादिक्रमिकप्रत्ययानां प्रामाण्यमिति भावः। विनिगमकमुपदर्शयितुमाशङ्कते-यस्येति, अर्थो विषयः। उत्तरोत्तरप्रत्ययगोचरव्याप्यतत्तद्धर्मविशिष्टार्थलाभे पूर्वपूर्वप्रत्ययगोचरव्यापकतत्तद्धर्मविशिष्टार्थलाभोऽप्यस्तीत्यर्थलाभोऽपि सर्वस्यैव, पूर्वपूर्वधर्मव्याप्योत्तरोत्तरधर्मविशिष्टपिण्डगोचरक्रमिकतत्तत्प्रत्ययस्याविशेषादिति विनिगमकाभाव एवेत्युत्तरयति—

ननु लाभोऽपि पूर्वपूर्वोपलब्धानुपमर्देनैव, नहि सत्त्वद्रव्यत्वपार्थिवत्ववृक्षत्वादिकं परिभूय शिंशपा लभ्यते। यस्यार्थक्रियास्थितिरिति चेत्, सर्वेषामनुवृत्तेः कस्यार्थक्रियेति किं निश्चायकं, सर्वेषां सदादिप्रत्ययगोचराणां, न किञ्चिन्निश्चायकम्। असङ्कीर्णा च पत्रकाण्डविशेषलक्षणार्थक्रिया न सदादेः, पनसादेरपि तत्प्रसङ्गात्, किन्तु शिंशपाया एवेत्यस्ति विशेषनिश्चायकमिति चेत्। असङ्कीर्णाप्यर्थक्रिया नैकव्यक्तिमात्रात्, किन्तु सामग्रीतः, तथा च पूर्वभावित्वस्य नियामकसहकारिसमवधानस्य चाविशेषात् सर्वेषामेव कुतो न सार्थक्रिया॥

नन्विति, पूर्वानुपमर्दमेवाह-नहीति, अर्थक्रियाकारिण एव सत्त्वात् यस्यार्थक्रिया दृश्यते तद्विषयक एव प्रत्ययः प्रमेति विनिगमकमुपदर्शयितुं पुनराशङ्कते-यस्यार्थक्रियास्थितिरिति, यत्रार्थक्रियासिद्धिरिति पाठान्तरम्, पूर्वपूर्वप्रत्ययगोचराणां सत्त्वादीनामनुगतत्वादनुपमर्दश्चेत्तर्हि कस्यार्थक्रिया कस्य च नेति न निश्चय इत्यनाश्वासस्तदवस्थ एवेत्याह-सर्वेषामिति,

तत्प्रसङ्गादिति, पत्रकाण्डविशेषलक्षणार्थक्रियाप्रसङ्गादित्यर्थः, तद्गतवैजात्यावच्छिन्नप्रयोजकतावच्छेदकत्वेनाभ्युपगतानां सत्त्वद्रव्यत्वादीनां पनसादौ सत्त्वादिति भावः । पूर्वभावित्वस्येति, सद्द्रव्यपृथिवीवृक्षाणामिति शेषः ।

तत्सन्ताननियता यार्थक्रिया सा तस्यैव, नेतरस्य, तत्सत्त्वेऽपि तदनुत्पत्तेरिति चेत्, नायमपि नियमः, तत्सान्तानिकसत्त्वेऽपि तत्तत्सहकारिविरहेण तत्तदर्थक्रियाविरहदर्शनात् । अन्वयव्यतिरेकाभ्यां विजातीयकार्याणि प्रति विजातीयानां कारणानां हेतुत्वे सुदृढे न दोष इति चेत्, तर्हि दूरतमादिविषयप्रत्ययाः प्रमाणतया वाच्याः, सर्वेषामेव तेषां तान्तामर्थक्रियां प्रति प्रयोजकतयान्वयव्यतिरेकगोचरत्वात्, एवं च यथा वृक्षः शिंशपेति बीजं धान्यं शालिः कलम इति च प्रत्यया उपलभ्यमानसामान्यविशेषभावापन्नपत्रकाण्डाङ्कुरलक्षणार्थक्रियसद्विषयतया प्रमाणीभवन्तोऽभिन्नविषयतया व्यवतिष्ठन्ते, सदादिप्रत्यया अपि तथा व्यवस्थाप्याः, अन्ततः सदादिव्यवहाररूपार्थक्रियाकारिविषयत्वादिति ध्येयम् ॥

तत्सन्तानेति शिंशपासन्तानेत्यर्थः । तस्यैव शिंशपासान्तानिकस्यैव, नेतरस्य न सद्द्रव्यादेः, कथं नेत्याकाङ्क्षायामन्वयव्यभिचारदोषमाह—तत्सत्त्वेऽपीति, पनसाद्यात्मकसद्द्रव्यादेः कारणस्य सत्त्वेऽपि शिंशपासन्ताननियतार्थक्रियाया अनुत्पत्तेरित्यर्थः, अयमपि नियम इति, तत्सन्ताननियता यार्थक्रिया सा तस्यैवेति नियम इत्यर्थः, तत्राप्यन्वयव्यभिचारदोषस्य तदवस्थत्वादित्याह—तत्सान्तानिकेति, शिंशपासान्तानिकेत्यर्थः । ननु तदितरसकलसामग्रीसहितस्यैव शिंशपासान्तानिकस्य कारणत्वान्नोक्तव्यभिचार इति चेत्, तर्हि पनसादौ सद्द्रव्यवृक्षरूपव्यापकसामग्रीसत्त्वेऽपि शिंशपारूपव्याप्यसा-

मग्र्यभावान्न पनसादेश्शिंशपासाध्यपत्रकाण्डादिलक्षणविशेषार्थक्रियेति नोक्तव्यभिचार इति समस्तसमाधिरिति भावः । यद्यपि पत्र-काण्डादिलक्षणार्थक्रिया सामग्र्यधीना तथापि कारणताग्राहकावन्वयव्यतिरेकौ, तौ च विजातीयपत्रकाण्डादिकार्यं प्रति शिंशपाया एव, नतु सदादेः, तत्सत्त्वेऽपि पनसादौ तदभावात्, विशेषधर्मावच्छिन्नं प्रति न सामान्यधर्मावच्छिन्नस्य कारणत्वम्, अन्वयव्यभिचारात्, अतोऽन्वयव्यतिरेकाभ्यां प्राधान्येन शिंशपाया एव पत्रकाण्डादि प्रति हेतुत्वे सिद्धे सदादेः कारणतायां मानाभावेनार्थक्रियाकारित्वाभावेनासत्त्वात्तद्विषयाः प्रत्ययाः न प्रमाणानीत्याशङ्कते—अन्वयव्यतिरेकाभ्यामिति, तर्हि यथा पत्रकाण्डादिविशेषत्वावच्छिन्नं प्रति शिंशपात्वेनान्वयव्यतिरेकौ तथा जन्यसत्त्वावच्छिन्नं प्रति सत्त्वेन संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन पत्रत्वाद्यवच्छिन्नं प्रति वृक्षत्वेनान्वयव्यतिरेकौ स्तः इति ताभ्यां सदादीनां सर्वेषां कारणत्वावधारणाज्जन्यसदादिरूपार्थक्रियाकारित्वात्सद्रूपत्वेन तद्गोचरास्सद्द्रव्यमित्यादयः क्रमिकास्सर्वे प्रत्यया यथार्था इत्यायातमित्याह—तर्हीति, प्रयोजकतयेति, प्रयोजकताया इति पाठान्तरम्, उक्तमर्थमेव दृष्टान्तद्वारा सङ्गमयति—एवञ्चेति, तथेति, अभिन्नविषयतया एकधर्मिविषयकतयेति यावत्, ननु सत्त्वादेर्जन्यसत्त्वादेश्च सामान्यधर्मस्यासद्रूपत्वान्न तद्रूपेण कार्यकारणभाव इति जन्यसत्त्वाद्यवच्छिन्नकार्यसामान्यं न सत्त्वाद्यवच्छिन्नसदादिकारणसामान्यतस्सम्भवतीति न सामान्यार्थक्रियाकारित्वमवलम्ब्य सदादिप्रत्ययानां प्रामाण्यमिति बौद्धो यदि प्रत्यवतिष्ठेत, तदापि नो न काचिदपि क्षतिरित्याशयं प्रकटयति—अन्ततः इति, सदादिषूक्तसामान्यार्थक्रियाकारित्वाभावेऽपि सत्सदिति द्रव्यं द्रव्यमित्यादिव्यवहाररूपार्थक्रियाकारित्वस्य तत्रापि सद्भावेन तद्विषयकप्रत्ययानां प्रामाण्यं स्यादेवेति भावः । प्रत्यक्षं ह्यपरोक्षार्थप्रतिभासरूपं लैङ्गिकादिकञ्च परोक्षार्थप्रतिभासरूपमिति परोक्षापरोक्षार्थविषयकप्रति-

भासभेदात् प्रत्यक्षलैङ्गिकादिविकल्पयोर्विषयभेदमाशङ्कते-

स्यादेतत् न धर्मान्तरेण प्रतिभासभेदो विषयभेदहेतुः, किन्तु परोक्षापरोक्षतया, परोक्षापरोक्षत्वे हि परोक्षापरोक्षविषयकत्वे, न चैकं वस्तु परोक्षमपरोक्षं च सम्भवति, विरोधात्, तथात्वे वा तद्विषयकस्यैव विज्ञानस्य परोक्षापरोक्षोभयरूपतापत्तिः, ततः परोक्षत्वापरोक्षत्वे रूपस्पर्शाविव धर्मिणोर्धर्मभेदौ, तद्विशिष्टश्च धर्मी परोक्षापरोक्षयोर्विज्ञानयोर्विषयो रूपस्पर्शविशिष्ट इव नायनस्पार्शनयोरतो न विकल्पस्याध्यक्षैकविषयत्वमिति। मैवम्। परोक्षापरोक्षतयोरविषयाकारत्वात्। द्विविधो हि ज्ञाने धर्मौ विषयावच्छेदो जातिभेदश्च। विषयावच्छेदो विषयविषयकत्वं, जातिभेदो विषयास्पर्शी धर्मः। परोक्षत्वस्यानुभवत्वसङ्करापत्त्या साक्षात्कारीतरज्ञानत्वरूपत्वोपगमात्, तत्र विषयावच्छेदभेदेन विषयस्य भेदस्थितिरभेदनिराकरणं वा, न तु द्वितीयेन, तस्य कारणभेदेनैवोपपत्तेः॥

स्यादेतदिति, धर्मान्तरेणेति, धर्मान्तराकारेणेति पाठान्तरम्,परोक्षापरोक्षतयेति, प्रतिभासभेदो विषयभेदहेतुरित्यनुषञ्जनीयम्। परोक्षापरोक्षतयेत्यस्यार्थमाह-परोक्षापरोक्षत्वे इति, परोक्षापरोक्षत्वे मुख्यवृत्त्या वस्तुधर्मावेव तद्विशिष्टार्थविषयकत्वात्प्रतिभासोऽपि कश्चित् परोक्षः कश्चिदपरोक्ष इत्युपचारतो ज्ञानधर्माविति भावः। ननु भवतु वस्तुधर्मौ परोक्षाऽपरोक्षत्वे ते किमेकस्यैव वस्तुनो धर्मौ किंवा विभिन्नवस्तुन इत्याशङ्कायामाह-नचैकमिति, तथात्वे वेति, एकमेव वस्तु परोक्षापरोक्षोभयरूपमित्यभ्युपगमे वेत्यर्थः। अविषयाऽऽकारत्वादिति, विषयाऽघटितत्वादित्यर्थः, अर्थो हि द्विविधः परोक्षोऽपरोक्षश्चेति

परोक्षार्थविषयकत्वाज्ज्ञानमपि परोक्षम् अपरोक्षार्थविषयकत्वाज्ज्ञानमप्यऽपरोक्षमिति परोक्षत्वमपरोक्षत्वञ्च ज्ञानगतं विषयकृतोपाधिलक्षणं न वस्तुभूतमिति भवतां मतं, न युक्तिवहं, व्यवसायकाले विषयभाने तद्भानं न भवति, अनुव्यवसायकाले ज्ञानभाने च तद्भानं भवतीति परोक्षत्वापरोक्षत्वयोर्विषयधर्मत्वाभावेन ज्ञाने ते नौपचारिके, किन्तु तत्र वस्तुभूते एवानुभवबलादभ्युपगन्तव्ये, तथा च ते सामग्रीविशेषप्रयोज्ये इत्येकविषयकयोरपि ज्ञानयोरिन्द्रियादिघटितसामग्रीविशेषादपरोक्षरूपता लिङ्गशब्दादिघटितसामग्रीविशेषाच्च परोक्षरूपतोपपद्यत इति न परोक्षापरोक्षप्रतिभासभेदाद्विषयभेदसाधनं सङ्गतमिति भावः। तदेवोपपादयति–द्विविधो हीति, ज्ञाने धर्म इति, ज्ञानधर्म इति पाठान्तरम्, परोक्षत्वस्य जातिरूपत्वाभावादाह–जातिभेदेति, कथं न परोक्षत्वं जातिरूपमिति चेत्, तत्र जातित्वबाधकस्य साङ्कर्यस्य सद्भावादित्याह–परोक्षत्वस्येति, भेदस्थितिरिति, विषयकृते प्रतिभासभेदे विषयभेदस्य तन्त्रत्वाद् भिन्नविषयकत्वसिद्धिरिति भावः। अभेदनिराकरणमिति अभिन्नविषयकत्वव्यवच्छेद इत्यर्थः, द्वितीयेनेति, जातिभेदेनेत्यर्थः। ज्ञानगतजातिभेदात्मकज्ञानवैजात्ये न विषयभेदस्तन्त्रम्, किन्तु कारणवैजात्यम्, नवा ज्ञानगतसाजात्ये विषयाऽभेदस्तन्त्रम्, किन्तु कारणसाजात्यमित्युपपादयति–

एकस्मिन्नेव हि विषये शब्दलिङ्गादिरूपकारणवैजात्ये शाब्दत्वानुमितित्वादिरूपं ज्ञानानां वैजात्यम्। भिन्नेऽपि च घटपटादाविन्द्रियनयनादिरूपकारणसाजात्ये साक्षात्कारित्वचाक्षुषत्वादिरूपं साजात्यमित्युभयतो व्यभिचारात्, ज्ञानवैजात्यसाजात्ययोर्विषयभेदाभेदौ न तन्त्रम्, किन्त्वन्वयव्यतिरेकाभ्यां कारणवैजात्यसाजात्ये एवेति। सोऽयमित्याद्यभिलापभेदात्परोक्षापरोक्षविषयभेद इत्यप्ययुक्तम्। अयमभिमानिति प्रत्य-

क्षानुमितिशाब्दानां सोऽग्निमानिति च स्मृत्यनुमितिशाब्दानां मितीनामुदयाच्छब्दभेदस्याकिञ्चित्करत्वात् ॥

एकस्मिन्नेव हीत्यादिना, एतावता प्रतिभासभेदात्परोक्षापरोक्षयोर्विषयभेद इति पराभिप्रायो व्युदस्तः, इदानीमभिलापभेदात्तयोस्तद्भेद इति पराकूतं प्रतिक्षिपति—सोऽयमित्याद्येति,परोक्षार्थे स इति शब्दव्यवहारादपरोक्षार्थे चायमित्यादिशब्दव्यवहारात्परोक्षापरोक्षज्ञानयोर्विषयभेद इत्यर्थः ।

कथं तर्हि परोक्षोऽर्थः प्रत्यक्षश्चेति व्यवहारः ? यथाऽनुमितो दृष्टः स्मृत इति । यदप्यत्यन्तविलक्षणानामित्यादि, तदपि सन्दिग्धानैकान्तिकं,विधिनापि तथाभूतेऽपि सालक्षण्यव्यवहारस्य निर्वाहात् । तथाहि, अयं व्यवहारो न निर्निमित्तो, नाप्यनेकनिमित्तो, नाप्यनेकासंसर्ग्यैकनिमित्तोऽतिप्रसङ्गात् । ततोऽनेकसंसर्ग्यैकनिमित्तः परिशिष्यते, तस्य तादृशो विधिरूपत्वे को विरोधो येन व्याप्तिः स्यात्, प्रत्युत निषेधरूपतायामेव दर्शितः प्रागिति कृतं पल्लवसमुल्लासनैः । नापि प्रवृत्त्यादिनिर्वाहकत्वमपोहकल्पनायाः, अपोहविशिष्टस्वलक्षणालम्बनविकल्पपक्षस्याग्रे निरसनीयत्वात्, स्वलक्षणास्पर्श्यपोहकल्पनायाश्च प्रवृत्त्यनुपयोगादन्यावभासादन्यत्र प्रवृत्तावतिप्रसङ्गात् । अध्यवसायाददोष इति चेत्, अथ कोऽयमध्यवसायः, किमलीकस्य वस्तुधर्मतयावभासः, उत वस्तुतादात्म्येनावभासः, ततो भेदाग्रहो वा, वस्तुवासनासमुत्थत्वं वा । नाद्यः, वस्तुधर्मस्य वस्त्वनतिरिक्तत्वात्, वस्त्वभाने वस्तुधर्मत्वभानासम्भवाच्च, वस्त्वनवगाहिनो विकल्पस्य वस्तुधर्मत्वावगाहित्वानुपपत्तेः ॥

यथानुमित इत्यादि, यथैकस्मिन्नेव विषयेऽनुमितौ दर्शने स्मृतौ च सत्यां तद्विषयत्वात्तत्र यथाक्रममनुमितो दृष्टस्स्मृत इति व्यवहारस्तथैकस्मिन्नेव विषये परोक्षज्ञानविषयत्वात्परोक्ष इति प्रत्यक्षज्ञानविषयत्वाच्च प्रत्यक्षोऽपरोक्ष इति व्यवहार इत्यर्थः, इयता प्रबन्धेन यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति बौद्धोक्तो प्रथमन्यायो निराकृतः, अधुना यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपमिति द्वितीयन्यायं तदुक्तं दूषयितुमाह–यदप्यत्यन्तेति, सन्दिग्धेति, विपक्षे बाधकाभावादित्यर्थः। अन्यथासिद्धिमुखेन सन्दिग्धानैकान्तिकत्वं स्फुटयति–विधिनापीति, तथाभूतेऽपि अत्यन्तविलक्षणेऽपि। तथाभूतेनेति पाठान्तरम्, विधिरत्र जातिरिति व्यवस्थापयति–तथाहीत्यादिना, न निर्निमित्त इति, अनुगतव्यवहारस्य निर्निमित्तत्वे नित्यत्वप्रसङ्गः, नाप्यनेकनिमित्त इति, तथात्वाभ्युपगमेऽननुगताकारत्वप्रसङ्गः, नाप्यनेकाऽसंसर्ग्यैकनिमित्त इति, अनेकाऽसंसर्गिण एकस्य निमित्तत्वे असम्बद्धत्वाऽविशेषात्तेन निर्धारितव्यक्तिष्विवानिर्धारितव्यक्तिष्वप्यनुगताकारव्यवहारप्रसङ्गस्स्यात्, एतदतिप्रसङ्गत्रयं सूचयितुमाह–अतिप्रसङ्गादिति, अस्य चोक्तत्रयेऽप्यन्वयः। परिशिष्यत इति, परिशेषानुमानञ्चैवम्, अत्यन्तविलक्षणानां सालक्षण्यव्यवहारोऽनेकसंसर्ग्यैकनिमित्तकोऽन्यानिमित्तकत्वे सति सनिमित्तकत्वाद् यन्नैवं तन्नैवमिति, तस्य तादृश इति, तथाच तादृशस्येति पाठान्तरम्, व्याप्तिरिति यदत्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिनिष्ठमिति त्वदुपदर्शिता व्याप्तिस्सिद्ध्येदित्यर्थः। एतच्च विधौ घटमानमित्यादिना पूर्वोक्तं बाधं स्मारयति–प्रत्युतेति, अपोहविकल्पः किं स्वलक्षणमालम्बते नवेति विकल्पद्वयं, तत्राद्यपक्षमाश्रित्याह–अपोहविशिष्टेति, द्वितीयपक्षं चाश्रित्याह–स्वलक्षणेति, विषयतासम्बन्धेन प्रवृत्तिं प्रति विषयतासम्बन्धेन विकल्पस्य कारणत्वात् स्वविषय एव तस्य प्रवर्त्तकत्वम्, अन्यथा गोज्ञानादश्वेऽपि

प्रवृत्तिस्स्यादित्याशयेनाह–अन्यावभासादिति, विकल्पस्य वस्तुधर्मत्वावगाहित्वानुपपत्तावेकं हेतुमाह–वस्तुधर्मस्येति, भवन्मते धर्मधर्मिणोरभेदाद्धर्मिणो वस्तुत्वे विकल्पे वस्तुधर्मत्वेन भासमानस्यापोहस्यापि वस्तुत्वमेव स्यात्, तथाच स्वसिद्धान्तकोपस्स्यादित्यर्थः। धर्मधर्मिणोर्भेदपक्षेऽपि हेत्वन्तरमाह–वस्त्वभान इति, धर्मत्वस्य सापेक्षत्वेन निरूपकस्य धर्मिणो भानाभावे तस्य भानं न सम्भवति, नहि पर्वताऽभाने पर्वतवृत्तित्वं वह्न्यादौ भासते, एतदेवोपपादयति–वस्त्वनवगाहिन इति—

न द्वितीयः, वस्तुनः स्वलक्षणस्यासाधारणत्वात्, तदनतिरिक्तस्य तत्तादात्म्यस्यापि तथात्वात्, तद्विषयत्वेऽसाधारणविषयतया शब्दविकल्पयोरप्रवृत्तिप्रसङ्गात्। सङ्केतग्रहाधीनप्रवृत्तिको हि शब्दः, सङ्केतश्चानुगतं रूपमपुरस्कृत्य स्वलक्षणेष्वशक्यो ग्रहीतुमानन्त्याद्विशिष्यानुपस्थितत्वाच्च। न चानुगतस्यासतो रूपस्य सता स्वलक्षणेन समं सम्बन्धोऽस्ति, विकल्पोऽपि चानुगतमसन्तं ग्राह्यमाकारमालम्ब्यैव प्रवर्तत इति॥

तथात्वात्–असाधारणत्वात्, तद्विषयत्वे वस्तुतादात्म्यविषयत्वे, शब्दस्याऽसाधारणविषयतयाऽप्रवृत्तिप्रसङ्गमुपपादयति–सङ्केतग्रहेति, सङ्केतग्रहाधीनशाब्दबोधजनको हि शब्द इत्यर्थः। अनुगतं धर्मं पुरस्कृत्य स्वलक्षणेषु सङ्केतग्रहो घटत्वादिविशिष्टो घटाद्यात्मकोऽर्थो घटादिपदवाच्य इत्याकारकस्स्यात्, न च तथा भवन्मते सम्भवति, घटत्वाद्यनुगतधर्मस्याऽसद्रूपत्वेन सद्भूतस्य घटाद्यर्थस्य तद्विशिष्टत्वाभावात् सदसतोरसम्बन्धादित्याह–न चानुगतस्येति, असाधारणविषयतया विकल्पस्याऽप्रवृत्तिप्रसङ्गोपपादनायाह–विकल्पोऽपीति, भवन्मत इति शेषः,

न तृतीयः, प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तेः, भेदाग्रहस्य सर्वत्र सुलभत्वात्। अतेभ्योऽध्यवसे-

यस्वलक्षणभिन्नस्वलक्षणेभ्यो भेदो गृहीत एवेति चेत्, किमतेषु गृह्यमाणेष्वगृह्यमाणेषु वा । नाद्यः, अतेषामपि स्वलक्षणानां विकल्पागोचरत्वात्, न च निर्विकल्पकोपस्थितान्यतानि स्वलक्षणानीति वाच्यम् ,स्वलक्षणास्पर्शिना विकल्पेनापोहाग्राहिणा चाविकल्पेन तदुभयभेदस्य ग्रहीतुमशक्यत्वात्,अनुपस्थितस्वलक्षणान्तरे प्रवृत्तेर्दुर्वारत्वात् । नन्विन्द्रियसन्निकर्षादिकमपि नियामकं वाच्यम् , अतो नातिप्रसङ्ग इति चेत्, न, इहोपवने सुरसानि सहकारफलानीत्यादिवाक्यान्नियतविषयेच्छाद्युत्पादात् न च तदानीं स्वलक्षणान्तरोपस्थितिः, न चेन्द्रियादिसन्निकर्षौ वेत्युक्तानतिवृत्तेः, न द्वितीयः, अनिर्ज्ञातावधेर्भेदस्याप्रथनात्, प्रथने वा अध्यवसेयाभिमतस्वलक्षणादपि भेदो गृह्येत, अविशेषात् । गृहीतादग्रहो भेदस्यागृहीतेभ्यस्तु तद्ग्रह इति चेत्, यद्यन्योन्याभावधर्मलक्षणो भेदस्तदा विपर्ययः, ज्ञायमानस्यैव प्रतियोगिनोऽन्योन्याभावग्रहात्, ज्ञायमानाच्चानध्यवसेये स्वलक्षणे भेदाग्रहात् तत्रापि प्रवृत्तिः स्यादित्यपि द्रष्टव्यम् ॥

प्रवृत्तीति, प्रवृत्तेः शाब्दस्य चेदं रजतमित्यादेस्सामानाधिकरण्यस्य नियमानुपपत्तेरित्यर्थः, प्रवृत्तेः सामानाधिकरण्यस्य च शाब्दस्य गौरयमित्यादिरूपस्य नियमो न स्यादित्यन्ये,यद्विषयकं ज्ञानं तत्रैव प्रवृत्तिरिति नियमाऽनुपपत्तेरिति भावः । गोविषयकज्ञानजन्यप्रवृत्त्यविषयेभ्योऽश्वादिभ्यो गोविकल्पविषयव्यावृत्तेर्भेदो गृहीत एवेति भेदग्रहस्य प्रतिबन्धकस्य सत्त्वान्न भेदाग्रहस्सर्वत्रेत्याशङ्के—अतेभ्य इति,अतेषामपीति प्रवृत्त्यविषयाणामपीत्यर्थः, व्यावृत्त्यात्मकानुयोगिग्राहिणस्स्वलक्षणात्मकप्रतियोग्यग्राहिणो विकल्पस्योक्तप्रतियोगिग्राहिण उक्तानुयोग्यग्राहिणो निर्विकल्पस्य च न तदुभयभेदग्राहित्वं तदुभयाग्राहित्वादित्याह—स्वलक्षणाऽस्पर्शि-

नेति, यत्स्वलक्षणं निर्विकल्पोपस्थितिगोचरो न तत्र भेदाग्रहस्य सत्त्वात्प्रवृत्तिस्स्यादेवेत्यतिप्रसङ्गदूषणान्तरमप्याह–अनुपस्थितेति, उक्तातिप्रसङ्गनिवारणायाशङ्कते–नन्विति, नियतविषयेच्छाद्युत्पादादिति, तत्र सहकारफलेन सहेन्द्रियसन्निकर्षाऽभावेऽपीष्टसाधनताज्ञानकृतिसाध्यताज्ञानचिकीर्षादिक्रमेण प्रवृत्त्यादिसम्भवेन व्यभिचारादिन्द्रियसन्निकर्षस्य नियामकत्वं न सम्भवति, किन्तु भेदाग्रहस्यैव, स च सहकारफलात्मकस्वलक्षणेनेवानुपस्थिततदन्यस्वलक्षणेनापीति तत्रापि प्रवृत्तिप्रसङ्ग इति भावः । न च तदानीं स्वलक्षणान्तरोपस्थितिरिति, तथा चानुपस्थितस्वलक्षणान्तरेण सह भेदाग्रहात्तत्रापि प्रवृत्तिप्रसङ्गस्स्यादेवेति भावः । अनिर्ज्ञातावधेरिति, अविज्ञातावधेरिति अनिर्णीतावधेरिति च पाठान्तरम्, अज्ञातप्रतियोगिन इत्यर्थः । प्रतियोग्यग्रहणे भेदस्याऽग्रहणात्तत्रापि प्रवृत्तिप्रसङ्ग इति भावः । प्रथने वेति, विकल्पे स्वलक्षणभानानभ्युपगमात्तत्राऽप्रतिभासमानात् प्रतियोगिभूताद्गोस्वलक्षणादप्यगोव्यावृत्तेर्गोविकल्पो भेदं गृह्णीयादित्यप्रवृत्तिरेव स्यादित्यर्थः, गृह्यमाणसाधर्म्यादगृह्यमाणवैधर्म्याच्च ज्ञायमानत्वादपोहे गृह्यमाणेभ्यो भेदस्याग्रहो ग्रहश्चागृह्यमाणेभ्य इत्याशङ्कते–गृहीतादिति, विपर्यय इति, ज्ञायमानस्यैव प्रतियोगिनोऽन्योन्याभावो गृह्यते नाऽज्ञायमानस्येत्यर्थः, तदेवाह–ज्ञायमानस्यैवेति, ज्ञायमानाच्चानध्यवसेय इत्यादि, भेदाग्रहस्य कारणत्वे यथापोहेऽध्यवसेयस्वलक्षणप्रतियोगिकभेदाग्रहात्प्रवृत्तिस्तथाऽनध्यवसेयस्वलक्षणेऽध्यवसेयस्वलक्षणप्रतियोगिकभेदाग्रहादनध्यवसेयस्वलक्षणेऽपि प्रवृत्तिस्स्यादित्यर्थः । अत्र ज्ञायमानत्वाच्च भेदाग्रहेऽनध्यवसेयस्वलक्षणानामपि तदानीं ज्ञायमानत्वात्तद्भेदाग्रहात्तत्रापि प्रवृत्तिस्स्यादित्यपि द्रष्टव्यमिति पाठान्तरम्,

स्वरूपलक्षणश्चेत्, अविशेषात्सर्वतस्तद्ग्रहोऽन्यत्र तादात्म्यग्रहात्, तदात्मतया प्रतीयमानमधिकरणं ॥२२६॥

न तद्भेदव्यवहारहेतुरत उक्तमन्यत्रेति । निःस्वरूपत्वात्तस्य क्व स्वरूपलक्षणो भेद इति चेत्, अगृहीतादपि तथा स्यादविशेषात् । निस्स्वरूपमप्यनध्यवसेयापेक्षया सस्वरूपमिव स्वरूपमेव च भेद इति भिन्नमिव प्रथितमिति चेत्,तत् किमध्यवसेयापेक्षया सस्वरूपमिव न प्रथितम्, अध्यवसेयस्वरूपमिव वा स्फुरितम् । आद्येऽप्रतिपत्तिर्वा स्यात्, निःस्वरूपप्रतिपत्तिर्वा, उभयथापि शाब्दसामनाधिकरण्यप्रवृत्ती नियते न स्याताम् ॥

स्वरूपलक्षणश्चेदिति,अधिकरणस्वरूपलक्षणश्चेदित्यर्थः, भेद इत्यनुषज्यते, अविशेषादिति, स्वरूपस्य प्रतियोगिविशेषाऽनियन्त्रितत्वादनियम इत्यर्थः। नन्वपोहस्तुच्छस्वरूप इत्यगोपोहस्य गोस्वलक्षणप्रतियोगिकभेदस्वरूपता नेति कथं तत्र तद्ग्रहस्स्यादिति तत्र तद्ग्रहो भविष्यत्येवेत्याशयेनाशङ्कते-निस्स्वरूपत्वादिति, तस्य अपोहस्य, अगृहीतादपीति, गोविकल्पाऽविषयादश्वादितोऽप्यगोपोहे तर्हि भेदाऽग्रह एव स्यादित्यश्वादावपि स एव प्रवृत्तिप्रसङ्गः,गवापेक्षयेवाश्वाद्यपेक्षयाप्यगोपोहस्य निस्स्वरूपत्वाऽविशेषात्, नह्यश्वाद्यपेक्षयाऽगोपोहो न निस्स्वरूप इति भावः । अनध्यवसेयापेक्षयेति, अश्वादिस्वलक्षणान्तरापेक्षयेत्यर्थः । सस्वरूपमिवेति, प्रथितमित्यनेन सम्बन्धः । तथा चागोपोहविकल्पेऽश्वादिस्वलक्षणान्तरात्मकानध्यवसायापेक्षया स्वरूपलक्षणभेदस्फुरणादश्वादितोऽगोपोहे भेदग्रह एवेति न तत्र प्रवर्त्तत इति भावः । अप्रतिपत्तिर्वा स्यात् निस्स्वरूपप्रतिपत्तिर्वेति विकल्पद्वये आद्यः प्रसज्यप्रतिषेधापेक्षया द्वितीयश्च पर्युदासापेक्षया ज्ञेयः । उभयथापि, अज्ञाने निस्स्वरूपताज्ञाने च, नियते व्याप्ते, यस्मिन्नर्थे विषयतासम्बन्धेन शाब्दबोधः तस्मिन्नेवार्थे विषयतासम्बन्धेन प्रवृत्तिरिति व्याप्तिके शाब्दप्रवृत्ती न स्यातामित्यर्थः । अप्रतिपत्तिपक्षे नियमाभावं तावदाह—

न ह्यज्ञायमानभेदाग्रहः प्रवृत्त्याद्युपयोगी, इदं रजतमित्यादिविकल्पस्य सत्त्व इवासत्त्वेऽपि स्वलक्षणेषु निर्विकल्पकात् प्रवृत्त्याद्यापत्तेः। निःस्वरूपतया ज्ञायमानभेदाग्रहोऽपि न तथा, इदमलीकमिति ज्ञानात् तदापत्तेः। सस्वरूपभानमिति च कोऽर्थः, किञ्चित्स्वरूपमात्रभानम्, अतत्स्वरूपताभानं वा, नाद्यः, किञ्चिदितरापेक्षमिति नियामकस्य वाच्यत्वात्। द्वितीये चातत्स्वरूपतया भासमाने कथमतेभ्यो भेदग्रहः। शब्दादितश्च जायमानो विकल्पः कुतो नियामकादध्यवसेयापेक्षया निःस्वरूपमनध्यवसेयापेक्षया च सस्वरूपमवगाहेतापोहमिति॥

न ह्यज्ञायमानेति, अध्यवसेयस्वरूपतयाऽज्ञायमानेऽपोहे भेदाग्रहस्य प्रवृत्तिहेतुत्वेऽतिप्रसङ्गमाह– इदं रजतमिति, निस्स्वरूपप्रतिपत्तिपक्षे नियमाभावमाह–निस्स्वरूपतयेति। ज्ञानादिति ज्ञानादपीत्यपि पाठः। अनध्यसेयापेक्षया सस्वरूपमिव प्रथितमित्येतन्निरस्यति–सस्वरूपभानमितीति, अतत्स्वरूपताभानम्, अनध्यवसेयस्वरूपताभानम्, अपोहे किञ्चित्स्वरूपतामात्रभाने किञ्चिदितरापेक्षमितीनरस्वरूपता न भासत इत्यायातं, तथा च यत्किञ्चित्स्वरूपताया एव भानं नेतरस्वरूपताया इत्यत्र नियामको वाच्यः, स च वक्तुमशक्य इत्याशयेनाद्यपक्षं निरस्यति-नाद्य इति, अनध्यवसेयस्वरूपतया भासमानेऽपोहेऽनध्यवसेयाऽभेदग्रहस्स्यात् स च भेदग्रहविरोधीत्यतः कथमनध्यवसेयेभ्योऽपोहे भेदग्रह इत्याशयेन द्वितीयपक्षं निरस्यति–द्वितीये चेति, भासमाने इति, अपोह इतिशेषः;

द्वितीयस्तु प्रागेव निराकृतः, स्वलक्षणस्य विकल्पविषयत्वायोगात्। न चतुर्थः, यतो वस्तुवासना वस्तु-

ग्रहणजन्यः संस्कारः, स चातीन्द्रियः, तदुत्तरभाविज्ञानसन्तानो वा । नाद्यो भवद्भिरनभ्युपगमात् । द्वितीये च तत्समुत्थोऽनुभवो वा, तथाविकल्पो वा, नाद्यः, नीलानुभवसमुत्थस्य पीतानुभवस्य नीलेऽपि प्रवर्त्तकत्वप्रसङ्गात् । न द्वितीयः पक्षः, तत्र हि नानुभावः प्रवर्त्तकोऽपि तु विकल्पः, स च यस्मात् तस्यैव विषये, यस्मादनुभवाद्विकल्पो थ उत्पन्नस्तद्विषयसान्तानिक एव स प्रवर्त्तको, विकल्पजनकानुभवविषयस्य चीरातीतत्वादिति संमुखीनोर्थः, तत्र यस्मादिति साक्षात् परम्परया वा, प्रथमे शाब्दलैङ्गिकविकल्पानामप्रवर्त्तकत्वप्रसङ्गः, तेषां चिरध्वस्तेऽनुभवे सति सपरिकरशब्दलिङ्गज्ञानमहिम्नोत्पत्तेः ॥

द्वितीयस्त्विति, अध्ययसेयस्वरूपमिव वा स्फुरितमिति पक्षस्त्वित्यर्थः । प्रागेव निराकृतमित्यस्यैव विवरणमाह—स्वलक्षणस्येति । न चतुर्थ इति, वस्तुवासनासमुत्थत्वमिति पक्षो नेत्यर्थः, तदुत्तरभावीति वस्तुग्रहणोत्तरभावीत्यर्थः, वासना संस्काररूपैव यदि तदा संस्कारः स्थायी आत्मगतोऽतीन्द्रियो बौद्धमते नाभ्युपगत इत्याद्यपक्षं निरस्यति—नाद्य इति, तदुत्तरभाविज्ञानसन्तानात्मकवस्तुवासनासमुत्थोऽध्यवसायः निर्विकल्पात्मकस्स्यात् सविकल्पात्मको वेत्याशयेन द्वितीयविकल्पे विकल्पद्वयमाह— द्वितीये चेति, योऽनुभवो यद्विषयकानुभवसमुत्थः स तत्र प्रवर्त्तक इति सामान्यनियमात् पीतानुभवस्यापि नीलानुभवसमुत्थत्वात् सोऽपि नीले प्रवर्त्तयेदित्याह—नीलानुभवेति । तत्र तस्मिन् पक्षे । यस्मादिति, उत्पन्न इति शेषः । तस्यैव विषय इति, प्रवर्त्तक इत्यनुवर्त्तते, फलितार्थमाह— यस्मादनुभयादिति, तस्यैव विषये इत्यस्य तद्विषयसान्तानिक एवेत्यर्थकरणे हेतुमाह— विकल्पजनकेति, निर्विकल्पकपृष्ठभाविनः सविकल्पस्य साक्षात्त्वारोपमात्रस्य साक्षादनुभवजन्यत्वात्तमुपेक्ष्याह—शा-

व्देति, तेषां शाब्दलैङ्गिकविकल्पानाम्, चिरध्वस्ते इति, अनेन परोक्षधिकल्पानां साक्षादनुभवाजन्यत्वं ध्वनितम्, सपरिकरेति, आकाङ्क्षायोग्यताज्ञानादिव्याप्तिज्ञानपक्षधर्मताज्ञानादिसकलसामग्रीसहितेत्यर्थः ।

द्वितीये तु स एवातिप्रसङ्गः, पीतविकल्पस्यापि परम्परया नीलानुभवसमुत्थत्वात् । अनुभवव्यापारपुरस्कारान्नियम इति चेत्, कः पुरस्कारान्तार्थः, न तावदनुभवैकविषयत्वं, विकल्पेन तदसंस्पर्शात् । नाप्यनुभवत्वारोपः, स्वात्मनि कल्पनापोढाभ्रान्तत्वाद्गुरूणामिव भवतां सर्वत्र ज्ञाने स्वात्मन्यनुभवप्रमारूपत्वाभ्युपगमात् । यद्वा कल्पनापोढत्वादसत्ख्यातिव्याघ्रत्त्वादिति परमतेन, अभ्रान्तत्वादिति स्वमतेन,अस्वप्रकाशेऽपि तदक्षतेरिति व्याख्येयम् ॥

स एवातिप्रसङ्ग इति, पीतविकल्पस्य नीलेऽपि प्रवर्त्तकत्वप्रसङ्ग इत्यर्थः । यो विकल्पो यद्विषयकानुभवस्य व्यापारं पुरस्करोति स तद्विषय एव प्रवर्त्तयतीति न पीतविकल्पो नीलानुभवव्यापारं पुरस्करोति, किन्तु पीतानुभवव्यापारमेवेति स पीत एव प्रवर्त्तको न नीले इत्याशङ्कते- अनुभवेति, व्यापारपुरस्कारश्च जन्यजनकभावव्यवस्थितये त्वयापि वाच्य एवेति भावः। तदसंस्पर्शादिति, अनुभवविषयस्वलक्षणाऽविषयीकरणादित्यर्थः । विकल्पेऽनुभवत्वारोपो हि किं ज्ञानात्मकस्वात्मनि स्वविषये वा, आद्यस्याऽसम्भवमाह-स्वात्मनीति, कल्पनापोढः कल्पनारहितः प्रमेति यावत्, बौद्धमते ज्ञानमात्रस्यैव स्वप्रकाशत्वेन स्वांशे प्रमात्मकत्वात् अत एवाह— अभ्रान्तत्वादिति अनारोपत्वादित्यर्थः । उक्तमेव सदृष्टान्तं निष्टङ्कयति- गुरूणामिवेति, सर्वत्र ज्ञाने इति, सर्वज्ञानानामित्यपि पाठः । विशेष्यीभूतं यद्वस्तु द्रव्यादिरूपविशिष्टं स्यात् तत्रैवेतररूपव्यावर्त्तकत्वाद्विशेषणं

सार्थकं, प्रकृते तु कल्पनापोढेति विशेषणं न तथा, बौद्धमते सर्वज्ञानानां स्वांशे नियमतो निर्विकल्पात्मकानुभवैकरूपत्वेनैवाभ्युपगमात्, प्रभाकरैस्सर्वज्ञानानां स्वप्रकाशात्मकत्वेनाभ्युपगतानां स्वांशे यथार्थसविकल्पानुभवरूपतया सविकल्पकाऽभ्रान्तत्वस्याभ्युपगमेन कल्पनापोढाभ्रान्तत्वविशिष्टनिर्विकल्पात्मकस्वांशस्यानभ्युगमाद् दृष्टान्ताऽसङ्गतिश्चेत्यतो व्याख्यान्तरमाह—यद्वेति, परमतेन बौद्धमतेन, अस्वप्रकाशेऽपि तदक्षतेरिति, न्यायमते ज्ञानस्यास्वप्रकाशत्वेऽपि अनुभवत्वाभाववत्त्वस्याभावेन तदभाववति स्वस्मिन् तत्प्रकारकत्वरूपभ्रान्तत्वस्याभावान्नानुभवत्वारोप इति भावः। द्वितीयस्याप्यसम्भवमाह—

**विषये चाभिलापसंसर्गयोग्यबाह्यालीकप्रतिभासित्वात्, तथानवभासे वा विकल्पत्वव्याघाताद्विशेषोपलब्धौ चारोपासम्भवात्। माभूद्वा विकल्पः स्वात्मन्यनुभवरूपः, सम्भवतु वाऽनुभयत्वारोपस्तत्र तद्विषये वा, सप्तम्यर्थोऽवच्छेदकत्वं, स्वात्मावच्छेदेनापोहरूपस्वविषयावच्छेदेन वेति फलितमिति गुणानन्दः। न तथापि नियतप्रवृत्त्युपपत्तिः, अनुभवत्वस्य सर्वनिर्विकल्पकसाधारणत्वात्। नीलाद्यनुभवत्वं तु नीलाद्यग्राहिणा विकल्पेन ग्रहीतुमशक्यमिति॥**

विषय इति, ननु विकल्पो विषयांशे अभिलापसंसर्गयोग्यं यद्गोत्वादिरूपं बाह्यालीकं तत्प्रतिभासी माऽस्त्वित्याशङ्कायामाह—तथानवभासे वेति, ननु भवतु तथावभासस्तथाप्यारोप उपपद्यतामित्यत आह—विशेषेति, अभिलापसंसर्गयोग्यं गोत्वादिकमलीकमेवेत्यलीकत्वेन गृह्यमाणे तद्रूपविशेषदर्शनप्रतिहतत्वान्नारोप इत्यर्थः। सर्वनिर्विकल्पकसाधारणत्वादिति, विषयाघटितस्य सामान्यतोऽनुभवत्वस्यारोपणीयस्य विकल्पमात्रे स्वात्मावच्छेदेनाविशिष्टमिति सर्वत्र प्रवृत्तिप्रसङ्ग इत्यर्थः। ननु

न सामान्यमनुभवत्वमारोपणीयं, किन्तु विशेषरूपं,नीलाद्यनुभवत्वं, तच्च न सर्वत्राऽविशिष्टमित्याशङ्कायामाह–**नीलाद्यनुभवत्वमिति**, अनुभवत्वारोपो हि विकल्परूपः, न तु निर्विकल्परूपः, तस्यारोपरूपत्वाऽसम्भवात्, विकल्पश्च न नीलादिस्वलक्षणग्राहीति तद्घटितानुभवत्वमपि न तेन ग्रहीतुं शक्यं, विशेषणाग्रहणे विशिष्टस्याप्यग्रहणादिति भावः । नन्वनुभवधर्मस्य प्रामाण्यस्य विकल्पे समारोपः पुरस्कारान्तार्थः, तेनानुभवविषये विकल्पः प्रवर्त्तयतीति नातिप्रसङ्ग इत्यत आह—

**नापि तद्धर्मप्रामाण्यारोपः, तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः, परमार्थसद्विषयत्वे च तस्य विकल्पासंस्पर्शप्रसङ्गात्, अलीकविषयत्वे चाप्रवृत्तेः, अलीकस्यानलीकतया तु स्फुरणं निषिद्धमिति अलीकस्यानुभवागोचरत्वात् तद्घटितप्रामाण्यस्यानुभवाधर्मत्वादसद्गर्भतया विरोधेन दुर्ज्ञेयत्वात् ॥**

नापीति, प्रामाण्यं विषयाऽघटितं सामान्यरूपमेव समारोप्यते, किंवा परमार्थभूतसत्स्वलक्षणात्मकविषयघटितम्, अलीकविषयघटितं वा । आद्ये–**तस्येति** । तस्य प्रामाण्यस्य । **अनियतविषयत्वे** विषयाऽनियमितत्वे, विषयाऽघटितत्वे इति यावत्, **प्रवृत्तिनियमानुपपत्तेरि**ति, गोत्वसामान्यस्य सकलगोसाधारण्यवत्प्रामाण्यसामान्यस्य सकलानुभवसाधारणत्वादिति भावः । द्वितीये–**परमार्थेति**, तस्य परमार्थसद्विषयत्वलक्षणप्रामाण्यस्य । **विकल्पाऽसंस्पर्शप्रसङ्गादिति**, परमार्थसतो नीलादेः विकल्पाऽविषयत्वेन तद्घटितप्रामाण्यस्यापि आरोपरूपविकल्पविषयत्वाऽसम्भवादित्यर्थ इत्यस्मद्गुरुचरणाः । अत्र " तस्य विकल्पसंसर्गप्रसङ्गा"दित्यपि पाठः, अस्य चायमर्थः तस्य स्वलक्षणस्य । विकल्पेति तदग्राहिणस्तद्घटितप्रामाण्यग्राहित्वाऽयोगादिति भावः । तृतीये–**अलीकेति** । **अलीकविषयत्वे** अलीकरूपविषयघटितत्वे । अलीकविषयत्वे चाऽप्रवृत्तेरित्यस्यैव विवरणमाह–

अलीकस्येत्यादिना दुर्ज्ञेयत्वादित्यन्तेन, अस्य च न तदारोपात्प्रवृत्तिनियम इत्यनेनान्वयः, अलीकस्यानलीकतयेत्यादेर्विवरणमाह—

**असतः सत्त्वारोपात् खण्डशः प्रसिद्ध्यारोपस्यापि तथा स्फुरणनिषेधेनानुपपत्तेर्न तदारोपात् प्रवृत्तिनियम इति मुकुलितोऽर्थः। नाप्यनुभवात् स्वात्मनो भेदाग्रह एव तद्व्यापारपुरस्कारः, स्वरूपस्य स्वतो गतेर्विषयभेदस्य च प्रागेव निरूपणात्, अनुभवात् स्वात्मनो भेदस्य स्वप्रकाशतया स्वत एवावगमात् न तद्भेदाग्रहः, अनुभवाग्राहकत्वाद्विकल्पेन तद्भेदाग्रहणं तु स्वलक्षणान्तरानुभवसाधारणमित्युभयतोऽपि दोष इत्यर्थः ॥**

असतः इत्यादिना, तथा स्फुरणनिषेधेनेति, असतः सत्तया स्फुरणनिषेधेनेत्यर्थः। स्वात्मन इति, विकल्पात्मन इत्यर्थः। अनुभवाद्विकल्पस्य भेदस्स्वरूपात्मको यदि तदाऽज्ञायमानप्रतियोगिकस्याप्यस्य धर्मिग्रहे ग्रहणसम्भवाद्विकल्पस्य स्वसंवेदनप्रकाशरूपत्वात् तेन तद्ग्रहणे तदात्मकस्यानुभवभेदस्यापि ग्रह इति तेन प्रतिबन्धान्न तादृशभेदाग्रह इति कथं तस्य प्रवृत्तिनियामकत्वमित्याशयेनाह–स्वरूपस्य स्वतो गतेरिति, यस्य विकल्पस्य यस्मादनुभवाद्भेदाग्रहस्स तदनुभवविषये प्रवर्त्तक इत्यत्र भेदाग्रहो न स्वरूपतः, किन्तु विषयतः,अनुभवाद्विकल्पस्य स्वात्मा भेदो न गृह्यत इति नार्थः, किन्त्वनुभवविषयाद्विकल्पविषयस्य भेदो न गृह्यत इत्यर्थ इत्याशङ्कायामाह–विषयभेदस्य चेति, अनुभवसविकल्पयोरिति दृश्यम्, अलीके ग्रहविषये पारमार्थिकभेदाऽसम्भवादित्यादिना दूषितत्वादित्यर्थः। स्वरूपस्य स्वतो गतेरित्यस्यैव विवरणमाह–अनुभवादिति, ननु न स्वरूपात्मको भेदः,

किन्त्वन्योन्याभावादिलक्षण इत्याशङ्कायामाह—अनुभवाग्राहकत्वादिति, अन्योन्याभावात्मकभेदग्रहणे अनुयोगिग्रहणस्येव प्रतियोगिग्रहणस्यापि नियमः, न च तदुभयग्राहकमेकं किञ्चिदपि ज्ञानं वर्त्तते इति तदुभयाग्राहिणा विकल्पेन नोक्तभेदग्रहणसम्भव इति नीलानुभवभेदाग्रहणमिव नीलविकल्पे पीतानुभवभेदाऽग्रहणमपीति नीलविकल्पात्पीतानुभवविषयेपीतेऽपि प्रवृत्तिस्स्यादित्यर्थः ।

**नाप्यपारोक्ष्यम्, तस्यापि स्वात्मनि सर्वज्ञानसाधारणत्वात्, विषये च विकल्पस्य तदभावात्, तथाभावेऽप्यन्यत्र नियतप्रवृत्त्यनुपपत्तेः । नापि विषयसारूप्यं, तदभावात् । का हि परमार्थसदलीकयोः समानरूपता नाम, यदि रूपशब्दो धर्मिवचनः समानशब्दश्चैकपर्यायः, क्वार्थसङ्गतिः प्रकृते, यदि वा रूपं धर्मः समानश्चैको वा एकजातीयो वेति तथापि क्वार्थसङ्गतिः प्रकृते ॥**

नाप्यपारोक्ष्यमिति, विकल्पस्यापारोक्ष्यं पुरस्कारान्तार्थं इत्यर्थः । विकल्पे अपारोक्ष्यं ज्ञानांशे किंवा विषयांशे इति विकल्पद्वयम्, आद्ये आह—तस्यापीति, अपारोक्ष्यस्यापीत्यर्थः । स्वात्मनि—ज्ञानांशे, सर्वज्ञानसाधारणत्वादिति, स्वांशे स्वसंविदितत्वात्सर्वमेव ज्ञानमपरोक्षरूपमतस्तेन भेदाग्रहोऽप्यन्यत्रास्तीति प्रवृत्त्यनियमस्तदवस्थ एवेत्यर्थः । द्वितीये आह—विषये चेति, विकल्पविषयोह्यलीकं न च तदपरोक्षं नामेति न तदंशावच्छेदेन विकल्पेऽपारोक्ष्यमित्यर्थः । अभ्युपेत्याह—तथेति, विषयांशे विकल्पस्यापारोक्ष्याभ्युपगमेपि तस्य न प्रवर्त्तकत्वं, तस्यालीकविषयकत्वेन तज्ज्ञानात्तद्विषये स्वलक्षणे प्रवृत्त्यनुपपत्तेः, उपपत्तौ वा स्वलक्षणान्तरेपि प्रवृत्तिस्स्यादित्यर्थः । विषयसारूप्यमिति, अनुभवविकल्पयोस्सरूपविषयकत्वशालित्वमित्यर्थः । पुरस्कारान्तार्थं इति शेषः । विषयसारूप्याभावमेव दर्शयति—का हीति, नहि सदसतोः कश्चिदेको धर्मी, धर्मो वा एकः, एकजा-

तोयो वा अभ्युपेयते इत्याह—यदीत्यादिना, ननु माभूदसति विधेर्विरोधात्तदात्मको धर्म एक एकजातीयो वा परमार्थसदलीकोभयसाधारणः, निषेधात्मकस्तु स्यादेवेत्याशङ्कते—

अतद्व्यावृत्तिरिति चेत्, यत्किञ्चिदतद्व्यावृत्तिरतस्मिन्नपि, यावदतद्व्यावृत्तिश्च नालीकेऽपि । परमार्थसद्व्यावदतद्व्यावृत्तिर्ग्राह्येति चेत्, न, तस्या अप्यलीकानलीकनिष्ठतयैकत्वैकजातीयतयोरभावात्, सदसतोरसंसर्गात्, नीलविकल्पविषयव्यावृत्तेरपि पीतेतरयावद्वस्तुव्यावृत्तत्वान्नीलविकल्पस्यापि पीते प्रवर्तकत्वप्रसङ्गाच्च । उक्तं चानुगततत्पदार्थानभ्युपगमे न शक्यमतद्व्यावृत्तिस्वरूपनिरूपणमिति । आभिमानिकोऽयं सारूप्यव्यवहारो न पारमार्थिक इति चेत्, न, अभिमानस्यैव चिन्त्यमानत्वात्, नहि चिन्तितप्रकारान् परिभूयापरोऽभिमानो नाम, ॥

अतद्व्यावृत्तिरिति, अतदित्यत्र तत्पदेन विवक्षितोऽनुभवविषयो ग्राह्यः तत्पदपूर्ववर्तिनञ्पदार्थोऽभावः स चात्र पर्युदासरूपः, तथा च विवक्षितानुभवविषयभिन्न इत्यर्थः । भिन्नश्च यत्किञ्चिद्रूपो विवक्षितः, यावद्रूपो वा, परमार्थसद्व्यावद्रूपो वेति विकल्पत्रयं, तत्राद्ये आह—यत्किञ्चिदिति, नीलानुभवविषयनीलभिन्नो यत्किञ्चिदन्तर्गतो रक्तादिस्तद्व्यावृत्तेर्नीलानुभवविषयभिन्ने पीतादावपि सत्त्वेन विषयसारूप्यसत्त्वान्नीलानुभवात्तत्रापि प्रवृत्तिस्स्यादित्यर्थः । द्वितीये चाह—यावदिति, अलीकस्याप्यतद्रूपत्वेन तन्नैतद्व्यावृत्तेरभावात्परमार्थसदलीकयोर्नसारूप्यमिति नीलविकल्पान्न नीलेऽपि प्रवृत्तिरिति भावः । तृतीयमाशङ्कते—परमार्थेति, अधिकरणभेदेन व्यावृत्तेर्भेद इत्याशयेन निराकरोति—नेति, तस्याः, परमार्थसद्व्यावदतद्व्यावृत्तेः । अलीकानलीक-

निष्ठतया अलीकनिष्ठतयाऽनलीकनिष्ठतया च । स्वलक्षणनिष्ठाया व्यावृत्तेः कथं नालीकनिष्ठत्वं कथं च नालीकनिष्ठाया व्यावृत्तेस्स्वलक्षणनिष्ठत्वं येनैकत्वमेकजातीयत्वं च न स्यादित्यत आह—सदसतोरिति, स्वलक्षणे या व्यावृत्तिस्सा सदधिकरणकत्वात् सद्रूपेति तस्या अलीकेन समं सम्बन्धाभावान्न तन्निष्ठत्वं, या चालीके साऽसदधिकरणकत्वादसद्रूपेति तस्यास्स्वलक्षणेन सहान्वयाऽभावान्न तन्निष्ठत्वमिति भावः । पीतानुभवनीलविकल्पयोर्विषयसारूप्यादतिप्रसङ्गमाह—नीलेति, विकल्पस्य तथाविध एव स्वभावः, येन कश्चिद्विकल्पः कस्मिँश्चिदेवाविषयेऽपि प्रवर्त्तयतीति नियतविषये प्रवृत्तिनियामकस्स्वभावविशेष एवेत्याशङ्कते—

स्वभावादेव कश्चिद्विकल्पः कस्मिँश्चिदेवास्फुरितेऽपि प्रवर्त्तयति, किमत्र क्रियताम्, स चास्य स्वभावभेदः स्वकारणादायातस्तत्र कः पर्यनुयुज्यतामिति चेत्, तत् किमप्रत्यासन्न एव विकल्पस्तत्र प्रवर्तयति, प्रत्यासत्त्यन्तराभावात् स्वभावप्रत्यासन्नो वा, व्यवहृतिरेव वा प्रत्यासत्तिः । न प्रथमः, अतिप्रसङ्गात्, द्वितीये तु स्वभावे नोत्तरं स्यात्, किन्तु तदेव स्फुरणं विषयविषयिभावः । नहि व्यवहारे प्रवर्त्तयितव्ये स्वभावप्रत्यासत्तिमवधूयैव ज्ञानज्ञेययोरपरः कश्चिद्विषयविषयिभावः, सदसदनिर्वचनीयात्मख्यातिवादिभिरपि स्वभावप्रत्यासत्तेरवर्जनीयत्वादिति वक्ष्यमाणत्वात् । तृतीये तु व्यक्तमात्माश्रयः, व्यवहारनियमं प्रत्येव निबन्धनानुसरणात् ॥

स्वभावादेवेति, अस्फुरितेऽपीति, अविषयेऽपीत्यर्थः, तथा च विषयतासम्बन्धेन प्रवृत्तिं प्रति विषयतासम्बन्धेन विकल्पः कारणमिति कार्यकारणभावो नाभ्युपगन्तव्य एवेति भावः । अप्रत्यासन्न एवेति, स्वाऽसम्बद्धेऽपि विषये इत्यर्थः, अ-

निप्रसङ्गादिति, नीलस्येव पीतस्यापि नीलविकल्पेन सहाप्रत्यासन्नत्वाविशेषात्तद्वत्तत्रापि तेन प्रवृत्तिस्स्यादित्यर्थः । स्वभावप्रत्यासत्त्यभ्युपगमेऽस्मत्पक्षप्रवेशः, यतो विकल्पतद्विषययोस्स्वभावप्रत्यासत्तिस्स्वरूपसम्बन्धविशेष एव, स च विषयविषयिभावात्मक एवेत्याह-किन्त्विति । अनुभवव्यापारपुरस्कारान्नियम इति बौद्धमतस्य यदियता प्रबन्धेन खण्डनं तस्यैव सङ्क्षेपतस्तात्पर्यार्थमाह-

एकस्मिन्नेव विषये बुद्धीनामिच्छानां चोत्पादात्, तद्विकल्पत्वस्य चाननुगतत्वादनुगतकार्यस्य चानुगतकारणप्रयोज्यत्वात्, अतिरिक्तस्वभावभेदे प्रमाणाभावात्, तस्याप्यनुगतकारणमन्तरेणासम्भवादनुभूयमानस्य बाधकस्यासम्भवात् विकल्पानामिच्छादिविषयविषयकत्वस्यापलपितुमशक्यत्वात् समानविषत्वेनैव प्रवृत्तिविकल्पयोः कार्यकारणभावो न त्वनुभवव्यापारमात्रेण निर्वाह इति तात्पर्यसंङ्क्षेपः ॥

एकस्मिन्नेवेति, अनेन बुद्धीच्छयोस्समानविषयत्वप्रत्यासत्त्या कार्यकारणभाव इति प्रतिपादितम्भवति,तथा च विकल्पेच्छयोस्समानविषयत्वसिद्धाविच्छाद्वाराविकल्पाज्जायमानायाः प्रवृत्तेरपि विकल्पसमानविषयत्वसिद्धिरित्यकामेनापि विकल्पे वस्तुविषयत्वमभ्युपगन्तव्यम् । अननुगतत्वादिति, तथा च नीलविकल्पत्वेन तस्य नीलेच्छाद्वारा नीलप्रवृत्तिं प्रति कारणत्वसम्भवेऽपि सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वं न सम्भवति, विकल्पान्तरे प्रवृत्तित्वावच्छिन्नकार्यतानिरूपितकारणतासत्त्वेऽपि तत्र नीलविकल्पत्वस्याभावेन तस्य कारणताया न्यूनवृत्तित्वादिति भावः। ननु माभूदनुगतरूपेणानुगतकारणत्वमित्यत आह-अनुगतकार्यस्येति, तथाच प्रवृत्तित्वस्यानुगतकार्यतावच्छेदकत्वात्तदनुरोधेनान्यूनानतिप्रसक्तस्यानुगतस्य धर्मान्तरस्याऽभावेन विकल्पत्व-

स्यैवानुगतकारणतावच्छेदकत्वमभ्युपगन्तव्यमिति विकल्पत्वावच्छिन्नस्य समानविषयत्वप्रत्यासत्त्या प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वं सिद्धमिति भावः । ननु स्वभावविशेषादेवानुगतप्रवृत्त्यादि कार्यमिति न तदनुरोधेन विकल्पत्वाद्यवच्छिन्नमनुगतकारणमभ्युपगन्तव्यमित्यत आह—अतिरिक्तेति,अतिरिक्तेति समानविषयत्वप्रत्यासत्त्यतिरिक्तस्वभावप्रत्यासत्तावित्यर्थः । प्रमाणभावे वाऽनुगतस्वभावस्यानुगतकारणप्रयोज्यत्वमभ्युपगन्तव्यं, तच्च विषयविषयिभावाभ्युपगमनियतमेवेत्याशयेनाह—तस्यापीति । ननु यद्यपि भवन्मते कपालादौ घटादिकार्यस्येव पटादिकार्यस्यापि स्वोत्पत्तेः पूर्वमसत्त्वस्याविशिष्टत्वेनाऽसता कार्येण कारणस्यासम्बद्धत्वमविशिष्टमेव, तथापि कपालत्वावच्छिन्नस्यान्वयव्यतिरेकौ घटत्वावच्छिन्नकार्येण सहैवेत्यन्वयव्यतिरेकितावच्छेदकधर्मावच्छिन्नकारणत्वात्मकशक्तिशालिनः कपालाद् घटस्यैवोत्पत्तिः, नतु पटस्य, तद्वदस्मन्मतेऽपि गोविकल्पसामर्थ्यविशेषाद्गव्येव प्रवृत्तिर्नाश्व इति नैयायिकं प्रति बौद्ध आशङ्कते—

**अथ यथा कारणस्यासता कार्येण प्रत्यासत्त्यभावेऽपि तच्छक्तिविशेषादेव नियतस्यैव कार्यस्योत्पत्तिस्तथा विकल्पवस्तुनोर्विषयविषयिभावलक्षणसम्बन्धाभावेऽपि विकल्पसामर्थ्यविशेषादेव प्रवृत्तिनियमः सिद्ध्यतीति चेत्, सत्यम्, एतत् तु चिन्तनीयम्—कारणशक्त्यापि जातिनियतया भवितव्यम्, अन्यथा ज्वलनविकल्पात् जलेऽपि प्रवृत्तिप्रसङ्गात् ।** चिन्तनीयमिति, स्फुरणमनादृत्यैव शक्तिविशेषात् प्रवृत्तिनियमः सिद्ध्यति न वेति चिन्तनीयम् इत्यर्थः । द्वितीयेऽनुपदमेव वक्ष्यते । आद्ये कारणेति, जातिनियतया स्वभावनियतयेति नारायणाचार्यः । दीधितिकारस्तु जातिनियतयेति अनुगतरूपावच्छिन्नयेत्यर्थः ॥ ॥ २३२।

अथेत्यादिना, असतेति, स्वोत्पत्तेः पूर्वमसतेत्यर्थः । कारणस्येत्यनेन भावकारणस्येत्यभिमतं, तेन प्रागभावरूपस्य कारणस्य प्रतियोगिनाऽसताऽपि कार्येण प्रतियोग्यनुयोगिभावलक्षणप्रत्यासत्तेरभ्युपगमेऽपि न क्षतिः । तच्छक्तिविशेषादेव, कारणगतशक्तिविशेषादेव, शक्तिविशेषश्च कारणत्वरूपो बोध्यः,तेन मीमांसकादेरिव नैयायिकस्यातिरिक्तशक्त्यनभ्युपगमेऽपि न क्षतिः।कारणगतशक्तेर्नियामकस्यान्वयव्यतिरेकितावच्छेदकनियतरूपस्याभ्युपगम एव नियतकार्यस्योत्पत्तिस्स्यादिति स्वलक्षणविषयकविकल्पत्वेनैव नियतप्रवृत्तिर्वाच्येत्याह–कारणशक्त्यापीति, अनुगतनियामकानभ्युपगमे दण्डमाह–अन्यथेति,स्फुरणमिति, विकल्पे स्वलक्षणभानमित्यर्थः । अनुपदमेव वक्ष्यते इति,अन्यथा ज्वलनविकल्पात् जलेऽपि प्रवृत्तिप्रसङ्गादित्यत्र वक्ष्यत इत्यर्थः। कारणत्वरूपायाः कारणशक्तेरनुगतधर्मावच्छिन्नत्वाभ्युपगमे हेतुमाह—

अनुगतकार्यस्यानुगतकारणनियम्यत्वात्, विनापि स्वलक्षणविषयत्वमाकारविशेषादेव विकल्पानां स्वलक्षणविशेषे प्रवर्त्तकत्वात् नातिप्रसङ्ग इत्याशङ्कायामग्रिमारम्भ इत्याह।दाहादिसमर्थाकारविकल्पजातीयत्वात्त्विके वह्नौ प्रवर्त्तयतीति जातिर्वोपाधिर्वा नियामक इति चेत्, न तर्हि रत्नमरीचिनिचये ततः प्रवर्तेत, तज्जातीयस्य दहन एव प्रवृत्तिसामर्थ्यात्।ताद्रूप्येण तस्यैव प्रथनादिति चेत्, प्रथतां न तु तस्य प्रवर्त्तनयोग्यता तत्र प्रथननियता,वह्निस्वलक्षणेऽपि विकल्पादप्रवृत्तिप्रसङ्गात्॥ तस्मात् स्वीकुरु वा तस्यापि तत्र स्फुरणम्, परिहर वा वह्निविकल्पाद्वह्नौ प्रवृत्तिमिति । एवं मरीचिनिश्चयविकल्पात् तदर्थिनो वह्निस्वलक्षणेऽपि दूषणं बोध्यम् ॥

अनुगतकार्यस्येति,दाहादिसमर्थेत्याद्युत्तराशङ्काग्रन्थावतरणिकामाह–विनापीति, अस्मद्गुरुचरणास्तु अन्यथा ज्वलनविकल्पादित्यादिग्रन्थावतरणिकामाह–विनापीत्याहुः। दाहादीति, आदिपदेन पाकादिपरिग्रहः। दाहादिसामर्थ्यं दाहाद्यसमर्थव्यावृत्तिर्वह्नित्वम्। तत्समर्थेति च तत्तत्फलार्थिनमपेक्ष्य। सत्यपि वह्निरयमिति विकल्पे दाहादिसमर्थोऽयमिति विकल्पं विना दाहार्थिनोऽप्रवृत्तेरावश्यकत्वात् स एव प्रवर्त्तक इति वाद्यभिप्रायः। तदाकारता च बौद्धानां मते ज्ञानगत आकारभेदो जातिरूपोऽन्येषां तद्विषयत्वलक्षणोपाधिरूपः। निराकरोति–न तर्हीति, तत इति दाहादिसमर्थाकारवह्निविकल्पजातीयादित्यर्थः। ताद्रूप्येण वह्नित्वेन, तस्यैव रत्नमरीचिनिचयस्यैव। प्रथतामिति, अस्यान्वयः तस्येत्यस्य विभक्तिविपरिणामेन तदित्यनेन सह कर्त्तव्यः। यदृच्छया चेदम्, मरीचिस्वलक्षणानां विकल्पविषयतायाः बौद्धैरनभ्युपगमात्। यत्र यत्र विकल्पविषयत्वं तत्र तत्रैव प्रवृत्तिविषयत्वमिति व्याप्त्यभ्युपगमे को दोष इत्याशङ्कायामाह–वह्निस्वलक्षणेऽपीति, वह्निस्वलक्षणप्रथनस्य त्वया वह्निविकल्पेऽनङ्गीकारात्, अङ्गीकारे वा सिद्धं नस्समीहितमिति भावः। तस्यापि वह्निस्वलक्षणस्यापि,तत्र वह्निविकल्पे,अवह्नौ रत्नमरीचिनिचय इत्यर्थः, वह्निविकल्पे सत्स्वलक्षणरूपस्य रत्नमरीचिनिचयस्य स्फुरणानभ्युपगमादिति भावः। आकारसारूप्यं हि द्विधा एकं प्रवृत्तिविषयतया य इष्टस्तत्सारूप्यं द्वितीयं च योऽनिष्टस्तत्सारूप्यमिति तत्राद्यपक्षमुद्दिश्याह—

**एतेनाकारसारूप्यं नियमहेतुरपास्तः। अर्थनीयसारूप्याभावेऽपि प्रवृत्तिदर्शनात्, अर्थनीयसारूप्यं ह्ययोरिष्टतावच्छेदकैकाकारशालित्वम्, तदभावेऽपि हि रजताकारविकल्पाद्रङ्गे प्रवृत्तिर्दृष्टेति। अनर्थनीयसारूप्यस्य चातिप्रसञ्जकत्वात्। तद्धि अनिष्टतावच्छेदकैकाकारशालित्वं तस्य प्रवृत्त्युपयोगित्वे सद्द्रव्यं रजत-**

मिति विकल्पाद्रजतार्थिनो लोहेऽपि प्रवृत्तिप्रसङ्ग इति।

अर्थनीयेति, द्वयोः विकल्पप्रवृत्तिविषययोः। द्वितीयपक्षे चाह–अनर्थनीयेति, अतिप्रसङ्गमेव विवृणोति–तद्धीति, लोहेऽपीति, लोहस्यापि सत्त्वादिधर्मशालित्वेन सत्त्वाद्याकारविकल्पेन सह सारूप्यसद्भावादिति भावः। पूर्वं सारूप्यमङ्गीकृत्योक्तम्, अधुना विज्ञानवादे योगाचारमते तत्सम्भवत्यपि बाह्यवादे सौत्रान्तिकमते तन्न सम्भवतीत्याह—

न च बाह्यवादे ज्ञानज्ञेययोर्विवक्षितसारूप्यसम्भवः, सामग्रीवैषम्यात्, ज्ञानवादे तु ज्ञेयस्य ज्ञानाभिन्नत्वात् सामग्रीसाजात्यात् तत् सम्भवेदपि, साम्ये वा जाड्यचैतन्ययोरेकशेषप्रसङ्गात्। न च यया सामग्र्या जडाजडसाधारणनीलाकारोत्पत्तिस्तदवान्तरविशेषादेव जडाजडात्मककार्यविशेषव्यवस्था स्यादिति वाच्यम्, मिथः सामग्र्यननुविधानेन जायमानत्वात्, न चैतदेवासिद्धं कार्यसाजात्येनैकविधसामग्र्यनुमानादिति वाच्यम् बाह्ये धूमाद्यनुविधीयमानस्य कारणस्य वह्न्यादेर्दृश्यत्वात्, धूमज्ञानस्य च तदव्यभिचारोपलम्भात्।

न च बाह्यवाद इति, साम्ये वेति, सामग्रीसाम्ये बाह्यज्ञाने विजातीयकार्यात्मके न स्याताम् सजातीयसामग्रीप्रभवत्वात्, घटघटान्तरवत्, तथाच सर्वमज्ञानं स्यात्, ज्ञानमेव वा, आद्ये जडैकान्तवादप्रसङ्गः, द्वितीये ज्ञानैकान्तवादप्रसङ्ग इति सौत्रान्तिकमतोच्छेदस्स्यादिति भावः। ननु ज्ञानज्ञेययोर्व्यापकीभूतसामान्यसामग्र्या ऐकजात्यप्रयोजकीभूतया प्रभवत्वादैकजात्येऽपि वैजात्यप्रयोजकव्याप्यीभूतविशेषसामग्रीबलेन वैजात्यं स्यादेवेत्याशङ्क्य निषेधति–न च ययेति, निषेधे हेतुमाह–मिथ इति, बा-

ह्यज्ञानयोर्विलक्षणसामग्रीजातत्वेनैकजात्यप्रयोजकव्यापकसामग्र्यसिद्धेरित्यर्थः । कार्यसाजात्येनेति बाह्यतज्ज्ञानयोरैकजात्येनेत्यर्थः । एकविधेति सजातीयेत्यर्थः । बाह्ये धूमाद्यनुविधीयमानस्येति,धूमादिना सहान्वयव्यतिरेकशालिनो वह्न्यादेः कारणस्य सत्त्व एव बाह्यस्य धूमादेर्जायमानत्वात् अभ्यन्तरस्य धूमज्ञानस्य च वह्निं विनापि जायमानत्वात् क्वचिद्वह्निसद्भावेऽप्यभावाद् धूमधूमज्ञानयोः क्व सामग्रीसाम्यमित्यर्थः । जडाजडसाधारणं नीलाकारत्वमभ्युपगम्योक्तं, वस्तुतस्तदेव नास्तीत्याह—

वस्तुतो बाह्यवादे विज्ञानस्य तद्विषयत्वातिरिक्ते तदाकारत्वे न किञ्चित् प्रमाणमस्ति, येन तद्बलादतीन्द्रियमेव किञ्चित् प्रयोजकं कल्पनीयं स्यादिति भावः । यदि च नीलिमादिर्ज्ञानस्य जातिविशेषः, कथं तदतिपत्य ज्ञेयं स्पृशेत्, ज्ञेयस्य चेत्, कथं तद् ज्ञानं ह्विष्यादिति जातिसङ्करापादनप्रस्तावे चिन्तितप्रायम्, तस्मात् स्फुरित एव ज्ञानं प्रवर्त्तयतीति गलेपादिकयाङ्गीकारयितव्यो, गत्यन्तराभावात् । तदियता प्रबन्धेनालीकं वेति पक्षो निराकृतः ॥

वस्तुत इति, यदि ज्ञानगता जातिर्नीलिमादिस्तर्हि तत्रैव वर्त्तेत ननु ज्ञानमतिक्रम्य बाह्ये नीलादौ, बाह्यगता चेत्तर्हि कथं ज्ञाने वर्त्तताम् इत्याह—यदि चेति, ननूभयत्र वृत्तौ को दोष इत्यत आह—जातिसङ्करेति, एवं सति ज्ञानत्वानुभवत्वसाक्षात्वादिभिस्साङ्कर्यं स्यादित्यर्थः । तद् ज्ञानं ह्विष्यादिति, ज्ञानं तद्विशिष्यादिति पाठान्तरम्, प्रकृतमुपसंहरति—तस्मादिति, स्फुरित एव ज्ञानमिति यज्ज्ञानं यद्विषयकं तस्मिन्नेवेत्यर्थः । गलेपादिकयेति गलेपादुकयापीत्यपि पाठः । अन्यत्र प्रवृत्तौ कथमन्यलाभ इत्यत आह—

अथ स्वाकारो वेति पक्षदूषणायोपक्रमः, तर्हि स्फुरिते स्वाकारे प्रवर्त्तयतु तत्र प्रवृत्त एव चार्थी तत्-सदृशमर्थमासादयति प्रभायां प्रवृत्तो मणिवदिति चेत्, न,अभिमतार्थक्रियासमर्थत्वेनाज्ञातेऽप्रवृत्तेः। न खलु लोकेन वह्निविकल्पः पाकादिक्रियासमर्थत्वेन ज्ञातोऽपि तु वह्निरिति । आकारगृहीतार्थक्रियासामर्थ्यबाह्ययोरभेदारोपात् प्रवृत्तिरिति चेत्,आरोपः किं बाह्ये आकारस्य,आकारे वा बाह्यस्य । नाद्यः । बाह्ये विकल्पाकारारोपासम्भवात्, तस्य तेनासंस्पर्शात् । न द्वितीयः। आकाराकारिणोरभेदात् स्वप्रकाशेन ज्ञानरूपत्वे गृह्यमाणे बाह्याभेदारोपासम्भवात् ॥

तत्र प्रवृत्त एवेति, तत्र दृष्टान्तमाह–प्रभायां प्रवृत्तो मणिवदिति, प्रवृत्तिमतीष्टसाधनत्वज्ञानं कारणं, तच्च विकल्पे स्फुरितो हि स्वाकारस्तदात्मक एवेत्यभ्यन्तरवर्त्तिनि वह्न्याकारे दाहादिबाह्यार्थक्रियासामर्थ्याभावेन प्रमिते न सम्भवति, किन्तु बाह्यभूते वह्न्यादावेवेति न स्फुरिते स्वाकारे प्रवृत्तिसम्भव इत्याशयेन निराकरोति–नेति । नन्वर्थक्रियासामर्थ्यं बाह्य एवानुभूतमिति तत्रैव प्रवृत्तिस्स्यात्, तथापि तस्य विकल्पाकारस्य चाभेदारोपाद्विकल्पाकारेऽपि प्रवृत्तिः, इष्टसाधनाऽभेदज्ञानस्य प्रवर्त्तकत्वादित्याशङ्कते–आकारेति, तस्य तेनाऽसंस्पर्शादिति, बाह्यस्वलक्षणस्य विकल्पेनाविषयीकरणादित्यर्थः । बाह्ये स्वलक्षणे विकल्पाकारारोपस्तदैव स्यात् यदि तेनारोपेणारोपविषयस्य बाह्यस्वलक्षणस्यावगाहनं स्यात्, न चैवं भवन्मते सम्भवति, आरोपस्य विकल्पात्मकत्वेन तेन बाह्यस्य स्वलक्षणस्याविषयीकरणादिति भावः । अस्मद्गुरुचरणास्तु "निषेधे हेतुमाह–बाह्य इति,आरोपो हि आरोप्यमाणारोपविषययोस्समानधर्मसम्बन्धे सत्येव दृष्टो, यथा शुक्तिरजतयोश्चाकचिक्यादिसमानधर्मयोगे, न च प्रकृते तथेत्याह–

तस्येति, तस्य बाह्यस्य, तेन आकारेण, असंस्पर्शात् एकधर्मयोगित्वाभावात् इत्यर्थमाहुः। नच विकल्पाऽविषये बाह्ये विकल्पाकारारोपो मास्तु विकल्पाकारे विकल्पाभिन्नतया स्वप्रकाशात्मकविकल्पविषये बाह्याभेदारोपस्तु स्यादेवेत्यपि सम्भवतीत्याह—न द्वितीय इति, आरोपविषयस्य विशेषधर्मेणास्फुरायमाणत्व एव तत्रान्याऽभेदारोपः, न चात्र स्वप्रकाशतया विकल्पत्वेनाऽसाधारणधर्मेण स्फुरति विकल्पाकारे विशेषदर्शनप्रतिबन्धाद् बाह्याभेदारोपस्सम्भवतीत्याशयेनाह—आकारेति, किञ्च येनानुभवेन बाह्यो विषयीक्रियते न तेन विकल्पाकारः, येन च विकल्पेन विकल्पाकारो न तेन बाह्यः, न च प्रतियोग्यनुयोग्युभयरूपयोस्तयोरनवगाहिनोऽभेदारोपरूपत्वं सम्भवतीत्याशयेन दूषणान्तरमाह—

वस्तुतो बाह्यानुभवस्य विकल्पाकाराग्राहित्वाद्विकल्पस्य च बाह्यास्पर्शित्वादारोप्यारोपविषयोभयाग्राहिणश्चारोपरूपत्वायोगात् बाह्यानुभवो वाकारवान् विकल्पो वा विकल्पान्तरं वा न विकल्पाकारबाह्याभेदारोपो भवितुमर्हतीति द्रष्टव्यम्। मणिप्रभायां तु मणिबुद्ध्यैव मण्यर्थी प्रवर्त्तते न तु तद्बुद्ध्येति दृष्टान्तोऽप्याभासः, अभिमताकारावभासस्य प्रवर्त्तकत्वसिद्ध्यर्थमुपन्यस्तस्य तस्य बाह्यावभासप्रवर्तकत्वे विपरीते पर्यवसानात्। अथ यथा भवतां प्रभायां प्रवृत्तस्य मणिप्राप्तिस्तथास्माकमप्याकारे प्रवृत्तस्य मणिबाह्यप्राप्तिरित्यभिप्रायः। सोऽपि न युक्तः। प्रवृत्तो हि मणिप्रभायां तत्सन्निधानाविनाभावान्मणिमासादयति। न चाकारस्य तथा सम्भव इति। न चाकारवादेऽस्फुरतोऽर्थस्य सत्तायां प्रमाणमस्ति॥ ज्ञानं हि बाह्यमवगाहते, न वा। आद्ये तत एव रजतज्ञानमित्यादिव्यवहारोपपत्तावतिरिक्ते आकारे प्रमाणाभावः,

नहि ज्ञानं रजतमिति कश्चिद्व्यवहरति प्रत्येति वा, परंतु रजतस्य ज्ञानमिति। द्वितीये तु न बाह्यसिद्धिः, रजतमित्यादिकं हि ज्ञानं रजतादिकमवगाहमानं रजतादिसिद्धिरभिधीयते, तच्चेत् न तदवगाहि, कुतो रजतादिसिद्धिः ॥

वस्तुत इत्यादिना, अन्यविषयकज्ञानादन्यत्र प्रवृत्तावन्यलाभ इत्यत्र मणिप्रभाविषयकज्ञानात्प्रवृत्त्या मणिप्राप्तिवदित्युपदर्शितस्य दृष्टान्तस्याभासत्वमाह–मणिप्रभायां त्विति, उक्तदृष्टान्तस्य यद्विषयकं ज्ञानं तत्रैव प्रवर्त्तकमित्यर्थे पर्यवसानादप्रतिभातेऽपि बाह्ये विकल्पस्य प्रवर्त्तकत्वं यदभ्युपगतं तद्विपरीतसाधकतयाऽऽभासत्वमुपपादयति–अभिमताकारेति, अभिमताकारावभासस्य नीलाद्याकारविकल्पस्य, प्रवर्त्तकत्वसिद्ध्यर्थमिति स्वाविषये बाह्ये नीलादिस्वलक्षणे इति शेषः। तस्य प्रभायां प्रवृत्तो मणिवदिति दृष्टान्तस्य, बाह्यावभासप्रवर्त्तकत्वे इति, सल्लक्षणनीलादिबाह्यपदार्थविषयकज्ञानस्य स्वविषयनीलादिबाह्यविषयकप्रवृत्तिजनकत्व इत्यर्थः। मणिप्रभामण्योराकारादिबाह्यैकदेशवर्त्तित्वेनाविनाभावात् प्रभायां प्रवृत्तस्य मणिप्राप्तिस्सम्भवत्येव, आकारस्तु विकल्पाभिन्नत्वात्तद्वदन्तर्वर्तते बाह्यार्थो भूतलादिबाह्यदेशे वर्त्तते इति तयोरेकदेशघटिताविनाभावाभावान्नाकारे प्रवृत्तस्यार्थप्राप्तिस्सम्भवति, नहि मण्यभावे मणिप्रभा भवितुमर्हतीति मणिप्रभायां मणिः कारणमिति मणिप्रभाकार्येण मणिकारणानुमानात्तत्र प्रवृत्तौ तत्प्राप्तिर्यथा न तथाऽत्रापि बाह्यार्थप्राप्तिः, बाह्यार्थाऽभावेप्याकारावभासस्योत्पत्तेः, नच प्रभात्मकाकारावभासो नोत्पद्यत इति स एव विवक्षित इति चेत्, संवादिप्रवृत्तेः प्राक् तदनिश्चयादित्याशयेनाह–प्रवृत्तो हि मणिप्रभायामिति, ज्ञानस्य सौत्रान्तिकमताभ्युपगतं साकारत्वं निराकरोति–नचाकारेति, कार्यतावच्छेदकसामान्यधर्मावच्छिन्नकार्यलिङ्गात् कारणतावच्छेदक-

सामान्यधर्मावच्छिन्नकारणमनुमीयते किंवा विवक्षितकार्यतावच्छेदकविशेषधर्मावच्छिन्नकार्यलिङ्गाद्विवक्षितकारणतावच्छेदकविशेषधर्मावच्छिन्नकारणमनुमीयत इति विकल्प्य निराकरोति-नेति, कार्यसामान्यात्कारणसामान्यमनुमिनोतु, नचैतावन्मात्रेण दहनादिनैव भवितव्यम्, कारणसामान्यस्य कारणसामान्यान्तर्गतस्य यस्य कस्यापि वस्तुनस्सत्त्वमात्रेण चरितार्थत्वादित्याशयेनाह—

आकारात् कारणस्य विषयस्य सिद्धिरिति चेत्, न, कार्याद्धि सामान्यतः कारणमात्रं, विशेषतश्च गृहीतहेतुभावं सिद्ध्यति, आद्ये न तेन दहनादिनैव भवितव्यम्, द्वितीये तु विनापि दहनादिकं दहनाद्याकारविकल्पोपगमेन व्यभिचारात्, दहनाद्यप्रसिद्ध्या च न कारणताग्रहसम्भव इति ॥ माभूत ज्ञानगताद्दहनाद्याकारात् कार्याद्दहनादिसिद्धिर्दाहादेस्तु स्यात्, न, स्वप्रकाशेनोल्लिखितस्य बाह्यस्य दाहादेरसिद्धेः, दाहाद्याकारेण विज्ञानेनाग्रहणात्, न चागृहीतं लिङ्गं लैङ्गिकमनुमापयति । माभूत् बाह्यो दाहादिर्दहनादेरनुमापको ज्ञानाकारस्तु स्यात् ॥

आद्ये न तेनेति, तैमिरिककेशादिविनोपजायमानतैमिरिककेशाद्याकारविकल्पवत् दहनाद्याकारविकल्पस्य दहनादिकं विनाऽप्युपजायमानत्वेन व्यतिरेकव्यभिचाराद्दहनादितदाकारविकल्पयोः कार्यकारणभावाभावेन दहनाद्याकारविकल्पात्मककार्यविशेषहेतोस्साधारणानैकान्तिकत्वेन सदुष्टत्वान्न तेन दहनाद्यात्मककारणविशेषानुमानमित्याशयेनाह-द्वितीये त्विति, दूषणान्तरमाह-दहनाद्यप्रसिद्ध्येति,विकल्पागोचरत्वादिति शेषः। नाऽसिद्धो हेतुरनुमापक इत्यत्राऽनुमित्यङ्गभूता या बाह्यस्य दाहादेर्हेतोस्सिद्धिस्सा साकारवादिमते दाहाद्याकारविकल्पेनैव कर्त्तव्या स्यात्, उक्तविकल्पस्तु बाह्यदाहाद्यर्थं न स्पृशतीति न तेन सा भवितुमर्ह-

तीत्यसिद्धेन दाहादिना न दहनादिसिद्धिरिति समाधत्ते-नेति, स्वप्रकाशेनोल्लिखितस्येति, ज्ञानरूपस्य दाहादेराकारमात्रशरीरत्वादिति शेषः। ननु स्वप्रकाशेनोल्लिखितस्य ज्ञानरूपस्य दाहादेराकारमात्रशरीरत्वेन मास्तु बाह्यदहनादिसाधकत्वं, बाह्यरूपस्य दाहादेस्तु स्यादेवेत्याशङ्कायामाह-बाह्यस्य दाहादेरसिद्धेरिति, तत्र हेतुमाह-दाहाद्याकारेणेति, स्वप्रकाशेनानुल्लिखितस्य बाह्यस्य दाहादेरसिद्धेरिति पाठे तु शेषकरणेन नायासो विधेयः, सुस्पष्टार्थत्वात्।

**नहि विना दाहादिकं दाहाद्याकारं ज्ञानम्, न च विना दहनादिकं दाहादिकमिति चेत्, न, निरालम्बनार्थाकारवत् क्वचिदर्थक्रियाकारोऽपि वासनावशात् निरालम्बनो भविष्यतीति सन्दिग्धानैकान्तिकतया प्रतिबन्धस्याप्यसिद्धेर्विपक्षे बाधकाभावात्। तस्माद्बाह्यसिद्धिश्च साकारं च विज्ञानमिति बाललोलुपत्वम्, बाह्यविलोपे हि रङ्गज्ञानं रजतज्ञानमिति विशेषो न विनाकारं सिद्ध्यतीति सिद्ध्येदप्याकारः। बाह्योपगमे तु तत्तद्विषयत्वेनैव तदुपपत्तावाकारे प्रमाणाभावाद्बाह्यवस्तुतासिद्धिरिति बाल्यविगमे स्वयमेव विज्ञास्यति। तृतीयपक्षमधिकृत्योच्यते-अस्तु तर्हि बाह्यमेव स्वलक्षणं विकल्पविषयः॥**

**निरालम्बनार्थाकारवदिति**, बाह्यदहनाद्यर्थानाहितो यो दहनाद्याकारस्तद्वदित्यर्थः। **अर्थक्रियाकारः** दाहाद्याकारः, **निरालम्बनः** बाह्यदाहाद्यप्रयुक्तः। **सन्दिग्धानैकान्तिकत्वं** स्थलविशेषाभिप्रायेण, प्रायेण तु निश्चितव्यभिचारत्वमेव, **प्रतिबन्धस्येति** अर्थक्रियाकारबाह्ययोः प्रतिबन्धस्येत्यर्थः, **विपक्षे बाधकाभावादिति** दाहादिकं विनापि दाहाद्याकारज्ञानं भविष्यतीत्याकारिकाया व्यभिचारशङ्काया निवर्त्तकतर्काभावादित्यर्थः। **तदुपपत्ताविति**, रङ्गज्ञानं रजतज्ञानमिति विशेषोपपत्तावि-

त्यर्थः। ननु य एव सङ्केतग्रहविषयस्स एव विकल्पविषयः, न च स्वलक्षणं तथा, तत्तद्व्यक्तानामानन्त्यव्यभिचाराभ्यां शक्तिग्रहाभावाद्दिति कथं विकल्पविषय इत्यत्राह—

यद्यपि स्वरूपेणासामयिकतया तदभिलापसंसर्गायोग्यं, तथाप्यतद्रूपपरावृत्तिप्रत्यासत्त्या साधारणतया भवत्येव, यथा ह्येकोऽगोव्यावृत्तस्तथाऽपरेऽपि गाव इति। नैवम्। असत्या व्यावृत्तेः सता सम्बन्धाभ्युपगमे तवापसिद्धान्तात्। ततो न बिभेषि चेत्, पश्यापतन्तमपरं वज्रदण्डप्रहारम्। अथ कोऽयमगौनाम, किमेकस्य गोस्वलक्षणस्यानात्मा, आहोस्वित्तद्गतधर्मविरही। प्रथमे गवान्तरेऽपि न गोशब्दविकल्पौ प्रवर्तेतामश्वादिवदनात्मत्वाविशेषात्। अतिप्रसङ्गश्च, महिषमातङ्गाद्यगोव्यावृत्त्याऽश्वेऽपि गोव्यवहारप्रसङ्गात् ॥

यद्यपीति, स्वरूपेणेति विध्यात्मकाननुगतस्वरूपेणेत्यर्थः। असामयिकतया, सङ्केतग्रहाविषयतया, तथापीति, भवतां विधिरूपस्येव निषेधरूपस्याप्यनुगतस्य गोत्वस्य योगात् सङ्केतादिविषयत्वमित्यर्थः। साधारणतया भवत्येवेति, साधारणरूपतामापन्नं सत् तथा भवत्येवेति पाठान्तरम्, तथेति, अभिलापसंसर्गयोग्यमित्यर्थः। यथाह्येकोऽगो इति, "यथा ह्येको गौरगो" इति पाठान्तरम्। आद्यविकल्पेऽपि एकगोव्यक्तिभिन्नयावद्व्यक्तिव्यावृत्तिरगोव्यावृत्तिः एकगोव्यक्तिभिन्नयत्किञ्चिद्व्यक्तिव्यावृत्तिर्वेति विकल्पद्वयम् आद्ये—गवान्तरेऽपीति, गवान्तरस्याप्येकव्यक्तिभिन्नयावद्व्यक्त्यन्तर्गतत्वेन तद्व्यावृत्तेस्तत्राभावादिति भावः। द्वितीये—अतिप्रसङ्गश्चेति, तदुपपादयति—महिषेति, अगोव्यावृत्तोऽपि यो गोर्न व्यावर्त्तते स गोव्यवहारहेतुः अश्वश्च गोरपि व्यावर्तत इति न तत्र गोव्यवहार इत्याशङ्कते—

स गोरपि व्यावर्त्तेत इति चेत्, तत्किमभिमतो गौर्गोरपि न व्यावर्त्तते । व्यावर्त्तते, किन्तु स्वयमप्यसौ गौरिति चेत्, यद्यगोव्यावृत्तिरेवास्य गोत्वं तदाश्वेऽपि समानम्, अन्यच्चेत्, तदुच्यतां, विधिं विनाऽनुगतानतिप्रसक्तं तद्दुर्वचमिति तात्पर्यम् । एतेन यावद्गोव्यक्तिव्यावृत्तयावद्व्यावृत्तिर्गोव्यवहारनिमित्तमित्यपि निरस्तम् विशिष्ययावद्गोव्यक्तीनामसर्वज्ञावेद्यत्वात्, एकधर्मोपग्रहं विना यावद्गोव्यक्तिव्यावृत्तेर्दुर्ज्ञयत्वात् । द्वितीये तु तद्गतधर्मविरहिव्यावृत्तस्तद्वानेव तत्र च न नो विवादः, यत्किंचित्तद्गतधर्मशून्यत्वमतिप्रसक्तम्, यावत्तद्गतधर्मशून्यत्वं चाप्रसिद्धम्, अतस्तद्गतगोत्वशून्यत्वं वक्तव्यम्, तथा च सिद्धमीहितमित्याशयः । मिथः सम्भिन्नाकाराः पिण्डा एव साधारणं रूपमस्तु कृतमतद्रूपपरावृत्त्येति चेत्, सम्भेदोऽभेदः, आकारश्च धर्मी तद्धर्मो वा । नाद्यः । स हि न वास्तवः, पिण्डानां विरुद्धधर्माध्यस्तत्वात् । नाभिमानिकः, शावलेयादेर्भेदेनैव प्रथनात् ॥

स गोरपीति, स्वयमप्यसौ गौरिति अभिमतो गौर्गोत्वविशिष्टत्वाद्गौरित्यर्थः । तत्र गोत्वं विधिरूपं चेत्तर्हि पर्यवसन्नं विवादेन, नस्समीहितसिद्धेः, अगोव्यावृत्त्याख्यनिषेधरूपं चेत्, तदपि किमेकगोव्यक्तिभिन्नयावद्व्यक्तिव्यावृत्तिरूपं, किं वैकगोव्यक्तिभिन्नयत्किञ्चिद्व्यक्तिव्यावृत्तिरूपं, गोत्वावच्छिन्नभिन्नयावद्व्यावृत्तिरूपं वा, आद्ये गवान्तरस्यैकगोव्यक्तिभिन्नत्वान्न तत्रापि गोत्वं स्यात्, द्वितीये त्वाह-यद्येति, महिषमातङ्गाद्यगोव्यावृत्त्याऽश्वोऽपि स्वयं गौरिति पूर्वरीत्या तत्रापि गोव्यवहारप्रसङ्गस्स्यात् । तृतीये भेदप्रतियोगितावच्छेदकं गोत्वं पूर्वोक्तविकल्पत्रयं नातिशेते, तत्र च पूर्वोक्त एव दोषः । अन्यच्चेदिति व्यावृत्तेरन्यच्चेदित्यर्थः । नहि प्रतियो-

गितावच्छेदकरूपेण प्रतियोगिज्ञानं विनाऽभावज्ञानं भवतीति तज्ज्ञाने तज्ज्ञानं कारणं, नचात्र भवन्मते तत् सम्भवति, प्रथमन्यावृत्तिप्रतियोगिभूतानां यावद्गोव्यक्तीनामानन्त्याद् तत्तद्व्यक्तित्वेन प्रत्येकरूपेण कूटत्वस्य दुर्ग्रहत्वेन तद्रूपेण च चर्मचक्षुषां ज्ञानाऽसम्भवात्, तथा चानन्यगत्याऽनुगतेन विध्यात्मकेन गोत्वरूपेणैव तज्ज्ञानमभ्युपगन्तव्यम्, तथाच सिद्धं नस्समीहितमित्याशयेनाह—विशिष्य यावदिति, अतिप्रसक्तमिति, एकगोगतो यत्किञ्चिद्धर्मस्तद्व्यक्तित्वरूपो रूपाद्यात्मको वा तच्छून्यत्वं गवान्तरे वर्त्तते इति गवान्तरेऽप्यगोत्वप्रसङ्ग इत्यर्थः। तथा चागोव्यावृत्तेः कुत्राप्यसत्त्वेन तदधीनप्रवृत्तिकयोर्गोशब्दविकल्पयोरसम्भव एव स्यादिति भावः। अप्रसिद्धमिति वस्तुत्वप्रमेयत्वादीनामपि गोगतयावद्धर्मान्तर्गतत्वेन तेषां सर्वत्र विद्यमानत्वेन तच्छून्यत्वमप्रसिद्धमित्यर्थः। आकाराऽभेद एवानुगतमतेरालम्बनमित्याशङ्कते—मिथ इति, शावलेयबाहुलेयादिधर्मिणः न परमार्थभूताऽभेदवन्तः विरुद्धधर्माध्यस्तत्वात् घटपटवदित्याह-स हीति, स हि अभेदो हि, भेदग्रहस्य प्रतिबन्धकीभूतस्य सत्त्वेन नाभेदारोपस्सम्भवतीति न शावलेयबाहुलेयादिभिन्नधर्मिष्वाभिमानिकोऽभेद इत्याह-नाभिमानिक इति,

न द्वितीयः। धर्म्यतिरिक्तधर्मानभ्युपगमात्, अभ्युपगमे वा पर्यवसितं विवादेन, अननुगतानां धर्मीणां भेदावभासात् अनुगतधर्मस्वीकारे चास्मत्समीहितसिद्धेरिति। स्यादेतत्—भिन्नानामेव स्वलक्षणानां समानविकल्पजननसामर्थ्यमस्तु, तदपेक्षया च केचिद्गाव इति व्यपदिश्यन्ते, केचिदगाव इति, तच्च सामर्थ्यं स्वकारणनियतत्वादपर्यनुयोज्यम्, तन्नानुगतविकल्पजनकतया सामान्यसिद्धिः, नाप्यनुगतव्यवहारालम्बनतया, तादृशविकल्पजनकत्वस्यैव व्यवहारालम्बनत्वात्।

अननुगतानामिति, शाबलेयादिगतानां तत्तद्व्यक्तित्वादिधर्माणां भिन्नत्वेन ग्रहणान्न तदपेक्षया शाबलेयादिपिण्डानामभिन्नधर्मवत्त्वलक्षणसम्भिन्नाकारत्वम्, नापि गोत्वाद्यनुगतधर्मापेक्षया तथात्वं सम्भवति, गोत्वाद्यनुगतधर्मस्यानभ्युपगमात्, अभ्युपगमे वाऽलं विवादेन नस्समीहितसिद्धेरिति भावः। कीर्त्तिमतमाशङ्कते–स्यादेतदिति, यदाह–कीर्तिः। "एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी। एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता"इति तदपेक्षयेति, येषां पिण्डानां गवाकारानुगतधीजनकसामर्थ्यं ते गावः येषां तु न तथा सामर्थ्यं तेऽश्वादिपिण्डा अगाव इत्यर्थः,

यदि चानुगतविकल्पजनकत्वात् अतिरिक्तमप्यनुगतव्यवहारालम्बनं कल्पनीयं, तदा सामान्येष्वनुगतसामान्यव्यवहारालम्बनं सामान्यान्तरं कल्प्यं तत्रापि च सामान्यव्यवहारस्तस्य च स्वात्मनि वृत्तिविरोधात् तत्साधारणमपरमेवं तत्रापीत्यूर्ध्वमुखी अनवस्था ॥

तदा सामान्येष्वनुगतेति, गोत्वाश्वत्वमहिषत्वादिष्विदं सामान्यमिदं सामान्यमित्यनुगतप्रत्ययात्तेष्वपि सामान्यत्वाख्यं सामान्यान्तरं कल्प्यं स्यादित्यर्थः। तत्रापि सामान्यत्वाख्यसामान्येऽपि, ननु सामान्येष्वनुगतसामान्यप्रत्ययनियामकं सामान्यत्वाख्यं सामान्यं नातिरिक्तं येनानवस्थाराक्षसीमुखावलोकनं स्यात्, किन्तु स्वाश्रय स्वानतिरिक्तमेवेत्याशङ्कायामाह–तस्येति अनवस्थादोषभयात्स्वाश्रितत्वाभ्युपगमे आत्माश्रयदोषो दुष्परिहर एवेति भावः। तत्साधारणमिति, यानि गोत्वाश्वत्वाद्यखिलसामान्यानि यच्च तत्राभ्युपगतं सामान्यत्वाख्यसामान्यं तत्सर्वसाधारणमित्यर्थः। एवं गोत्वादौ तत्राभ्युपगतसामान्यत्वसामान्ये तदुभयाभ्युपगते सामान्यान्तरे च सामान्यं तत्राप्येवं सामान्यान्तरमित्येवं निखिलस्वपूर्वपूर्वसामान्येषु उत्तरोत्तरभिन्नभिन्नसामा-

न्याभ्युपगमे यत्स्यात्तदाह—एवं तत्रापीति, शावलेयबाहुलेयादिगोव्यक्तिषु गौर्गौरित्यनुगतप्रत्ययो नानुगतविकल्पजननसामर्थ्यस्वभावात् किन्तु गोत्वसामान्यादेवेति चेत्, तर्हि गोत्वसामान्यं गोव्यक्तिष्वेव वर्त्तते नाश्वादिव्यक्तिष्वित्यत्र किं नियामकम्, नन्वत्र किमु वक्तव्यम् सामान्यमेवेति चेत्, नन्वेवं तर्हि तस्यापि गोष्वेव भावो नान्यत्रेत्यत्रापि सामान्यान्तरमेव नियामकं वाच्यं स्यात्, तस्याप्यतिप्रसङ्गपरिहारायान्यत्सामान्यं नियामकं कल्प्यं स्यादित्यनवस्था, यदि च गोत्वस्य गोव्यक्तिषु वृत्तौ नियामकं गौर्गौरिति समानाकारविकल्पजननसामर्थ्यमेव, तदा तदेवानुगतव्यवहारजननप्रत्यलमस्तु किं गोत्वेनेत्याह—

एवं यदि स्वभावनियतवृत्तेरपि सामान्यस्य वृत्तिनियमार्थं सामान्यं कल्प्यं तदा तस्यापि वृत्तिनियमार्थमन्यदेवं तस्यापीत्यधोमुख्यनवस्था, यदि च तत्र सामर्थ्यमेव वृत्तिनियामकं, तदा तदेवानुगमव्यवहारे निमित्तं स्यादिति चेत्, यद्येवं निमित्तान्तरमनपेक्ष्यैकव्यवहारोऽत्यन्तभिन्नैरेव, भिन्नव्यवहार एवाभिन्नेनैकेन केनचित् किं न साध्यते, शक्तिस्वभावालम्बनस्योभयत्र तुल्यत्वात्। अथैवं सत्येकव्यवहारः क्वचिदपि न स्यात्, निर्निमित्तो वा भवेत्, उभयमप्यनिष्टं, तदेतत् तुल्यम्, अनेकव्यवहारोऽप्येवं सति न स्यात्, निर्निमित्तो वा भवेत्, द्वयमप्यनिष्टं, तस्मादेकेनैकव्यवहारवदनेकेनाप्यनेकव्यवहार एवेति सामर्थ्यनियमः॥

एवं यदीति, किं न साध्यत इति, तथा चैकैकोऽपि गोपिण्डो भेदेनैव व्यवह्रियेतेति भावः। यद्येवं निमित्तान्तरमित्यादेर्ग्रन्थस्य दीधितिकारमतेनाशयं स्फोटयति—

सामर्थ्यं यदि तादृशनिखिलनिष्ठमेकं, तर्हि किमपराद्धं प्रत्यक्षसिद्धेन गोत्वादिना, अथ प्रतिव्यक्ति

भिन्नं, न तर्हि तस्यानुगतविकल्पोत्पादनियामकत्वं मिथो व्यभिचारादित्याशय इति दीधितिकारः । का ग-तिस्तर्हि सामान्येष्वनेकेष्वेकव्यवहारस्य, या चन्द्रमस्येकस्मिन्ननेकव्यवहारस्य, भ्रान्तोऽसाविति चेत्, अयमपि भ्रान्त एव, बाधकस्योभयत्रापि तुल्यत्वात् । सर्वत्र भ्रान्तोऽस्त्विति चेत्, भेदव्यवहारोऽपि तथा किं न स्यात् ।

सामर्थ्यं यदीत्यादिना, सामर्थ्यम् अनुगतविकल्पजननसामर्थ्यम्, तादृशानिखिलनिष्ठमिति अत्यन्तविभिन्नशाबलेयबाहुलेयादिनिखिलगोव्यक्तिनिष्ठमित्यर्थः । सामान्यस्यैव गवादिपिण्डेष्वनुगतव्यवहारनिमित्तत्वाभ्युपगमे तस्य गोत्वाश्वत्वाद्यनेकसामान्येष्वभावात्तत्र सामान्यं सामान्यमित्यनुगतव्यवहारस्य का गतिस्स्यादित्याशङ्कते—का गतिरिति,प्रतिवन्दिमुखेनोत्तरमाह--येति, अयमपि भ्रान्त एवेति, यद्यपि परमार्थभूतसामान्यस्य गोत्वादिसामान्येष्वभ्युपगमेऽनवस्थाप्रसङ्गस्स्यादिति तद्भीत्या तत्र तदभावेपि नित्यानेकसमवेतत्वलक्षणोपाधिसामान्याभ्युपगमे क्षत्यभाव एवेति तन्निबन्धनोऽभ्रान्त एव तत्रानुगतसामान्यव्यवहारस्तथापि साक्षात्समवेतमेव जातिरूपं सामान्यं तेन विषयीक्रियते इत्यभ्युपगम्य तद्व्यवहारस्य भ्रमत्वमुक्तमिति भावः । सर्वत्रेति गोपिण्डादिष्वप्यनुगतव्यवहारो भ्रान्तोऽस्त्वित्यर्थः । प्रतिबन्दिमाह--भेदेति, बाधकं विना व्यवहारस्य भ्रान्तत्वाभ्युपगमे व्यक्तिष्वपि भेदव्यवहारो भ्रान्तस्स्यादित्यर्थः । अर्थक्रियाभेदाद् व्यक्तीनामपि भेद इति तत्र तद्व्यवहारो न भ्रान्त इत्याशयेनाशङ्कते—

अर्थक्रियास्थितेरिति चेत्, व्यक्तिभेदाभेदव्यवस्थापकार्थक्रियाभेदाभेदवत् सजातीयासजातीयत्व-

व्यवस्थापकार्थक्रियासाजात्यवैजात्ये किं न पश्यसि, सामान्येष्वप्यनुगतव्यवहारनिमित्तस्य नित्यानेकसमवेतत्वोपाधिसाजात्यस्य सर्वसिद्धत्वात्। ते अपि भ्रान्ते इति चेत्, अर्थक्रियाभेदोऽपि भ्रान्त इति तुल्यम्, अस्त्वेवमिति चेत्, त्यज तर्हि बाह्यव्यसनम्; अयमेवाशय इति चेत्, तत्र वक्ष्यामः—माभूद्बाह्यार्थक्रिया, भ्रान्त्यनुगमोऽप्येकं निमित्तमनादृत्य कथं, तदपि हि कार्यसाजात्यं कारणसाजात्यमन्तरेणाकस्मिकमापद्येत ॥

अर्थेति, कारणीभूतव्यक्तीनां साजात्यवैजात्यव्यवस्थापके कार्यगतसाजात्यवैजात्ये इति विभिन्नकार्यकारित्वाद् विभिन्ना अपि व्यक्तयः सजातीयकार्यकारित्वात् सजातीयाः विजातीयकार्यकारित्वाद् विजातीयास्सिद्ध्यन्तीति सजातीयव्यक्तिषु साजात्यनिबन्धनोऽनुगतव्यवहारो प्रमात्मकोऽभ्युपगन्तव्य इत्याह -व्यक्तिभेदेति । गोत्वाश्वत्वादिसामान्येष्वप्यनुगतव्यवहारस्य प्रमात्मकत्वाभ्युपगमे हेतुमाह--सामान्येऽपीति। ते अपीति अर्थक्रियासाजात्यवैजात्ये अपीत्यर्थः। भ्रान्ते भ्रान्त्युल्लिखिते। बाधकं विनैव व्यक्तिभेदकार्थक्रियाभेदबुद्धीनां भ्रान्तत्वेऽर्थक्रियाभेदासिद्ध्या व्यक्तिभेदासिद्धेरन्ततो बाह्यविलोपप्रसङ्ग इत्याह--त्यजेति, तदपीति, भ्रान्त्यनुगमात्मकमपीत्यर्थः।

अन्यथा भिन्नभिन्नैरेव बीजादिव्यक्तिविशेषैरनुगताङ्कुरादिकार्यजननोपपत्तावङ्कुरादिसाजात्यानुरोधेन बीजादिव्यक्तिविशेषतत्कारणपरम्परासु कुर्वद्रूपत्वपरम्पराकल्पनं भवतां विफलमेव स्यात्। तस्मादारोपव्यवहारस्याप्यनारोपितजात्यनादरेऽसम्भव एव। अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति चेत्, तत्किं शङ्कितम्, निश्चितम् वा, नाद्यः, व्यवहारस्यानन्यथासिद्धौ तदनवकाशात्, अन्यथा विपक्षे बलव-

**द्बाधकमुपनीयोन्यथासिद्धिविश्रान्तोऽपि स्वभावहेतुर्बाधकाशङ्कयाप्युपहन्येत ॥**

अन्यथेति विनैव कारणसाजात्यं कार्यसाजात्यमिति विभिन्नपिण्डेषु कारणेषु साजात्याभावेऽपि तैरेवाभेदव्यवहारात्मककार्यसाजात्यमित्यभ्युपगम इत्यर्थः, कुर्वद्रूपत्वपरम्परेति, बीजादिव्यक्तिविशेषेष्वङ्कुरकुर्वद्रूपत्वं तत्कारणेषु च बीजादिव्यक्तिविशेषकुर्वद्रूपत्वमेवं तत्कारणेषु बीजादिव्यक्तिविशेषकुर्वद्रूपात्मककारणकुर्वद्रूपत्वमित्येवं परम्परेत्यर्थः। विना बाधकं तद्बुद्धीनां भ्रमत्वाऽयोगात्तद्बलात्साजात्यवैजात्ये साधयित्वा संप्रति नह्यप्रमितमारोप्यत इत्यारोप्यस्य यत्र कुत्रापि प्रमितत्वानभ्युपगमे भ्रमात्मकतदारोपस्यैवासम्भवात्। असत्ख्यातेर्निरासात् भ्रमबलादेव ते साधयन्नुपसंहरति--तस्मादिति, अनन्यथासिद्धाविति, जातिव्यतिरेकेणासिद्धावित्यर्थः। स्वभावहेतुः अनुमापको हेतुः। उपहन्येत आभासस्स्यात्,

**ततो बाधकव्यसनमपहायानुगमव्यवहृतिरन्यथाप्युपपाद्यताम्। न चैतच्छक्यम्, गत्यन्तराभावात्। न द्वितीयः। तदभावात्। तद्धि स्वरूपतो वा स्यात्, ज्ञानतो वा,** सप्तम्यर्थे तसिः, जातिस्वरूपे साक्षाज्जातिविषयकज्ञानस्वरूपे वा, तदेकत्वादिनिरासद्वारा वेत्यर्थः। **स्वरूपतोऽप्यनुपलम्भो वा, विरुद्धधर्माध्यासो वा, अनुपलम्भोऽपि किं सर्वथैव, अन्तराले वा, विविच्य वा ॥**

गत्यन्तरेति, अथ कोऽयमगौरित्यादिपूर्वोक्तान्यवहितग्रन्थेनापोहादेरनुगतव्यवहारानुपपत्तेरुपदर्शितत्वादित्यर्थः। तदभावात् निश्चितबाधकाभावात्, तत् बाधकम्, जातिस्वरूपबाधकस्सर्वथैवानुपलम्भ इत्याद्यपक्षं निराकरोति—

**न प्रथमः। असिद्धेः, स्फुरत एव हि साधारणाकारस्य शरीरं चिन्तयितुमारब्धं नास्फुरतः। अध्यक्षे**

साधारणस्फुरणं व्यषेधामो, न तु विकल्पे, तस्य समानशब्दसङ्केतग्रहतिमिरनिकुरुम्बकरम्बितदृष्टिभिरेवोपादानात्, न त्वस्माभिः, कल्पनाकोशस्यानन्तप्रसरतया तत्त्वान्यवस्थापकत्वात् इति चेत्, न, शब्दानुसन्धानविरहेऽपि जायमानत्वात्, तथापि शब्दवासनात एव दोषादिति चेत्, किमेकसङ्केतविषयाभावेऽपि समानशब्दसङ्केतग्रहवासनावशात्, एकाकारावमर्शः, तत्सद्भावे वा ॥

न प्रथम इति, असिद्धेरिति, विकल्पे जात्युपलम्भस्य साधितत्वेन तदभावस्यासिद्धेरित्यर्थः एतदेवाह--स्फुरत एवेति, ननु भवतु विकल्पे साधारणस्फुरणं, नच तत्र तन्निषेधामः, नच तन्मात्रेण साधारणस्वरूपं सिद्ध्यति, तस्य दोषसमुत्थत्वेनाप्रमाणत्वात्, किन्तु निर्विकल्पाध्यक्ष एव साधारणस्फुरणं निषेधामः, तदेव च दोषाजन्यतया प्रमाणमिति वस्तुतत्त्वसाधकमिति प्रत्यक्षोपलम्भाभावरूपोऽनुपलम्भस्सिद्ध एव, स एव च प्रकृते विवक्षित इत्याशयेनाशङ्कते--अध्यक्ष इति, प्रकृते भ्रमबीजं दोषमाह--तस्येति, तस्य विकल्पस्य, समानशब्देति, अनुगतघटादिशब्दस्यानुगतघटत्वाद्यवच्छिन्ने सङ्केतग्रहः वाच्यवाचकभावग्रहस्स एव भ्रममूलत्वात् तिमिरनिकुरम्बस्तेन करम्बिता कलुषिता दृष्टिर्येषां तैरेव नैयायिकादिभिरुपादानादित्यर्थः। अस्तु विकल्पादपि वस्तुसिद्धिस्तत्राह--कल्पनेति, अगृहीतसङ्केतस्यापि पुरुषस्य शक्तिग्रहोपस्थित्यादिकं विनापि जायमानत्वेन विकल्पस्यापि प्रत्यक्षानुभवरूपत्वेन तेन सामान्यस्यापि सिद्धिर्भवत्येवेति प्रत्यक्षात्मकोपलम्भाभावोऽसिद्ध एवेत्याशयेन समाधत्ते, नेति। शब्दानुसन्धानेति शक्तिग्रहोपस्थित्यादेरप्युपलक्षकम्। ननु तत्तद्विकल्पकुर्वद्रूपात्मकपूर्वपूर्वबुद्ध्यात्मिका प्राक्तनी सङ्केतग्रहवासना तत्राप्यस्तीति तदात्मकदोषबलादेव विकल्पस्य जायमानत्वेन भ्रमरूपत्वान्न तेन सामान्यसिद्धिरित्याशङ्कते--तथापीति। एकस-

ङ्केतविषयाभावेऽपीति एकोऽनुगतो जात्यात्मको यस्सङ्केतग्रहविषयस्तदभावेऽपीत्यर्थः। तत्सद्भावे वा जात्यात्मकैकसङ्केतविषयसद्भावे वा। सौगतेन द्वितीयपक्षाभ्युपगमे नस्समीहितसिद्धिरेवेति तत्खण्डनमनुचितमेवेति मन्यमान आद्यपक्षमेव प्रतिक्षिपति—

**न तावदाद्यः। नानासास्नादिमद्व्यक्तिवत् स्वर्गलोचनवाण्यम्बुकुलिशादिष्वपि गोशब्दसङ्केतग्रहवासनावशात् तथाविधप्रत्ययानुगमप्रसङ्गात्। इष्ट एवायमर्थ इति चेत्, सोऽयं सास्नादिमतीषु व्यक्तिषु साधारणमिदमाकारं रूपं न पश्यति, पश्यति तु गोशब्दवाच्येषु दशास्विति किमत्र वक्तव्यम्, नूनं रुचिरेवास्य लोचनमिति।**

न तावदाद्य इति, एवमभ्युपगमे भिन्नभिन्नानुगतधर्मावच्छिन्नानेकशक्तिग्रहविषयेषु गोपदवाच्येषु गवीव स्वर्गादिष्वपि गौर्गौरित्यनुगतप्रत्ययस्स्यादित्याह—नानेति, दशास्विति, स्वर्गेषु पशुविशेषवाग्वज्रदिग्नयनमयूखपृथिवीपार्थस्स्वित्यर्थः। स्वर्गादिषु साधारणरूपं न पश्यति पश्यति च सास्नादिमद्व्यक्तिष्विति सौगतेनापि शक्यं वक्तुमित्याशङ्कते—

**शक्यमिदमितरेणापि वक्तुमिति चेत्, शक्यम्, न तु व्यवहारस्तन्मूलो विपर्यासयितुम्, तन्मूलोऽनुगतधर्ममूलो, विपर्यासयितुमन्यथाकर्तुम्, कथं तर्हि स्वर्गादौ गौर्गौरित्यनुगतो व्यवहारः, अनुगतप्रत्ययात्, सोऽपि कथमन्तरेणानुगतधर्मम्, क एवमाह, कस्तर्ह्यसौ, गोशब्दवाच्यत्वम्, प्रकृतेऽपि तथैव किं न स्यात्, न स्यात्,**

शक्यमिदमिति, शक्यमिति, वाङ्मात्रं शक्यम्, ननु शब्दसङ्केतादिग्रहमन्तरेणापि जायमानो गौर्गौरित्याकारस्तात्त्विको व्यवहारोऽनुगतगोत्वधर्मनिबन्धनोऽनुगतसामान्यमन्तरेणापि समानशब्दसङ्केतग्रहवासनाबलादेवान्यत्रापादयितुं शक्य इत्यर्थः । प्रकृतेऽपि सास्नादिमतीष्वपि, तथैव, गोशब्दवाच्यत्वमेवानुगतधर्मं इति तत एवानुगतप्रत्ययादिः,

अव्युत्पन्नानामपि सास्नादिमतीषु व्यक्तिष्वनुगतगोप्रत्ययात्, न स्वर्गादौ तथास्ति । न चानुगतगोत्वधर्मोपग्रहमन्तरेणानन्तासु व्यक्तिषु व्युत्पत्तिः सम्भवति, न च तामन्तरेणापूर्वव्यक्तौ पदविशेषवाच्यतानिबन्धनो व्यवहारः, स्वर्गादिषु चानुगतस्वर्गत्वादिनिबन्धना व्युत्पत्तिरिति ।

अव्युत्पन्नानामपीति, शब्दानुसन्धानशक्तिग्रहोपस्थित्यादिविरहिणामपीत्यर्थः । न स्वर्गादौ तथास्तीति, अव्युत्पन्नानां स्वर्गादावनुगतगोप्रत्ययो नास्तीत्यर्थः । योऽपि व्युत्पन्नानामनुगतप्रत्ययस्सोऽप्यनुगतधर्मानभ्युपगमे सङ्केतग्रहरूपव्युत्पत्त्यसम्भवेन तामन्तरेण गोपदवाच्यतानिबन्धनो न सम्भवतीति प्रतिपादयति—न चेत्यादिना, नन्वेवं तर्हि स्वर्गेष्वादिषु दशस्वनुगतधर्माभावेन व्युत्पत्तिर्न स्यादित्याशङ्कायामाह—स्वर्गादिष्विति, तथाच गोशब्दस्य स्वर्गत्वेषुत्वादिविभिन्नतत्तद्धर्मावच्छिन्ने पृथगेव शक्तिरिति स्वर्गत्वादिप्रत्येकानुगतधर्मावच्छिन्ने गोपदत्वावच्छिन्नगोपदवाच्यताग्रह इति तन्निबन्धनोऽनुगतव्यवहार इति गोपदवाच्यतावच्छेदकतयाऽनुगतधर्मोऽभ्युपगन्तव्य एवेति भावः ।

नन्वेतावता विकल्पः सिद्ध्यत्वनुभवस्तु कथम्, न च निर्विकल्पकमनुभवं विना वस्तुसिद्धिरिति चेत्, न, असति बाधके सविकल्पकादेव वस्तुसिद्धेः । कथं तस्य सवस्तुकतेति चेत्, शब्दवासनादिकारणा-

न्तरविध्वंसादिति तूष्णींभव। न द्वितीयः। उपलब्धिकारणाभावादेवान्तरालेऽनुपलम्भसम्भवात्, अन्तराले एकपिण्डनाशानन्तरं पिण्डान्तरानुत्पादकाले। कस्योपलब्धिकारणस्याभाव इति चेत्, व्यक्तेरेव।

विकल्पः सिद्ध्यत्विति, अतिरिक्तानुगतधर्मावलम्बी विकल्पः सिद्ध्यत्वित्यर्थः। नच तन्मात्रेण वस्तुभूतानुगतधर्मसिद्धिः तस्याऽप्रमाणकोटिमुपगतत्वादिति भावः। अनुभवस्तु कथमिति, अतिरिक्तानुगतधर्मावलम्बी निर्विकल्पस्तु कथं सिद्ध्यति येन जात्यात्मकोऽनुगतधर्मस्सिद्धस्स्यादित्यर्थः। विकल्पो यदि वस्तुसाधकस्स्यात्तर्हि कूर्मरोमादिविकल्पोऽपि तथा स्यादित्याशङ्कायामसति बाधके इत्युक्तम्, तस्य विकल्पस्य। सवस्तुकता वस्तुविषयकत्वसिद्धिः। शब्दवासनादिकारणनिषेधे सविकल्पकस्यालीकविषयकत्वानुपपत्तावर्थसामर्थ्यसमुत्थत्वमावश्यकम्, अत एव तस्य सवस्तुकतेत्याशयेनोत्तरयति—शब्दवासनादीति, जातिरनित्या चेत्पूर्वपिण्डनाशे उत्तरपिण्डे नोपलभ्येत, तेन नित्या वाच्या, तथा चान्तरालकाले कथं नोपलभ्यते इति चेत्, उच्यते, स्वरूपसम्बन्धेन नित्यापि जातिस्समवायेन व्यक्तिसम्बन्धादेव तत्रोपलभ्यते, व्यक्त्या सह सम्बन्धश्च जातस्सम्बद्धश्चेत्येकः काल इत्युक्तेर्व्यक्त्युत्पादकाल एवेति पूर्वोत्तरपिण्डमध्यकाले व्यक्त्यभावेन तत्सम्बन्धाभावादेव नोपलभ्यते, नतु तदभावादित्याशयेन द्वितीयपक्षं प्रतिक्षिपति- न द्वितीय इति, व्यक्तेरेवेति, एतेन जातिरव्यापिका चेत् प्राचीवर्त्तिनि पिण्डे परिदृष्टा प्रतीचीवर्त्तिनि नोपलभ्येत प्रतिसङ्क्रमणाद्यसम्भवादतो देशव्यापिका वाच्या, तथा च मध्यदेशे कथं नोपलभ्यत इत्यारेकापि निरस्ता, मध्यदेशे व्यक्त्यभावादेवानुपलम्भादिति।

तृतीये विविच्येत्यस्य कोऽर्थः, विभिन्नदेशत्वेन, भेदेन वेति, नाद्यः, अनन्यदेशत्वादेव कुण्डे बदरवद्-

नुपलम्भसम्भवात्, बदरस्य कुण्डेतरस्वावयवदेशत्ववज्जातेः पिण्डेतरादेशत्वादित्यर्थः। न द्वितीयः, भेदेनानुभवादेव, पिण्डान्तरानात्मके पिण्डेऽनुभूयमाने तत्संसर्गितयानुभवात्। एकस्यानेकतादात्म्यानुपपत्तिप्रदर्शनायेदम्, नापि द्वितीये बाधकं किञ्चिदस्ति, अवयविसमानयोगक्षेमत्वात्॥

विभिन्नदेशत्वेनेति, जातिव्यक्त्योर्विभिन्नदेशत्वेनानुपलम्भाज्जात्यभावः, किंवा घटपटवद् भेदेनानुपलम्भादिति विकल्पद्वयार्थः। बदरस्य कुण्डदेशभिन्नस्वावयवदेशत्वात्तत्रोपलम्भवद् यत्र तादात्म्येन पिण्डो वर्त्तते तत्रैव समवायेन जातिर्वर्त्तते इति जातेः पिण्डेतरदेशत्वाभावादेव न तत्रोपलम्भ इति न तन्मात्रेण जात्यभाव इत्याह—अनन्यदेशत्वादेवेति, दृष्टान्तस्य व्यतिरेकित्वमावेदयितुं तदर्थमाह—बदरस्येति, भेदेनानुभवादेवेति, एतदेव विशदयति—पिण्डान्तरेति, पिण्डस्य पिण्डान्तरानात्मक इति यदुक्तं विशेषणं तत्फलमाह—एकस्येति, नापि द्वितीय इति, विरुद्धधर्माध्यासो वेति द्वितीयपक्षे नापीत्यर्थः। बाधकमिति, कार्त्स्न्यैकदेशविकल्पेन विरुद्धधर्माध्यासरूपमित्यर्थः। नापि द्वितीयं बाधकम् अवयविसमानेत्याद्येवान्यत्र पाठः, अवयवेऽवयवीव व्यक्तौ जातिर्न कार्त्स्न्येन वर्त्तते नवैकदेशेन किन्तु स्वरूपेणेत्यवयविनीव जातावपि न विरुद्धधर्माध्यासरूपं बाधकमित्यर्थः। गोत्वस्य निष्क्रियत्वादित आगमनादि न सम्भवतीति तद्रूपव्यापकव्यावृत्तौ व्याप्यीभूतो गवि गोत्वस्य सम्बन्धोऽप्यनुपपन्न इत्याशङ्कते—

जायमाने गवि गोत्वस्य सम्बन्धो न रज्ज्वादिवत् देशान्तरादागमनात्, निष्क्रियत्वात्, न करीषादिवत्तत्रैव सत्त्वात्, प्रागप्युपलम्भप्रसङ्गात्, न पिण्डरूपवत् तदोत्पादात्, प्राचीनपिण्डानामगोत्वप्रसङ्गात्, न

च प्रकारान्तरं सम्बन्धोपपादकमस्तीति चेत्, न, तत्रासतोऽपि स्वभावनियमादेव सम्बन्धानुपपत्त्यभावात्। सतोऽपि च व्यञ्जकव्यक्तिविरहादेवानुपलम्भसम्भवात्, येन पिण्डेन सम्बध्यते न तत्र कदापि तन्नास्ति तत्रस्थाकाशादौ च न कदापि सम्बध्यत इति कुतो विरोधः। न च पिण्ड एवोत्पत्तिकालेऽसतो गोत्वस्यानन्तरमुपसर्पणादिकं विना सम्बन्धविरोधः, जातः सम्बद्धश्चेत्येकः कालः इत्यभ्युपगमात् ॥

जायमान इति, रूपं यथोत्पत्तिकाले पिण्डेन सह सम्बद्ध्यते न तथा जातिः तथा सति जातेरुत्पत्त्यभ्युपगमे उत्पत्तेः प्राक्काले तदभावप्रसक्त्या पूर्ववर्तिगोपिण्डानामगोत्वप्रसङ्गस्स्यादित्याह-न पिण्डरूपवदिति, निषेधे हेतुमाह-तत्राऽसतोपीऽति, आकाशाद्यात्मके व्यक्त्युत्पत्त्यधिकरणदेशे समवायेनाविद्यमानस्यापीत्यर्थः। स्वभावेति, अयुतसिद्धत्वस्वभावेत्यर्थः। समवायसम्बन्धेन व्यक्तिमात्रनिष्ठमपि स्वरूपसम्बन्धेन व्यापकं सामान्यमिति न्यायसिद्धान्तमाश्रित्याह-सतोऽपीति, स्वरूपसत्सामान्यं व्यक्तिसमवेतंसद्व्यज्यत इति व्यक्त्यनुत्पादकाले व्यक्त्यात्मकव्यञ्जकविरहादेवानुपलम्भसम्भवादित्यर्थः। येन पिण्डेन जातेस्समवायेन सम्बद्धत्वं न तेन सह तत्सत्त्वकाले कदापि समवायेनाऽसम्बद्धत्वम् यत्र चाकाशादौ समवायेन जातेरसम्बद्धत्वं न कदापि तत्र समवायेन सम्बद्धत्वमिति न सम्बद्धत्वासम्बद्धत्वात्मकविरुद्धधर्माध्यासः, न चाकाशादौ समवायेन जातेस्सम्बन्धाऽभावेऽपि स्वरूपेण सम्बन्धसत्त्वाद्विरुद्धधर्माध्यास इति वाच्यं, तस्यैकसम्बन्धमूलकत्वादित्याशयेनाह—येन पिण्डेनेति। अनन्तरम् गोपिण्डोत्पत्त्यनन्तरम्।

अथ पिण्डमन्तर्गडुमुपादायोपलक्षणतया तत्रेति व्यवहारः, अन्तर्गडु सम्बन्धघटकं उपलक्षणतया

परम्परयेति चेत्, तदा तदुपसर्पणापसर्पणोत्पत्तिविनाशैरेव तदुपपत्तौ न यातीत्यादिरपराद्धेषोरिव धानुष्कस्य कण्ठडम्बरः । तथा हि—सामान्यस्य किं पिण्डोपलक्षितदेशे सत्त्वासत्त्वे नोपपद्येते, किं वा पिण्ड एव ॥

तत्रेति व्यवहार इति, पिण्डाधारदेशे स्वाश्रयवत्त्वसम्बन्धेन कदाचिद् गोत्वसत्त्वव्यवहारः कदाचिच्च नेत्यर्थः, सम्बन्धेति स्वाश्रयवत्त्वेत्यर्थः । तदुपसर्पणेत्यादि पिण्डस्योपसर्पणोत्पत्तिभ्यामपसर्पणविनाशाभ्यां च पिण्डाधारदेशे गोत्वसत्त्वासत्त्वव्यवहारयोरुपपत्तावित्यर्थः, न यातीत्यादिः “ न याति न च तत्रासीन्नचोत्पन्नं न चांशवत् । जहाति पूर्वमाधारमहोव्यसनसन्ततिः ॥ १ ॥ इति सम्पूर्णश्लोकः । पूर्वमित्यनेन भजते परमित्यपि सूचितम् । जहाति पूर्वं नाधारमित्यपि पाठान्तरम्, अपराद्धेषोः लक्ष्यच्युतशरस्य, सामान्यस्य किमिति पिण्डे उपसर्पणस्य पिण्डाच्चापसर्पणस्याऽभावादिति शेषः ।

आद्ये पिण्डमधिकृत्योपसर्पणापसर्पणाभावस्तदुपलक्षितदेशमधिकृत्य च सत्त्वासत्त्वे सामान्यस्येति किं केन सङ्गतम् । द्वितीये सत्येव पिण्डे तस्यासत्त्वं प्रागेव निषिद्धमिति शिष्यमाणमसति पिण्डे तत्रासत्त्वमाशङ्क्यते । तन्न । स्वरूपसत्त्वासत्त्वयोर्वर्त्तमानत्वावर्त्तमानत्वयोर्द्वितीयपिण्डाद्याधारानपेक्षत्वात्, सम्बद्धत्वासम्बद्धत्वे तु द्वितीयापेक्षे, ततस्तत्रासति नास्तीति कोऽर्थः, तेनासता न सम्बध्यत इति, तच्चैवमेतत्, समवायस्य नित्यत्वेऽपि तद्विशिष्टसमवायस्य तदाऽभावात् तेनासम्बन्धित्वोपपत्तेः ॥

किं केन सङ्गतमिति, वैयधिकरण्यमेव स्यादिति भावः, सत्त्वासत्त्वे किं वर्त्तमानत्वावर्त्तमानत्वरूपे किंवा सम्बद्धत्वाऽसम्बद्धत्वरूपे इति विकल्पद्वयम्, तत्राद्यपक्षमाश्रित्याह—स्वरूपसत्त्वेति, द्वितीयपिण्डाद्याधारानपेक्षत्वादिति, स्वभिन्नपि-

ण्डाद्याधारानपेक्षत्वादित्यर्थः । अन्यत्र " द्वितीयेति " पदं नास्ति, नवा सामान्यस्य कदाचिदप्यऽसत्त्वं, नित्यत्वादिति भावः । द्वितीयपक्षमाश्रित्याह—सम्बद्धत्वेति द्वितीयापेक्षे स्वभिन्नपिण्डापेक्षे, ननु समवायस्य नित्यत्वात्कथं तेन सम्बन्धेन सामान्यमसता पिण्डेन न सम्बद्ध्यते येन तत्सम्बन्धाधीनं तत्सत्त्वं तत्र न स्यादित्याशङ्कायामाह—समवायस्य नित्यत्वेऽपीति, यद्यपि सम्बन्धोऽत्र समवायः, स च नित्य एव, तथापि तद्विशेषितस्समवायस्तदभावकाले नास्तीत्यसम्बद्धत्वमप्युपपद्यत एवेति भावः । तद्विशिष्टेति, पिण्डानुयोगिकत्वविशिष्टेत्यर्थः । अत्र वायौ समवायस्यसत्त्वेऽपि रूपाभावात्तत्प्रतियोगिकत्वविशिष्टसमवायाभावात्तत्सम्बन्धाभाव इति दृष्टान्तो बोध्यः । तद्विशिष्टेत्युक्त्या पिण्डानुयोगिकत्वोपलक्षितसमवायस्य सत्त्वेऽपि न क्षतिरिति सूचितम् । यदि तन्निष्ठाभावप्रतियोगित्वरूपमसत्त्वं स्यात्तदा तेन समं तन्निरूपितवृत्तित्वरूपस्य सत्त्वस्य विरोधस्स्यात्, न चैवम्, यतः पिण्डोत्पत्तेः पश्चाद्यावत्सत्त्वं तत्र सामान्यस्य सत्त्वात् पूर्वं च पिण्डस्यैवाभावेनासति तत्र सामान्याभावाधिकरणत्वाऽयोगात् कदापि पिण्डे सामान्यस्याभावो नेति न तत्रोक्तलक्षणमसत्त्वं सम्भवतीत्याशयेनाह—

**तत्र च पिण्डे सतः सामान्यस्य न तन्निष्ठाभावप्रतियोगित्वरूपं तत्रासत्त्वं, यावत्सत्त्वं तत्र सामान्यस्य सत्त्वात् । प्रागसन् पश्चात् कथं सम्बद्ध्यतामिति चेत्, तस्य सत्त्वादसम्बन्धस्य तदसत्त्वप्रयुक्तत्वात् । ततः प्रागसन् पिण्डः कथं पश्चादुत्पद्यतामिति चोद्यनिष्ठा । सा च सत्कार्यवादमनुपततीत्यभुक्तवान्तिः । तथापि सामान्यतद्वतोरत्यन्तभेदे कथं सामानाधिकरण्यमिति चेत्, किन्न्विदं, समानेन तुल्येनाधिकरणेन हि सम्बन्धः सामानाधिकरण्यम्, एवं हि समानानि तुल्यान्यधिकरणानि यस्य तत्तथा तस्य भावस्तत्त्वमिति व्युत्प-**

स्त्यनुरोधः कृतो भवति। तुल्यत्वं च सास्नादिमत्त्वं, तेन समानपदस्य तुल्यपरिमाणादिपरत्वभ्रमनिरासः। समानमेकमधिकरणं ययोरित्यादिकमर्थान्तरं त्वनर्थान्तरं, तस्य प्रकृतेऽसम्भवात्, तस्य च भेदेन को विरोध इति नाधिगच्छामः, गवाश्वयोरपि तथाभावप्रसङ्ग इति चेत्,

तत्र च पिण्ड इति। पूर्वकालावच्छेदेन सम्बन्धविरोधिनोऽसम्बन्धस्य सद्भावादुत्तरकालावच्छेदेन गोपिण्डेन सह गोत्वस्य सम्बन्धः कथं स्यादित्याशङ्क्ते–ततः प्रागसन्निति, पूर्वकालावच्छेदेन सम्बन्धप्रयोजकस्य पिण्डसत्त्वस्याभावादेव तत्प्रयोज्यस्य सम्बन्धस्याभावः, न चैतावतोत्तरकालावच्छेदेन सम्बन्धे क्षतिः, तत्प्रयोजकस्य पिण्डसत्त्वस्य भावात्, अन्यथा कारणाभावादभवत्कार्यं विरोधात्कुत्रापि न स्यादेवेत्याशयेन समाधत्ते–तस्येति, पिण्डस्येत्यर्थः, तदसत्त्वेति, पिण्डासत्त्वेत्यर्थः। अचोद्यनिष्ठा पूर्वपक्षपर्यवसानम्, अभुक्तवान्तिरिति सदेवोत्पद्यते नासत्, यदाह "सदेव सौम्य अग्रे आसीत् इति" "असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्" इति च, एवम्भूतं साङ्ख्यमतं त्वया न भुक्तं न पाचितम् इदानीं तदेव वमसीत्यर्थः। धर्मधर्मिणोरात्यन्तिकमभेदं निरस्य पाक्षिकं तं निरसितुं भेदाभेदवादिनमुत्थापयति–तथापीति, किन्न्विदमित्याश्चर्यं, किमिदमित्यपि पाठः, स चोक्तार्थकः, तदेव दर्शयति–समानेनेति, समानेनेत्यस्य तुल्यार्थकरणे फलमाह–तेनेति, तस्य चेति समानेन तुल्येनाधिकरणेन सम्बन्धः सामानाधिकरण्यमित्यस्य चेत्यर्थः। न ब्रूमो ययोर्भेदस्तयोस्सामानाधिकरण्यमेवेति नियम इति येनोक्तातिप्रसङ्गस्स्यात् अपि तु क्वचिद्भेदे सति सामानाधिकरण्यं यथा गोगोत्वयोः, क्वचिच्च तदभावः यथा गवाश्वयोरिति व्यतिरेकदृष्टान्तस्थानं गवाश्वं नतु भेदेन सामानाधिकरण्यस्य यो विरोधस्तत्स्थानं तदित्याह–

ननु व्यतिरेकदृष्टान्तस्थानं तन्न तु विरोधस्थानं, व्यतिरेकयोः सहचारमात्रेण विरोधासिद्धेरिति भावः। एवं हि गर्भस्थो मित्रातनयः श्यामो मित्रातनयत्वात् जातमित्रातनयवदित्युक्ते शाकाद्याहारपरिणतिप्रयुक्तत्वाच्छ्यामतायास्तद्विरहे सति तत्तनयत्वस्याश्यामतया न विरोध इत्युक्तौ जातस्यापि शाकाद्याहारपरिणतिशालिनस्तत्तनयस्याश्यामताप्रसङ्ग इत्येवंविधमुत्तरं सर्वत्र सुलभं स्यात् ॥

नन्विति, तदेव स्पष्टयति-व्यतिरेकयोरिति, विरोधाऽसिद्धेरिति यत्र भेदस्तत्र सामानाधिकरण्याभाव एवेति नियमरूपविरोधाऽसिद्धेरित्यर्थः। एवं हीति क्वचित्सहचारमात्रेण नियमाभ्युपगमे सतीत्यर्थः। इत्युक्ते वादिनेति शेषः, इत्युक्ताविति प्रतिवादिनेति शेषः। अश्यामताप्रसङ्ग इति, पूर्वोक्तरीत्याऽश्यामत्वमित्रातनयत्वयोस्सहचारदर्शनात्सार्वत्रिकनियमप्रसक्त्या श्यामत्वेन निर्णीतस्यापि शाकाद्याहारपरिणतिशालिनो मित्रातनयस्याऽश्यामत्वप्रसङ्ग इत्यर्थः। आधाराधेयभावनियमप्रयोजकस्स्वभावविशेष एव नतु भेदोऽभेदो वा अत एव नातिप्रसङ्ग इत्युत्तरयति—

भेदाविशेषे सास्नादिमत्स्वेव गोत्वं न केसरादिमत्स्वित्यत्र नियामको विशेषो वाच्य इति चेत्, स्वभावविशेष एवेत्युक्तं प्रतीहि। किञ्चिदेव हि केन चित् सम्बद्धं न सर्वं सर्वेणेति। तथानुगमनियमोऽपि स्वभावादेव किं न स्यादिति चेत्, एकस्य विज्ञानस्य यथानेकविषयसम्बन्धित्वं यथा चानेकस्य विषयस्यैकविज्ञानसम्बन्धित्वं तथैकस्य सामान्यस्यानेकपिण्डसम्बन्धित्वम् अनेकस्य च पिण्डस्यैकसामान्यसम्बन्धित्वं न विरुध्यते, मानाभावात्, अन्तरेण चैकं धर्ममनेकेष्वेकव्यवहारो न स्यात्, कारणाभावात्, अन्यथैकस्मादनेकव्यव-

हारस्यापि प्रसङ्गेनातिप्रसङ्गादिति हेतोः । नापि ज्ञानतो बाधकं, तत्स्वरूपप्रतिक्षेपस्यानुभवबाधितत्वात्—

स्वभावविशेष एवेति, स स्वभावः कीदृश इत्याशङ्कायामाह—किञ्चिदेवेति, तर्हि गौर्गौरित्याद्यनुगतमतिनियमोऽपि स्वभावादेवास्तु किं जात्येत्याशङ्कते—तथेति, अतिप्रसङ्गादित्यस्यैव व्याख्यामाह—एकस्मादनेकव्यवहारस्यापि प्रसङ्गेनेति; तथा चानेकमपि न सिद्ध्येदिति भावः । तथा च यथैकस्मादनेकव्यवहारो नोपपद्यते तथाऽनेकेभ्योऽप्येकव्यवहारो नोपपद्यत इत्यनुगतव्यवहारनिमित्तविषयाऽनुगतधर्मोऽभ्युपगन्तव्य एवेति भावः । मूलेविकल्पद्वये ज्ञानतो वेति द्वितीयविकल्पं निरस्यति—नापीति, ज्ञानतो बाधकमित्यस्य कोऽर्थः किं सामान्यविषयं ज्ञानस्वरूपमेव नास्ति, किंवाऽस्ति तथापि तस्य कारणाऽभावः अथवा सामान्यविषयं ज्ञानं नैकं, विरुद्धधर्माध्यासादित्येकत्वप्रतिक्षेपः, तत्र नाद्य इत्याह—तत्स्वरूपेति, द्वितीये त्वाह—

कारणप्रतिक्षेपस्य जन्मनैवापास्तत्वात्, एकत्वप्रतिक्षेपस्य च विरुद्धधर्माध्यासविरहप्रतिहतत्वात्, पारोक्ष्यापारोक्ष्यादेरसिद्धेः, संस्कारेण स्मृत्या चोपनीते विशेषणेऽपि विशिष्टज्ञानस्यापरोक्षताया व्युत्पादितत्वात्, तेनैव तदेवेदमिति विज्ञानं तदिदन्तास्पदयोरेकधर्मवत्त्वमवगाहमानं सामान्ये प्रमाणं न भवेत्, यदि च तदिदंग्राहिणी विज्ञाने मिथो विरुद्धे क्व तदा सामान्यसिद्धिवार्तेति वचनस्यानवकाशात्—

कारणेति, रूपादावुत्पत्तिमत्त्वस्य सहेतुकत्वव्याप्ततयैवोपलब्धेस्सामान्यविषयं ज्ञानं सहेतुकं उत्पत्तिमत्त्वात् रूपादिवदित्यनुमानेन सहेतुकत्वस्य सिद्धत्वेन रूपादिवत्सामान्यविषयकानुगतमतिकार्यस्य तत्कारणं विनाऽनुपपत्तेरिति भावः । नापि तृतीयः इत्याह—एकत्वेति, । एकत्वप्रतिक्षेपस्य विरुद्धधर्माध्यासव्याप्तत्वेन विरुद्धधर्माध्यासरूपव्यापकाभावे एकत्वप्रतिक्षेपरूपव्याप्याभावस्स्यात्

नचैवमत्र पारोक्ष्याऽपारोक्ष्यलक्षणविरुद्धधर्माध्यासात्मकव्यापकस्य सद्भावादित्याशङ्कायामाह—पारोक्ष्येति, असिद्धिमेव व्युत्पादयति—संस्कारेणेति, यदेवौषधं देवदत्तेन पीतं तदेवौषधमिदं सैव दीपकलिकेयमित्याकारं प्रत्यभिज्ञानं तत्ताविशिष्टेदन्त्वविशिष्टयोस्साजात्यैकधर्मावगाहकं सामान्ये प्रमाणं तदैव स्याद् यदि तत्प्रत्यभिज्ञानमेकं स्यात्, नचैवम्, तत्ताविशिष्टांशे परोक्षत्वेनेदन्ताविशिष्टांशे चाऽपरोक्षत्वेन विरुद्धधर्माध्यासात्तस्यैकत्वाऽसम्भवादिति परस्य वचनं, न युक्तं, तदिदन्ताविशिष्टयोरंशयोरपरोक्षस्यैव प्रत्यभिज्ञानस्य स्वीकारादित्याशयेनाह—तेनैवेति, अस्य च वचनस्यानवकाशादित्यनेनान्वयः। यदि च तदिदंग्राहिणी विज्ञाने मिथो विरुद्धे इति तदेवेदमिति विज्ञानं तदिदन्तास्पदयोरेकधर्मवत्त्वमवगाहमानं सामान्ये प्रमाणं न भवेत् क्व तदा सामान्यसिद्धिवार्त्तेत्येवमन्वयः कार्यः। तदेवेदमिति विज्ञानं तदिदन्तास्पदयोरेकधर्मवत्त्वमवगाहमानं सामान्ये प्रमाणं भवेत् यदि च तदिदङ्ग्राहिणी विज्ञाने मिथो भिन्ने क्व तदा सामान्यसिद्धिवार्त्तेति भवति ज्ञानैकत्वबाधात्सामान्यबाधः इत्येवमन्यत्र पाठः। भवतु तज्ज्ञानमेकं नतु प्रमाणमिति ज्ञानप्रामाण्यप्रतिक्षेपोऽस्तु वाधक इत्यत आह—

**विषयमप्रतिक्षिप्य च प्रामाण्यस्य प्रतिक्षेप्तुमशक्यत्वात्। न च प्रत्यक्षप्रामाण्यव्यापकेन्द्रियजत्वप्रतिक्षेपात् तत्प्रतिक्षेपः, इन्द्रियान्वयव्यतिरेकानुविधानबाधितत्वात्—**

विषयमिति, विषयमप्रतिक्षिप्य तत्प्रामाण्यस्येत्यन्यत्र पाठः। सामान्यज्ञाने इन्द्रियान्वयव्यतिरेकानुविधायित्वेन हेतुनेन्द्रियजत्वस्य सिद्ध्येन्द्रियजत्वप्रतिक्षेपहेतोस्स्वरूपासिद्धिः सिद्धेनेन्द्रियजत्वेन हेतुना च प्रत्यक्षप्रामाण्यस्य सिद्धेर्वाधश्चेत्याह—इन्द्रियान्वयेति, । सामान्यज्ञानस्य प्रत्यक्षत्वेऽपि विकल्परूपत्वाद् विकल्पं प्रति च व्यभिचारेण नेन्द्रियस्य कारणत्वम् यत्रापि च तदन्वय-

व्यतिरेकावनुभूयेते तत्रापि तज्जनकनिर्विकल्पक एव तावुपक्षीणाविति नासिद्ध इन्द्रियजत्वाभाव इत्याशयेन बौद्धः प्रत्यवतिष्ठते—

अथ विनापीन्द्रियव्यापारं शशविषाणादिविकल्पोदयाद्व्यभिचारेण विकल्पाकारणमिन्द्रियं तज्जनकनिर्विकल्पक एवोपक्षीणं वह्न्यनुमितिजनकधूमज्ञान इवेति तत्र तदन्वयव्यतिरेकानुविधानमन्यथासिद्धमिति चेत्, न, साक्षात्कारित्वावच्छिन्नं प्रत्येवेन्द्रियस्याव्यभिचारेण कारणत्वात्। यदि च यथाकथंचित् तत्सधर्मणो विकल्पस्येन्द्रियव्यभिचारात् साक्षात्कारिणोऽपि तस्येन्द्रियाजन्यत्वं, तदा निर्विकल्पकसधर्मणोऽस्फुटावभासस्य कामातुरकामिनीज्ञानस्येन्द्रियाजन्यत्वात् निर्विकल्पमपीन्द्रियजन्यं न स्यात्, तज्जन्यतानवच्छेदकास्फुटावभासत्वावच्छिन्नमिति हेतोः ॥

अथेति, तत्र विकल्पे, तदन्वयेति, इन्द्रियान्वयेत्यर्थः। प्रकारताविशेष्यताशून्यत्वे सति विषयतावत्त्वरूपनिर्विकल्पकत्वापेक्षया साक्षात्कारित्वस्य जातिरूपत्वेन लघुधर्मत्वात्तदवच्छिन्नं प्रत्येवान्वयव्यतिरेकानुविधानेन व्यभिचाराभावादिन्द्रियस्यैव कारणत्वम्, साक्षात्कारित्वं च सामान्यविषयकविकल्पेऽपि वर्त्तत इति तं प्रत्यपि तस्यैव कारणत्वं युक्तमितीन्द्रियजत्वाभावहेतुरसिद्ध एवेत्युत्तरयति नैयायिकः—नेत्यादिना, यच्चोक्तं विनापीन्द्रियव्यापारमित्यादि, तत्राह—यदि चेति, यथा कथञ्चित् तत्सधर्मणो विकल्पस्येति, विकल्पत्वरूपेण जात्यवगाहिप्रमात्मकसविकल्पप्रत्यक्षसजातीयस्य शशविषाणादिविकल्पस्येत्यर्थः। तस्य: जात्यवगाहिविकल्पस्य। अस्फुटावभासस्येति, निर्विकल्पककामातुरकामिनीज्ञानयोरस्फुटावभासत्वेन साधर्म्योपदर्शनार्थमिदम्, तज्जन्यतानवच्छेदकेति, अस्फुटावभासत्वस्येन्द्रियाजन्ये कामिनीज्ञाने सत्त्वेनातिप्रसक्ततयेन्द्रियजन्यतानवच्छेदकेत्यर्थः। जा-

त्यवगाहिसाक्षात्कारिसविकल्पप्रत्यक्षे इन्द्रियजन्यतानवच्छेदकस्य सविकल्पत्वस्य सत्त्ववन्निर्विकल्पेऽपीन्द्रियजन्यतानवच्छेदकस्यास्फुटावभासत्वस्य सत्त्वमविशिष्टमेवेति जात्यवगाहिसाक्षात्कारिसविकल्पप्रत्यक्षं इन्द्रियाजन्यं विकल्पत्वात् शशविषाणादिविकल्पवदित्यनुमानेनेन्द्रियाजन्यत्वे सिद्धे जात्यवगाहिसाक्षात्कारिसविकल्पप्रत्यक्षं अप्रमात्मकं इन्द्रियाजन्यत्वात् शशविषाणादिविकल्पवदित्यनेन सविकल्पेऽप्रामाण्यसिद्धिवत् निर्विकल्पज्ञानं इन्द्रियाजन्यमस्फुटावभासत्वात् कामिनीज्ञानवदित्यनेनेन्द्रियाजन्यत्वे सिद्धे निर्विकल्पज्ञानं न प्रमाणमिन्द्रियाजन्यत्वात् कामिनीज्ञानवदित्यनेन निर्विकल्पेऽप्यप्रामाण्यसिद्धिस्स्यादिति पर्यवसितोऽर्थः । नन्वियं कामिनीत्येवमाकारं कामातुरस्य ज्ञानमुपजायते तत्रेदमर्थे पुरोवर्त्तिनि सन्निकृष्टे विशेष्यरूपे संयोगादिलक्षणलौकिकसन्निकर्षस्य प्रकारीभूते कामिनीत्वांशे स्मृतिलक्षणाऽलौकिकसन्निकर्षस्य सद्भावात्तद्बलादेव तज्ज्ञानमिति तदिन्द्रियजमेवेति न तद्दृष्टान्तेन निर्विकल्पस्येन्द्रियाजन्यत्वं सिद्ध्यतीत्याशङ्कायामाह—

इदं च भावनावशात् स्मृत्युपनीतकामिन्याः पुरोवर्त्तित्वारोपस्तत्र च दर्शनत्वारोप इति मतेन, भावनापरिपाकवशाद् योगिनामात्मनीव कामातुरस्य कामिन्यां निर्विकल्पकमिति मतेनेदं यथाश्रुतमेव साधीय इत्यपि कश्चित् । यथाश्रुतमेव निर्विकल्पकत्वावच्छिन्नं प्रत्येव व्यभिचारोपदर्शनम्, कश्चिदित्यरुचिबीजं तु तन्निर्विकल्पोपगमे इन्द्रियजत्वावश्यकत्वमिति क्व व्यभिचारशङ्केत्यादि ।

इदञ्चेति, तत्र कामिनीविशेष्यकपुरोवर्त्तित्वप्रकारकमानसारोपे, मतान्तरमाह—भावनापरिपाकवशादिति, यथाश्रुतमेवेत्यस्यार्थमाह—निर्विकल्पकत्वावच्छिन्नं प्रत्येव व्यभिचारोपदर्शनमिति विषयान्तरेऽव्याक्षिप्तचित्तानां योगिनाम-

नल्पभवाभ्यस्तभावनामात्रोपजातस्यात्मज्ञानस्येव कामैकाभिलाषुकस्य कामिनीज्ञानस्य निर्विकल्पात्मकस्य विषयान्तरानभिमुखया कामैकविषययोत्कृष्टभावनयेन्द्रियव्यापाराभावेऽप्युत्पत्तेरिति भावः ।

**यदा च भावनावशात् पुरोवर्त्तिलतादावेव कामिनीत्वारोप इति मतं, तदापि निर्विकल्पकत्वापेक्षया लाघवेन साक्षात्कारित्वमेवेन्द्रियजन्यतावच्छेदकम्, न च तथापि तव लौकिकविषयतास्थाने मया प्रकारत्वानिरूपितविषयताया एव कार्यतावच्छेदकसम्बन्धत्वोपगमादर्थान्निर्विकल्पकान्यस्य प्रामाण्यप्रतिक्षेप इति वाच्यम्, लौकिकविषयतापेक्षया प्रकारत्वानिरूपितविषयताया अपि गुरुत्वात्, संसर्गानवच्छिन्नविषयतादिना विनिगमकाभावाच्च ।**

कामिनीत्वारोप इति, ननु तत्र दर्शनत्वारोपः इति शेषः, तथाच कामिनीज्ञानं न स्वतो निर्विकल्पात्मकं न वा दर्शनत्वेनारोपितं सद्दर्शनात्मकं येन तत्रेन्द्रियजन्यत्वव्यभिचारोपदर्शनं युक्तं स्यादिति निर्विकल्पत्वावच्छिन्नं प्रत्येवेन्द्रियस्य कारणत्वमिति यदि ब्रूयात्तदाप्याह-तदापीति, निर्विकल्पत्वं हि प्रकारताशून्यज्ञानत्वं वा विशेष्यताशून्यज्ञानत्वं वा संसर्गताशून्यज्ञानत्वं वा त्रितयमपि सखण्डतयाऽखण्डस्वरूपायास्साक्षात्कारित्वजातेर्गुरुभूतमेवेति लघुधर्मेण कारणत्वसम्भवे गुरुधर्मेणाऽन्यथासिद्धिरिति साक्षात्कारिणि सामान्यज्ञाने प्रत्यक्षप्रामाण्यव्यापकमिन्द्रियजत्वं स्यादेवेति न तत्प्रतिक्षेपात् तत्प्रतिक्षेपो युज्यत इति भावः । ननु साक्षात्करोमीत्यनुभवसिद्धाया लौकिकविषयताया एव संयोगादिसम्बन्धावच्छिन्नेन्द्रियनिष्ठकारणतानिरूपितप्रत्यक्षनिष्ठकार्यतावच्छेदकसम्बन्धत्वं भवताऽभ्युपगतं मया तु लौकिकविषयतास्थाने प्रकारत्वानिरूपितविषयताया एव तत्त्वं वाच्यं, सा

च निरूपकत्वसम्बन्धेन निर्विकल्प एव वर्त्तत इति तत्रैवेन्द्रियजत्वम्, अत एव च तत्रैव प्रत्यक्षप्रामाण्यमिति पराशङ्कां निराकरोति-न चेति, वाच्यमित्यग्रेणान्वयः। लौकिकविषयतायां भ्रमादिव्यावृत्तये विशेषणान्तरप्रक्षेपस्यावश्यकतया गौरवप्रतिसन्धानेत्वाह-संसर्गेति, तत्रादिना विशेष्यत्वाऽनिरूपितविषयतायाः परिग्रहः। ईश्वराभ्युपगन्तृपक्षे ईश्वरज्ञानस्येन्द्रियजत्वार्थजत्वयोरभावेऽपि प्रत्यक्षप्रामाण्यमस्तीति न प्रत्यक्षप्रामाण्यस्य व्यापके इन्द्रियजत्वार्थजत्वे अतस्तदभावेऽपि प्रकृते सामान्यविकल्पे प्रामाण्यं स्यादेवेत्याशयेनाह—

**नित्येश्वरप्रामाण्याभ्युपगमे तु क्वार्थसमुत्थत्वादेः प्रामाण्यव्यापकत्वसम्भावनेत्यपि मन्तव्यम्। भवेदेवं यदि सविकल्पकस्य साक्षात्कारित्वं स्वाभाविकं भवेत्, न त्वेतदस्ति, निर्विकल्पकसाक्षात्त्वस्य तत्रारोपादिति चेत्, न, दर्शनव्यापारस्यौपाधिकत्वकल्पनानवकाशात्, अवकाशे वा विपर्ययकल्पनाया अपि प्रसङ्गात्, दर्शनं निर्विकल्पकं, व्यापारो धर्मः, उपाधीयत इत्युपाधिरारोप्यः उपाधिरेवौपाधिकः, विपर्ययो विकल्पधर्मस्य साक्षात्त्वस्य निर्विकल्पके समारोपः॥**

नित्येश्वरेति, नित्येश्वरज्ञानेत्यर्थः। दर्शनव्यापारस्येति, सविकल्पेऽपीन्द्रियान्वयव्यतिरेकाऽनुविधानात्तत्रापि दर्शनधर्मस्य साक्षात्कारित्वस्य बाधकाभावेन पारमार्थिकत्वव्यवस्थितावारोपानवकाशादित्यर्थः। दर्शनव्यापारादितत्तच्छब्दार्थविवेचनायाह-दर्शनमित्यादि, अथ सविकल्पजनकं नेन्द्रियं, नवा स्वलक्षणगोचरो निर्विकल्पकप्रत्ययः, किन्त्वहमहमित्येवमाकारो ज्ञानस्यैव स्वस्वरूपावगाही अत एव स्वसंवेदनरूपः संततिरूपतयाऽनुगतआलयविज्ञानसंज्ञकस्समनन्तरप्रत्ययरूपो (अव्यवहितपूर्ववर्त्ती)

निर्विकल्पकः, सच साक्षात्कारीति तद्द्वारा तज्जन्यविकल्पोऽपि साक्षात्कारीति व्यपदिश्यते,न त्विन्द्रियजन्यत्वात्,तथा च प्रत्यक्षप्रामाण्यव्यापकेन्द्रियजत्वाभावादप्रमाणं विकल्प इति न ततस्सामान्यसिद्धिरिति पुनर्बौद्धः प्रत्यवतिष्ठते ।

अथ स निर्विकल्पकप्रत्ययः समनन्तरप्रत्यय एव विकल्पजनको नेन्द्रियम्, समनन्तरप्रत्ययोऽहमाकारः परेषामात्मस्थानीय आलयविज्ञानादिशब्दवाच्यः, स च साक्षात्कारीति कारणसारूप्याद्विकल्पोऽपि साक्षात्कारीति मतम्, तदपमतम्, विपरीतस्यासाक्षात्कारिविकल्पस्यानुत्पत्तिप्रसङ्गात्, साक्षात्कारिसविकल्पक एवालयविज्ञानहेतुतायास्त्वयोपगमात् । यदीन्द्रियमेव विकल्पजनकं तदा प्रथमत एव कथं तदिदमित्यादिविकल्पानुत्पत्तिरिति चेत्, पूर्वाऽनुभूतव्यक्तिस्मरणादिसहकारिवैधुर्यादित्येषा दिग् ।

अथेत्यादिना, परेषाम् बौद्धानाम्, असाक्षात्कारिविकल्पस्येति, अनुमित्यादिरूपस्य परोक्षविकल्पमात्रस्येत्यर्थः। तत्र हेतुमाह–साक्षात्कारीति, नन्विन्द्रियजन्यत्वादर्थसमुत्थत्वाच्च सविकल्पप्रत्यक्षस्य भवतु प्रामाण्यम्, अनुमित्यादिविकल्पानां तु तद्वैपरीत्यान्न तथात्वमिति चेत्, मैवम्, इन्द्रियजन्यत्वमर्थसमुत्थत्वं वा जन्यप्रत्यक्षप्रामाण्यप्रयोजकं, न तु सामान्यतः प्रामाण्यप्रयोजकं, तत्प्रयोजकं त्वबाधितविषयकत्वमेव, तच्चार्थाऽसमुत्थानामनिन्द्रियजानामनुमित्यादिविकल्पानां प्रमात्मकपरामर्शादिकारणजातानां विद्यत एवेति तेषामपि प्रामाण्यमेवेति ततोऽपि सामान्यं सिद्ध्यत्येवेत्याशयेनोक्तस्य दिक्शब्दस्यार्थमाह–

साधितं चार्थासमुत्थानामनिन्द्रियजानामनुमित्यादिविकल्पानां विषयाबाधेन प्रामाण्यम्, अप्रामाण्ये च नामजात्यादियोजनावगाहित्वादिकमप्रयोजकमित्यादिर्दिगर्थः । अस्तु तर्हि प्रयोजनानुरोधादपोहस्वीकारः

। सर्वधर्मावाच्यत्वप्रसिद्धिर्हि परमं प्रयोजनं, कल्पनाजालविधूननेन गम्भीरोदारसमाधिसमधिगमात्, ।

साधितश्चेति विषयाऽबाधेन प्रामाण्यमिति, अत्रानुमित्यादिविकल्पाः प्रमाणभूताः अबाधितार्थविषयकत्वात् प्रत्यक्षविकल्पवदित्यनुमानं पर्यवस्यति, ननूक्तानुमानं अनुमित्यादिविकल्पाः अप्रमात्मकाः नामजात्यादियोजनावगाहित्वादिति सत्प्रतिपक्षानुमानेन बाधितमिति न साध्यसाधकमिति चेत्, मैवम्, विपक्षे बाधकतर्काभावेन प्रत्यनुमानस्य तस्याप्रयोजकत्वादिति भावः । अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति पक्षमेतावता प्रबन्धेन निराकृत्येदानीं प्रयोजनानुरोधादपोहस्वीकार इति पक्षस्य निराकरणायोपक्रमते-अस्तु तर्हीत्यादिना, किं प्रयोजनमित्यपेक्षायामपोहस्वीकारस्य प्रयोजनमाह-सर्वधर्मावाच्यत्वप्रसिद्धिरिति, अपोहस्यैव वाच्यत्वेन सर्वेषां वस्तुधर्माणामवाच्यत्वमिति ज्ञानमित्यर्थः । सर्वधर्माऽवाच्यत्वप्रसिद्धेः कथं परमप्रयोजनत्वम्, अन्येच्छानधीनेच्छाविषयस्यैव तत्त्वात्, अतस्तस्य फलद्वारकमेव तत्त्वमित्यावेदनायाह-कल्पनाजालेति, अस्य प्रथमं दीधितिकारमतेन व्याख्यानमाह—

गम्भीरो मिथ्याज्ञानवासनासमुन्मूलनसमर्थः, उदारः फलाव्यभिचारी, शब्दा हि हिताहितसाधनानि तत्तद्धर्मविशिष्टानि बोधयन्तस्तत्रार्थिनः प्रवर्त्तयन्ति निवर्त्तयन्ति च, न चैतत्प्रतिपाद्यानि वस्तूनि भवितुमर्हन्ति, सर्वधर्माणामवस्तुत्वाद्वस्त्ववस्तुनोः सम्बन्धनिषेधादवस्तुनैव चान्यापोहेन व्यवहारनिर्वाहात्, निर्णीते चेत्थं बाह्यानामवस्तुत्वे तदर्थनाविरहेण ततो विरतव्यापारं मनो नैरात्म्यभावनानिरतं समाहितं भवतीत्युक्तसमाधिफलकसर्वधर्मावाच्यत्वसिद्धिरपोहवाच्यत्वकल्पनायाः फलमिति फलितमाह दीधिति-

कारः। नारायणाचार्यस्तु ज्ञानज्ञेयात्मकवस्तुविषयनिरन्तरनिर्विकल्पकपारम्पर्यं हि समाधिः, वस्तुनश्च शब्दवाच्यत्वे समाधिस्थस्य वस्तुस्फुरणे सति सम्बन्धिशब्दस्मृतिस्स्यात्, सा च विकल्पमुत्पादयेदिति नैरन्तर्यविच्छेदात् समाधिभ्रंशः स्यात्, अवाच्यत्वे तु विकल्पजालविधूननात् स्यादेव समाधेरङ्गसाकल्यवत्त्वं गम्भीरत्वमुदारत्वं च सर्वजनसमीहितापवर्गप्रदत्वमिति तादृशसमाधिफलतया सर्वधर्मावाच्यत्वसिद्धिरपोहवाच्यत्वकल्पनायाः प्रयोजनमित्याह—

गम्भीर इत्यादिना, तत्र हिताहितसाधनेषु, एतत्प्रतिपाद्यानि शब्दप्रतिपाद्यानि। निषेधे हेतुमाह—सर्वधर्माणामिति, व्यवहारेति, घटः पटः इत्यादिव्यवहारेत्यर्थः। बाह्यानामिति, शब्दवाच्यानां जात्यादिधर्मरूपाणां बाह्यानां, ननु स्वलक्षणरूपधर्मिरूपाणां, तेषां वस्तुत्वेनाभ्युपगमादिति भावः। सम्बन्धिशब्दस्मृतिस्स्यादिति, शब्दार्थयोर्वाच्यवाचकभावसम्बन्धे शब्दवाच्यस्य वस्तुनो ज्ञाने तेनैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायादपरसम्बन्धिनश्शब्दस्य स्मृतिस्स्यादित्यर्थः। सा शब्दस्मृतिः। विकल्पमिति अस्य शब्दस्यायमर्थो वाच्यः अस्य चार्थस्यायं शब्दो वाच्य इत्याद्याकारं ज्ञानम् तत्तदर्थविषयकशाब्दबोधात्मकज्ञानं चेत्यर्थः, नैरंतर्येति, अविच्छिन्नसंलग्ननिर्विकल्पज्ञानसन्तानेत्यर्थः, अवाच्यत्वे वस्तुनः शब्दावाच्यत्वे, अपोहवाच्यत्वकल्पनाया विसभागपरिक्षयः परमं प्रयोजनम् तस्य सर्वथा सविकल्पसन्ततिपरिक्षयरूपस्य तन्मते निरुपप्लवचित्तसन्ततिरूपत्वेन मुक्तिरूपत्वात् समाधिस्तु तत्साधनत्वाद् गौणं प्रयोजनमिति ग्रन्थकारस्स्वमतेन तदर्थमाह—

अपोहवाच्यत्वे वस्तुमात्रे शब्दयोजनाया अनिष्टत्वप्रतिसन्धानात्, तद्रहितात्मस्वलक्षणनिर्विकल्पधा-

रायामेव मनोविश्रान्तेर्भवति विसभागपरिक्षयः समाधिफलं, तथा च तदाश्रित्य सर्वयोगिजनाविप्रतिपत्त्योक्तम् श्रीहरिभद्राचार्यैः, 'प्रशान्तवाहितासंज्ञं विसभागपरिक्षयः ॥ शिववर्त्म ध्रुवाध्वेति योगिभिर्गीयते ह्यदः' ॥ १ ॥ इति । ततः परम्परया विसभागपरिक्षयाधानमपोहवाच्यत्वकल्पनायास्तन्मते प्रयोजनमिति सर्वशास्त्रविदः । अत्रोदयनः—निष्प्रमाणकमिदं कः श्रद्दध्यात्,

अपोहवाच्यत्व इति, तद्रहितेति, शब्दयोजनारहितेत्यर्थः । उक्तमर्थं संवादयति–तथा चेति, तदाश्रित्य विसभागपरिक्षयरूपसमाधिफलमाश्रित्य, उक्तमिति, योगदृष्टिसमुच्चये उक्तमित्यर्थः । प्रशान्तेत्यादि, इदं पद्यं ह्यसङ्गानुष्ठानस्य दर्शनभेदेन नामभेदख्यापनार्थम्, तथा च तद्व्याख्यानम्, प्रशान्तवाहितासंज्ञं साङ्ख्यानाम्, विसभागपरिक्षयो बौद्धानाम्, शिववर्त्म शैवानाम्, ध्रुवाध्वा महाव्रतिकानाम्, इत्येवं योगिभिर्गीयते ह्यदोऽसङ्गानुष्ठानमिति, प्रशान्तवाहितेति, निरोधजसंस्कारजा वृत्तिमयस्य चित्तस्य परिहृतविक्षेपतया सदृशप्रवाहपरिणामितेत्यर्थः । तन्मते बौद्धमते, अत्रोदयन इति, प्राहेति शेषः, निष्प्रमाणिकमिदमित्यत्रेदम्पदग्राह्यं यत्तदाह–

इदं वस्तूनां सर्वशब्दावाच्यत्वस्य समाधिहेतुत्वं, प्रमाणं चात्र न प्रत्यक्षानुमाने, आगमश्च न किञ्चिद्वक्तीति त्वयैव ग्राहितः शिष्यः । न चैवं शिष्यो ग्राहयितुमपि शक्यते, स्ववाग्विरोधस्योद्भटत्वात्, तथाहि– 'शब्दस्य काचिदपि वस्तुनि मानसिद्धा बाधाविधिव्यवहृतिः किमिहास्ति नो वा ॥ अस्त्येव चेत् कथमियन्ति न दूषणानि नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः'॥१॥ इति तवैव विषयसञ्चारमात्रेण श्लोकः । अय-

मर्थः । अक्षणिकेऽवस्तुन्यप्रामाणिके सत्त्वादेर्हेतोर्व्यतिरेकः प्रामाणिको न लभ्यते, काल्पनिकाङ्गसाकल्ये तु काल्पनिकाङ्गवैकल्यमपि स्यात्, तथाऽवस्तुनि निषेधव्यवहारवद्विधिव्यवहारोऽपि स्यादिति बौद्धं प्रति सिद्धान्तिनोक्ते बौद्धेन स्ववाग्विरोधोऽनेन श्लोकेन दर्शितो धर्मस्य कस्यचिदवस्तुनीत्यादिना, अस्य चायमर्थः हेत्वादेर्धर्मस्यावस्तुनि निषेधव्यवहारस्य विधिव्यवहारस्येवास्वीकारे त्वया मां प्रति यावन्ति दूषणान्युक्तानि तावन्ति भवतः कथं न स्युः, अवस्तुनि तौ व्यवहारौ न स्तः इति स्वीकारे स्ववचनविरोधः, अस्यैव निषेधव्यवहारस्य स्वीकारादिति, एष एव च श्लोको धर्मस्थाने शब्दपदमवस्तुपदस्थाने च वस्तुपदं प्रक्षिप्य पठनीय इति ॥

इदमिति, आगमश्च न किञ्चिद्वक्तीति, विकल्पयोनयश्शब्दाश्शब्दयोनयो विकल्पा इति बौद्धसिद्धान्तात्तत्तच्छब्दास्तत्तदर्थाकारविकल्पोत्पादनप्रत्यला अपि शब्दार्थयोर्वाच्यवाचकभावसम्बन्धाभावान्न तत्तदर्थान् वक्तुं शक्ताः, आगमश्च शब्दसमूहरूप एवेति सोऽपि न किञ्चित्तत्त्वं वक्तीत्यर्थः । आगमश्च न किञ्चिद्वक्तीत्येवं शिष्यशिक्षापि त्वया कर्तुं न शक्येत्यत्र हेतुमाह—स्ववाग्विरोधस्येति, बाधाविधिव्यवहृतिरिति, निषेधविधिव्यवहार इत्यर्थः । सत्त्वहेतोर्विपक्षे सत्त्वाभावः प्रामाणिको मास्तु नच तथापि काचित् नः क्षतिः हेत्वङ्गस्य काल्पनिकस्य तस्य सत्त्वादित्याशङ्कायामाह—काल्पनिकाङ्गसाकल्ये त्विति, काल्पनिकविपक्षासत्त्वसाकल्ये त्वित्यर्थः। तद्वैकल्यमपि विपक्षसत्त्वरूपं काल्पनिकं स्यादित्याह-काल्पनिकाङ्गेति, तथा च क्षणिकत्वानुमानमपि न स्यादिति भावः । अवस्तुनि शशशृङ्गादौ, सिद्धान्तिना न्यायसिद्धान्तिना, बौद्धेनेति नैयायिकं प्रतीति शेषः । धर्मस्ये-

ति "धर्मस्य कस्यचिदवस्तुनि मानसिद्धा, बाधाविधिव्यवहृतिः किमिहास्ति नो वा। अस्त्येव चेत्कथमियन्ति न दूषणानि, नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥ १ ॥ इति" संपूर्णं पद्यम्, क्वाप्यस्ति चेदिति स्ववचनप्रतिषेधेति च पाठान्तरम्, अस्वीकार इति नैयायिकेनेति शेषः, त्वया नैयायिकेन, मां प्रति बौद्धं प्रति, भवतः नैयायिकस्य, दूषणान्येव सङ्गमयति—अवस्तुनीत्यादिना, तौ व्यवहारौ विधिनिषेधव्यवहारौ, स्वीकारे इति नैयायिकेनेति शेषः। स्ववचनविरोध इति, नैयायिकस्येति ज्ञेयम्, तत्र हेतुमाह—अस्यैवेति। पठनीय इति नैयायिकेनेति ज्ञेयम्,

तत्र च पक्षे इयन्ति दूषणानि स्वलक्षणानामननुगतत्वात् कथं तत्र सङ्केतग्रहः, अनुगतं धर्मं पुरस्कृत्य तद्ग्रहे तस्य वास्तवत्वे न कथं भवन्मतव्याघातः, अलीकत्वे न कथं वस्त्वलीकयोः सम्बन्धविरोधः, स्वलक्षणस्य विषयत्वे कथं कल्पनापोढत्वमित्यादीनि,

तत्र च पक्षे इति, बौद्धमत इत्यर्थः। तद्ग्रहे सङ्केतग्रहे, तस्य अनुगतधर्मस्य, भवन्मतव्याघात इति, भवताऽनुगतधर्मस्य वास्तवत्वानभ्युपगमादिति भावः। अलीकत्वे इति, अनुगतधर्मस्याऽवास्तवत्व इत्यर्थः। स्वलक्षणस्य विषयत्व इति, स्वलक्षणस्य सङ्केतग्रहविषयत्वे तज्जन्यशाब्दबोधविषयत्वमपि स्यादिति तयोः कल्पनारूपत्वात्तद्विषयत्वान्न कथञ्चिदपि कल्पनापोढत्वं स्यादित्यर्थः। अलीके विधिनिषेधव्यवहारौ स्तो नवेत्यत्र नैयायिकानां यथा मूकता शरणं न तथार्थस्य शब्दबाच्यत्वावाच्यत्वविचारे बौद्धस्य मूकता शरणं, यतो विधिनिषेधव्यवहाराविषयेऽलीके यदेव किञ्चिदुच्येत तद्विरोधान्न सम्भवति, नवा नैयायिकानां तदुपपादने किञ्चित्प्रयोजनमपीति मूकता भवति शरणं, बौद्धस्य तु प्रयोजनानुरोधात्सर्वधर्माऽवाच्यत्वस्वीकारः, अतो मूकता न

युक्तेत्याशयेनाह——

न चास्माकमिव तवाप्यत्र मूकतैव शरणम्, सर्वथा वचनविरोधे ह्युदासीनस्य सा शोभेत, न चात्र विधौ विरोधः कश्चित्, न च त्वमुदासीनः, प्रयोजनेन प्रवृत्तत्वात्, वस्तु न शब्दप्रतिपाद्यमित्यवश्यमभिधानीयम् , तथा च यद्यनेन शब्देन वस्तु प्रतिपाद्यते कुतः प्रयोजनसिद्धिः, अथ न प्रतिपाद्यते स्ववचनविरोधो दुर्वार इति । तस्मादलमङ्गुलिदीपिकया ध्वान्तध्वंसविधिमनुष्ठायेति ॥

न चास्माकमिवेति,मूकतायां सर्वथा वचनविरोधःऔदासीन्यं च कारणं, न च सर्वथा वचनविरोध इत्युपपादयति—न-चात्रेति, विध्यात्मकमनुगतं पुरस्कृत्य तदवच्छिन्नस्सङ्केतग्रहविषय इत्यभ्युपगमे विरोधाभाव एवेति भावः । न चौदासीन्यमपि त-वेत्याह-नचेति,वस्तु न शब्दप्रतिपाद्यमित्यनेन शब्देन वस्तु नशब्दप्रतिपाद्यमित्याकारोऽर्थः प्रतिपाद्यते तर्हि तस्यैवार्थस्योक्तशब्द-वाच्यत्वान्न सर्वधर्मावाच्यत्वप्रसिद्ध्यात्मकप्रयोजनसिद्धिः, अथ न प्रतिपाद्यते इति चेत्तर्हि स्ववचनविरोधः, न प्रतिपाद्यते इत्युक्त्या-पि वस्तु न शब्दप्रतिपाद्यमित्यर्थस्य प्रतिपादितत्वात्, अन्यथा तस्यासिद्ध्यापत्त्या सर्वधर्माऽवाच्यत्वप्रसिद्धिरूपप्रयोजनसिद्धिर्न स्या-दित्याह-तथाचेति, सहृदयहृदयवेदिनोऽस्मद्गुरुचरणास्तु अनेन शब्देन, वस्तु न शब्दप्रतिपाद्यमिति शब्देन,वस्तु प्रतिपाद्यत इति निषेधानुयोगितयेति ज्ञेयम्, प्रयोजनसिद्धिः सर्वधर्मावाच्यत्वप्रसिद्धितिद्धिः, न प्रतिपाद्यते इति वस्त्वित्यनुवर्त्तते, स्व-वचनविरोधः इति उक्तवचनेनैव निषेध्यतया प्रतिपादनेऽपि न प्रतिपाद्यत इत्यभिधाने विरोधः सुस्पष्ट एवेत्याहुः । सौत्रान्ति-कमतखण्डनमुपसंहरन्नाह—

तस्मात् शब्दैः किं वाच्यम् इत्यनुयोगे किं प्रतिभासादथाध्यवसायादथ तत्त्वत इति विकल्प्य, प्रतिभासो ज्ञानजननम्, तथा च शब्दजन्यज्ञानविषयः क इति प्रश्नार्थकरणेऽतद्व्यावृत्तो विकल्पनिष्ठ आकार इत्युत्तरे समयविपर्यासः, बाह्यविषयिण्याः शक्तेर्विकल्पाकारे सञ्चारः । अध्यवसायः प्रवृत्तिजननम्, शब्दजन्यप्रवृत्तिविषयः क इति प्रश्नार्थकरणेऽअतद्व्यावृत्तं स्वलक्षणमित्युत्तरे प्रवृत्तिविपर्यासः, नियतविषयकप्रवृत्त्यनुपपत्तेः, नियामकाभावात्, भेदाग्रहादेर्नियामकस्य निरस्तत्वात् ॥

तस्मादिति, अनुयोगे नैयायिकस्य बौद्धं प्रति प्रश्ने, विकल्प्येति, अस्य इत्युत्तरे इत्यनेनान्वयः, समयविपर्यास इति, अस्यैव विवरणमाह-बाह्येति, अतद्व्यावृत्तमिति अतद्व्यावृत्त्या सहैकत्वेनाध्यवसितमित्यर्थः । प्रवृत्तिविपर्यास इत्यस्यैव विवरणमाह-नियतेति,

तत्त्वतो वस्तुतः किं वस्तु शब्दवाच्यमिति प्रश्नार्थकरणे न किञ्चिदित्युत्तरे स्ववाग्विरोधः, किमपि वस्तु न शब्दवाच्यमिति तदर्थस्य वस्तुघटितमूर्त्तिकत्वात् इति, अवचने त्वनुत्तरादप्रतिभेति सिद्धमेतत् न क्षणिकत्वमात्मनि बाधकमिति ॥ २२ ॥

किं वस्तु शब्दवाच्यमिति, शब्दवाच्यं किं वस्त्विति योगः । तेन वस्तुपदस्य शब्दपदेन सह कर्मधारयभ्रमो निरस्तः ।

तदर्थस्येति, न किञ्चिदित्युत्तरार्थस्येत्यर्थः । शब्दवाच्यं किं वस्त्विति प्रश्नार्थकरणे तस्योत्तरार्हत्वेऽप्युत्तराऽप्रतिपत्तौ बौद्धानामप्रतिभया निग्रहस्स्यादित्याह-अवचने त्विति,

प्रगुणकमलसिन्धुर्ज्ञैः सदाराधनीया,
शुभविचिचपिताद्या साधुहंसावनेऽम्बा ।
सुरमणिरिव सर्वाभीष्टदानेऽतिदक्षा,
कृतसुकृततततीनां ध्वान्तवर्गे विपक्षा ॥ १ ॥

रविरपि खमितो यत्तेजसाऽवाप्तलज्जोऽ-
कलचरणगतेरुत्पादने कर्मठेन ।
शिशुसमयत उच्चोल्लासदा मे सदामे,
जिनगदितसुधर्मे सच्चिदानन्दरम्ये ॥ २ ॥

जयति मधुपुरे या श्रीमहावीरमूर्त्ति-
स्तदनुपमप्रसादात्तत्पदासेविनश्च ।

गुरुगुणमणिभाजः पुण्यपण्यापणस्य,
निरुपमकृपया च श्रीगुरोर्नेमिसूरेः ॥ ३ ॥
रसवसुनिधिचन्द्रालक्षिते वैक्रमेऽब्दे,
नभसि च रचितोऽयं सूरिणा दर्शनेन ।
व्यवहृतिवरदृष्ट्या बौद्धदृष्टेर्निरासो,
मधुपुरि परिपूर्णोऽथोच्यते जैनतत्त्वम् ॥४॥ चतुर्भिः कलापकम् ।

सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिविरचिते न्याय-वाचस्पतिशास्त्रविशारदतपोगच्छाचार्य श्रीविजयदर्शनसूरिसंदृब्धमहावीरस्तवकल्पल-तिकाभिख्यविवृतिसमलङ्कृते-"न्यायखण्डखाद्यापरनामके महावीरस्तवप्रकरणे"

॥ सौत्रान्तिकमतखण्डनात्मकः प्रथमो विभागः ॥

॥ इति श्री स्वपरसमयपारावारीणविश्वातिशायिसर्वज्ञशासनसमुन्नतिसमुन्नतम-
तिप्रकर्षाखण्डमौढप्रभावश्रीविद्यापीठादिमस्थानपञ्चकसमाराधकश्रीतपोग-
च्छनभोनभोमणिसंविग्नशाखीयभट्टारकाचार्यश्रीविजयनेमिसूरीश्व-
रक्रमकजद्विरेफायमाणतत्पट्टालङ्काराशन्यायवाचस्पतिशास्त्रविशार-
दोपनामतपोगच्छाचार्यश्रीविजयदर्शनसूरिविरचितायां
श्रीमहावीरस्तवकल्पलतिकाविवृतौ ॥

॥ सौत्रान्तिकमतनिरासात्मकः प्रथमो विभागस्समाप्तः ॥

॥ अथ श्रीकल्पलतिकाविवृत्यलङ्कृते न्यायखण्डखाद्यापरनाम-

महावीरस्तवप्रकरणे

# ॥ द्वितीयो विभागः ॥

॥ मङ्गलाचरणम् ॥



स्याद्वादतत्त्वममलामितमानसिद्धं, सम्पूर्णवस्तुगमशेषनयाऽविगानम् ।
पर्षत्त्रयोक्तिपरिणामिगिरोपदिष्टं, येन स्तुवे तमहमन्तिमतीर्थनाथम् ॥ १ ॥



परमतिविषयेऽप्रामाण्यज्ञापनपुरस्सरमेव स्वमतिविषये प्रामाण्यनिष्टङ्कनं प्रेक्षावतामादरणीयं भवतीत्यभिमन्यमानो ग्रन्थकारः परीक्षात्मकस्यास्याऽऽदरणीयत्वख्यापनार्थं परीक्षापूर्वरूपसिद्धिमुपसंहरन्नुत्तररूपं प्रतिजानीते—

नयादिविजयाभिधोत्तमगुरुक्रमोपासनो—पलब्धमतिवैभवग्रथितयौगयुक्तिव्रजैः ॥
यशोविजयवाचकः क्षणिकपक्षभङ्गं व्यधा—दनेन विधिनाधुना स्वसमयस्थितिं भाषते ॥१॥

टीकायां—नयादीत्यादिपद्येन, अत्र व्यधादिति क्रिया, अस्याश्च कर्त्ता क इत्याशङ्कायामाह—यशोविजयवाचक इति, किं तत्र कर्मेत्याशङ्कायामाह—क्षणिकपक्षभङ्गमिति, कैः कृत्वेति करणाकाङ्क्षायां नयादिविजयेत्यादि, परीक्षायाः पूर्वरूपमुपसंहृत्योत्तररूपप्रतिज्ञामाह—अनेनेत्यादि, अत्र भाषते इति क्रिया, स्वसमयस्थितिमिति च कर्म, अनेन विधिनेति च करणमित्यन्वयार्थः । विस्तरार्थस्तु न्यायप्रभातोऽवसेयः, एवं सर्वत्र ज्ञेयम्, द्रव्यार्थतो घटपटादिषु सर्वसिद्धमित्यादिद्वात्रिंशतितमश्लोकेन प्रत्यभिज्ञानस्य पूर्वं नैयायिकमतेनाध्यक्षत्वमुपवर्ण्य तेन प्रमाणेन स्थैर्यं साधितम्, अधुनाऽस्यास्पष्टावभासत्वात्परोक्षत्वं, तदुक्तं " अस्पष्टं परोक्षमिति", परोक्षस्यापि च " स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चप्रकारम् " इत्युक्तेः पञ्चविधत्वेऽपि तन्मध्यात्स्मरणतर्कानुमानागमभेदानां तद्धेतुत्वभावादत्रानवकाशादनुभवस्मृतिहेतुकत्वात्तत्सङ्कलनात्मकप्रत्यभिज्ञानात्मकम्, तदुक्तं "अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम्, यथा तज्जातीय एवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादीति", तदालम्बनं बौद्धैः परिकल्पितमगोपोहगवाकारादिकं न भवति, किन्तु तद्भिन्नं स्वत एव नतु नैयायिकादिपरिकल्पितातिरिक्तगोत्वादियोगादनुगतव्यावृत्तात्मकं बाह्यमेवेति तदेव तत्र प्रमाणमित्याविष्करणार्थमाह—

त्वच्छासने स्फुरति यत् स्वरसादलीका–दाकारतश्च परतोऽनुगतं तु बाह्यम् ॥
आलम्बनं भवति सङ्कलनात्मकस्य, तत्तस्य न त्वतिविभिन्नपदार्थयोगात् ॥ २३ ॥

यद्बाह्यं गवादिकमलीकादाकारतो ज्ञानाकाराच्च परतस्तद्भिन्नमित्यर्थः, स्वरसात् स्वमहिम्नैव, अनुगतं तु तुर्विशिनष्टि, किं, सामर्थ्यलभ्यं व्यावृत्तं, स्वत एवानुगतव्यावृत्तमित्यर्थः, स्फुरति प्रकाशते, तत् त्वच्छासने, तस्य परदृष्ट्याध्यक्षत्वेनोक्तस्य सोयमित्याकारज्ञानस्य, वस्तुतः सङ्कलनात्मकस्य आलम्बनं भवति, न-त्वतिविभिन्नो यो गोत्वादिसामान्यपदार्थस्तद्योगात्, तस्य शशशृङ्गादिवदलीकत्वात् । तदुक्तम् "स्वतोऽनुवृत्तिर्व्यतिवृत्तिभाज" –इत्यादि ॥ २३ ॥

त्वच्छासने इति, अयञ्च श्लोको ग्रन्थकृतैव विवृत इति नेह विव्रीयते, अलीकात् अगोपोहादितः, परत इत्यत्र सार्वविभक्तिकः प्रथमार्थे तसिल् इति विवरणेन स्पष्टयति–परतस्तद्भिन्नमित्यर्थ इति, सामर्थ्यलभ्यमिति तुशब्दोपादानबलल-भ्यमित्यर्थः । तदिति अलीकाज्ज्ञानाकाराच्च भिन्नं यदनुगतव्यावृत्तं तदित्यर्थः, सोऽयमिति सङ्कलनात्मके ज्ञाने सर्वथा विभिन्न-गोत्वादिजातिविशिष्टं गवादिकं कथमालम्बनं न भवतीत्यत आह–तस्येति, तथा चाऽत्यन्तविभिन्नाया जातेः प्रमाणागोचरत्वेन तद्विशिष्टस्यापि तथात्वेनालीकत्वात्तदवगाहिनो ज्ञानस्यासत्ख्यातित्वं स्यादिति भावः । इत्यादीति, अत्रादिपदात् "भावा न भावा-न्तरनेयरूपाः । परात्मतत्त्वादतथात्मतत्त्वाद् द्वयं वदन्तोऽकुशलास्स्खलन्ति" इत्यग्रेतनचरणत्रयस्य परिग्रहः ॥ २३ ॥ चतुर्विंशतितम-

श्लोकमवतारयति—

ननु सोऽयमित्यादिज्ञानमध्यक्षमेवानन्यथासिद्धेन्द्रियान्वयव्यतिरेकानुविधानात्, संस्कारेण स्मृत्या चोपनीतेऽपि विशेषणे विशिष्टज्ञानस्यापरोक्षताया व्युत्पादितत्वात् इति ज्ञानैकत्वबाधनिराकरणप्रक्रमे यत् पूर्वमुक्तं तत्किं विस्मृतम्, येन तस्य भिन्नप्रमाणजन्यसङ्कलनात्मकत्वमभ्युपैषीति चेत्, न विस्मृतम्, किन्तु प्रत्यभिजानामीत्यनुभवसिद्धजातिविशेषवति सङ्कलनात्मकज्ञाने उद्देश्यतावच्छेदकावच्छिन्नज्ञानजनकतयेन्द्रियान्वयव्यतिरेकानुविधानस्यान्यथासिद्धत्वात् तदनाकर्णितप्रायं कृत्वोपेक्षितम्।

नन्वित्यादिना, विशेष्यांशे लौकिकप्रत्यासत्त्येन्द्रियजन्यत्वादध्यक्षत्वमिव विशेषणांशेऽप्यलौकिकप्रत्यासत्त्या तथात्वात् तथात्वमेव प्रत्यभिज्ञानस्येत्युक्तं स्मारयति–संस्कारेणेत्यादिना, संकलनात्मकज्ञान इति अस्यान्यथासिद्धत्वादित्यनेनान्वयः। अन्यथासिद्धत्वोपपादनायाह–उद्देश्यतावच्छेदकावच्छिन्नज्ञानेति, सोऽयमिति प्रत्यभिज्ञाने उद्देश्यतावच्छेदकं यदिदन्त्वं तत्प्रकारकेदंविशेष्यकज्ञानेत्यर्थः, त्यभिज्ञाने इन्द्रियसम्बन्धस्यानुभवद्वारा कारणत्वादन्यथासिद्धत्वमिन्द्रियाननुविधायिप्रत्यभिज्ञानोपदर्शनमुखेन द्रढयितुमाह—

भवति ह्यनुमानोपनीतेऽप्युद्देश्यतावच्छेदकावच्छिन्ने तत्तावलीढधर्मवद्व्यक्त्यभेदमादायायं वह्निमान् पर्वतस्तद्धूमवानिति प्रत्यभिज्ञानमिति, तत्र च तत्तद्धर्मावच्छिन्नोद्देश्यताविधेयताकप्रत्यभिज्ञाने तादृशप्रकारताकानुभवस्मरणयोः समानविषयतया हेतुत्वात् स्मृतानुभूतप्रत्यभिज्ञातानामैक्यात् स्थैर्यसिद्धिः, एतत्कालवृ-

त्तित्वरूपेदन्त्वावच्छेदेनैतत्पूर्वकालवृत्तित्वरूपतत्तावदभेदस्तु न तद्विषयः, एतत्कालोत्पत्तिके व्यभिचारात् ॥

भवतीति, उद्देश्यतावच्छेदकावच्छिन्ने इदन्त्वविशिष्टवह्निमत्पर्वतत्वावच्छिन्ने, तत्तावलीढधर्मेति तद्धूमेत्यर्थः । तत्र प्रत्यभिज्ञाने,हेतुत्वात् उद्देश्यताख्यविषयतासम्बन्धेन प्रत्यभिज्ञानं प्रति विशेष्यताख्यविषयतासम्बन्धेनानुभवस्य विधेयतावच्छेदकताख्यविषयतासम्बन्धेन प्रत्यभिज्ञां प्रति च प्रकारत्वाख्यविषयतासंसर्गेण स्मरणस्य हेतुत्वात्, एतेनोक्तप्रत्यभिज्ञानं मानसप्रत्यक्षरूपमिति नैयायिकमतं निरस्तम्, साक्षादनुभवस्मरणान्वयव्यतिरेकानुविधायित्वात्तज्जन्यत्वेन प्रमाणान्तरत्वात्, व्यभिचारादिति, एतत्कालवृत्तित्वरूपेदन्त्वावच्छेदेनैतत्पूर्वकालवृत्तित्वरूपतत्तावदभेदविषयिकैव प्रत्यभिज्ञेति प्रत्यभिज्ञाया लक्षणकरणे अनागतविषयानुमितिजन्यस्मरणविषयस्यैतत्कालोत्पत्तिकपदार्थेन सह योऽभेदस्तदवगाहिन्यां सोऽयं घट इति प्रत्यभिज्ञायामव्याप्तेः, तत्रैतत्कालवृत्तित्वरूपेन्दत्वस्य सत्त्वेऽप्येतत्पूर्वकालवृत्तित्वरूपायास्तत्ताया अभावे तद्विशिष्टाभेदस्य सुतरामभावेन तद्विषयकत्वाभावात्, अयं पदार्थः (एतत्कालवृत्तित्वरूपेदन्त्वविशिष्टः पदार्थः) एतत्पूर्वकालवृत्तित्वरूपतत्तावदभेदवान् प्रत्यभिज्ञायमानत्वादित्यनुमाने च व्यभिचारात् एतत्कालोत्पत्तिके पदार्थे उक्तसाध्याभाववत्युक्तहेतोस्सत्त्वादिति भावः ।

न चैतत्कालान्यकालवृत्त्यभेदविधेयत्वेऽपि गुणानन्दोक्तरीत्या निस्तारः, कालगर्भस्य प्रत्यक्षाविषयत्वात्, ज्ञानान्तराभ्युपगमे चास्मन्मतसिद्धेः, शुद्धव्यक्त्यभेदस्य कथमप्यनुपपादितत्वाच्चेत्यभिप्रायवानाह—

एतत्कालान्यकालवृत्त्यभेदेति, प्रत्यक्षविषयीभूतकालान्यो यः पूर्वकाल उत्तरकालो वा तद्वृत्तित्वरूपतत्तावदभेदेत्यर्थः । कालगर्भस्य प्रत्यक्षाविषयत्वात्, कालस्यातीन्द्रियत्वेन तद्घटितस्याप्यतीन्द्रियत्वात्, किञ्च प्रत्यभिज्ञायाः फलं शुद्ध-

व्यक्त्यभेदरूपस्थैर्यसिद्धिरेव, सा च प्रकृते न कथमप्युपपादिता, स्थैर्यस्य शुद्धव्यक्त्याश्रितत्वेन शुद्धव्यक्त्यभेदभान एव सिद्धेः, तस्यात्राभावात्, तत्तद्विशेषणविशिष्टयोरेवाभेदभानस्वीकारादित्याह–शुद्धव्यक्त्यभेदस्येति,

तद्भिन्नतामनुभवस्मरणोद्भवत्वाद्, द्रव्यार्थिकाश्रयतयेन्द्रियजाद्बिभर्त्ति ॥
भेदे स्फुरत्यपि हि यद् घटयेदभिन्नं, भेदं निमित्तमधिकृत्य तदेव मानम् ॥ २४ ॥

सोऽयमित्यत्र कथं भेदभानमिति चेत्, विशेषणभेदाद्विशिष्टभेदभानस्यौत्सर्गिकत्वात्, कथं तर्ह्यभेदभानं, शुद्धव्यक्त्यभेदभाने तस्याप्रतिपन्थित्वात् ॥२४॥ यत एव कथञ्चिद्भिन्नेऽपि निमित्तभेदादभेदः प्रत्यभिज्ञाविषयोऽत एव श्यामरक्ते घटे तस्याः प्रामाण्यानैकान्तिकत्वमित्याशयवानाह—

तद्भिन्नतामित्यादिश्लोकस्यायमर्थः, तत्प्रत्यभिज्ञानं भिन्नतां बिभर्त्ति, कस्मादित्यत आह–इन्द्रियजादिति, इन्द्रियसन्निकर्षादिजन्यप्रत्यक्षादित्यर्थः, कस्माद्धेतोरित्यत आह–अनुभवस्मरणोद्भवत्वादिति, प्रत्यक्षं प्रतीन्द्रियसन्निकर्षादेः कारणत्वेन प्रत्यभिज्ञानं प्रति त्वनुभवस्मरणादेः कारणत्वेन तयोस्सुस्पष्ट एव भेदः, कारणभेदात्कार्यभेदस्यावश्यंभावित्वादिति भावः । ननु भवतु प्रत्यक्षात्प्रत्यभिज्ञानं भिन्नं तथापि तत्कस्मिन् विषये प्रमाणमित्याशङ्कायामुत्तरार्द्धमाह–भेद इति, हि यतः, भेदं निमित्तमधिकृत्य भेदे स्फुरत्यपि पर्यायार्थिकनयादेशात् तत्त्वेदन्त्वयोर्विशेषणयोर्भेदेन तद्रूपनिमित्तापेक्षया तद्विशिष्टयोरप्यावश्यक एव भेद इति तस्मिन् प्रतिभातेऽपि, द्रव्यार्थिकाऽऽश्रयतया यदभिन्नं घटयेत् तदेव मानम्, द्रव्यार्थिकन-

यादेशाच्छुद्धद्रव्यव्यक्तिरूपनिमित्तापेक्षया विशिष्टयोर्योऽभेदस्तं मुख्यवृत्त्या यत्प्रत्यभिज्ञानमवगाहयेत् तदेव प्रत्यभिज्ञानं मानं प्रमाणं, स्थैर्ये इति शेषः । भेदाभेदयोस्तत्तदभावरूपत्वात् परस्परविरोधित्वेन भेदे भासमाने कथमभेदो भासमानस्स्यात्, नहि घटवद्भूतलमिति ज्ञाने घटे भासमाने घटाभावोऽपि भासमानो युक्तः, एकदा विरोधिसामग्रीद्वयाभावादित्याशङ्क्य समाधत्ते—कथं तर्हीति, तस्याप्रतिपन्थित्वात्, भेदभानस्याप्रतिबन्धकत्वात्, तदपेक्षकभेदभानतदपेक्षकाऽभेदभानयोरेव प्रतिबध्यप्रतिबन्धकभावः, नान्यापेक्षकभेदाभेदज्ञानयोरिति भावः ॥ २४ ॥ पञ्चविंशतितमश्लोकावतरणिकामाह—यत एवेति, तस्याः अयं रक्तः श्याम इति प्रत्यभिज्ञायाः, प्रामाण्याऽनैकान्तिकत्वमिति, प्रामाण्यमप्रामाण्यं चेत्यर्थः ॥

दृष्टा सुधीभिरत एव घटेऽपि रक्ते, श्यामाभिदाश्रयधियो भजना प्रमात्वे ॥
सा निर्निमित्तकतयाध्यवसाय एव, न स्यात् तदाश्रयणतस्तु तथा यथार्था ॥ २५ ॥

अत एव रक्तेऽपि घटे श्यामाभेदविषयबुद्धेरयं रक्तः श्याम इत्याकारायाः प्रमात्वे भजना सुधीभिर्दृष्टा, यतो निर्निमित्तकतयाऽवच्छेदकभेदविनिर्मोकेण, सा अध्यवसाय एव न स्यात्, अवधारणत्वाख्यविषयताशालिनी न स्यात्, तथा च नैव प्रमाणम्, स्वपरव्यवसायिज्ञानत्वस्यैव प्रमाणलक्षणस्याकरे प्रसिद्धत्वात्, व्यवसायिपदेन च संशयविपर्ययानध्यवसायनिवारणात् । तदाश्रयणतस्तु निमित्तोपादानतस्तु, तथा निमित्तानुसारेण, यथार्था रक्तोऽयं श्याम इति धियः स्वस्वकालावच्छेदेन रक्तश्यामाभेदावगाहने याथार्थ्यम्,

वैपरीत्ये त्वयाथार्थ्यमित्यर्थः ॥ २५ ॥ नन्वेवमपि इयं व्यक्तिस्तद्व्यक्तिभिन्ना नवेति संशयापाकरणाय प्रत्यभिज्ञाश्रयणं कथं युक्तम्, तत्तया प्रतिनियतधर्मोपलक्षणेन तस्यां तदवच्छिन्नाभेदभानेऽपि तद्व्यक्तित्वावच्छिन्नाभेदाभानात् इत्याशङ्कायामाह—

अत एव निमित्तस्यापेक्षायां प्रामाण्यमनपेक्षायामप्रामाण्यमित्यतः। घटेऽपि रक्ते इति, मूलस्थस्यापिशब्दस्य रक्त इत्यनेन संयुज्यमानत्वाद्रक्तेऽपि घट इत्यर्थमुपदर्शयितुमाह—रक्तेऽपि घट इति, श्यामाभिदाश्रयधिय इति मूलस्यार्थमाह—श्यामाभेदविषयबुद्धेरिति, किमाकारा सेत्याशङ्कायामाह—अयं रक्तः श्याम इत्याकाराया इति, रक्तत्वविशिष्टेदन्त्वावच्छिन्नविशेष्यतानिरूपिता या श्यामत्वावच्छिन्ना अभेदसंसर्गावच्छिन्ना प्रकारता तन्निरूपिकाया बुद्धेरिति संक्षेपार्थः। इदन्त्वनिष्ठप्रकारतानिरूपितेदंनिष्ठविशेष्यत्वाऽभिन्ना या रक्तत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्ना विशेष्यता तदभिन्ना या रक्तत्वावच्छिन्नेदन्त्वावच्छिन्ना विशेष्यता तन्निरूपिता या श्यामत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नाभेदसम्बन्धावच्छिन्नश्यामत्वावच्छिन्नप्रकारता तन्निरूपिकाया बुद्धेरिति विस्तरार्थः, यत इत्यध्याहार्योत्तरार्द्धसङ्गमनायाह—यत इत्यादि, अवधारणत्वाख्यविषयताशालिनी यथावस्थितत्वेन निश्चिनोमीत्यनुभवसिद्धविषयताविशेषशालिनी, अवधारणत्वाख्यविषयताशालित्वाभावे यथावस्थितनिश्चयत्वलक्षणव्यवसायित्वमयं रक्तः श्याम इति बुद्धेर्न स्यात्, तदभावे च तद्घटितस्वपरव्यवसायिज्ञानत्वलक्षणप्रामाण्यं न स्यादित्याशयेनाह—तथा चेति, आकरे स्याद्वादरत्नाकरे, तथा च तत्सूत्रं "स्वपरव्यवसायिज्ञानं प्रमाणमिति" यद्यपि व्यवच्छेद्यापेक्षया लक्षणविशेषणप्रवृत्तिरिति विशेषणान्तरोपादानफलमवश्यं वक्तव्यमेव तथाप्यस्यात्रानुपयोगित्वाद् व्यवसायिपदोपादानफलमाह—व्यव-

साधिपदेनेति, संशयविपर्ययानध्यवसायनिवारणादिति, संशयविपर्ययानध्यवसायानां प्रामाण्यनिवारणादित्यर्थः । ननु कथं तेन तत्र तन्निवारणमिति चेत्, व्यवस्यति यथावस्थिततत्वेन निश्चिनोतीत्येवं शीलं व्यवसायि इत्यर्थस्य तत्राऽघटनादिति, तत्र संशयेति, तत्त्वं च प्रकारताविशिष्टविशेष्यताकज्ञानत्वं, वैशिष्ट्यं स्वनिरूपितत्वे सति स्वाश्रयविरुद्धनिष्ठप्रकारतानिरुपितत्वसम्बन्धेन। विपर्ययेति, तत्त्वं च प्रकारताविशिष्टप्रकारताकज्ञानत्वं, वैशिष्ट्यं च स्वतादात्म्यस्वाश्रयाभाववन्निष्ठविशेष्यतानिरूपितत्वोभयसम्बन्धेन। अनध्यवसायेति, तत्त्वं किमित्यालोचनात्मकज्ञानत्वम्, यथार्थेति, सेत्यनुकर्षणीयम्, श्लोकाभिप्रायं निष्कृष्य दर्शयति-रक्तोयमिति, वैपरीत्ये त्वयाथार्थ्यमिति, स्वस्वकालावच्छेदकरूपनिमित्तभेदमनाश्रित्य रक्तश्यामाऽभेदावगाहने न प्रामाण्यमित्यर्थः। श्यामकालावच्छेदेनापि रक्ताऽभेदावगाहने एवं रक्तकालावच्छेदेन श्यामाऽभेदावगाहने न प्रामाण्यमिति भावः ॥ २५ ॥ ननु प्रत्यभिज्ञाश्रयणस्य संशयनिवृत्तिरेव फलं, संशयश्च सोऽयं देवदत्त इति प्रत्यभिज्ञायां देवदत्तत्वावच्छिन्नदेवदत्तव्यक्तिजातीयेयमुत्तरव्यक्तिरित्येवं देवदत्तत्वेन सजातीयाभेदभानेऽपि व्यक्त्यपेक्षया शरीरस्य क्षणिकत्वादुत्तरव्यक्तौ पूर्वव्यक्तित्वावच्छिन्नाभेदभानाभावाद् या मया प्रागनुभूता देवदत्तव्यक्तिः सैवेयं पुरोवर्त्तिव्यक्तिः किं वाऽन्येत्याकारकस्स्यदेवेति प्रत्यभिज्ञाश्रयणमघटमानकमेवेत्याशङ्क्य षड्विंशतितमश्लोकमवतारयति—नन्वेवमपीति, प्रतिनियतधर्मेति, देवदत्तत्वादीत्यर्थः तस्यां प्रत्यभिज्ञायां, पुरोवर्त्तिव्यक्तौ वा, तदवच्छिन्नेति, तत्तोपलक्षितप्रतिनियतधर्मावच्छिन्नेत्यर्थः । गुणपर्यायवद् द्रव्यं सहभावी गुणः क्रमभावी पर्याय इति लक्षणं पुरस्कृत्याह—

स्वद्रव्यपर्ययगुणानुगता हि तत्ता, तद्व्यक्त्यभेदमपि तादृशमेव सूते ॥

संसर्गभावमधिगच्छति स स्वरूपात्, सा वा स्वतः स्फुरति तत्पुनरन्यदेतत् ॥ २६ ॥

स्वद्रव्यं घटादि तद्गुणो रूपादिस्तत्पर्यायो रक्तत्वादिः संस्थानविशेषादिर्वा तदनुगता तत्समुदायपर्याप्ता तत्ता, तद्व्यक्त्यभेदमपि तादृशमेव तत्ताश्रयभेदा यावन्तस्तावदन्यतमत्वावच्छिन्नप्रतियोगिताकाभावरूपमेव, इते व्यवहारयति, स निरुक्तस्तद्व्यक्त्यभेदः, स्वरूपात् प्रतियोग्यविशेषितरूपेणैव, सोऽयमित्यत्र संसर्गभावमधिगच्छति।

स्वद्रव्यं घटादीत्यादि, तत्समुदायपर्याप्तेति, पर्याप्तिसम्बन्धेन स्वद्रव्यपर्यायगुणात्मकसमुदितत्रितयवर्त्तिनीत्यर्थः। तत्ता तद्व्यक्तित्वम्, द्वितीयचरणस्यार्थमाह—तद्व्यक्त्यभेदमपीति, तावदन्यतमत्वावच्छिन्नप्रतियोगिताकाभावरूपमेवेति, ननु तत्ताश्रयप्रतियोगिकभेदा यावन्तस्तावद्भेदकूटाभाव एवोक्तप्रतीतिविषयतया कथं नोक्त इति चेत्, पूर्वकालवृत्तिद्रव्यगुणपर्यायात्मकघटाभेदस्योत्तरकालवृत्तिद्रव्यगुणपर्यायात्मकघटे प्रतीतिः कर्त्तव्या, सा च तदा स्याद् यदि तत्ताश्रयभेदा यावन्तस्तावद्भेदान्यतमत्वावच्छिन्नप्रतियोगिताकाभावरूपोऽभेदः प्रत्यभिज्ञाविषयस्स्यात्. यतोऽन्यतमस्य यत्किञ्चिदेकसत्त्वेऽपि सत्त्वमिति द्रव्यापेक्षया गुणापेक्षया पर्यायापेक्षया वोत्तरघटस्य पूर्वघटाद्भेदः स्याद् तदा द्रव्यभेदं गुणभेदं पर्यायभेदं वाऽऽदाय भेदान्यतमस्यैव सत्त्वं स्यात् नोक्तान्यतमाभावरूपाऽभेदस्येति तादृशाऽभेदभाने सर्वप्रकाराऽभेदसिद्धिः, भेदकूटाभावस्य प्रत्यभिज्ञाविषयत्वे तु तस्य यत्किञ्चिद्भेदसत्त्वेऽपि सत्त्वमिति न सर्वथाऽभेदसिद्धिरित्याशयः। व्यवहारयति व्यवहारमर्जयति, प्रतियोग्यविशेषितरूपेणैवेति, नान्यतमत्वावच्छिन्नप्रतियोगिताकाऽभावत्वेन, किन्तु तद्व्यक्तित्वेनैवेत्यर्थः, संसर्गभावमधिगच्छतीति संसर्गतया भासत

इत्यर्थः । ननु घटः प्रमेयः घटोऽभिधेय इत्यादिप्रतीतौ कथं निरूक्तभेदान्यतमत्वावच्छिन्नाभावरूपोऽभेदो भासेत, प्रमेयभेदस्यैव कुत्राप्यप्रसिद्धेरिति चेत्, तह्यखण्डमेव तादात्म्यं संसर्गविधया भासतामित्याशयेनाह—

प्रमेयमभिधेयमेवेत्यनुरोधादतिरिक्तस्य तादात्म्यस्यातिरिक्ततादात्म्यत्वावच्छिन्नस्य वा संसर्गत्वे सा वा सामान्यविशेषात्मकतद्व्यक्तिस्वरूपा वा तत्ता स्फुरति । तदेतत्पुनरन्यद्वादान्तरं, ततः सोऽयमित्यत्रैतत्कालवृत्तिस्वद्रव्यगुणपर्यायात्मकगवादौ पूर्वकालवृत्तिस्वद्रव्यगुणपर्यायात्मकगोरभेदस्य तत्तादात्म्यस्य वा बोध एव तद्व्यक्त्यभेदबोध इति समाहारार्थः ।। २६ ।।

अपोद्ध्रियमाणा तु तत्ता तत्तद्रूपादिषु विश्रान्ता केवलभेदाद्बिभ्यती भेदाभेदसंसर्गदौत्यमप्याचरतीत्याह—

पर्यायतो युगपदप्युपलब्धभेदं, किं न क्रमेऽपि हि तथेति विचारशाली ।।
स्याद्वादमेव भवतः श्रयते स भेदा-भेदक्रमेण किमु न स्फुटयुक्तियुक्तम् ।। २७ ।।

हे भगवन् यः पुनरेवंविधविचारशाली यद् युगपदपि सहभावेऽपि पर्यायत उपलब्धभेदं वस्तु तत्क्रमेऽपि क्रमभाविपर्यायापेक्षयापि किं न तथा स्यादिति स भेदाभेदक्रमेण भवतः स्याद्वादमेव किं न श्रयते, श्रयत एवेत्यर्थः ।

प्रमेयमभिधेयमेवेत्यादि, धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायपर्यालोचनेना—अतिरिक्तत्वादात्म्यत्वेति, सा वेति मूलस्यार्थमाह—सामान्यविशेषेति, स्फुरतीति संसर्गतया भासत इत्यर्थः । उक्तभेदान्यतमत्वावच्छिन्नप्रतियोगिताकाऽभावात्मकाऽभेदनिष्ठतद्व्यक्तित्वावच्छिन्नसंसर्गतानिरूपिता अखण्डतद्व्यक्तित्वरूपतादात्म्यनिष्ठसंसर्गतानिरूपिता वा या पूर्वकालवृत्तिस्वद्रव्यगुणपर्यायात्मकगोव्यक्तिनिष्ठा प्रकारता तन्निरूपिततत्कालवृत्तिस्वद्रव्यगुणपर्यायात्मकगोव्यक्तिनिष्ठा या विशेष्यता तन्निरूपकः सोऽयं गौरिति वोध इत्याह—ततः सोऽयमित्यत्रेति, तथा चोक्तवोधसत्त्वे नोक्तसंशयोऽवकाशं भजत इति तन्निवृत्तिफलकत्वात् प्रत्यभिज्ञाश्रयणं युक्तमेवेति भावः ॥ २६ ॥ सप्तविंशतितमश्लोकावतरणिकामाह—अपोद्ध्रियमाणेति, विविच्य विचार्यमाणेत्यर्थः, यदिति वस्त्वन्वितम्, युगपदपीत्यस्य विवरणं सहभावेऽपीति एककालावच्छेदेनापीत्यर्थः, पर्यायत उपलब्धभेदमिति, एककालावच्छेदेनाप्येकवस्तुन्यनेके सहभाविपर्याया उत्पद्यन्त इति तन्नानात्वे तद्द्रव्येऽपि कथञ्चित्तदभिन्नत्वात् नानात्वस्यावश्यंभावित्वादिति भावः ॥ तदिति, अनेन वस्तु परामृश्यते, क्रमेऽपीत्यस्य विवरणं क्रमभाविपर्यायापेक्षयाऽपीति, किं न तथा स्यादिति तथा किं न स्यादित्यन्वयः, तथेति—उपलब्धभेदमित्यर्थः । किं न स्यादिति काकुपाठात् तथा स्यादेवेत्यर्थः सूचितः । उत्तरार्द्धं विवृणोति—स इत्यादिना, स्याद्वादो हि सप्तभङ्गनियत इति स्याद्वादाश्रयणे सप्तभङ्गाश्रयणमावश्यकमिति भेदाभेदोभयात्मकस्यादर्थविषयिका प्रत्यभिज्ञाऽपि स्यादभिन्नः स्याद्भिन्नः स्यादभिन्नो भिन्नश्च स्यादवक्तव्यः स्यादभिन्नोऽवक्तव्यश्च स्याद्भिन्नोऽवक्तव्यश्च स्यादभिन्नोभिन्नोऽवक्तव्यश्चेति सप्तविधधर्मविषयिकैवेत्युपदर्शयितुमाह—

कीदृशं स्फुटाभिर्लौकिकपरीक्षकमनोहारिणीभिर्युक्तिभिर्युक्तम् । एवं च स्यात् स एव स्यादस एवे-

त्यादिसप्तभङ्गक्रमानुरोधी प्रत्यभिज्ञानबोधो वक्तव्य इत्यर्थः । एवं सति तदिदन्तास्पदाभेदविषयकमेव प्रत्यभिज्ञानमिति प्रवादस्य कथमुपपत्तिरिति चेत् स्याद्वादव्युत्पन्नापेक्षयेति प्रतीहि ।

एवञ्चेति, सः अभिन्नः, असः भिन्नः, स्थैर्यसाधकतया प्रत्यभिज्ञानम् प्रक्रान्तम्, स्थैर्यसिद्धिश्चाभेदविषयकत्व एवेत्यभेदविषयकजिज्ञासा प्रागेव प्रोल्लसतीत्येतदर्थं स्यात् स एवेति अभेदावगाह्येव भङ्गः प्रथमत उपन्यस्तः । ननु प्रत्यभिज्ञानस्योक्तसप्तविधधर्मविषयकत्वे अभेदैकविषयकं प्रत्यभिज्ञानमिति प्राचां प्रवादस्यानुपपत्तिस्स्यादित्याशयेनाशङ्कते–एवं सतीति, स्याद्वादज्ञपुरुषापेक्षया द्रव्यार्थिकनयेनाभेदस्य प्राधान्यविवक्षयाऽभेदविषयिकैव प्रत्यभिज्ञेत्युक्तप्रवादस्याक्षतिरित्याशयेन समाधत्ते–स्याद्वादेति,

स्याद्वादव्युत्पत्तेः क्वेहोपयोगः शाब्दबोध एव तदुपयोगादिति चेत् । न । स्वप्रभवसंस्कारोत्पन्नमतिज्ञानद्वारा तत्र तदुपयोगात् । अत एव कारणसाम्राज्यमपि दर्शितम्, तथानुभवस्मरणयोः स्वप्रयोज्यक्षयोपशमद्वारकयोस्तथाप्रत्यभिज्ञानकारणयोः सत्त्वात्, उद्देश्यविधेयभावविपर्यासस्याप्यैच्छिकत्वात् ॥

स्याद्वादव्युत्पत्तेरिति, स्याद्वादो हि परस्परसाकाङ्क्षसप्तभङ्गात्मकमहावाक्यात्मेति तस्य व्युत्पत्तेः तन्निष्ठा या तद्घटकस्य कस्यचिद्वाक्यस्याभावे निरूप्यनिरूपकभावापन्नतत्तद्वाक्यार्थनिष्ठविषयताकमहावाक्यार्थान्वयबोधाऽजनकत्वलक्षणाकाङ्क्षा तज्ज्ञानरूपाया उक्तमहावाक्यार्थान्वयबोधाकाङ्क्षाज्ञानकार्यकारणभावज्ञानरूपायास्स्वप्रतिनियतनिमित्तापेक्ष्यासङ्कीर्णविधिनिषेधात्मक तत्तद्धर्मबोधकत्वज्ञानरूपाया वा व्युत्पत्तेरित्यर्थः । स्याद्वादव्युत्पत्तेः फलद्वारेण प्रत्यभिज्ञायां प्रयोजकत्वमिति समाधत्ते–नेति, तत्र हेतुमाह–स्वप्रभवेति, स्वं स्याद्वादव्युत्पत्तिः, तत्र प्रत्यभिज्ञायां, तदुपयोगात् स्याद्वादव्युत्पत्त्युपयोगात्, अत एव

" शुण्डालदण्डपृथुगण्डतटीकराल--मापिङ्गलस्फुटसटाविकटांसकूटम् । अष्टाभिरङ्घ्रिभिरुपेतमतीव भीष्म--माहुर्बुधाः शरभम-
द्भुतशौर्यवृत्तिम् ॥ १ ॥ स्कन्धे सटाश्वरणकोटिषु कुञ्जरेन्द्र--कुम्भस्थलीदलनदुर्ललितानि यस्य । क्वापि प्रपश्यति भवा-
न्नखपञ्जराणि, जानातु तं जगति केसरिणः किशोरम् ॥ २ ॥ " इत्येवमादिशब्दश्रवणादाहितसंस्कारविशेषः प्रतिपत्ता-
तथाविधानेव शरभसिंहादीनवलोक्य तथा सत्यापयति यदा तदा तत्सङ्कलनमपि प्रत्यभिज्ञानोदाहरणमादर्शितं मन्तव्यमिति स्याद्वा-
दरत्नाकरे पूज्यपादश्रीदेवसूरिभिः प्रोक्तं सङ्गच्छते, अत एवैकस्यैवार्थस्यानेके वाचकशब्दास्तत्रैकशब्दार्थं ज्ञात्वा शक्त्यादिग्रहपुरस्सरं
शब्दान्तरार्थं जानाति तत्र स एवानेन शब्देनाप्यर्थः कथ्यत इति प्रत्यभिज्ञाप्युपजायमाना सङ्गच्छते, अत एव प्रत्यभिज्ञायां स्या-
द्वादव्युत्पत्तेः स्वप्रभवसंस्कारजन्यमतिज्ञानद्वारा प्रयोजकत्वादेव,तथेति स्याद्वादव्युत्पत्तिसापेक्षेत्यर्थः । अनुभवेति, अत्रानुभवपद-
मनुभवत्वावच्छिन्ने शक्तमिति तस्यानुभवत्वावच्छिन्नोऽर्थः, न तु प्रत्यक्षानुभवरूपविशेषोऽर्थः । अत एव योऽर्थो मया प्रागनुमितः
स एवार्थोऽनुमीयते इति प्रत्यभिज्ञापि चोपजायमाना सङ्गच्छते, अनुमित्यादिवत् प्रत्यभिज्ञानमपि परोक्षज्ञानरूपं मति-
ज्ञानप्रभेदमेव, मतिज्ञानञ्च क्षायोपशमिकमिति तदपि तद्रूपमेवेत्यनुभवस्मरणयोः कारणयोस्सद्भावेऽपि ताभ्यां तदावरणज्ञानावरणीय-
कर्मक्षयोपशमे सत्येव तदुत्पद्यते तदभावे नोत्पद्यत इति तत्र तस्य द्वारत्वमावश्यकमित्याशयेनाह--स्वप्रयोज्यक्षयोपशमद्वारक-
योरिति, स्वेति अनुभवस्मरणेत्यर्थः । ननु तत्ताविशिष्टस्योद्देश्यत्वमिदन्त्वविशिष्टस्य च विधेयत्वमिति विवक्षां कृत्वा कस्यचि-
त्पुरुषस्यायं स इति प्रत्यभिज्ञानं स्यात्तदा किं तद्भ्रमात्मकं नवेत्याशङ्कायामाह--उद्देश्यविधेयेति, ऐच्छिकत्वादिति, विवक्षा-
धीनत्वादित्यर्थः । तथा च सोऽयमितिवदयं स इत्यपि प्रत्यभिज्ञानं प्रामाणिकमेवेतिभावः । परम्परया प्रत्यभिज्ञाने स्याद्वादव्यु-

त्पत्तेरुपयोगं प्रदर्श्य साक्षादपि तत्र तदुपयोगं सदृष्टान्तं दर्शयितुमाह—

वस्तुतः कररेखाविशेषवान् शतवर्षजीवीत्युपदेशश्रवणानन्तरमयं कररेखाविशेषवानिति ज्ञाने सति यथाऽयं शतवर्षजीवीति सङ्कलनात्मकं प्रत्यभिज्ञानम् तादृशविषये मानान्तरानवकाशात्, तथा सर्वं वस्तु सप्तभङ्गीसमधिरूढधर्मात्मकमित्युपदेशं श्रुतवत इदं वस्त्विति ज्ञानानन्तरमेवेदं सप्तभङ्गीसमधिरूढतत्ताश्रयाभिन्नमिति प्रत्यभिज्ञानं व्युत्पन्नानां न दुर्घटमिति दिक् ॥ २७ ॥

वस्तुत इति, अयं शतवर्षजीवीति प्रत्यभिज्ञानं मानसप्रत्यक्षरूपमेव, अथवा शतवर्षजीवित्वकररेखाविशेषवत्त्वयोरुपदेशवाक्यादुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयनियमबलाद्व्याप्तिग्रहात्कररेखाविशेषवत्त्वहेतुना शतवर्षजीवित्वानुमितिर्वेति नैयायिकमतमनादृत्याह—तादृशविषये मानान्तरानवकाशादिति ॥२७॥ स्याद्वादतत्त्वज्ञपुरुषबोध इव तदनभिज्ञपुरुषबोधोपि स्याद्वादापेक्ष एवेत्युपदर्शनार्थमष्टाविंशतितमश्लोकमवतारयति—

लौकिकबोधोऽपि त्रैलक्षण्यावगाहित्वात् वस्तुतः स्याद्वादापेक्ष एवेत्युपदर्शयति—

तद्धेम कुण्डलतया विगतं यदुच्चै-रुत्पन्नमङ्गदतयाऽचलितं स्वभावात् ॥
लोका अपीदमनुभूतिपदं स्पृशन्तो, न त्वां श्रयन्ति यदि तत्तदभाग्यमुग्रम् ॥ २८ ॥

अथ कुण्डलाङ्गदाव्यतिरिक्तं हेमद्रव्यं नास्त्येव, हेमत्वं तु कुण्डलत्वाङ्गदत्वादिव्यापिका जातिरेवास्तीति तदवच्छेदेन न कुण्डलाङ्गदादिवैधर्म्यग्रहः, तत्सामानाधिकरण्येन तद्ग्रहस्तु न तदभेदग्रहविरोधीति न दोष

इति चेत्, न, हेमत्वमस्ति हेमाङ्गदे न कुण्डलत्वं तदस्ति रजतकुण्डले न हेमत्वमुभयं च हैमकुण्डल इति जातिसाङ्कर्यात् तज्जातित्वासिद्धेः, यत्र कुण्डलाङ्गदवैधर्म्यग्रहस्तत्र तदभेदग्रहस्य रूपान्तरसमावेशं विनानुपपत्तेश्च ॥ २८ ॥

लौकिकबोधोऽपीति, त्रैलक्षण्येति उत्पादव्ययध्रौव्यात्मकत्वेत्यर्थः। तद्धेमेत्यादिश्लोकस्य यद्धेम उच्चैः कुण्डलतया विगतं वर्त्तमानकालावच्छेदेन पूर्वकालावच्छिन्नकुण्डलपर्यायनाशे तद्रूपतया विनाशशालि, विनाशस्यार्थान्तररूपतया विभागरूपतयावाऽतिरिक्तत्वाभावात् विनाशात्मकमिति यावत्, एतेन व्ययधर्मस्सूचितः, तत् अङ्गदतयोत्पन्नं वर्त्तमानकालावच्छिन्नाङ्गदपर्यायरूपेणोत्पत्त्याश्रयः धर्मधर्मिणोरभेदादुत्पादात्मकमिति यावत्, एतेनोत्पादधर्मो ज्ञापितः, स्वभावात् स्वस्वरूपेण, पूर्वोत्तरपर्यायानुगामिहेमद्रव्यस्वरूपेणेति यावत्, अचलितं अप्रच्युतानुत्पादस्वभावम्, एतेन ध्रौव्यधर्मस्सूचितः, लोकास्त्याद्वादतत्त्वानभिज्ञलोकाः, इदं पूर्वोक्तं परस्पराऽविनाभूतं त्रितयस्वरूपम्, अनुभूतिपदं स्वस्वानुभवगोचरम्, अपिशब्दस्य भिन्नक्रमत्वेनात्रान्वयात् स्पृशन्तोऽपि स्वसंवित्तिसंवेद्यानुभवेन साक्षात्कुर्वन्तोऽपि, यदि त्वां न श्रयन्ति—यथार्थोपदेष्टृकर्मकविहितानुष्ठानकरणकाश्रयणक्रियानुकूलवर्त्तमानकालीनकृत्यभाववन्तो भवन्ति, तत् तदा, तद्भाग्यं तेषां लोकानामभाग्यं पापप्रकृतिरूपम्, उग्रम् पापानुबन्धि इति संक्षेपार्थः। ननु त्रितयलक्षणं वस्तु तदा स्यात् यदि तत्तदवस्थानुस्यूतं द्रव्यं स्यात्, तदेव तु नास्ति, यदपि च कुण्डलाङ्गदादौ हेमहेमेत्यनुगतप्रतीतिनियामकं, तदपि हेमत्वजात्याख्यमेव, न चाशङ्क्यं हेमत्ववति कुण्डलभेदग्रहस्याङ्गदभेदग्रहस्य च सत्त्वात् कथं तत्र तदभेदग्रह इति, यतस्तत्सामानाधिकरण्येन तद्वत्तानिश्चयस्य तत्सामानाधिकरण्येन तदभाववत्ताबुद्धिं प्रत्यप्रतिबन्धकत्वनियमेन हेमत्वसामानाधिकर-

ण्येन कुण्डलादिभेदग्रहस्य हेमत्वसामानाधिकरण्येन कुण्डलाद्यभेदग्रहं प्रति न प्रतिबन्धकत्वम्, हेमत्वावच्छेदेन तस्य प्रतिबन्धकत्वेऽपि तस्याऽसम्भव एव, कुण्डले हेमत्वसत्त्वेऽपि कुण्डलभेदासत्त्वेन हेमत्वस्य कुण्डलभेदाव्यापकत्वादित्याशङ्कते—अथेति, हेमत्वस्य कुण्डलत्वादिना साङ्कर्यदोषाक्रान्तत्वाज्जातित्वं नास्तीति नोक्तोपपत्तिरिति प्रतिक्षिपति-न, हेमत्वमस्तीति, हेमरजतकुण्डलयोः कुण्डलं कुण्डलमित्यनुगतप्रतीतिं कथञ्चिदुपपाद्य हेमत्वव्याप्यं कुण्डलत्वं रजतत्वव्याप्यकुण्डलत्वाद्भिन्नमेवेति यदि परः स्वीकुर्यात् अथवा कुण्डलत्वं संस्थानगतजातिरूपमेवेति यौक्तिको यदि ब्रूयात्तदाऽपि यत्र हेम्नि व्यक्तौ कुण्डलदशायामङ्गदानात्मकत्वग्रहः अङ्गददशायां च कुण्डलानात्मकत्वग्रहः तत्र तदेव हेमाङ्गदं तदेव कुण्डलं चेत्यभेदग्रहो व्यक्त्यभेदं विना न कथमप्युपपादयितुं शक्य इत्याशयेनाह—यत्र कुण्डलाङ्गदेति ॥ २८ ॥ एकोनत्रिंशत्तमश्लोकमवतारयति—

तज्जातीयाभेदविवक्षायां तदेवेदमिति न स्यात् किन्तु तज्जातीयमेवेदमिति, तत्रापि जातेरनिर्धारणेऽनध्यवसायमात्रमिति विना स्याद्वादं न निर्वाह इत्यभिप्रायवानाह—

स्वद्रव्यतां यदधिकृत्य तदात्मभावं, गच्छत्यदः कथमहो परजात्यभिन्नम् ॥
तात्पर्यभेदभजना भवदागमार्थः, स्याद्वादमुद्रितनिधिः सुलभो न चान्यैः ॥ २९ ॥

तदेवेदमित्यत्र हि स्वद्रव्यत्वविशिष्टविशेषणतया तदभेदो भासते, स्वद्रव्यत्वविशिष्टतादात्म्येनेदंपदार्थे तदेव वा, अन्यथा स्वस्मिन्नेकक्षेत्रावगाढादौ वा तत्तदित्यादेस्तदेवेदमित्यादेश्च प्रसङ्गात् । तथा च यत्

स्वद्रव्यतामधिकृत्य तादात्म्यं गच्छति तत्परजात्या तिर्यक्सामान्यापेक्षयाऽभिन्नं कथं वक्तुं शक्यम्, न कथञ्चित्, बोधाविवेकप्रसङ्गादित्यर्थः । एवं च द्रव्यं रूपवदित्यादेरप्ययोग्यत्वं, रूपवतः स्वद्रव्यत्वविशिष्टतादात्म्यस्य द्रव्यत्वानवच्छिन्नत्वात्, द्रव्यं गुणवदित्यादेश्च योग्यत्वं गुणत्वावच्छिन्नविशेषतानिरूपितोर्ध्वतासामान्याख्यस्वद्रव्यत्वस्य द्रव्यमात्र एव सत्त्वात् ।

तज्जातीयेत्यादिना, स्वद्रव्यत्वविशिष्टविशेषणतयेति अत्र स्वद्रव्यत्वविशिष्टं विशेषणं यस्य तत्स्वद्रव्यत्वविशिष्टविशेषणमिति, स्वद्रव्यत्वविशिष्टस्य विशेषणं स्वद्रव्यत्वविशिष्टविशेषणमिति वा समासः तस्य भावः तत्ता तयेत्यर्थः । आद्ये शुद्धेदंपदार्थे तन्निष्ठस्वद्रव्यत्वावच्छिन्नप्रतियोगिताकभेदाभावरूपतदभेदः तन्निष्ठस्वद्रव्यत्वावच्छिन्नप्रतियोगिताकाखण्डाभेदो वा भासते, तथा च स्वद्रव्यत्वविशिष्टप्रतियोगिताकतदभेदवदिदमित्याकारकः प्रतियोगितासंसर्गेण स्वद्रव्यत्वविशिष्टविशिष्टतदभेदवदिदमित्याकारको वा तदेवेदमिति बोधः । तदभिन्नस्वद्रव्यत्वविशिष्टाभिन्नमिदमित्याकारकस्तदेवेदमिति बोधो वा, अत्र च तदिदन्तास्पदयोरभेदसिद्धिः तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात् । द्वितीये स्वद्रव्यत्वविशिष्ट इदंपदार्थे पूर्वव्यक्त्यात्मकतदभेदो भासते, तथा च तदभेदवत्स्वद्रव्यत्वविशिष्टेदमित्याकारकः तदेवेदमिति बोध इति भावः । ननु प्रतीतावनुल्लेखात्कथं स्वद्रव्यत्वविशिष्टं विशेषणतया भासेतेत्यतो विकल्पान्तरमाह—स्वद्रव्यत्वेति, तदेवेदमित्यस्य तद्विशिष्टेदमित्यर्थः, तत्र वैशिष्ट्यं स्वद्रव्यत्वविशिष्टतादात्म्यसंसर्गेण, संसर्गश्चाकांक्षाभास्य इति न तत्र तदुल्लेखस्तन्त्रम्, अत्र च तदिदन्तास्पदयोरुद्देश्यविधेयभावेन साक्षादेव भानं लोकप्रतीतं सुरक्षितं भवतीति विशेषः । उक्तमत्यभिज्ञायां निर्विशेषितस्वाभेदमात्रभाने स्वस्मिन्, घटो घट इति वत्तत्तदिति स्ववृत्तिधर्मवदभेदभाने चैकक्षेत्रालीढेऽन्यस्मिन्नेकक्षेत्रावगाढ-

त्वधर्मपुरस्कारेण तदेवेदमिति प्रतीत्यापत्तिस्स्यादित्यतिप्रसङ्गमाह–अन्यथेति। प्रथमार्द्धं व्याख्याति–तथा चेति, ऊर्ध्वतासामान्याख्यस्वद्रव्यत्वरूपेण पूर्वकालावच्छिन्नपदार्थाभेदाश्रय उत्तरकालावच्छिन्नो यः पदार्थः स तिर्यक्सामान्याख्यजात्या कथमभेदभाजी स्यादिति भावः। तथानभ्युपगमे घटान्तरे तत्सजातीयोयमिति तस्मिन्नेव घटे तदेवेदमिति विभिन्नाकारा बुद्धिर्या भवति तदभावप्रसङ्गादित्याह–बोधाविवेकेति, तिर्यक्सामान्यापेक्षया साजात्यमुभयत्राविशिष्टमित्यविशिष्टबुद्धिस्स्यात्, अस्मन्मते त्वाद्या बुद्धिस्तिर्यक्सामान्यापेक्षया, द्वितीया तु प्रतिक्षणं विभिन्नपर्यायो घट उत्पद्यत इति पूर्वोत्तरसभागपर्यायानुगाम्यूर्ध्वतासामान्यापेक्षयाऽभेदविषयिकेति नोक्तदोषः, उद्देश्यवचनं पूर्वं विधेयवचनं ततः इति न्यायात् द्रव्यं रूपवदित्यत्र द्रव्यस्य विशेष्यत्वं स्वद्रव्यत्वविशिष्टतादात्म्येन रूपवतः प्रकारत्वं, तथा च तस्यायोग्यत्वमेव, यतो रूपवतस्स्वद्रव्यं पुद्गलरूपमेव, भवन्मतेऽपि पृथिव्यादित्रितयमेव, तत्तादात्म्यं न द्रव्यमात्रे इत्यभिप्रायवान् आह—एवं चेति,

न च रूपवदित्यत्रापि रूपनिष्ठगुणत्वावच्छिन्नविशेषतानिरूपितोर्ध्वतासामान्यमादाय योग्यत्वापत्तिः, यद्धर्मविशिष्टवाचकं विशेषणपदं प्रयुज्यते तद्धर्मावच्छिन्नोक्तसंबन्धबोधन एव स्वसमभिव्याहृतपदार्थे तस्य साकाङ्क्षत्वात्। न च सामानाधिकरण्येनावच्छेदकावच्छेदेन च बोधतात्पर्ये द्रव्यं रूपवदित्यादिकं वाक्यं योग्यायोग्यमिति वाच्यम्, उद्देश्यविधेयभावबोधकवाक्यस्योद्देश्यतावच्छेदकावच्छेदेन विधेयसम्बन्धबोधकताया एव व्युत्पत्तिसिद्धत्वात्। अन्यथा धूमवान् वह्निमानितिवद्वह्निमान् धूमवानित्यस्यापि प्रसङ्गात्।

साकाङ्क्षत्वादिति, तथा च द्रव्यं रूपवदित्यत्र रूपपदसमभिव्याहृतद्रव्यपदार्थे रूपत्वविशिष्टवाचकं रूपपदं रूपत्वावच्छिन्नवि-

शेषतानिरूपितोध्वंतासामान्याख्यस्वद्रव्यताविशिष्टतादात्म्यसम्बन्धबोधन एव साकाङ्क्षमिति तस्यायोग्यत्वमेवेति भावः । उद्देश्यतावच्छेदकावच्छेदेन विधेयसम्बन्धबोधकतायाः उद्देश्यतावच्छेदकव्यापकविधेयप्रतियोगिकसम्बन्धावच्छिन्नविधेयनिष्ठप्रकारतानिरूपितोद्देश्यनिष्ठविशेष्यताकबोधजनकत्वस्य, व्युत्पत्तिसिद्धत्वादिति. अत्र पर्वतो वह्निमानित्यत्र पर्वतत्वावच्छेदेन वह्निबाधे पर्वतत्वसामानाधिकरण्येन वह्निप्रकारकबोधादुक्तव्युत्पत्तावसति बाधक इति विशेषणोपादानमावश्यकमिति तत्संकोचकल्पनाद्द्रव्यत्वसामानाधिकरण्येन रूपविधेयकबोधजनकवाक्यस्यापि योग्यत्वमेवेति नैयायिकानां समाधिं मनसि कृत्वाह—

यदि च पुरुषभेदेन नयभेदेन च व्युत्पत्तेरपि भेदात् तत्र तत्र बोधितस्य वाक्यस्य योग्यायोग्यत्वं, तदा एकघटवत्यपि घटान्तराभावमादाय घटो नास्तीति शाब्दबोधः प्रामाणिकः स्यात्। नञोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेरप्यसार्वत्रिकत्वात्। इष्टापत्तौ च त्रैलक्षण्यशालिनि वस्तुनि विरोधस्यापि किंवृत्तचिदर्थे विश्रामाय स्याद्वादप्रमाणराजस्यैव मुखमालोकनीयम् स च न प्रदर्शयति तदनागमिष्यद्भद्राय दुर्भगायेत्यहो एकान्तवादिनां व्यसनसन्ततिः ॥ तदाह—तात्पर्यभेदभजना पदवाक्यतात्पर्यभेदविकल्पो भवत एषागमार्थः, शबलवस्तुनो विकल्पं विना बोधयितुमशक्यत्वात्। स च स्याद्वादमुद्रया मुद्रितो निधिरेव, मुद्रितपदोपसन्दानात् स्याद्वादस्य मुद्रात्वेनाध्यवसायः। अधिपत्याज्ञां विना तदुन्मुद्रणस्य बलवदनिष्टानुबन्धित्वं व्यङ्ग्यम्, निधिपदेन चाविधिना तद्ग्रहणेऽपरिणामातिपरिणामादिवेतालोत्थानम्। अत एव न चासावन्यस्वभक्तिशून्यैः सुलभ इत्यलं स्याद्वादशून्यैरेकान्तवादिनां प्रलापैः ॥ २९ ॥

यद्धि चेत्ति, कथं प्रामाणिकस्स्यादित्यत आह–नेत्र इति, आलोकनीयमिति, कथञ्चिद्विरोध इति-स्वीकर्त्तव्यमिति फलितोऽर्थः, सच स्याद्वादप्रमाणराजश्च, न प्रदर्शयति किमित्यत आह–तदिति मुखमित्यर्थः, कस्मै इत्याशङ्कायामाह–अनागमिष्यद्भद्राय दुर्भगायेति,तातपादा गुरवस्तु सच स्याद्वादप्रमाणराजश्च, न प्रदर्शयति, न स्वमुखमेकान्तवादिने दर्शयति, तत्, स्याद्वादराजमुखाऽदर्शनम् अनागमिष्यद्भद्राय आगमिष्यदुत्तरकालभाविभद्रं यस्य तदागमिष्यद्भद्रं नागमिष्यद्भद्रमित्यनागमिष्यद्भद्रं तस्मै एतच्च दुर्भगायेत्यस्य विशेषणमित्याहुः। अनेन चाष्टाविंशतितमश्लोकोपवर्णितं तद्भाग्यमुग्रमित्येतत् स्पष्टीकृतम्, अहो इति मूलोक्तं सङ्गमयति–अहो इत्यादिना, उत्तरार्द्धं विवरीतुमाह–तदाहेति, उपसन्दानात् समभिव्याहारात्, तदुन्मुद्रणस्य मुद्रोद्घाटनस्य, ॥ २९ ॥ त्रिंशत्तमश्लोकमवतारयति—

अथ द्रव्यमेव कथं सामान्यमापेक्षिकं चेत्याशङ्कायामाह—

सामान्यमेव तव देव तदूर्ध्वताख्यं, द्रव्यं वदन्त्यनुगतं क्रमिकक्षणौघे ॥
एषैव तिर्यगपि दिग् बहुदेशयुक्ते, नात्यन्तभिन्नमुभयं प्रतियोगिनस्तु ॥ ३० ॥

तत् प्रक्रान्तं द्रव्यं, हे देव, तव मते ऊर्ध्वताख्यं सामान्यमेव विपश्चितो वदन्ति, यतः क्रमिकक्षणौघे क्षणिकाक्षणिकक्रमिकपर्यायसमूहे, अनुगतम्, अनुगतत्वप्रकारकबुद्धिरेव च सामान्यसाक्षिणीति, द्रव्यत्वे आपेक्षिकत्वं च समवायिकारणं द्रव्यमिति द्रव्यलक्षणं वदतां नैयायिकानामपीष्टमेव,

अथेति, द्रव्यं सामान्यरूपम् अनुगतप्रकारकबुद्धिजनकत्वात् घटत्ववदित्यनुमानेन द्रव्यस्य सामान्यरूपत्वे सिद्धे तच्च न तिर्यक्सामान्यरूपं सदृशपरिणामिविभिन्नदेशावस्थितनानापिण्डानुगामित्वाभावात्, किन्तु क्षणिकाक्षणिकपूर्वोत्तरपर्यायानुगामित्वादूर्ध्वताख्यसामान्यरूपमेवेत्याशयेनाह-तव मत इत्यादि, इष्टमेवेति, कारणत्वं किञ्चित्सापेक्षमिति स्वसमवेतकार्यापेक्षया समवायिकारणत्वं द्रव्यत्वमित्येवमापेक्षिकत्वमिष्टमेवेति भावः। ननु द्रव्यत्वजातिमत्त्वं द्रव्यलक्षणमिति द्रव्यत्वं नापेक्षिकं,नन्वेवमस्तु तथापि द्रव्यत्वजातिसिद्धिं विना तन्न सिद्ध्यतीति तत्सिद्धिः कथमिति चेत्, समवायसम्बन्धावच्छिन्नजन्यसत्त्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकतयैवेति प्रतीहि इत्याशङ्कानिराकरणायाह—

**द्रव्यत्वजातिस्तु जन्यसज्जनकतावच्छेदकतयापि न सिद्धा, उपादानत्वावच्छिन्नविषयतयेश्वरीयहेतुनैव तदन्यथासिद्धेः, एवं च घटादौ द्रव्यत्वं पर्यायत्वं चापेक्षिकं तावद्वाच्यं यावत्परमाणु, तत्र च द्रव्यत्वमेव न पर्यायत्वमिति द्रव्यार्थिकस्यापश्चिमो विकल्पः।**

द्रव्यत्वजातिस्त्विति, जन्यसदिति, अत्र सतो जन्येति विशेषणं तद्विशिष्टस्य सत्त्वस्य कार्यतावच्छेदकत्वसम्पत्तये, अन्यथा सत्त्वस्य नित्यसाधारणतयाऽतिप्रसक्तत्वात् कार्यतावच्छेदकत्वं न स्यात्, सदिति विशेष्यपदोपादानात् जन्यत्वस्य प्रागभावप्रतियोगित्वरूपस्य द्रव्यकार्यत्वाभाववति ध्वंसेऽपि सत्तयाऽतिप्रसक्तत्वेऽपि न क्षतिः। ननु सत्त्वे सति जन्यत्वस्यैव द्रव्यकार्यतावच्छेदकत्वं किमिति न क्लृप्तमिति चेत्, तस्य कार्यतावच्छेदकत्वे तस्याऽनन्तस्वरूपात्मकतया तेषामनन्तानां स्वरूपाणां कार्यतावच्छेदकतावच्छेदकसंसर्गता स्वीकरणीया स्यात्, सत्त्वस्य कार्यतावच्छेदकत्वे तु तस्य जातिरूपतया एकस्य समवायस्यैव तथाविधसं-

सर्गता कल्पनीयेति लाघवमेव तत्र कारणम् ननु समवायेन जन्यत्वे सति सत्त्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यत्वेन कारणत्वं यदि न स्यात्तर्हि समवायसम्बन्धेन नीलम्प्रति जनकस्य स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्नीलादावपि सत्त्वात्तत्र तदुत्पत्तिस्स्यात् इति चेत्, न, समवायेन जन्यसत्त्वावच्छिन्नं प्रति उपादानत्वाख्यविषयतासंसर्गेणेश्वरीयबुद्धिचिकीर्षाप्रयत्नानां कारणत्वेनाभ्युपगतानां नीलादावभावादेव तत्र नीलोत्पत्त्यापत्त्यसंभवात्, तथा चेश्वरीयबुद्ध्यादिना द्रव्यस्यान्यथासिद्धत्वान्न कारणतावच्छेदकविधया द्रव्यत्वस्य जातित्वमित्याह–उपादानत्वावच्छिन्नेति, उपादानत्वाख्येत्यर्थः। अन्यथोपादानत्वस्य समवायिकारणत्वरूपतया तस्य सावच्छिन्नत्वनियमेन तदवच्छेदकतयैव द्रव्यत्वजातिसिद्ध्यापत्तेः॥ एवञ्चेति,समवायिकारणं द्रव्यमिति द्रव्यलक्षणव्यवस्थितौ चेत्यर्थः। यावत्परमाण्विति, अत्र यावच्छब्दो नाभिविध्यर्थकः, तथा सति परमाणौ द्रव्यत्ववत् पर्यायत्वमपि स्यात्, तच्चानिष्टमेव, तस्यान्त्यावयवतया सिद्धत्वेन नित्यत्वादुपादेयकार्यरूपत्वाभावात्, किन्तु मर्यादावाचक इत्युपादानकारणत्वात् तत्र द्रव्यत्वमेवेति द्रव्यार्थिकनयतत्त्वम्, उक्तप्रकारेण द्रव्यरूपेऽपि तत्र पर्यायनयापेक्षया तु पर्यायत्वमेव स्कन्धाद्विभक्तावस्थारूपेणोत्पादमन्तरेण परमाणुरूपत्वाऽसिद्धेः, नीलपीतादेस्सङ्ख्यातादिषड्गुणहानिवृद्धिभावेन प्रतिक्षणं तदात्मकतयोत्पत्तेश्च, द्रव्यपर्यायोभयनयापेक्षयातु द्रव्यपर्यायोभयात्मक एव, पर्यायविनिर्मुक्तस्य द्रव्यस्य द्रव्यविनिर्मुक्तस्य पर्यायस्य च प्रमाणागोचरत्वेनावस्तुत्वादिति।

तदुक्तम्–पज्जवणयवुक्कंतमित्यादि। न चैवं द्रव्यत्वमापेक्षिकमौपाधिकमूर्ध्वतासामान्यं प्रसक्तमिति द्रव्ये किमायातमिति वाच्यम्, भेदकल्पनानिरपेक्षेण तत्रापि तत्त्वग्रहात्, कालानुगतत्वेन तत्र तत्त्वस्योपपादितत्वाच्च। अतिदेशमाह–एषैव तिर्यगपि तिर्यक्सामान्येऽपि, बहुदेशयुक्ते नानापिण्डसम्बद्धे, दिक् का-

लानुगतत्वेन यथोर्ध्वतासामान्यसिद्धिर्देशानुगतत्वेन तथा तिर्यक्सामान्यसिद्धिरिति भावः। एतच्चोभयं प्रतियोगिनस्त्वाश्रिताश्रयविशेषान्नात्यन्तभिन्नम्, अत्यन्तभेदे धर्मधर्मिभावस्यैवानुपपत्तेः ॥ ३० ॥

अत्र युक्तीराह—

उक्तमर्थं सम्मतितर्कगाथया संवादयति-पज्जवणयेति, 'पज्जवणयवुक्कंतं वत्थु दव्वट्ठियस्स वयणिज्जं। जावदविउव-ओगो अपच्छिमवियप्पनिव्वयणो इति सम्पूर्णगाथा, अस्याश्चार्थः तट्टीकातोऽवसेयः, विस्तरभयान्नेह लिख्यते। औपाधिकमिति स्वकार्यापेक्षया समवायिकारणत्वरूपत्वादिति भावः। द्रव्यद्रव्यत्वयोरभेदविवक्षया द्रव्येऽप्यूर्ध्वतासामान्यत्वमित्युत्तरयति-भेदेति, तत्रापि द्रव्येऽपि, तत्त्वग्रहात् ऊर्ध्वतासामान्यत्वग्रहात्, द्रव्यत्वस्य देशानुगतत्वेन तिर्यक्सामान्यत्वं, कथमूर्ध्वतासामान्यत्वमि-त्यत आह-कालानुगतत्वेनेति, तत्र द्रव्यत्वे, तत्त्वस्य ऊर्ध्वतासामान्यत्वस्य, अथवा द्रव्यत्वेऽनेकद्रव्यवृत्तित्वात्सामान्यत्वस्यो-पपत्तावपि द्रव्ये कथं तदुपपत्तिरित्यत आह-कालानुगतेति, तत्र द्रव्ये। उत्तरार्द्धमवतारयति-अतिदेशमाहेति, ॥३०॥

सम्बन्ध एव समवायहतेर्न जाति-व्यक्त्योरभेदविरहेऽपि च धर्मिक्लृप्तौ।
स्याद्गौरवं ह्यनुगतव्यवहारपक्षे-ऽन्योन्याश्रयोऽनुगतजातिनिमित्तके च ॥३१॥
जातेर्हि वृत्तिनियमो गदितः स्वभावा-ज्जातिं विना न च ततो व्यवहारसिद्धिः।
उत्प्रेक्षितं ननु शिरोमणिकाणदृष्टे-स्त्वद्वाक्यबोधरहितस्य न किञ्चिदेव ॥३२॥

भेदग्रहस्य हननाय य एव दोषः, प्रोक्तः परैस्तव मते ननु सोऽप्यभेदः ।
त्वद्दृष्टवस्तुनि न मोघमनन्तभेदा–भेदादिशक्तिशबले किमु दोषजालम् ॥ ३३ ॥

जातिव्यक्त्योरभेदविरहे समवायहतेः समवायनिरासात् सम्बन्ध एव न, तथा च जातिर्व्यक्तिसम्बद्धा तद्विशिष्टधीविषयत्वादित्याद्यनुमानमेव समवायादिबाधे तत्र तदभेदसिद्धौ मानमित्यर्थः ॥

सम्बन्ध एवेति श्लोकस्य–जातिव्यक्त्योरभेदविरहे अभेदाभावे, समवायहतेः समवायस्य निरासात्, सम्बन्ध एव न, सम्बन्ध एव न स्यात्, सम्बन्धान्तराभावात् । अपि च धर्मिक्लृप्तौ सामान्यत्वधर्माधारस्य जातेः क्लृप्तौ कल्पनायां, गौरवं स्यात्, व्यक्तौ क्लृप्तायां सामान्यत्वधर्मस्यैकस्य कल्पनापेक्षयाऽतिरिक्ता जातिस्तत्र च सामान्यत्वमिति धर्मिधर्मद्वयकल्पनापक्षे गौरवं स्यादिति भावः ॥ अनुगतजातिनिमित्तके चानुगतव्यवहारपक्षे आश्रीयमाण इति शेषः, अन्योन्याश्रयः इति समासार्थः ॥ ३१ ॥ जातेर्हीति श्लोकस्य–हिर्यतः अस्याभेदेन स्वभावादित्यनेनान्वयः, अथवा हिश्चार्थे, स च पूर्वश्लोकद्वयप्रतिपाद्यदोषेण सहैतद्दोषस्य समुच्चयार्थः, जातेर्वृत्तिनियमः गोत्वजातिर्गोष्वेव घटत्वजातिर्घटेष्वेव वर्तते नान्यत्रेत्येवमाश्रयाश्रयिभावनियमस्स्याभावाद् गदितः । ननु स्वभावाज्जातेर्वृत्तित्वनियमवत् ततः स्वभावाज्जातिं विनाऽनुगतव्यवहारसिद्धिरस्त्वित्यत आह–जातिं विना न च ततो व्यवहारसिद्धिरिति, तत इति स्वभावादित्यस्यानुषङ्गः, ननु तत्सत्यं किं वा नेत्याशङ्कायामाह–उत्प्रेक्षितमिति यत्पूर्वोक्तमुत्प्रेक्षितं कल्पितं, तत्, ननु निश्चितम्, शिरोमणेः काणदृष्टेस्त्वद्वाक्यबोधरहितस्य त्वन्मुखारविन्दनिर्गतस्याद्वादवा-

क्यजबोधविकलस्य, न किञ्चिदेव न युक्तमेवेति समासार्थः ॥ ३२ ॥ भेदग्रहस्येति श्लोकस्य-भेदग्रहस्य गवादिपिण्डात्पृथक्तया गोत्वग्रहस्य, हननाय प्रतिबन्धाय, परैर्नैयायिकैर्य एष दोष अनन्यदेशत्वरूप,ः प्रोक्तः कथितः, ननु निश्चितं, तव मते हे भगवंस्तव शासने, सोऽप्यभेदः प्रविभक्तप्रदेशत्वरूपस्य भेदस्याभावरूपत्वात्, तथा च स्वासाधारणधर्मेण तयोर्भेदः अनन्यदेशत्वेन चाऽभेद इत्येवमत्रापि स्याद्वाद एव विजयतेतरामिति, त्वद्दृष्टवस्तुनि अनन्तभेदाभेदादिशक्तिशबले किमु दोषजालं न मोघम् ? अपि तु मोघमेव व्यर्थमेवेति संक्षेपार्थः ॥ ३३ ॥

किं च विशेषेषु रूपहानिभयादिवानवस्थाभिया सामान्येषु सामान्यं परेण न स्वीक्रियते, सजातीयानुगमबुद्धिजनकतया स्वाश्रये विजातीयव्यावृत्तिबुद्धिजनकतया च सामान्यविशेषरूपत्वमेकस्य गोत्वादिसामान्यस्य स्वीक्रियते, तथा च तस्य विशेषत्वग्रहकालेऽपि ततोऽनुवृत्तिबुद्धिव्यवहारौ स्याताम् इति तद्वारणाय विशेषत्वेनागृह्यमाणगोत्वादिज्ञानस्यानुगतगवादिव्यवहारहेतुत्वं वाच्यम्, तदपेक्षया च सामान्यत्वेन गृह्यमाणत्वप्रवेश एव ज्यायान्, तथा च धर्मिकल्पनातो धर्मकल्पना लघीयसीतिन्यायाद्वरं गवादिपिण्डेष्वेव गोसामान्यत्वं कल्पयित्वा ततोऽनुगतगोव्यवहारोपपादनमिति । अथ स्वरूपतो गोत्वप्रकारकज्ञानत्वेनैवानुगतगोव्यवहारहेतुत्वात् न दोष इति चेत्, न, तद्व्यक्तौ स्वाभिन्नतत्ताया इव गवि स्वाभिन्नगोत्वस्यापि स्वरूपतः प्रकारतया भानसम्भवात्,अन्यथा का गतिरखण्डोपाधिस्थले । जात्युच्छेदभयादखण्डोपाधिर्नाद्रियत एवेति चेत्, तदुच्छेदभयात् जातिरेव कुत आद्रियत इति तुल्यम् ।

रूपहानिभयादिति, समानजातीयाणूनां नित्यत्वेन भिन्नावयवारब्धत्वादिभेदकासम्भवेन जातिमत्पदार्थानां किञ्चिद्रूपेण भाननियमेन स्वतो व्यावृत्तत्वासम्भवेन चानन्यगत्या व्यावर्तका विशेषा एव, ते च स्वत एव व्यावृत्ताः, व्यावर्तकान्तरापेक्षायामनवस्थालताविस्तृतेरिति वैशेषिकराद्धान्तः, एवं च यदि परमाणूनां भेदका विशेषा जातिमन्तोऽभ्युपगतास्स्युस्तदोक्तनियमात्स्वतो व्यावृत्ता न स्युरिति स्वतोव्यावृत्तत्वरूपहानिभयादित्यर्थः । अनवस्थेति, यदि तत्तज्जातिषु जात्यन्तरं स्यात्तदा तत्र तदाश्रयपूर्वजातिषु च जात्यन्तरं स्यात् एवं तत्र तदाश्रयपूर्वजातिषु च जातिकल्पनाया अविश्रान्त्याऽनवस्थेत्यर्थः ॥ स्वीक्रियत इति तदुक्तं वैशेषिकदर्शने " सामान्यं विशेष इति बुद्ध्यपेक्षम् १ द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्चेति " अत्र सामान्यानि विशेषाश्चेत्यसमासः सामान्यत्वे सति विशेषत्वस्य ज्ञापनार्थं इति, विशेषत्वेनागृह्यमाणगोत्वादिज्ञानस्येति विशेषत्वनिष्ठप्रकारतानिरूपितगोत्वनिष्ठविशेष्यताकज्ञानवदन्यस्य गोत्वनिष्ठप्रकारतानिरूपितगवादिनिष्ठविशेष्यताकज्ञानस्येत्यर्थः, तादृशज्ञानवत्त्वं चैककालावच्छिन्नैकाधिकरणवृत्तित्वसम्बन्धेन, अथवा विशेषत्वेन गृह्यमाणतादशायां गोत्वे प्रकारता नियमेन विशेषत्वेनावच्छिद्यत इति विशेषत्वनिष्ठावच्छेदकत्वानिरूपितगोत्वनिष्ठप्रकारतानिरूपितगवादिनिष्ठविशेष्यतानिरूपकज्ञानस्येत्यर्थः ॥ यत्र हि धर्म एक एव कल्पनीयो भवति, तत्रातिरिक्तधर्मिकल्पनायामेकस्य धर्मिण एकस्य धर्मस्य च कल्पना कृता स्यात्, तदपेक्षया प्रसिद्धपदार्थ एवैकधर्मकल्पनायां लाघवमिति परीक्षकाणां पन्थाः, तथा च प्रकृतेऽतिरिक्तं सामान्यं कल्प्यं, तत्र च सामान्यत्वमिति कल्पनाद्वयी स्यात् तदपेक्षया प्रसिद्धेषु गवादिपिण्डेष्वेव वरं सामान्यत्वकल्पनं तत एव चानुगतगोव्यवहारोपपादनमित्याशयवान् आह—तथा च धर्मिकल्पनात इति, सामान्यत्वेन गृह्यमाणत्वं प्रवेश्य सामान्यत्वावच्छिन्नगोत्वनिष्ठप्रकारताकज्ञानत्वेन सामान्य-

त्वप्रकारकवर्त्तमानज्ञानविशेष्यगोत्वनिष्ठप्रकारताकज्ञानत्वेन वाऽनुगतगोव्यवहारहेतुत्वं न स्वीक्रियते, किन्त्वनुल्लिख्यमानजातेस्स्वरूपतो भानसम्भवेन निरवच्छिन्नगोत्वनिष्ठप्रकारतानिरूपकज्ञानत्वेन, तथा च विशेषत्वेन गृह्यमाणतादशायां गोत्वे न निरवच्छिन्ना प्रकारता, किन्तु विशेषत्वावच्छिन्नेति तद्दशायां नानुगतगोव्यवहारापत्तिरिति शङ्कते—अथ स्वरूपत इति, तद्व्यक्तित्वस्य तद्व्यक्तिस्वरूपस्याप्यखण्डोपाधित्वाङ्गीकारेण स्वरूपेण भानं यथा निर्वहति तथा गोत्वादेर्गवादिव्यक्तिस्वरूपस्यापि जातिरूपत्वादेव निरवच्छिन्नप्रकारतया भानं निर्वक्ष्यतीति किमतिरिक्तजातिकल्पनयेत्युत्तरयति—न तद्व्यक्तावित्ति, तथाऽनभ्युपगमे दण्डमाह—अन्यथेति, गोत्वादिजातेर्गवादिव्यक्त्यभिन्नत्वेन तद्वत् जातिमत्तया जातिमतां किञ्चिद्रूपेणैव भानमिति नियममाश्रित्य स्वरूपतोभानानङ्गीकारे तद्व्यक्तित्वस्यापि तद्व्यक्त्यभिन्नत्वेन जातिमत्तया निरवच्छिन्नप्रकारतया भानं कथं स्यादिति भावः। जात्युच्छेदभयादिति अखण्डोपाध्यभ्युपगमे तद्बलादेवानुगतप्रतीतिव्यवहारादिनिर्वाहे जातिकथैवोच्छिन्ना स्यादिति तद्भयादित्यर्थः। तदुच्छेदभयात् अखण्डोपाध्युच्छेदभयात्, जातेरखण्डोपाधित्वाङ्गीकारे स्वरूपसम्बन्धेन वृत्तित्वमभ्युपगन्तव्यमित्यनेकेषां स्वरूपाणां सम्बन्धत्वकल्पने गौरवं जातित्वाङ्गीकारे त्वेकस्यैव समवायस्य सम्बन्धत्वमिति लाघवमित्यत आह—

**समवायनिरासेन सम्बन्धलाघवस्य विनिगमकस्याभावात्, एतेनोपाधौ सामान्यत्वारोपार्थं मुख्यसामान्यस्वीकार इत्यादिकमप्यपास्तम्, भावत्वमभावत्वं चाखण्डोपाधिरिति मते भावत्वं वा सत्त्वादि वा मुख्यं सामान्यमित्यत्राप्यविनिगमात्, लक्षणान्वयानुरोधेन मुख्यत्वस्य च तद्घटकसमवायनिरासेनैव निरासात्, सामान्यलक्षणप्रत्यासत्त्यनुरोधेन च घटत्वादिवद्भावत्वस्यापि मुख्यत्वात्। अत एव स्वाश्रययाव-**

त्प्रत्यक्षे घटत्वादेरिव स्वाश्रितयावत्प्रत्यक्षे घटादेरपि सामान्यप्रत्यासत्तित्वानुरोधेनोर्ध्वतासामान्यस्यापि सिद्धिरित्यस्माभिस्तत्र तत्रोपदर्शितम् ॥

समवायेति, उपाधौ अयमपि भावः अयमपि भाव इत्यनुगतप्रतीतिविषये भावत्वाद्युपाधौ, सामान्यत्वारोपार्थम् यत्र कुत्रचित् प्रमितं सामान्यत्वं स्यात्तदैव तदारोपस्स्यादित्येतदर्थम्,अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च समवायसम्बन्ध इति तद्घटितं नित्यत्वे सत्यनेकसमवेतत्वं जातित्वमिति लक्षणं सत्त्वादावेव घटते न भावत्वादाविति सत्त्वादिकमेव मुख्यं सामान्यं न भावत्वादिकमित्यत आह–लक्षणान्वयानुरोधेनेति, सामान्यलक्षणप्रत्यासत्त्यनुरोधाद्घटत्वेन रूपेण सकलघटप्रत्यक्षबलाद् आधारतासम्बन्धेन घटत्वस्य यथा सामान्यप्रत्यासत्तित्वं तथा आधेयतासम्बन्धेन स्वाधेयसकलसम्बन्धिना घटेन रूपेण घटवृत्तीनां यावतां गुणपर्यायाणां प्रत्यक्षबलाद् आधेयतासम्बन्धेन घटस्यापि सामान्यप्रत्यासत्तित्वं स्वीकर्त्तव्यमित्याह–अत एवेति, मृद्द्रव्यं हि पूर्वापरपर्यायानुगामीति तत्प्रत्यक्षकाले तद्रूपेण द्रव्यार्थनयाश्रयणात् तदभिन्नानां पूर्वोत्तरपर्यायाणां कपालकलशादीनामपि प्रत्यक्षं भवतीत्यत्र साक्षीभूतं ग्रन्थमभिख्याप्रदर्शनपूर्वकमाह—

न चापसिद्धान्तः, मृदाद्यवलोकनवेलायां कपालकलशादीनामपि द्रव्यार्थतया प्रत्यक्षस्य स्याद्वादरत्नाकर एव प्रदर्शितत्वादिति विभावनीयं सुधीभिः। अनुगतजातिनिमित्तके चानुगतव्यवहारपक्षे आश्रीयमाणे स्फुटोऽन्योन्याश्रयः, तथा हि–अनुगतगोव्यवहारनिमित्ततया तावत् गोत्वं सामान्यमेकान्ततो गवातिरिक्तं परैः स्वीक्रियते, तत्र गोव्यवहारे किमनुगतत्वम्—अनुगतत्वावगाहित्वं वा, एकत्वावगाहित्वं वा,

अनुगतजात्यवगाहित्वं वा, न द्वयं, कालानुगते व्यक्त्यैकत्ववति च विशेषे व्यभिचारात्, न तृतीयः, व्य-
वहारेऽनुगतजात्यवगाहित्वसिद्धौ तत्सिद्धिः, तत्सिद्धौ चोक्तानुगतव्यवहारसिद्धिरिति परस्पराश्रयस्य
जागरूकत्वात् ॥

मृदाद्यवलोकनवेलायामिति, यद्यपि जातिः प्रत्यक्षसिद्धैव तथापि तत्र विप्रतिपन्नं प्रति विवादापन्नव्यवहारः अनु-
गतजातिनिमित्तकः अनुगतव्यवहारत्वादित्यनुमानं पुरस्क्रियते तत्र भवान् प्रष्टव्यः, हेतुघटकीभूते व्यवहारेऽनुगतत्वं जात्यवगाहित्वं
चेत्तर्हि जातिसिद्धिर्हेतुज्ञानार्थमावश्यकी, सा च यद्येतस्मादेव हेतोस्तदाऽन्योन्याश्रयः, हेत्वन्तराच्चेदलं प्रकृतेनेत्यभिप्रायवानाह अ-
नुगतजातिनिमित्तके चेति, नित्यत्वाद्विशेषस्य कालानुगतत्वं प्रत्याश्रयं व्यावृत्तत्वेन प्रत्येकमेकत्वमित्यनुमित्यात्मकतद्व्य-
वहारे तथा घटादेरपि स्थायितया कालानुगतत्वेन प्रत्येकमेकत्वेन च तद्व्यवहारे व्यभिचारः, अनुगतजातिमन्तरेणापि तदुत्पादात्
इत्याह–कालानुगत इति ॥

एतेन जात्यपेक्षानुगतत्वैकत्वावलम्बनत्वमपि निरस्तम्, तत्सिद्ध्यधीनसिद्धिकत्वात् । एतेनैव च
नानागोपिण्डधर्मिकैकत्वप्रकारकव्यवहारस्य विना गोत्वमनुगतमनुपपत्तिरित्यपि निरस्तम् । स्वर्गादिषु द-
शस्विव नानागोपिण्डेष्वप्येकगोपदवाच्यत्वमादाय तदुपपत्तेः । अव्युत्पन्नानामपि सास्नादिमतीषु व्यक्तिष्व-
नुगतगोप्रत्ययात् नैवमिति चेत्, तर्हि त एव प्रष्टव्याः, किं भवद्भिरतिरिक्तगोत्वेन गोव्यक्तीरनुभूयानुगत-
गोव्यवहारः सम्पाद्यते, उत स्वभावविशेषात् स्वाभिन्नगोत्वप्रकारकगवानुभवमासाद्येति, एतेनातिरिक्तध-

र्मोपग्रहमन्तरेणापूर्वव्यक्तौ पदवाच्यतानिबन्धनो व्यवहारोऽपि व्याख्यातः ॥

जात्यपेक्षेति—अस्यानुगतत्वे एकत्वे चोभयत्रान्वयः, तदिति जातीत्यर्थः, यद्वा जात्यपेक्षानुगतत्वैकत्वालम्बनत्वेत्यर्थः, स्वभावविशेषादित्यस्यानुभवमित्यनेनान्वयः। यद्वा स्वाभिन्नं गोत्वं कुत इत्याशङ्कानिवृत्त्यर्थं स्वभावविशेषादिति अप्रविभक्तदेशत्वस्वभावादित्यर्थः। अस्मद्गुरवस्तु समानाकारपरिणामविशेषादित्यर्थमाहुः। एतेनेति स्वभावविशेषात् स्वाभिन्नगोत्वप्रकारकगवानुभवमासाद्यानुगतगोव्यवहारोपपादनेनेत्यर्थः। नव्यमतप्रदर्शनव्याजेन ग्रन्थकारस्स्वाभिप्रायं प्रदर्शयति—

सङ्केतग्रहशाब्दबोधादीनां समानप्रकारकत्वेन कार्यकारणभावादपि स्वतोऽनुवृत्तगोपदार्थालम्बनतया तदुपपत्तेः, तथात्वादेवान्यत्र व्यक्तौ गृहीतोऽपि सङ्केतः सामान्यत्वावच्छिन्नविषयतयाऽपूर्वव्यक्तावपीति तु नव्याः ॥ एवं सत्येकत्रैकत्वानेकत्वविरोध इति तु न चोद्यम्, मुख्ययोस्तयोरेकव्यक्तावभावादापेक्षिकयोश्चावच्छेदकभेदेनैकत्रोपपत्तेः, आपेक्षिकत्वं च तयोरपेक्षाबुद्धिव्यङ्ग्यतया तज्जन्यतया वेति पुनरन्यदेतत् ॥

सङ्केतग्रहेत्यादिना, तथात्वादेव स्वतोऽनुवृत्तगोपदार्थालम्बनत्वादेव, अन्यत्र प्रत्यक्षायां, नव्या इति, अत्रेदं तत्त्वं, वृत्तिज्ञानीयधर्मितावच्छेदकताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन शक्तिग्रहस्य कारणत्वेऽपि नातिरिक्तजातिसिद्धिः, सामान्यत्वेन रूपेणानुगतस्य गोपदार्थस्य सङ्केतग्रहे शाब्दबोधे च प्रकारतया भानोपपत्तेः सामान्यत्वेन रूपेण चापूर्वव्यक्तेरपि सङ्केतविषयत्वमुपपद्यत एवेति नव्याः। प्राचीनास्तु स्वाभिन्नगोत्वस्य स्वरूपत एव शाब्दबोधे सङ्केतग्रहे च प्रकारत्वमिति प्रोचुः, नव्यपक्षे प्रकारतायास्सामान्यत्वावच्छिन्नतया स्वीकारात् प्राचीनपक्षाभ्युपगतनिरवच्छिन्नस्वाभिन्नगोत्वनिष्ठप्रकार-

ताऽपेक्षया गौरवम्, सामान्यत्वमखण्डमङ्गीकृत्य तन्निष्ठनिरवच्छिन्नप्रकारताकविशेष्यताकत्वाङ्गीकारे नव्यमतेऽपि न गौरवमिति। गवादिव्यक्तीनां सामान्यस्वरूपत्वे सामान्यापेक्षयैकत्वं व्यक्त्या चानेकत्वं स्यात् तथा सति तयोर्विरोधस्स्यादेवेति कथं नाशङ्क्यमित्यत आह—मुख्ययोरिति, मुख्ययोः निरपेक्षयोः, अवच्छेदकभेदेन नियामकभेदेन। अपेक्षाबुद्धिव्यङ्ग्यतयेति अपेक्षाबुद्धिजन्यप्रत्यक्षविषयतयेत्यर्थः, व्यङ्ग्यत्वपक्षे एकत्वानेकत्वविषयकप्रत्यक्षत्वावच्छिन्नं प्रति अपेक्षाबुद्धेः कारणत्वमिति तदपेक्षया एकत्वत्वानेकत्वत्वावच्छिन्नं प्रति तस्याः कारणत्वे लाघवमित्यभिप्रेत्य पक्षान्तरमाह—तज्जन्यतयेति—

तत्त्वं च नयामृततरङ्गिण्यां विस्तरेणोक्तमस्माभिरिति तत एवावसेयम्। एतेनानेकव्यवहारे अनेकस्येवैकव्यवहारे एकस्यैव हेतुत्वात् अतिरिक्तसामान्यसिद्धिरित्युदयनदीधितिकारादीनां मूलयुक्तिरपास्ता, एकानेकरूपादेव स्वभावभेदादुभयव्यवहारोपपत्तेः, कथमन्यथैकत्रापेक्षिकोभयानुभवोऽपि प्रामाणिकः स्यात्। गौणमुख्यतयैकत्रोभयसमावेश उपपन्न एवेति चेत्, न, अमुख्यस्य बुद्धिमात्रोत्प्रेक्षितत्वे साकारवादप्रसङ्गात्, तस्य चेतरलोपेऽपि निर्दयत्वात्, परम्परासम्बन्धस्य चातिप्रसञ्जकत्वादिति दिग् ॥

नयामृततरङ्गिण्यामिति, तत्पाठो विस्तरभयान्नेह लिख्यते, विस्तरार्थिना तत एवावसेयमिति, मूलयुक्तिरिति, द्वाविंशतितमश्लोकव्याख्यानोक्ता सा तत एवावसेया, उभयव्यवहारेति, एकानेकव्यवहारेत्यर्थः। एकत्रापेक्षिकोभयेति, एकस्मिन् शङ्खः पीतइत्यादि ज्ञाने धर्मिप्रकारांशावच्छेदेन प्रामाण्याऽप्रामाण्योभयेत्यर्थः। घटादावेकत्वं स्वभावनिबन्धनमिति आश्रयसत्तानियतसत्ताकतया पारमार्थिकत्वेन मुख्यम्, अनेकत्वं चापेक्षाबुद्धिविशेषविषयत्वरूपमिति काल्पनिकत्वाद्गौणम्, मुख्य-

गौणयोश्च न विरोध इति भवत्येकत्र समावेश इत्याशङ्कते, 'गौणे'ति एकस्मिन् घटे रूपरसवतोरभेद इति प्रतीतितो द्वित्वस्यापेक्षाबुद्धिविशेषरूपस्याभ्युपगमे बहिरर्थे द्वित्वाभावेऽपि यथा ज्ञानस्वरूपादेव द्वित्वाद् द्वित्वप्रतीतिरेवं बहिरर्थैकत्वाभावेऽपि ज्ञानरूपैकत्वत एवैकत्वप्रतीतिः स्यात्, तथा च तद्दृष्टान्तेन बाह्यमात्रप्रतीति र्बाह्यं विनैव तत्तदाकारज्ञानविशेषादेवोपपादयितुं शक्येतेत्येवं प्रविशन्योगाचारो न निरोद्धुं शक्य इति तद्भयादेकत्वानेकत्वयोरुभयोरपि मुख्यतयैवाश्रयणं युक्तमित्याशयेन समाधत्ते-तस्य च साकारवादस्य तु। ननु व्यक्तिष्वनेकत्वं साक्षात्, एकत्वं तु जातिगतं स्वाश्रयवत्त्वरूपपरम्परासम्बन्धेनेत्यत आह—परम्परासम्बन्धस्य चेति, एवं सति सर्वं सर्वात्मकं स्यात्, घटत्वादेरपि स्वाश्रयवृत्तिद्रव्यत्वादिसम्बन्धेन पटादौ सत्त्वादिति भावः। निराकाङ्क्ष इति निरूप्यनिरूपकभावापन्नविषयताशालिसम्पूर्णबोधोत्पत्तेः सम्पूर्णाकाङ्क्षाया निवृत्तत्वादिति भावः। "जातेर्हि वृत्तिनियमो गदितः स्वभावात्", इति द्वात्रिंशत्तमश्लोकाभिप्रायमुपवर्णयन्नाह—

एवं च गोत्वं सास्नादिमतीष्वेव व्यक्तिषु न केसरादिमतीष्वित्यत्र किं नियामकमिति प्रश्ने अभेदनियामकानभ्युपगमात् स्वभावादेवेत्युत्तरम्। न च ततः स्वभावादेव जातिं विनानुगतव्यवहारसिद्धिः, इदं यदुत्प्रेक्षितं शिरोमणेः काणदृष्टेः, तत्त्वद्वाक्यसम्बन्धी यो निराकाङ्क्षोऽनेकान्तबोधस्तद्रहितस्य न किञ्चिदेव। भगवन्तं सम्बोध्यमुद्दिश्येदं वचनं युक्तायुक्तविचारसाक्षीकरणाय। काणदृष्टित्ववचनं च शिरोमणेर्नव्ययुक्तिप्रासादसूत्रणसूत्रधारस्यापि न निमीलितापरनयनयनत्वेन नयव्युत्पन्नत्वं किन्तु तदभावेन दुर्नयव्युत्पन्नत्वमिति बोधनाय, व्यक्तश्चैतत्त्वद्वाक्येत्यादिना, तेन सहृदयासहृदयोभयवेद्यत्वेनेदं गूढागूढव्यङ्ग्यमिति

मन्तव्यम् ॥ एवं च 'अभाग्यं गौडदेशस्य, यत्र काणः शिरोमणिः' इति तदीयानां तदुपहासोऽपि न निर्मूल इत्यावेदितं भवति। एतेन कारणशक्त्या जातिनियततयैव भवितव्यमित्यप्यपास्तम्, विचित्रव्यवहारानुरोधेन तस्या जात्यन्तरात्मकवस्तुनियततताया एव युक्तत्वात्, गोत्वादौ जातिविशेषत्ववद् गव्येव तत्त्वस्य कल्पने लाघवात्, व्याप्यव्यापकभावस्यापि कथंचिद्भेदेनैव सम्भवात्, एवं च ज्ञानविषयदृष्टान्तेन जातिव्यक्त्योरेकानेकसम्बन्धोपपादनमपि यत्कृतं तत्स्याद्वादसम्बन्धं विना न सङ्गतमिति मन्तव्यम् ॥

एवञ्चेति एकानेकस्वभावक्लृप्तधर्ममात्रेणैव सामान्यविशेषव्यवहारोपपत्तौ चेत्यर्थः। तस्याः कारणशक्तेः। जात्यन्तरेति सामान्यविशेषात्मकेत्यर्थः, तत्त्वस्य जातिविशेषत्वस्य। यत्कृतमिति एकस्य विज्ञानस्य यथाऽनेकविषयसम्बन्धित्वमित्यादिना द्वाविंशतितमश्लोकव्याख्यानग्रन्थेन, "एकस्य विज्ञानस्य यथानेकविषयसम्बन्धित्वं यथा चानेकस्य विषयस्यैकविज्ञानसम्बन्धित्वं तथैकस्यसामान्यस्यानेकपिण्डसम्बन्धित्वम्, अनेकस्य च पिण्डस्यैकसामान्यसम्बन्धित्वं न विरुध्यते, मानाभावात् इति यदुक्तं द्वाविंशतितमश्लोकव्याख्यायां, तदपि न न्यायसङ्गतमित्याह—एवञ्चेति। स्याद्वादस्य सम्बन्धत्वव्यापकत्वेन ज्ञानविषययोस्सम्बन्धोऽपि स्याद्वादरूप इति ज्ञाने विषयसम्बन्धः विषये च ज्ञानसम्बन्धस्स्याद्वादरूपतयैवोपदर्शनीय इति यथाक्रमं तद्रूपतया तदुभयमुपदर्शयति—

नहि चित्रज्ञानेऽपि नीलादिविषयित्वावच्छेदेन पीतादिसम्बन्धो, न वा नीलपीतादिषु त्रिविप्रकृष्टत्वावच्छेदेनैकाध्यक्षसम्बन्धो, न च विशेषविश्रान्तस्य सामान्ये उपसंहारः कर्तुं शक्यते। तस्मात् स्वरूपतः ॥२७१॥

सम्बन्धतो वा एकानेकत्वं द्रव्यार्थपर्यायार्थतानियतमिति । यदपि स्वरूपसत्त्वासत्त्वयोर्वर्त्तमानत्वावर्त्तमानत्वयोर्द्वितीयपिण्डाद्याधारानपेक्षत्वात् स्वरूपतो गोत्वादौ सत्त्वमेव, सम्बद्धत्वासम्बद्धत्वे तु द्वितीयापेक्षे इति सति पिण्डे सम्बद्धत्वरूपं सत्त्वमेवासति चासम्बद्धत्वरूपमसत्त्वमेवेत्येकान्तोद्भावनं कृतम्, तदपि तुच्छं, स्वरूपसत्ताया व्यक्तितादात्म्यविश्रान्तत्वात्, कालादिघटितायाश्च सम्बन्धिभेदेन भजनीयत्वात्, असति पिण्डे सर्वथा गोत्वाद्यसम्बन्धे सामान्यलक्षणयाऽतीतानागताद्यपरामर्शप्रसङ्गादित्येकं सीव्यतोऽपरप्रच्युतेः,

नहीति, यद्यप्यत्र स्याद्वादस्सम्बन्धासम्बन्धोभयरूप इति तदुभयं प्रदर्शनीयं,तथापि नीलपीते इति चित्रज्ञाने नीलविषयित्वावच्छेदेन नीलसम्बन्धः पीतविषयित्वावच्छेदेन पीतसम्बन्धश्च एवं नीलपीते इति चित्रज्ञानस्य विषयताख्यस्सम्बन्धो नीलपीतगतद्वित्वावच्छेदेन नीलपीतोभयस्मिन् नीलत्वावच्छेदेन नीले पीतत्वावच्छेदेन पीते वोदयनदीधितिकारादिभिरप्युररीक्रियत इति सम्बन्धाभाव एवात्र प्रदर्शितः, ज्ञानज्ञेययोरेव सिद्धस्यैकानेकसम्बन्धस्य सर्वोपसंहारेण जातिव्यक्त्यादावपि स्वीकारो न युक्त इत्याह—न च विशेषेति, एकानेकरूपयोर्ज्ञानविषययोर्यथा सम्बन्धो दृष्टो, न तथा जातिव्यक्त्योः, ज्ञानस्थल एव तदुपगमात् , अत्र प्रकारान्तरेणाप्युपपत्तौ तथा कल्पनस्यायुक्तत्वादिति भावः । स्वसिद्धान्तमुपसंहरन् फलितमाह—तस्मादिति, अतिरिक्तस्य गोत्वस्याभावेन गोव्यक्तिं विना तत्तादात्म्यलक्षणस्वरूपसत्ताया अपि पूर्वमभावात् स्वाधिकरणतत्तत्कालतत्तद्देशवृत्तित्वरूपवर्त्तमानत्वलक्षणसत्तायाश्च कालघटितत्वेन तत्तत्कालाद्यभावेऽभावात् तत्तत्कालदेशरूपसम्बन्धिभेदेनाऽनेकरूपत्वाच्चेत्याह—स्वरूपसत्ताया इति, तत्रासति नास्तीति कोऽर्थस्तेनासता न सम्बध्यत इत्यादि यदुक्तं,तत्राह—असति पिण्ड इत्यादि,सामान्यलक्षणयेति प्रत्यक्षं प्रति

सामान्यलक्षणप्रत्यासत्तेर्धर्मिणि सत्त्यैव कारणत्वेनातीतानागतयोर्धर्मिणोरभावे सामान्यलक्षणप्रत्यासत्तेरपि तत्र समवायादिसम्बन्धाभावेनातीतानागतयोर्ज्ञानं न स्यादिति भावः । भेदग्रहस्य हननायेत्यादि त्रयस्त्रिंशत्तमश्लोकं विवरीतुमाह--

अपि च गवादिपिण्डे सतो गोत्वादेः कथं न भेदेन ग्रह इति पर्यनुयोगे, भेदग्रहस्य हननाय प्रतिबन्धाय, यः परैरनन्यदेशत्वरूपो दोष उक्तः, हे भगवंस्तव मते, ननु निश्चितम्, सोऽप्यभेदः प्रविभक्तप्रदेशत्वरूपभेदाभावरूपत्वात् । तथा च जातौ व्यक्तेरन्यत्वरूपो भेदोऽनन्यदेशत्वरूपोऽभेदश्चेत्युभयमप्यविरुद्धमिति किमिवैकान्तभेदघोषेण कण्ठशोषकारिणा तदिदमुक्तं प्रवचनसारे, "पविभत्तपदेसत्तं पुहुत्तमिति सासणं हि वीरस्स । अण्णत्तमतब्भावो ण तब्भवं भवदि कधमेगन्ति" । एवं च यदि गोत्वं गोः सर्वथा भिन्नं स्याद्वानन्यदेशं न स्यादिति परं प्रति प्रसञ्जनमनाहतमेव, इयमेवैकान्तभेदे सामानाधिकरण्यानुपपत्तिरिति तदर्थानवगम उदयनादीनां प्रमादविलसितमेव, चालनीयन्यायेन प्रतिव्यक्ति पृथक्त्वापृथक्त्वे अपि तत्र सम्पूर्णसत्तालक्षणमारोपयन्ती न स्याद्वादप्रतिकूले, एवमन्यत्वमपि रूपभेदेन भजनीयम् । तथापि गोत्वे गोत्वावच्छिन्नभेदो न तादृशाभेदसंवलित इत्येवमेकान्तप्रवेशो दुर्वारः, न, तत्रापि पर्यायार्थता वृत्त्यवच्छेदिका, न द्रव्यार्थतेत्येवं तद्भङ्गात्, एवं सम्बन्धादिभेदेन महावाक्यभङ्गविवेचकभङ्गषोडशकरीत्या च सर्वत्र भजनावतारो विधेयो, न चानन्तधर्मात्मके वस्तुनि काप्यनुपपत्तिः, एकान्तदूषणानां जात्यन्तरेऽनवकाशात् । तदाह— त्वद्दृष्टवस्तुनि, अनन्तभेदाभेदादिशक्तिशबले, किमु दोषजालं न मोघम्, अपि तु मोघमेव ॥३३॥ उपसंहरति

अपि चेति, परैः नैयायिकैः,प्रवचनसारं इति ग्रन्थोऽयं दिगम्बरकुन्दकुन्दाचार्येण प्रणीतः, तत्र "पविभत्तपदेसत्तं पुधत्तमिदि सासणं हि वीरस्य। अण्णत्तमतब्भावो णतब्भवं भवदि कधमेगं" इत्यार्या ज्ञेयतत्त्वाधिकारे चतुर्दशी। प्रविभक्तप्रदेशत्वं पृथक्त्वमिति शासनं हि वीरस्य। अन्यत्वमतद्भावो न तद्भवत् भवति कथमेकम् इति संस्कृतछाया श्रीजयसेनाचार्यकृतेयं तट्टीका-अथ पृथक्त्वलक्षणं किमन्यत्वलक्षणं च किमिति पृष्टे प्रत्युत्तरं ददाति, पविभत्तपदेसत्तं पुधत्तं पृथक्त्वं भवति पृथक्त्वाभिधानो भवति, किंविशिष्टं प्रकर्षेण विभक्तप्रदेशत्वं भिन्नप्रदेशत्वम्। किंवत् दण्डदण्डिवत्, इत्थम्भूतं पृथक्त्वं शुद्धात्मद्रव्यशुद्धसत्तागुणयोर्न घटते, कस्माद्धेतोः-भिन्नप्रदेशाभावात्, कयोरिव ? शुक्लवस्त्रशुक्लगुणयोरिव,इदि सासणं हि वीरस्स इति शासनमुपदेश आज्ञेति। कस्य, वीरस्य वीराभिधानान्तिमतीर्थंकरपरमदेवस्य, अण्णत्तं, तथापि प्रदेशाऽभेदेपि मुक्तात्मद्रव्यशुद्धसत्तागुणयोरन्यत्वं भिन्नत्वं भवति, कथम्भूतं अतब्भावो अतद्भावरूपं संज्ञालक्षणप्रयोजनादिभेदस्वभावम्। यथा प्रदेशरूपेणाभेदस्तथा संज्ञादिलक्षणरूपेणाप्यभेदो भवतु को दोष इति चेत्, नैवम्, णतब्भवं होदि तन्मुक्तात्मद्रव्यं शुद्धात्मसत्तागुणेन सह प्रदेशाऽभेदेपि संज्ञादिरूपेण तन्मयं न भवति कहमेक्कं, तन्मयत्वं हि किलैकत्वलक्षणं संज्ञादिरूपेण, अत एव च सत्ताद्रव्ययोः कथञ्चिदनर्थान्तरत्वेऽपि सर्वथैकत्वं न शङ्कनीयम् तद्भावो ह्येकत्वस्य लक्षणं। यत्तु न तद्भवद्विभाव्यते तत्कथमेकं स्यात्, अपि तु गुणगुणिरूपेणानेकमेवेत्यर्थः। संज्ञादिरूपेण तन्मयत्वाभावान्नैकत्वं, किन्तु नानात्वमेव,यथेदं मुक्तात्मद्रव्ये प्रदेशाऽभेदेऽपि संज्ञादिरूपेण नानात्वं कथितं तथैव सर्वद्रव्याणां स्वकीयस्वकीयस्वरूपाऽस्तित्वगुणेन सह ज्ञातव्यमित्यर्थः। तथा च प्रविभक्तप्रदेशत्वं भिन्नप्रदेशत्वं पृथक्त्वस्य भेदस्य लक्षणम्, इत्थंभूतो भेदो प्रकृते जातिव्यक्त्योर्न सम्भाव्यते इत्यभेदः, प्रदेशाऽभेदाभेद इत्यपि नैकान्तः

संज्ञालक्षणप्रयोजनादिरूपेण भेदस्यापि सद्भावादित्यनेकान्त एव विजयतेतराम्, परं प्रति नैयायिकं प्रति, तत्र जातौ, इयमेव अनन्यदेशत्वानुपपत्तिरेव, तदर्थानवगमः, अनन्यदेशत्वरूपो यस्सामानाधिकरण्यपदस्यार्थस्तस्यानवगमः, नन्वेवं तद्गोव्यक्तौ गोत्वजातेस्तद्गवावच्छेदेनानन्यदेशत्वमन्यगवावच्छेदेन चान्यदेशत्वमेवमन्यगोव्यक्तावपीति भेदाभेदात्मके पृथक्त्वापृथक्त्वे यावद्व्यक्तिसमसङ्ख्यके स्यातामित्यत्रेष्टापत्तिमाह-चालनीयन्यायेनेति, तत्र जातौ, संपूर्णसत्तालक्षणमिति उत्पादव्ययध्रौव्ययुक्तं सदिति लक्षणमित्यर्थः, आरोपयन्ती व्यवस्थापयन्ती, उक्तन्यायं अभेदे भेदरूपतेव भेदेऽप्यभेदरूपताप्रदर्शनायातिदिशति-एवमन्यत्वमपीति, गोत्वजातौ गोत्वावच्छिन्नभेदः पर्यायार्थत्वावच्छेदेन, गोत्वावच्छिन्नाभेदो द्रव्यार्थत्वावच्छेदेन, द्रव्यार्थनयेन सर्वासां गोव्यक्तीनामेकत्वस्वीकारादित्याशयेनाह-तत्रापीति, गोत्वे द्रव्यार्थपर्यायार्थनयापेक्षौ गोत्वावच्छिन्नभेदाभेदाविति गोत्वे पर्यायार्थिकनयापेक्षया गोत्वावच्छिन्नभेदः तदभेदश्च द्रव्यार्थिकनयापेक्षयेति नात्रापि कथमप्येकान्तोऽवकाशं भजत इति भावः। मोघम् व्यर्थम्। उत्तरार्द्धं सङ्गमयन्नाह-तदाहेति ॥३३। द्वितीयखण्डपरिसमाप्तिमारचयन् चतुस्त्रिंशत्तमश्लोकमवतारयति-उपसंहरतीति, उपसंह्रियमाणमेवार्थमादर्शयति—

एवं त्वभिन्नमथ भिन्नमसच्च सच्च, व्यक्त्यात्मजातिरचनावदनित्यनित्यम् ॥
बाह्यं तथाऽखिलमपि स्थितमन्तरङ्गं नैरात्म्यतस्तु न भयं भवदाश्रितानाम् ॥ ३४ ॥

एवमित्यादि, व्यक्त्यात्मजातिरचनावदिति व्यक्तिजात्युभयात्मकमित्यर्थः, शेषं व्यक्तार्थमिति न व्याख्यातमिति ॥ ३४ ॥

॥ शिखरिणी ॥

तमस्तोमं हत्वा बहिरितरभावेन विदितम्, गुणं द्रव्यं सर्वं परिणमनमुद्योतयति यः ।
विजेता मोहारिं निगडित-समस्तामरनरम्. स गोघेशः पार्श्वो जयति नवखण्डेति विदितः ॥१॥

प्रसादात्तस्यैवं गुरुगुणमणीरोहणगिरेः, सुशीलाम्भोधाराशमितमदनाग्नेः श्रुतगुरोः ।
तपागच्छे स्वच्छे नभसि मिहिरस्य द्युतिगुरोः, कृपापीयूषाद्वैबुधबलकृतो नेमिसुगुरोः ॥ २ ॥

पुरे गोघे पार्श्वप्रभुजिनपतेश्चैत्ययुगले, तथा चान्द्रे चैत्ये ध्वजवरप्रतिष्ठां विधियुताम् ।
युतां सूरेर्मन्त्रैर्विविधमहकृत्योपकलिता-मकार्षीद् यः सूरिर्विजयसहितो दर्शन इति ॥ ३ ॥

नगाशे भाङ्केन्दौ शरदि सति वै वैक्रमनृपे, तृतीयापञ्चम्योः शशिजसितयोः पाण्डुरदले ।
शुभे शुक्रे मासे शुभभवरयोगोपकलिते, कले काले केकाकलितकृतधाराधररतौ ॥ ४ ॥

चतुर्मासीं गोघापुरि सकलसङ्घाग्रहवशात्, स्थितः सोहं बौद्धाक्षिचरणमतं सङ्कलनगे ।
निराकृत्य ज्ञानेऽन्यप्रमितिकथञ्चिद्विषयताम्, प्रमाणीकृत्याथ क्षणिकमतिमान्यं व्यतनिषम् ॥५॥ पञ्चभिः कुलकम्

॥ शार्दूलविक्रीडितम् ॥

इत्थं दर्शनसूरिणा गुरुकृपासम्प्राप्ततर्कालिना, श्रीवीरस्तवकल्पशाखिलतिकाभागो द्वितीयो मुदा ॥
श्रीमन्न्यायविशारदोक्तिपथगो नीतो हि सम्पूर्णता-मानन्दाय सतोऽस्तु तर्करसिकैरापुष्पदन्तावधि ॥६॥



॥ इति श्री विश्वातिशायिसर्वज्ञशासनानुपयानल्पतत्त्वावलोकन-समुत्पन्नविज्ञानप्रकाशातिशयप्रकाशिताखिलमेदिन्यचिन्त्य-चिन्तामणिकल्पद्रुमोपमपरमात्मसद्धर्मममप्रसृतशशभृद्धवलकीर्त्तिभरधवलितभूवलयप्राप्ताखण्डविजय-तीर्थोद्धारैकधुरीणश्रीतपोगच्छनभोनभोमणिभट्टारकाचार्यश्रीविजयनेमिसूरीश्वरपट्टालङ्काराप्तन्यायवाचस्पति सिद्धान्तविशारदोपनाम-तपोगच्छभट्टारकाचार्यश्रीविजयदर्शनसूरिविरचितायां सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायतातपादश्रीयशोविजयगणिसन्दृब्धस्य न्यायखण्डखाद्यापरनामकस्य महावीरस्तवप्रकरणस्य श्रीमहावीरस्तवकल्पलतिकायां विवृत्तौ प्रत्यभिज्ञाप्रत्यक्षत्वाभ्युपगन्तृन्यायमतनिरासात्मको द्वितीयो विभागस्समासिमगात् ॥

---

इति श्री सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्य महोपाध्यायश्रीयशोविजयगणिविरचिते न्यायवाचस्पति शास्त्रविशारदतपोगच्छाचार्यश्रीविजयदर्शनसूरिसंदृब्धमहावीरस्तयकल्पलतिकाभिख्यविवृतिसमलङ्कृते-

॥ न्यायखण्डखाद्यापरनामके महावीरस्तवप्रकरणे ॥

॥ प्रत्यभिज्ञाप्रत्यक्षत्वाभ्युपगन्तृन्यायमतखण्डनात्मको द्वितीयो विभागः ॥

सर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिविरचित-

# न्यायखण्डखाद्यापरनाम--

## महावीरस्तवप्रकरणस्य

न्यायवाचस्पतिसिद्धान्तविशारदाचार्यश्रीविजयदर्शनसूरि

विरचितं महावीरस्तवकल्पलतिकाविवृतिनामकमिदं द्वितीयं पुस्तकम्



स्याद्वादबिन्दुनामकप्रथमंपुस्तकम्